। यदयं ब्रूयात्तत्कार्यमविचारयद्भिरिति । ०१७ । तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः । स तथा भ्रातॄन्संदिश्य तक्षशिलां प्रत्यभिप्रतस्थे । तं च देशं वशे स्थापयामास । ०१८ । एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामायोदः । तस्य शिष्यास्त्रयो बभूवुरुपमन्युरारुणिर्वेदश्चेति । ०१९ । स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास । गच्छ केदारखण्डं बधानेति । ०२० । स उपाध्यायेन संदिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत्केदारखण्डं बद्धुं नाशक्नोत् । ०२१ । स क्लिश्यमानोऽपश्यदुपायम् । भवत्वेवं करिष्यामीति । ०२२ । स तत्र संविवेश केदारखण्डे । शयाने तस्मिंस्तदुदकं तस्थौ । ०२३ । ततः कदाचिदुपाध्याय आयोदो धौम्यः शिष्यानपृच्छत् । क्व आरुणिः पाञ्चाल्यो गत इति । ०२४ । ते प्रत्यूचुः । भगवतैव प्रेषितो गच्छ केदारखण्डं बधानेति । ०२५ । स एवमुक्तस्ताञ्शिष्यान्प्रत्युवाच । तस्मात्सर्वे तत्र गच्छामो यत्र स इति । ०२६ । स तत्र गत्वा तस्याह्वानाय शब्दं चकार । भो आरुणे पाञ्चाल्य क्वासि । वत्सैहीति । ०२७ । स तच्छ्रुत्वा आरुणिरुपाध्यायवाक्यं तस्मात्केदारखण्डात्सहसोत्थाय तमुपाध्यायमुपतस्थे । प्रोवाच चैनम् । अयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य केदारखण्डं भवन्तमुपस्थितः । तदभिवादये भगवन्तम् । आज्ञापयतु भवान् । किं करवाणीति । ०२८ । तमुपाध्यायोऽब्रवीत् । यस्माद्भवान्केदारखण्डमवदार्योत्थितस्तस्माद्भवानुद्दालक एव नाम्ना भविष्यतीति । ०२९ । स उपाध्यायेनानुगृहीतः । यस्मात्त्वया मद्वचोऽनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसीति । सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति । ०३० । स एवमुक्त उपाध्यायेनेष्टं देशं जगाम । ०३१ । अथापरः शिष्यस्तस्यैवायोदस्य धौम्यस्योपमन्युर्नाम । ०३२ । तमुपाध्यायः प्रेषयामास । वत्सोपमन्यो गा रक्षस्वेति । ०३३ । स उपाध्यायवचनादरक्षद्गाः । स चाहनि गा रक्षित्वा दिवसक्षयेऽभ्यागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे । ०३४ । तमुपाध्यायः पीवानमपश्यत् । उवाच चैनम् । वत्सोपमन्यो केन वृत्तिं कल्पयसि । पीवानसि दृढमिति । ०३५ । स उपाध्यायं प्रत्युवाच । भैक्षेण वृत्तिं कल्पयामीति । ०३६ । तमुपाध्यायः प्रत्युवाच । ममानिवेद्य भैक्षं नोपयोक्तव्यमिति । ०३७ । स तथेत्युक्त्वा पुनररक्षद्गाः । रक्षित्वा चागम्य तथैवोपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे । ०३८ । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच । वत्सोपमन्यो सर्वमशेषतस्ते भैक्षं गृह्णामि । केनेदानीं वृत्तिं कल्पयसीति । ०३९ । स एवमुक्त उपाध्यायेन प्रत्युवाच । भगवते निवेद्य पूर्वमपरं चरामि

। तेन वृत्तिं कल्पयामीति । ०४० । तमुपाध्यायः प्रत्युवाच । नैषा न्याय्या गुरुवृत्तिः । अन्येषामपि वृत्त्युपरोधं करोष्येवं वर्तमानः । लुब्धोऽसीति । ०४१ । स तथेत्युक्त्वा गा अरक्षत् । रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे । ०४२ । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच । अहं ते सर्वं भैक्षं गृह्णामि न चान्यच्चरसि । पीवानसि । केन वृत्तिं कल्पयसीति । ०४३ । स उपाध्यायं प्रत्युवाच । भो एतासां गवां पयसा वृत्तिं कल्पयामीति । ०४४ । तमुपाध्यायः प्रत्युवाच । नैतन्न्याय्यं पय उपयोक्तुं भवतो मयाननुज्ञातमिति । ०४५ । स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहानेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे । ०४६ । तमुपाध्यायः पीवानमेवापश्यत् । उवाच चैनम् । भैक्षं नाश्नासि न चान्यच्चरसि । पयो न पिबसि । पीवानसि । केन वृत्तिं कल्पयसीति । ०४७ । स एवमुक्त उपाध्यायं प्रत्युवाच । भोः फेनं पिबामि यमिमे वत्सा मातृणां स्तनं पिबन्त उद्गिरन्तीति । ०४८ । तमुपाध्यायः प्रत्युवाच । एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति । तदेवमपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्तमानः । फेनमपि भवान्न पातुमर्हतीति । ०४९ । स तथेति प्रतिज्ञाय निराहारस्ता गा अरक्षत् । तथा प्रतिषिद्धो भैक्षं नाश्नाति न चान्यच्चरति । पयो न पिबति । फेनं नोपयुङ्क्ते । ०५० । स कदाचिदरण्ये क्षुधार्तोऽर्कपत्राण्यभक्षयत् । ०५१ । स तैरर्कपत्रैर्भक्षितैः क्षारकटूष्णविपाकिभिश्चक्षुष्युपहतोऽन्धोऽभवत् । सोऽन्धोऽपि चङ्क्रम्यमाणः कूपेऽपतत् । ०५२ । अथ तस्मिन्ननागच्छत्युपाध्यायः शिष्यानवोचत् । मयोपमन्युः सर्वतः प्रतिषिद्धः । स नियतं कुपितः । ततो नागच्छति चिरगतश्चेति । ०५३ । स एवमुक्त्वा गत्वारण्यमुपमन्योराह्वानं चक्रे । भो उपमन्यो क्वासि । वत्सैहीति । ०५४ । स तदाह्वानमुपाध्यायाच्छ्रुत्वा प्रत्युवाचोच्चैः । अयमस्मि भो उपाध्याय कूपे पतित इति । ०५५ । तमुपाध्यायः प्रत्युवाच । कथमसि कूपे पतित इति । ०५६ । स तं प्रत्युवाच । अर्कपत्राणि भक्षयित्वान्धीभूतोऽस्मि । अतः कूपे पतित इति । ०५७ । तमुपाध्यायः प्रत्युवाच । अश्विनौ स्तुहि । तौ त्वां चक्षुष्मन्तं करिष्यतो देवभिषजाविति । ०५८ । स एवमुक्त उपाध्यायेन स्तोतुं प्रचक्रमे देवावश्विनौ वाग्भिर्ऋग्भिः । ०५९ ।

प्र पूर्वगौ पूर्वजौ चित्रभानू ; गिरा वा शंसामि तपनावनन्तौ ।
दिव्यौ सुपर्णौ विरजौ विमाना ;वधिक्षियन्तौ भुवनानि विश्वा ॥ ०६० ॥

हिरण्मयौ शकुनी सांपरायौ ; नासत्यदस्रौ सुनसौ वैजयन्तौ ।
शुक्रं वयन्तौ तरसा सुवेमा ;वभि व्ययन्तावसितं विवस्वत् ॥ ०६१ ॥

ग्रस्तां सुपर्णस्य बलेन वर्तिका ;ममुञ्चतामश्विनौ सौभगाय ।
तावत्सुवृत्तावनमन्त मायया ; सत्तमा गा अरुणा उदावहन् ॥ ०६२ ॥

षष्टिश्च गावस्त्रिशताश्च धेनव ; एकं वत्सं सुवते तं दुहन्ति ।
नानागोष्ठा विहिता एकदोहना ;स्तावश्विनौ दुहतो घर्ममुक्थ्यम् ॥ ०६३ ॥

एकां नाभिं सप्तशता अराः श्रिताः ; प्रधिष्वन्या विंशतिरर्पिता अराः ।
अनेमि चक्रं परिवर्ततेऽजरं ; मायाश्विनौ समनक्ति चर्षणी ॥ ०६४ ॥

एकं चक्रं वर्तते द्वादशारं प्रधि ;षण्णाभिमेकाक्षममृतस्य धारणम् ।
यस्मिन्देवा अधि विश्वे विषक्ता ;स्तावश्विनौ मुञ्चतो मा विषीदतम् ॥ ०६५ ॥

अश्विनाविन्द्रममृतं वृत्तभूयौ ; तिरोधत्तामश्विनौ दासपत्नी ।
भित्त्वा गिरिमश्विनौ गामुदाचरन्तौ ; तद्वृष्टमह्ना प्रथिता वलस्य ॥ ०६६ ॥

युवां दिशो जनयथो दशाग्रे ; समानं मूर्ध्नि रथया वियन्ति ।
तासां यातमृषयोऽनुप्रयान्ति ; देवा मनुष्याः क्षितिमाचरन्ति ॥ ०६७ ॥

युवां वर्णान्विकुरुथो विश्वरूपां ;स्तेऽधिक्षियन्ति भुवनानि विश्वा ।
ते भानवोऽप्यनुसृताश्चरन्ति ; देवा मनुष्याः क्षितिमाचरन्ति ॥ ०६८ ॥

तौ नासत्यावश्विनावामहे वां ; स्रजं च यां बिभृथः पुष्करस्य ।
तौ नासत्यावमृतावृतावृधा ;वृते देवास्तत्प्रपदेन सूते ॥ ०६९ ॥

मुखेन गर्भं लभतां युवानौ ; गतासुरेतत्प्रपदेन सूते ।
सद्यो जातो मातरमत्ति गर्भ ;स्तावश्विनौ मुञ्चथो जीवसे गाः ॥ ०७० ॥

एवं तेनाभिष्टुतावश्विनावाजग्मतुः ।
आहतुश्चैनम् ।
प्रीतौ स्वः ।
एष तेऽपूपः ।
अशानैनमिति । ०७१ ।
स एवमुक्तः प्रत्युवाच ।
नानृतमूचतुर्भवन्तौ ।
न त्वहमेतमपूपमुपयोक्तुमुत्सहे अनिवेद्य गुरव इति । ०७२ ।
ततस्तमश्विनावूचतुः ।
आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपः प्रीताभ्यां दत्तः ।
उपयुक्तश्च स तेनानिवेद्य गुरवे ।
त्वमपि तथैव कुरुष्व यथा कृतमुपाध्यायेनेति । ०७३ ।
स एवमुक्तः पुनरेव प्रत्युवाचैतौ ।
प्रत्यनुनये भवन्तावश्विनौ ।
नोत्सहेऽहमनिवेद्योपाध्यायायोपयोक्तुमिति । ०७४ ।
तमश्विनावाहतुः ।
प्रीतौ स्वस्तवानया गुरुवृत्त्या ।
उपाध्यायस्य ते कार्ष्णायसा दन्ताः ।
भवतो हिरण्मया भविष्यन्ति ।
चक्षुष्मांश्च भविष्यसि ।
श्रेयश्चावाप्स्यसीति । ०७५ ।
स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभिवाद्याचचक्षे ।
स चास्य प्रीतिमानभूत् । ०७६ ।
आह चैनम् ।
यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति ।
सर्वे च ते वेदाः प्रतिभास्यन्तीति । ०७७ ।
एषा तस्यापि परीक्षोपमन्योः । ०७८ ।
अथापरः शिष्यस्तस्यैवायोदस्य धौम्यस्य वेदो नाम । ०७९ ।
तमुपाध्यायः संदिदेश ।

वत्स वेद इहास्यताम् ।
भवता मद्गृहे कञ्चित्कालं शुश्रूषमाणेन भवितव्यम् ।
श्रेयस्ते भविष्यतीति । ०८० ।
स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत् ।
गौरिव नित्यं गुरुषु धूर्षु नियुज्यमानः शीतोष्णक्षुत्तृष्णादुःखसहः सर्वत्राप्रतिकूलः । ०८१ ।
तस्य महता कालेन गुरुः परितोषं जगाम ।
तत्परितोषाच्च श्रेयः सर्वज्ञतां चावाप ।
एषा तस्यापि परीक्षा वेदस्य । ०८२ ।
स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमं प्रत्यपद्यत ।
तस्यापि स्वगृहे वसतस्त्रयः शिष्या बभूवुः । ०८३ ।
स शिष्यान्न किञ्चिदुवाच ।
कर्म वा क्रियतां गुरुशुश्रूषा वेति ।
दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान्परिक्लेशेन योजयितुं नेयेष । ०८४ ।
अथ कस्यचित्कालस्य वेदं ब्राह्मणं जनमेजयः पौष्यश्च क्षत्रियावुपेत्योपाध्यायं वरयां चक्रतुः । ०८५ ।
स कदाचिद्याज्यकार्येणाभिप्रस्थित उत्तङ्कं नाम शिष्यं नियोजयामास ।
भो उत्तङ्क यत्किञ्चिदस्मद्गृहे परिहीयते तदिच्छाम्यहमपरिहीणं भवता क्रियमाणमिति । ०८६ ।
स एवं प्रतिसमादिश्योत्तङ्कं वेदः प्रवासं जगाम । ०८७ ।
अथोत्तङ्को गुरुशुश्रूषुर्गुरुनियोगमनुतिष्ठमानस्तत्र गुरुकुले वसति स्म । ०८८ ।
स वसंस्तत्रोपाध्यायस्त्रीभिः सहिताभिराहूयोक्तः ।
उपाध्यायिनी ते ऋतुमती ।
उपाध्यायश्च प्रोषितः ।
अस्या यथायमृतुर्वन्ध्यो न भवति तथा क्रियताम् ।
एतद्विषीदतीति । ०८९ ।
स एवमुक्तस्ताः स्त्रियः प्रत्युवाच ।
न मया स्त्रीणां वचनादिदमकार्यं कार्यम् ।
न ह्यहमुपाध्यायेन संदिष्टः ।
अकार्यमपि त्वया कार्यमिति । ०९० ।
तस्य पुनरुपाध्यायः कालान्तरेण गृहानुपजगाम तस्मात्प्रवासात् ।

स तद्वृत्तं तस्याशेषमुपलभ्य प्रीतिमानभूत् । ०९१ ।
उवाच चैनम् ।
वत्सोत्तङ्क किं ते प्रियं करवाणीति ।
धर्मतो हि शुश्रूषितोऽस्मि भवता ।
तेन प्रीतिः परस्परेण नौ संवृद्धा ।
तदनुजाने भवन्तम् ।
सर्वामेव सिद्धिं प्राप्स्यसि ।
गम्यतामिति । ०९२ ।
स एवमुक्तः प्रत्युवाच ।
किं ते प्रियं करवाणीति ।
एवं ह्याहुः । ०९३ ।
यश्चाधर्मेण विब्रूयाद्यश्चाधर्मेण पृच्छति । ०९४ ।
तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति ।
सोऽहमनुज्ञातो भवता इच्छामीष्टं ते गुर्वर्थमुपहर्तुमिति । ०९५ ।
तेनैवमुक्त उपाध्यायः प्रत्युवाच ।
वत्सोत्तङ्क उष्यतां तावदिति । ०९६ ।
स कदाचित्तमुपाध्यायमाहोत्तङ्कः ।
आज्ञापयतु भवान् ।
किं ते प्रियमुपहरामि गुर्वर्थमिति । ०९७ ।
तमुपाध्यायः प्रत्युवाच ।
वत्सोत्तङ्क बहुशो मां चोदयसि गुर्वर्थमुपहरेयमिति ।
तद्गच्छ ।
एनां प्रविश्योपाध्यायिनीं पृच्छ किमुपहरामीति ।
एषा यद्ब्रवीति तदुपहरस्वेति । ०९८ ।
स एवमुक्त उपाध्यायेनोपाध्यायिनीमपृच्छत् ।
भवत्युपाध्यायेनास्म्यनुज्ञातो गृहं गन्तुम् ।
तदिच्छामीष्टं ते गुर्वर्थमुपहृत्यानृणो गन्तुम् ।
तदाज्ञापयतु भवती ।
किमुपहरामि गुर्वर्थमिति । ०९९ ।
सैवमुक्तोपाध्यायिन्युत्तङ्कं प्रत्युवाच ।

गच्छ पौष्यं राजानम् ।
भिक्षस्व तस्य क्षत्रियया पिनद्धे कुण्डले ।
ते आनयस्व ।
इतश्चतुर्थेऽहनि पुण्यकं भविता ।
ताभ्यामाबद्धाभ्यां ब्राह्मणान्परिवेष्टुमिच्छामि ।
शोभमाना यथा ताभ्यां कुण्डलाभ्यां तस्मिन्नहनि संपादयस्व ।
श्रेयो हि ते स्यात्क्षणं कुर्वत इति । १०० ।
स एवमुक्त उपाध्यायिन्या प्रातिष्ठतोत्तङ्कः ।
स पथि गच्छन्नपश्यदृषभमतिप्रमाणं तमधिरूढं च पुरुषमतिप्रमाणमेव । १०१ ।
स पुरुष उत्तङ्कमभ्यभाषत ।
उत्तङ्कैतत्पुरीषमस्य ऋषभस्य भक्षयस्वेति । १०२ ।
स एवमुक्तो नैच्छत् । १०३ ।
तमाह पुरुषो भूयः ।
भक्षयस्वोत्तङ्क ।
मा विचारय ।
उपाध्यायेनापि ते भक्षितं पूर्वमिति । १०४ ।
स एवमुक्तो बाढमित्युक्त्वा तदा तदृषभस्य पुरीषं मूत्रं च भक्षयित्वोत्तङ्कः प्रतस्थे यत्र स क्षत्रियः पौष्यः । १०५ ।
तमुपेत्यापश्यदुत्तङ्क आसीनम् ।
स तमुपेत्याशीर्भिरभिनन्द्योवाच ।
अर्थी भवन्तमुपगतोऽस्मीति । १०६ ।
स एनमभिवाद्योवाच ।
भगवन्पौष्यः खल्वहम् ।
किं करवाणीति । १०७ ।
तमुवाचोत्तङ्कः ।
गुर्वर्थे कुण्डलाभ्यामर्थ्यागतोऽस्मीति ये ते क्षत्रियया पिनद्धे कुण्डले ते भवान्दातुमर्हतीति । १०८ ।
तं पौष्यः प्रत्युवाच ।
प्रविश्यान्तःपुरं क्षत्रिया याच्यतामिति । १०९ ।
स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां नापश्यत् । ११० ।

स पौष्यं पुनरुवाच ।
न युक्तं भवता वयमनृतेनोपचरितुम् ।
न हि ते क्षत्रियान्तःपुरे संनिहिता ।
नैनां पश्यामीति । १११ ।
स एवमुक्तः पौष्यस्तं प्रत्युवाच ।
संप्रति भवानुच्छिष्टः ।
स्मर तावत् ।
न हि सा क्षत्रिया उच्छिष्टेनाशुचिना वा शक्या द्रष्टुम् ।
पतिव्रतात्वादेषा नाशुचेर्दर्शनमुपैतीति । ११२ ।
अथैवमुक्त उत्तङ्कः स्मृत्वोवाच ।
अस्ति खलु मयोच्छिष्टेनोपस्पृष्टं शीघ्रं गच्छता चेति । ११३ ।
तं पौष्यः प्रत्युवाच ।
एतत्तदेवं हि ।
न गच्छतोपस्पृष्टं भवति न स्थितेनेति । ११४ ।
अथोत्तङ्कस्तथेत्युक्त्वा प्राङ्मुख उपविश्य सुप्रक्षालितपाणिपादवदनोऽशब्दाभिर् हृदयङ्गमाभिरद्भिरुपस्पृश्य त्रिः पीत्वा द्विः परिमृज्य खान्यद्भिरुपस्पृश्यान्तःपुरं प्रविश्य तां क्षत्रियामपश्यत् । ११५ ।
सा च दृष्ट्वैवोत्तङ्कमभ्युत्थायाभिवाद्योवाच ।
स्वागतं ते भगवन् ।
आज्ञापय किं करवाणीति । ११६ ।
स तामुवाच ।
एते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसीति । ११७ ।
सा प्रीता तेन तस्य सद्भावेन पात्रमयमनतिक्रमणीयश्चेति मत्वा ते कुण्डले अवमुच्यास्मै प्रायच्छत् । ११८ ।
आह चैनम् ।
एते कुण्डले तक्षको नागराजः प्रार्थयति ।
अप्रमत्तो नेतुमर्हसीति । ११९ ।
स एवमुक्तस्तां क्षत्रियां प्रत्युवाच ।
भवति सुनिर्वृता भव ।
न मां शक्तस्तक्षको नागराजो धर्षयितुमिति । १२० ।

स एवमुक्त्वा तां क्षत्रियामामन्त्र्य पौष्यसकाशमागच्छत् । १२१ ।
स तं दृष्ट्वोवाच ।
भोः पौष्य प्रीतोऽस्मीति । १२२ ।
तं पौष्यः प्रत्युवाच ।
भगवंश्चिरस्य पात्रमासाद्यते ।
भवांश्च गुणवानतिथिः ।
तत्करिष्ये श्राद्धम् ।
क्षणः क्रियतामिति । १२३ ।
तमुत्तङ्कः प्रत्युवाच ।
कृतक्षण एवास्मि ।
शीघ्रमिच्छामि यथोपपन्नमन्नमुपहृतं भवतेति । १२४ ।
स तथेत्युक्त्वा यथोपपन्नेनान्नेनैनं भोजयामास । १२५ ।
अथोत्तङ्कः शीतमन्नं सकेशं दृष्ट्वा अशुच्येतदिति मत्वा पौष्यमुवाच ।
यस्मान्मे अशुच्यन्नं ददासि तस्मदन्धो भविष्यसीति । १२६ ।
तं पौष्यः प्रत्युवाच ।
यस्मात्त्वमप्यदुष्टमन्नं दूषयसि तस्मादनपत्यो भविष्यसीति । १२७ ।
सोऽथ पौष्यस्तस्याशुचिभावमन्नस्यागमयामास । १२८ ।
अथ तदन्नं मुक्तकेश्या स्त्रियोपहृतं सकेशमशुचि मत्वोत्तङ्कं प्रसादयामास ।
भगवन्नज्ञानादेतदन्नं सकेशमुपहृतं शीतं च ।
तत्क्षामये भवन्तम् ।
न भवेयमन्ध इति । १२९ ।
तमुत्तङ्कः प्रत्युवाच ।
न मृषा ब्रवीमि ।
भूत्वा त्वमन्धो नचिरादनन्धो भविष्यसीति ।
ममापि शापो न भवेद्भवता दत्त इति । १३० ।
तं पौष्यः प्रत्युवाच ।
नाहं शक्तः शापं प्रत्यादातुम् ।
न हि मे मन्युरद्याप्युपशमं गच्छति ।
किं चैतद्भवता न ज्ञायते यथा । १३१ ।

नावनीतं हृदयं ब्राह्मणस्य ; वाचि क्षुरो निहितस्तीक्ष्णधारः ।

विपरीतमेतदुभयं क्षत्रियस्य ; वाङ्नावनीती हृदयं तीक्ष्णधारम् ॥ १३२ ॥

इति ।
तदेवं गते न शक्तोऽहं तीक्ष्णहृदयत्वात्तं शापमन्यथा कर्तुम् ।
गम्यतामिति । १३३ ।
तमुत्तङ्कः प्रत्युवाच ।
भवताहमन्नस्याशुचिभावमागमय्य प्रत्यनुनीतः ।
प्राक्क तेऽभिहितम् ।
यस्माददुष्टमन्नं दूषयसि तस्मादनपत्यो भविष्यसीति ।
दुष्टे चान्ने नैष मम शापो भविष्यतीति । १३४ ।
साधयामस्तावदित्युक्त्वा प्रातिष्ठतोत्तङ्कस्ते कुण्डले गृहीत्वा । १३५ ।
सोऽपश्यत्पथि नग्नं श्रमणमागच्छन्तं मुहुर्मुहुर्दृश्यमानमदृश्यमानं च ।
अथोत्तङ्कस्ते कुण्डले भूमौ निक्षिप्योदकार्थं प्रचक्रमे । १३६ ।
एतस्मिन्नन्तरे स श्रमणस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा प्राद्रवत् ।
तमुत्तङ्कोऽभिसृत्य जग्राह ।
स तद्रूपं विहाय तक्षकरूपं कृत्वा सहसा धरण्यां विवृतं महाबिलं विवेश । १३७ ।
प्रविश्य च नागलोकं स्वभवनमगच्छत् ।
तमुत्तङ्कोऽन्वाविवेश तेनैव बिलेन ।
प्रविश्य च नागानस्तुवदेभिः श्लोकैः । १३८ ।

य ऐरावतराजानः सर्पाः समितिशोभनाः ।
वर्षन्त इव जीमूताः सविद्युत्पवनेरिताः ॥ १३९ ॥

सुरूपाश्च विरूपाश्च तथा कल्माषकुण्डलाः ।
आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवाः ॥ १४० ॥

बहूनि नागवर्त्मानि गङ्गायास्तीर उत्तरे ।
इच्छेत्कोऽर्कांशुसेनायां चर्तुमैरावतं विना ॥ १४१ ॥

शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः ।

सर्पाणां प्रग्रहा यान्ति धृतराष्ट्रो यदेजति ॥ १४२ ॥

ये चैनमुपसर्पन्ति ये च दूरं परं गताः ।
अहमैरावतज्येष्ठभ्रातृभ्योऽकरवं नमः ॥ १४३ ॥

यस्य वासः कुरुक्षेत्रे खाण्डवे चाभवत्सदा ।
तं काद्रवेयमस्तौषं कुण्डलार्थाय तक्षकम् ॥ १४४ ॥

तक्षकश्चाश्वसेनश्च नित्यं सहचरावुभौ ।
कुरुक्षेत्रे निवसतां नदीमिक्षुमतीमनु ॥ १४५ ॥

जघन्यजस्तक्षकस्य श्रुतसेनेति यः श्रुतः ।
अवसद्यो महद्युम्नि प्रार्थयन्नागमुख्यताम् ॥ १४६ ॥

करवाणि सदा चाहं नमस्तस्मै महात्मने ॥ १४६ ॥

एवं स्तुवन्नपि नागान्यदा ते कुण्डले नालभदथापश्यत्स्त्रियौ तन्त्रे अधिरोप्य पटं वयन्त्यौ । १४७ ।
तस्मिंश्च तन्त्रे कृष्णाः सिताश्च तन्तवः ।
चक्रं चापश्यत्षड्भिः कुमारैः परिवर्त्यमानम् ।
पुरुषं चापश्यद्दर्शनीयम् । १४८ ।
स तान्सर्वांस्तुष्टाव एभिर्मन्त्रवादश्लोकैः । १४९ ।

त्रीण्यर्पितान्यत्र शतानि मध्ये ; षष्टिश्च नित्यं चरति ध्रुवेऽस्मिन् ।
चक्रे चतुर्विंशतिपर्वयोगे ; षड्यत्कुमाराः परिवर्तयन्ति ॥ १५० ॥

तन्त्रं चेदं विश्वरूपं युवत्यौ ; वयतस्तन्तून्सततं वर्तयन्त्यौ ।
कृष्णान्सितांश्चैव विवर्तयन्त्यौ ; भूतान्यजस्रं भुवनानि चैव ॥ १५१ ॥

वज्रस्य भर्ता भुवनस्य गोप्ता ; वृत्रस्य हन्ता नमुचेर्निहन्ता ।
कृष्णे वसानो वसने महात्मा ; सत्यानृते यो विविनक्ति लोके ॥ १५२ ॥

यो वाजिनं गर्भमपां पुराणं ; वैश्वानरं वाहनमभ्युपेतः ।
नमः सदास्मै जगदीश्वराय ; लोकत्रयेशाय पुरंदराय ॥ १५३ ॥

ततः स एनं पुरुषः प्राह ।
प्रीतोऽस्मि तेऽहमनेन स्तोत्रेण ।
किं ते प्रियं करवाणीति । १५४ ।
स तमुवाच ।
नागा मे वशमीयुरिति । १५५ ।
स एनं पुरुषः पुनरुवाच ।
एतमश्वमपाने धमस्वेति । १५६ ।
स तमश्वमपानेऽधमत् ।
अथाश्वाद्धम्यमानात्सर्वस्रोतोभ्यः सधूमा अर्चिषोऽग्नेर्निष्पेतुः । १५७ ।
ताभिर्नागलोको धूपितः । १५८ ।
अथ ससंभ्रमस्तक्षकोऽग्नितेजोभयविषण्णस्ते कुण्डले गृहीत्वा सहसा स्वभवनान्निष्क्रम्योत्तङ्कमुवाच
।
एते कुण्डले प्रतिगृह्णातु भवानिति । १५९ ।
स ते प्रतिजग्राहोत्तङ्कः ।
कुण्डले प्रतिगृह्याचिन्तयत् ।
अद्य तत्पुण्यकमुपाध्यायिन्याः ।
दूरं चाहमभ्यागतः ।
कथं नु खलु संभावयेयमिति । १६० ।
तत एनं चिन्तयानमेव स पुरुष उवाच ।
उत्तङ्क एनमश्वमधिरोह ।
एष त्वां क्षणादेवोपाध्यायकुलं प्रापयिष्यतीति । १६१ ।
स तथेत्युक्त्वा तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलम् ।
उपाध्यायिनी च स्नाता केशानावपयन्त्युपविष्टोत्तङ्को नागच्छतीति शापायास्य
मनो दधे । १६२ ।
अथोत्तङ्कः प्रविश्य उपाध्यायिनीमभ्यवादयत् ।
ते चास्यै कुण्डले प्रायच्छत् । १६३ ।
सा चैनं प्रत्युवाच ।

उत्तङ्क देशे कालेऽभ्यागतः ।
स्वागतं ते वत्स ।
मनागसि मया न शप्तः ।
श्रेयस्तवोपस्थितम् ।
सिद्धिमाप्नुहीति । १६४ ।
अथोत्तङ्क उपाध्यायमभ्यवादयत् ।
तमुपाध्यायः प्रत्युवाच ।
वत्सोत्तङ्क स्वागतं ते ।
किं चिरं कृतमिति । १६५ ।
तमुत्तङ्क उपाध्यायं प्रत्युवाच ।
भोस्तक्षकेण नागराजेन विघ्नः कृतोऽस्मिन्कर्मणि ।
तेनास्मि नागलोकं नीतः । १६६ ।
तत्र च मया दृष्टे स्त्रियौ तन्त्रेऽधिरोप्य पटं वयन्त्यौ ।
तस्मिंश्च तन्त्रे कृष्णाः सिताश्च तन्तवः ।
किं तत् । १६७ ।
तत्र च मया चक्रं दृष्टं द्वादशारम् ।
षड्चैनं कुमाराः परिवर्तयन्ति ।
तदपि किम् । १६८ ।
पुरुषश्चापि मया दृष्टः ।
स पुनः कः । १६९ ।
अश्वश्चातिप्रमाणयुक्तः ।
स चापि कः । १७० ।
पथि गच्छता मया ऋषभो दृष्टः ।
तं च पुरुषोऽधिरूढः ।
तेनास्मि सोपचारमुक्तः ।
उत्तङ्कास्य ऋषभस्य पुरीषं भक्षय ।
उपाध्यायेनापि ते भक्षितमिति ।
ततस्तद्वचनान्मया तदृषभस्य पुरीषमुपयुक्तम् ।
तदिच्छामि भवतोपदिष्टं किं तदिति । १७१ ।
तेनैवमुक्त उपाध्यायः प्रत्युवाच ।
ये ते स्त्रियौ धाता विधाता च ।

ये च ते कृष्णाः सिताश्च तन्तवस्ते रात्र्यहनी । १७२ ।
यदपि तच्चक्रं द्वादशारं षड्कुमाराः परिवर्तयन्ति ते ऋतवः षड्वंवत्सरश्चक्रम् ।
यः पुरुषः स पर्जन्यः ।
योऽश्वः सोऽग्निः । १७३ ।
य ऋषभस्त्वया पथि गच्छता दृष्टः स ऐरावतो नागराजः ।
यश्चैनमधिरूढः स इन्द्रः ।
यदपि ते पुरीषं भक्षितं तस्य ऋषभस्य तदमृतम् । १७४ ।
तेन खल्वसि न व्यापन्नस्तस्मिन्नागभवने ।
स चापि मम सखा इन्द्रः । १७५ ।
तदनुग्रहात्कुण्डले गृहीत्वा पुनरभ्यागतोऽसि ।
तत्सौम्य गम्यताम् ।
अनुजाने भवन्तम् ।
श्रेयोऽवाप्स्यसीति । १७६ ।
स उपाध्यायेनानुज्ञात उत्तङ्कः क्रुद्धस्तक्षकस्य प्रतिचिकीर्षमाणो हास्तिनपुरं प्रतस्थे । १७७ ।

स हास्तिनपुरं प्राप्य नचिराद्विजसत्तमः ।
समागच्छत राजानमुत्तङ्को जनमेजयम् ॥ १७८ ॥

पुरा तक्षशिलातस्तं निवृत्तमपराजितम् ।
सम्यग्विजयिनं दृष्ट्वा समन्तान्मन्त्रिभिर्वृतम् ॥ १७९ ॥

तस्मै जयाशिषः पूर्वं यथान्यायं प्रयुज्य सः ।
उवाचैनं वचः काले शब्दसंपन्नया गिरा ॥ १८० ॥

अन्यस्मिन्करणीये त्वं कार्ये पार्थिवसत्तम ।
बाल्यादिवान्यदेव त्वं कुरुषे नृपसत्तम ॥ १८१ ॥

एवमुक्तस्तु विप्रेण स राजा प्रत्युवाच ह ।
जनमेजयः प्रसन्नात्मा सम्यक्संपूज्य तं मुनिम् ॥ १८२ ॥

आसां प्रजानां परिपालनेन ; स्वं क्षत्रधर्मं परिपालयामि ।
प्रब्रूहि वा किं क्रियतां द्विजेन्द्र ; शुश्रूषुरस्म्यद्य वचस्त्वदीयम् ॥ १८३ ॥

स एवमुक्तस्तु नृपोत्तमेन ; द्विजोत्तमः पुण्यकृतां वरिष्ठः ।
उवाच राजानमदीनसत्त्वं ; स्वमेव कार्यं नृपतेश्च यत्तत् ॥ १८४ ॥

तक्षकेण नरेन्द्रेन्द्र येन ते हिंसितः पिता ।
तस्मै प्रतिकुरुष्व त्वं पन्नगाय दुरात्मने ॥ १८५ ॥

कार्यकालं च मन्येऽहं विधिदृष्टस्य कर्मणः ।
तद्गच्छापचितिं राजन्पितुस्तस्य महात्मनः ॥ १८६ ॥

तेन ह्यनपराधी स दष्टो दुष्टान्तरात्मना ।
पञ्चत्वमगमद्राजा वज्राहत इव द्रुमः ॥ १८७ ॥

बलदर्पसमुत्सिक्तस्तक्षकः पन्नगाधमः ।
अकार्यं कृतवान्पापो योऽदशत्पितरं तव ॥ १८८ ॥

राजर्षिवंशगोप्तारममरप्रतिमं नृपम् ।
जघान काश्यपं चैव न्यवर्तयत पापकृत् ॥ १८९ ॥

दग्धुमर्हसि तं पापं ज्वलिते हव्यवाहने ।
सर्पसत्रे महाराज त्वयि तद्धि विधीयते ॥ १९० ॥

एवं पितुश्चापचितिं गतवांस्त्वं भविष्यसि ।
मम प्रियं च सुमहत्कृतं राजन्भविष्यति ॥ १९१ ॥

कर्मणः पृथिवीपाल मम येन दुरात्मना ।
विघ्नः कृतो महाराज गुर्वर्थं चरतोऽनघ ॥ १९२ ॥

एतच्छ्रुत्वा तु नृपतिस्तक्षकस्य चुकोप ह ।

उत्तङ्कवाक्यहविषा दीप्तोऽग्निर्हविषा यथा ॥ १९३ ॥

अपृच्छच्च तदा राजा मन्त्रिणः स्वान्सुदुःखितः ।
उत्तङ्कस्यैव सांनिध्ये पितुः स्वर्गगतिं प्रति ॥ १९४ ॥

तदैव हि स राजेन्द्रो दुःखशोकाप्लुतोऽभवत् ।
यदैव पितरं वृत्तमुत्तङ्कादश्रृणोत्तदा ॥ १९५ ॥

# पौलोमपर्व

## अध्याय ००४

लोमहर्षणपुत्र उग्रश्रवाः सूतः पौराणिको नैमिषारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे ऋषीनभ्यागतानुपतस्थे । ००१ ।
पौराणिकः पुराणे कृतश्रमः स तान्कृताञ्जलिरुवाच ।
किं भवन्तः श्रोतुमिच्छन्ति ।
किमहं ब्रुवाणीति । ००२ ।
तमृषय ऊचुः ।
परमं लोमहर्षणे प्रक्ष्यामस्त्वां वक्ष्यसि च नः शुश्रूषतां कथायोगम् ।
तद्भगवांस्तु तावच्छौनकोऽग्निशरणमध्यास्ते । ००३ ।

योऽसौ दिव्याः कथा वेद देवतासुरसङ्कथाः ।
मनुष्योरगगन्धर्वकथा वेद च सर्वशः ॥ ००४ ॥

स चाप्यस्मिन्मखे सौते विद्वान्कुलपतिर्द्विजः ।
दक्षो धृतव्रतो धीमाञ्शास्त्रे चारण्यके गुरुः ॥ ००५ ॥

सत्यवादी शमपरस्तपस्वी नियतव्रतः ।
सर्वेषामेव नो मान्यः स तावत्प्रतिपाल्यताम् ॥ ००६ ॥

तस्मिन्नध्यासति गुरावासनं परमार्चितम् ।
ततो वक्ष्यसि यत्त्वां स प्रक्ष्यति द्विजसत्तमः ॥ ००७ ॥

सूत उवाच ॥

एवमस्तु गुरौ तस्मिन्नुपविष्टे महात्मनि ।
तेन पृष्टः कथाः पुण्या वक्ष्यामि विविधाश्रयाः ॥ ००८ ॥

सोऽथ विप्रर्षभः कार्यं कृत्वा सर्वं यथाक्रमम् ।
देवान्वाग्भिः पितॄनद्भिस्तर्पयित्वाजगाम ह ॥ ००९ ॥

यत्र ब्रह्मर्षयः सिद्धास्त आसीना यतव्रताः ।
यज्ञायतनमाश्रित्य सूतपुत्रपुरःसराः ॥ ०१० ॥

ऋत्विक्ष्वथ सदस्येषु स वै गृहपतिस्ततः ।
उपविष्टेषूपविष्टः शौनकोऽथाब्रवीदिदम् ॥ ०११ ॥

---

# अध्याय ००५

शौनक उवाच ॥

पुराणमखिलं तात पिता तेऽधीतवान्पुरा ।
कच्चित्त्वमपि तत्सर्वमधीषे लोमहर्षणे ॥ ००१ ॥

पुराणे हि कथा दिव्या आदिवंशाश्च धीमताम् ।
कथ्यन्ते ताः पुरास्माभिः श्रुताः पूर्वं पितुस्तव ॥ ००२ ॥

तत्र वंशमहं पूर्वं श्रोतुमिच्छामि भार्गवम् ।
कथयस्व कथामेतां कल्याः स्म श्रवणे तव ॥ ००३ ॥

सूत उवाच ॥

यदधीतं पुरा सम्यग्द्विजश्रेष्ठ महात्मभिः ।
वैशंपायनविप्राद्यैस्तैश्चापि कथितं पुरा ॥ ००४ ॥

यदधीतं च पित्रा मे सम्यक्चैव ततो मया ।
तत्तावच्छृणु यो देवैः सेन्द्रैः साग्निमरुद्गणैः ॥ ००५ ॥

पूजितः प्रवरो वंशो भृगूणां भृगुनन्दन ॥ ००५ ॥

इमं वंशमहं ब्रह्मन्भार्गवं ते महामुने ।
निगदामि कथायुक्तं पुराणाश्रयसंयुतम् ॥ ००६ ॥

भृगोः सुदयितः पुत्रश्च्यवनो नाम भार्गवः ।
च्यवनस्यापि दायादः प्रमतिर्नाम धार्मिकः ॥ ००७ ॥

प्रमतेरप्यभूत्पुत्रो घृताच्यां रुरुरित्युत ॥ ००७ ॥

रुरोरपि सुतो जज्ञे शुनको वेदपारगः ।
प्रमद्वरायां धर्मात्मा तव पूर्वपितामहात् ॥ ००८ ॥

तपस्वी च यशस्वी च श्रुतवान्ब्रह्मवित्तमः ।
धर्मिष्ठः सत्यवादी च नियतो नियतेन्द्रियः ॥ ००९ ॥

शौनक उवाच ॥

सूतपुत्र यथा तस्य भार्गवस्य महात्मनः ।
च्यवनत्वं परिख्यातं तन्ममाचक्ष्व पृच्छतः ॥ ०१० ॥

सूत उवाच ॥

भृगोः सुदयिता भार्या पुलोमेत्यभिविश्रुता ।
तस्यां गर्भः समभवद्भृगोर्वीर्यसमुद्भवः ॥ ०११ ॥

तस्मिन्गर्भे संभृतेऽथ पुलोमायां भृगूद्वह ।
समये समशीलिन्यां धर्मपत्न्यां यशस्विनः ॥ ०१२ ॥

अभिषेकाय निष्क्रान्ते भृगौ धर्मभृतां वरे ।
आश्रमं तस्य रक्षोऽथ पुलोमाभ्याजगाम ह ॥ ०१३ ॥

तं प्रविश्याश्रमं दृष्ट्वा भृगोर्भार्यामनिन्दिताम् ।
हृच्छयेन समाविष्टो विचेताः समपद्यत ॥ ०१४ ॥

अभ्यागतं तु तद्रक्षः पुलोमा चारुदर्शना ।
न्यमन्त्रयत वन्येन फलमूलादिना तदा ॥ ०१५ ॥

तां तु रक्षस्ततो ब्रह्मन्हृच्छयेनाभिपीडितम् ।
दृष्ट्वा हृष्टमभूत्तत्र जिहीर्षुस्तामनिन्दिताम् ॥ ०१६ ॥

अथाग्निशरणेऽपश्यज्ज्वलितं जातवेदसम् ।
तमपृच्छत्ततो रक्षः पावकं ज्वलितं तदा ॥ ०१७ ॥

शंस मे कस्य भार्येयमग्ने पृष्ट ऋतेन वै ।
सत्यस्त्वमसि सत्यं मे वद पावक पृच्छते ॥ ०१८ ॥

मया हीयं पूर्ववृता भार्यार्थे वरवर्णिनी ।
पश्चात्त्विमां पिता प्रादाद्भृगवेऽनृतकारिणे ॥ ०१९ ॥

सेयं यदि वरारोहा भृगोर्भार्या रहोगता ।

तथा सत्यं समाख्याहि जिहीर्षाम्याश्रमादिमाम् ॥ ०२० ॥

मन्युर्हि हृदयं मेऽद्य प्रदहन्निव तिष्ठति ।
मत्पुर्वभार्यां यदिमां भृगुः प्राप सुमध्यमाम् ॥ ०२१ ॥

तद्रक्ष एवमामन्त्र्य ज्वलितं जातवेदसम् ।
शङ्कमानो भृगोर्भार्यां पुनः पुनरपृच्छत ॥ ०२२ ॥

त्वमग्ने सर्वभूतानामन्तश्चरसि नित्यदा ।
साक्षिवत्पुण्यपापेषु सत्यं ब्रूहि कवे वचः ॥ ०२३ ॥

मत्पूर्वभार्यापहृता भृगुणानृतकारिणा ।
सेयं यदि तथा मे त्वं सत्यमाख्यातुमर्हसि ॥ ०२४ ॥

श्रुत्वा त्वत्तो भृगोर्भार्यां हरिष्याम्यहमाश्रमात् ।
जातवेदः पश्यतस्ते वद सत्यां गिरं मम ॥ ०२५ ॥

तस्य तद्वचनं श्रुत्वा सप्तार्चिर्दुःखितो भृशम् ।
भीतोऽनृताच्च शापाच्च भृगोरित्यब्रवीच्छनैः ॥ ०२६ ॥

---

# अध्याय ००६

सूत उवाच ॥

अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम् ।
ब्रह्मन्वराहरूपेण मनोमारुतरंहसा ॥ ००१ ॥

ततः स गर्भो निवसन्कुक्षौ भृगुकुलोद्वह ।

रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत् ॥ ००२ ॥

तं दृष्ट्वा मातुरुदराच्च्युतमादित्यवर्चसम् ।
तद्रक्षो भस्मसाद्भूतं पपात परिमुच्य ताम् ॥ ००३ ॥

सा तमादाय सुश्रोणी ससार भृगुनन्दनम् ।
च्यवनं भार्गवं ब्रह्मन्पुलोमा दुःखमूर्च्छिता ॥ ००४ ॥

तां ददर्श स्वयं ब्रह्मा सर्वलोकपितामहः ।
रुदतीं बाष्पपूर्णाक्षीं भृगोर्भार्यामनिन्दिताम् ॥ ००५ ॥

सान्त्वयामास भगवान्वधूं ब्रह्मा पितामहः ॥ ००५ ॥

अश्रुबिन्दूद्भवा तस्याः प्रावर्तत महानदी ।
अनुवर्तती सृतिं तस्या भृगोः पत्न्या यशस्विनः ॥ ००६ ॥

तस्या मार्गं सृतवतीं दृष्ट्वा तु सरितं तदा ।
नाम तस्यास्तदा नद्याश्चक्रे लोकपितामहः ॥ ००७ ॥

वधूसरेति भगवांश्च्यवनस्याश्रमं प्रति ॥ ००७ ॥

स एवं च्यवनो जज्ञे भृगोः पुत्रः प्रतापवान् ।
तं ददर्श पिता तत्र च्यवनं तां च भामिनीम् ॥ ००८ ॥

स पुलोमां ततो भार्यां पप्रच्छ कुपितो भृगुः ।
केनासि रक्षसे तस्मै कथितेह जिहीर्षवे ॥ ००९ ॥

न हि त्वां वेद तद्रक्षो मद्भार्यां चारुहासिनीम् ॥ ००९ ॥

तत्त्वमाख्याहि तं ह्यद्य शप्तुमिच्छाम्यहं रुषा ।
बिभेति को न शापान्मे कस्य चायं व्यतिक्रमः ॥ ०१० ॥

पुलोमोवाच ॥

अग्निना भगवंस्तस्मै रक्षसेऽहं निवेदिता ।
ततो मामनयद्रक्षः क्रोशन्तीं कुररीमिव ॥ ०११ ॥

साहं तव सुतस्यास्य तेजसा परिमोक्षिता ।
भस्मीभूतं च तद्रक्षो मामुत्सृज्य पपात वै ॥ ०१२ ॥

सूत उवाच ॥

इति श्रुत्वा पुलोमाया भृगुः परममन्युमान् ।
शशापाग्निमभिक्रुद्धः सर्वभक्षो भविष्यसि ॥ ०१३ ॥

---

# अध्याय ००७

सूत उवाच ॥

शप्तस्तु भृगुणा वह्निः क्रुद्धो वाक्यमथाब्रवीत् ।
किमिदं साहसं ब्रह्मन्कृतवानसि सांप्रतम् ॥ ००१ ॥

धर्मे प्रयतमानस्य सत्यं च वदतः समम् ।
पृष्टो यदब्रुवं सत्यं व्यभिचारोऽत्र को मम ॥ ००२ ॥

पृष्टो हि साक्षी यः साक्ष्यं जानमानोऽन्यथा वदेत् ।
स पूर्वानात्मनः सप्त कुले हन्यात्तथा परान् ॥ ००३ ॥

यश्च कार्यार्थतत्त्वज्ञो जानमानो न भाषते ।

सोऽपि तेनैव पापेन लिप्यते नात्र संशयः ॥ ००४ ॥

शक्तोऽहमपि शप्तुं त्वां मान्यास्तु ब्राह्मणा मम ।
जानतोऽपि च ते व्यक्तं कथयिष्ये निबोध तत् ॥ ००५ ॥

योगेन बहुधात्मानं कृत्वा तिष्ठामि मूर्तिषु ।
अग्निहोत्रेषु सत्रेषु क्रियास्वथ मखेषु च ॥ ००६ ॥

वेदोक्तेन विधानेन मयि यद्धूयते हविः ।
देवताः पितरश्चैव तेन तृप्ता भवन्ति वै ॥ ००७ ॥

आपो देवगणाः सर्वे आपः पितृगणास्तथा ।
दर्शश्च पौर्णमासश्च देवानां पितृभिः सह ॥ ००८ ॥

देवताः पितरस्तस्मात्पितरश्चापि देवताः ।
एकीभूताश्च पूज्यन्ते पृथक्त्वेन च पर्वसु ॥ ००९ ॥

देवताः पितरश्चैव जुह्वते मयि यत्सदा ।
त्रिदशानां पितृणां च मुखमेवमहं स्मृतः ॥ ०१० ॥

अमावास्यां च पितरः पौर्णमास्यां च देवताः ।
मन्मुखेनैव हूयन्ते भुञ्जते च हुतं हविः ॥ ०११ ॥

सर्वभक्षः कथं तेषां भविष्यामि मुखं त्वहम् ॥ ०११ ॥

चिन्तयित्वा ततो वह्निश्चक्रे संहारमात्मनः ।
द्विजानामग्निहोत्रेषु यज्ञसत्रक्रियासु च ॥ ०१२ ॥

निरोङ्कारवषट्काराः स्वधास्वाहाविवर्जिताः ।
विनाग्निना प्रजाः सर्वास्तत आसन्सुदुःखिताः ॥ ०१३ ॥

अथर्षयः समुद्विग्ना देवान्गत्वाब्रुवन्वचः ।
अग्निनाशात्क्रियाभ्रंशाद्भ्रान्ता लोकास्त्रयोऽनघाः ॥ ०१४ ॥

विधध्वमत्र यत्कार्यं न स्यात्कालात्ययो यथा ॥ ०१४ ॥

अथर्षयश्च देवाश्च ब्रह्माणमुपगम्य तु ।
अग्नेरावेदयञ्शापं क्रियासंहारमेव च ॥ ०१५ ॥

भृगुणा वै महाभाग शप्तोऽग्निः कारणान्तरे ।
कथं देवमुखो भूत्वा यज्ञभागाग्रभुक्तथा ॥ ०१६ ॥

हुतभुक्सर्वलोकेषु सर्वभक्षत्वमेष्यति ॥ ०१६ ॥

श्रुत्वा तु तद्वचस्तेषामग्निमाहूय लोककृत् ।
उवाच वचनं श्लक्ष्णं भूतभावनमव्ययम् ॥ ०१७ ॥

लोकानामिह सर्वेषां त्वं कर्ता चान्त एव च ।
त्वं धारयसि लोकांस्त्रीन्क्रियाणां च प्रवर्तकः ॥ ०१८ ॥

स तथा कुरु लोकेश नोच्छिद्येरन्क्रिया यथा ॥ ०१८ ॥

कस्मादेवं विमूढस्त्वमीश्वरः सन्हुताशनः ।
त्वं पवित्रं यदा लोके सर्वभूतगतश्च ह ॥ ०१९ ॥

न त्वं सर्वशरीरेण सर्वभक्षत्वमेष्यसि ।
उपादानेऽर्चिषो यास्ते सर्वं धक्ष्यन्ति ताः शिखिन् ॥ ०२० ॥

यथा सूर्यांशुभिः स्पृष्टं सर्वं शुचि विभाव्यते ।
तथा त्वदर्चिर्निर्दग्धं सर्वं शुचि भविष्यति ॥ ०२१ ॥

तदग्ने त्वं महत्तेजः स्वप्रभावाद्विनिर्गतम् ।

स्वतेजसैव तं शापं कुरु सत्यमृषेर्विभो ॥ ०२२ ॥

देवानां चात्मनो भागं गृहाण त्वं मुखे हुतम् ॥ ०२२ ॥

एवमस्त्विति तं वह्निः प्रत्युवाच पितामहम् ।
जगाम शासनं कर्तुं देवस्य परमेष्ठिनः ॥ ०२३ ॥

देवर्षयश्च मुदितास्ततो जग्मुर्यथागतम् ।
ऋषयश्च यथापूर्वं क्रियाः सर्वाः प्रचक्रिरे ॥ ०२४ ॥

दिवि देवा मुमुदिरे भूतसंघाश्च लौकिकाः ।
अग्निश्च परमां प्रीतिमवाप हतकल्मषः ॥ ०२५ ॥

एवमेष पुरावृत्त इतिहासोऽग्निशापजः ।
पुलोमस्य विनाशश्च च्यवनस्य च संभवः ॥ ०२६ ॥

---

# अध्याय ००८

सूत उवाच ॥

स चापि च्यवनो ब्रह्मन्भार्गवोऽजनयत्सुतम् ।
सुकन्यायां महात्मानं प्रमतिं दीप्ततेजसम् ॥ ००१ ॥

प्रमतिस्तु रुरुं नाम घृताच्यां समजीजनत् ।
रुरुः प्रमद्वरायां तु शुनकं समजीजनत् ॥ ००२ ॥

तस्य ब्रह्मन्रुरोः सर्वं चरितं भूरितेजसः ।
विस्तरेण प्रवक्ष्यामि तच्छृणु त्वमशेषतः ॥ ००३ ॥

ऋषिरासीन्महान्पूर्वं तपोविद्यासमन्वितः ।
स्थूलकेश इति ख्यातः सर्वभूतहिते रतः ॥ ००४ ॥

एतस्मिन्नेव काले तु मेनकायां प्रजज्ञिवान् ।
गन्धर्वराजो विप्रर्षे विश्वावसुरिति श्रुतः ॥ ००५ ॥

अथाप्सरा मेनका सा तं गर्भं भृगुनन्दन ।
उत्ससर्ज यथाकालं स्थूलकेशाश्रमं प्रति ॥ ००६ ॥

उत्सृज्य चैव तं गर्भं नद्यास्तीरे जगाम ह ।
कन्याममरगर्भाभां ज्वलन्तीमिव च श्रिया ॥ ००७ ॥

तां ददर्श समुत्सृष्टां नदीतीरे महानृषिः ।
स्थूलकेशः स तेजस्वी विजने बन्धुवर्जिताम् ॥ ००८ ॥

स तां दृष्ट्वा तदा कन्यां स्थूलकेशो द्विजोत्तमः ।
जग्राहाथ मुनिश्रेष्ठः कृपाविष्टः पुपोष च ॥ ००९ ॥

ववृधे सा वरारोहा तस्याश्रमपदे शुभा ॥ ००९ ॥

प्रमदाभ्यो वरा सा तु सर्वरूपगुणान्विता ।
ततः प्रमद्वरेत्यस्या नाम चक्रे महानृषिः ॥ ०१० ॥

तामाश्रमपदे तस्य रुरुर्दृष्ट्वा प्रमद्वराम् ।
बभूव किल धर्मात्मा मदनानुगतात्मवान् ॥ ०११ ॥

पितरं सखिभिः सोऽथ वाचयामास भार्गवः ।
प्रमतिश्चाभ्ययाच्छ्रुत्वा स्थूलकेशं यशस्विनम् ॥ ०१२ ॥

ततः प्रादात्पिता कन्यां रुरवे तां प्रमद्वराम् ।

विवाहं स्थापयित्वाग्रे नक्षत्रे भगदैवते ॥ ०१३ ॥

ततः कतिपयाहस्य विवाहे समुपस्थिते ।
सखीभिः क्रीडती सार्धं सा कन्या वरवर्णिनी ॥ ०१४ ॥

नापश्यत प्रसुप्तं वै भुजगं तिर्यगायतम् ।
पदा चैनं समाक्रामन्मुमूर्षुः कालचोदिता ॥ ०१५ ॥

स तस्याः संप्रमत्तायाश्चोदितः कालधर्मणा ।
विषोपलिप्तान्दशनान्भृशमङ्गे न्यपातयत् ॥ ०१६ ॥

सा दष्टा सहसा भूमौ पतिता गतचेतना ।
व्यसुरप्रेक्षणीयापि प्रेक्षणीयतमाकृतिः ॥ ०१७ ॥

प्रसुप्तेवाभवच्चापि भुवि सर्पविषार्दिता ।
भूयो मनोहरतरा बभूव तनुमध्यमा ॥ ०१८ ॥

ददर्श तां पिता चैव ते चैवान्ये तपस्विनः ।
विचेष्टमानां पतितां भूतले पद्मवर्चसम् ॥ ०१९ ॥

ततः सर्वे द्विजवराः समाजग्मुः कृपान्विताः ।
स्वस्त्यात्रेयो महाजानुः कुशिकः शङ्खमेखलः ॥ ०२० ॥

भारद्वाजः कौणकुत्स आर्ष्टिषेणोऽथ गौतमः ।
प्रमतिः सह पुत्रेण तथान्ये वनवासिनः ॥ ०२१ ॥

तां ते कन्यां व्यसुं दृष्ट्वा भुजगस्य विषार्दिताम् ।
रुरुदुः कृपयाविष्टा रुरुस्त्वार्तो बहिर्ययौ ॥ ०२२ ॥

# अध्याय ००९

सूत उवाच ॥

तेषु तत्रोपविष्टेषु ब्राह्मणेषु समन्ततः ।
रुरुश्चुक्रोश गहनं वनं गत्वा सुदुःखितः ॥ ००१ ॥

शोकेनाभिहतः सोऽथ विलपन्करुणं बहु ।
अब्रवीद्वचनं शोचन्प्रियां चिन्त्य प्रमद्वराम् ॥ ००२ ॥

शेते सा भुवि तन्वङ्गी मम शोकविवर्धिनी ।
बान्धवानां च सर्वेषां किं नु दुःखमतः परम् ॥ ००३ ॥

यदि दत्तं तपस्तप्तं गुरवो वा मया यदि ।
सम्यगाराधितास्तेन सञ्जीवतु मम प्रिया ॥ ००४ ॥

यथा जन्मप्रभृति वै यतात्माहं धृतव्रतः ।
प्रमद्वरा तथाद्यैव समुत्तिष्ठतु भामिनी ॥ ००५ ॥

देवदूत उवाच ॥

अभिधत्से ह यद्वाचा रुरो दुःखेन तन्मृषा ।
न तु मर्त्यस्य धर्मात्मन्नायुरस्ति गतायुषः ॥ ००६ ॥

गतायुरेषा कृपणा गन्धर्वाप्सरसोः सुता ।
तस्माच्छोके मनस्तात मा कृथास्त्वं कथञ्चन ॥ ००७ ॥

उपायश्चात्र विहितः पूर्वं देवैर्महात्मभिः ।
तं यदीच्छसि कर्तुं त्वं प्राप्स्यसीमां प्रमद्वराम् ॥ ००८ ॥

रुरुरुवाच ॥

क उपायः कृतो देवैर्ब्रूहि तत्त्वेन खेचर ।
करिष्ये तं तथा श्रुत्वा त्रातुमर्हति मां भवान् ॥ ००९ ॥

देवदूत उवाच ॥

आयुषोऽर्धं प्रयच्छस्व कन्यायै भृगुनन्दन ।
एवमुत्थास्यति रुरो तव भार्या प्रमद्वरा ॥ ०१० ॥

रुरुरुवाच ॥

आयुषोऽर्धं प्रयच्छामि कन्यायै खेचरोत्तम ।
शृङ्गाररूपाभरणा उत्तिष्ठतु मम प्रिया ॥ ०११ ॥

सूत उवाच ॥

ततो गन्धर्वराजश्च देवदूतश्च सत्तमौ ।
धर्मराजमुपेत्येदं वचनं प्रत्यभाषताम् ॥ ०१२ ॥

धर्मराजायुषोऽर्धेन रुरोर्भार्या प्रमद्वरा ।
समुत्तिष्ठतु कल्याणी मृतैव यदि मन्यसे ॥ ०१३ ॥

धर्मराज उवाच ॥

प्रमद्वरा रुरोर्भार्या देवदूत यदीच्छसि ।
उत्तिष्ठत्वायुषोऽर्धेन रुरोरेव समन्विता ॥ ०१४ ॥

सूत उवाच ॥

एवमुक्ते ततः कन्या सोदतिष्ठत्प्रमद्वरा ।
रुरोस्तस्यायुषोऽर्धेन सुप्तेव वरवर्णिनी ॥ ०१५ ॥

एतद्दृष्टं भविष्ये हि रुरोरुत्तमतेजसः ।
आयुषोऽतिप्रवृद्धस्य भार्यार्थेऽर्धं ह्रसत्विति ॥ ०१६ ॥

तत इष्टेऽहनि तयोः पितरौ चक्रतुर्मुदा ।
विवाहं तौ च रेमाते परस्परहितैषिणौ ॥ ०१७ ॥

स लब्ध्वा दुर्लभां भार्यां पद्मकिञ्जल्कसप्रभाम् ।
व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः ॥ ०१८ ॥

स दृष्ट्वा जिह्मगान्सर्वांस्तीव्रकोपसमन्वितः ।
अभिहन्ति यथासन्नं गृह्य प्रहरणं सदा ॥ ०१९ ॥

स कदाचिद्वनं विप्रो रुरुरभ्यागमन्महत् ।
शयानं तत्र चापश्यड्डुण्डुभं वयसान्वितम् ॥ ०२० ॥

तत उद्यम्य दण्डं स कालदण्डोपमं तदा ।
अभ्यघ्नद्रुषितो विप्रस्तमुवाचाथ डुण्डुभः ॥ ०२१ ॥

नापराध्यामि ते किञ्चिदहमद्य तपोधन ।
संरम्भात्तत्किमर्थं मामभिहंसि रुषान्वितः ॥ ०२२ ॥

---

# अध्याय ०१०

रुरुरुवाच ॥

मम प्राणसमा भार्या दष्टासीद्भुजगेन ह ।
तत्र मे समयो घोर आत्मनोरग वै कृतः ॥ ००१ ॥

हन्यां सदैव भुजगं यं यं पश्येयमित्युत ।
ततोऽहं त्वां जिघांसामि जीवितेन विमोक्ष्यसे ॥ ००२ ॥

डुण्डुभ उवाच ॥

अन्ये ते भुजगा विप्र ये दशन्तीह मानवान् ।
डुण्डुभानहिगन्धेन न त्वं हिंसितुमर्हसि ॥ ००३ ॥

एकानर्थान्पृथगर्थानेकदुःखान्पृथक्सुखान् ।
डुण्डुभान्धर्मविद्भूत्वा न त्वं हिंसितुमर्हसि ॥ ००४ ॥

सूत उवाच ॥

इति श्रुत्वा वचस्तस्य भुजगस्य रुरुस्तदा ।
नावधीद्भयसंविग्न ऋषिं मत्वाथ डुण्डुभम् ॥ ००५ ॥

उवाच चैनं भगवान्रुरुः संशमयन्निव ।
कामया भुजग ब्रूहि कोऽसीमां विक्रियां गतः ॥ ००६ ॥

डुण्डुभ उवाच ॥

अहं पुरा रुरो नाम्ना ऋषिरासं सहस्रपात् ।
सोऽहं शापेन विप्रस्य भुजगत्वमुपागतः ॥ ००७ ॥

रुरुरुवाच ॥

किमर्थं शप्तवान्क्रुद्धो द्विजस्त्वां भुजगोत्तम ।
कियन्तं चैव कालं ते वपुरेतद्भविष्यति ॥ ००८ ॥

# अध्याय ०११

डुण्डुभ उवाच ॥

सखा बभूव मे पूर्वं खगमो नाम वै द्विजः ।
भृशं संशितवाक्तात तपोबलसमन्वितः ॥ ००१ ॥

स मया क्रीडता बाल्ये कृत्वा तार्णमथोरगम् ।
अग्निहोत्रे प्रसक्तः सन्भीषितः प्रमुमोह वै ॥ ००२ ॥

लब्ध्वा च स पुनः सञ्ज्ञां मामुवाच तपोधनः ।
निर्दहन्निव कोपेन सत्यवाक्संशितव्रतः ॥ ००३ ॥

यथावीर्यस्त्वया सर्पः कृतोऽयं मद्विभीषया ।
तथावीर्यो भुजङ्गस्त्वं मम कोपाद्भविष्यसि ॥ ००४ ॥

तस्याहं तपसो वीर्यं जानमानस्तपोधन ।
भृशमुद्विग्नहृदयस्तमवोचं वनौकसम् ॥ ००५ ॥

प्रयतः संभ्रमाच्चैव प्राञ्जलिः प्रणतः स्थितः ।
सखेति हसतेदं ते नर्मार्थं वै कृतं मया ॥ ००६ ॥

क्षन्तुमर्हसि मे ब्रह्मञ्शापोऽयं विनिवर्त्यताम् ।
सोऽथ मामब्रवीद्दृष्ट्वा भृशमुद्विग्नचेतसम् ॥ ००७ ॥

मुहुरुष्णं विनिःश्वस्य सुसंभ्रान्तस्तपोधनः ।
नानृतं वै मया प्रोक्तं भवितेदं कथञ्चन ॥ ००८ ॥

यत्तु वक्ष्यामि ते वाक्यं शृणु तन्मे धृतव्रत ।

श्रुत्वा च हृदि ते वाक्यमिदमस्तु तपोधन ॥ ००९ ॥

उत्पत्स्यति रुरुर्नाम प्रमतेरात्मजः शुचिः ।
तं दृष्ट्वा शापमोक्षस्ते भविता नचिरादिव ॥ ०१० ॥

स त्वं रुरुरिति ख्यातः प्रमतेरात्मजः शुचिः ।
स्वरूपं प्रतिलभ्याहमद्य वक्ष्यामि ते हितम् ॥ ०११ ॥

अहिंसा परमो धर्मः सर्वप्राणभृतां स्मृतः ।
तस्मात्प्राणभृतः सर्वान्न हिंस्याद्ब्राह्मणः क्वचित् ॥ ०१२ ॥

ब्राह्मणः सौम्य एवेह जायतेति परा श्रुतिः ।
वेदवेदाङ्गवित्तात सर्वभूताभयप्रदः ॥ ०१३ ॥

अहिंसा सत्यवचनं क्षमा चेति विनिश्चितम् ।
ब्राह्मणस्य परो धर्मो वेदानां धरणादपि ॥ ०१४ ॥

क्षत्रियस्य तु यो धर्मः स नेहेष्यति वै तव ।
दण्डधारणमुग्रत्वं प्रजानां परिपालनम् ॥ ०१५ ॥

तदिदं क्षत्रियस्यासीत्कर्म वै शृणु मे रुरो ।
जनमेजयस्य धर्मात्मन्सर्पाणां हिंसनं पुरा ॥ ०१६ ॥

परित्राणं च भीतानां सर्पाणां ब्राह्मणादपि ।
तपोवीर्यबलोपेताद्वेदवेदाङ्गपारगात् ॥ ०१७ ॥

आस्तीकाद्द्विजमुख्याद्वै सर्पसत्रे द्विजोत्तम ॥ ०१७ ॥

# अध्याय ०१२

रुरुरुवाच ॥

कथं हिंसितवान्सर्पान्क्षत्रियो जनमेजयः ।
सर्पा वा हिंसितास्तात किमर्थं द्विजसत्तम ॥ ००१ ॥

किमर्थं मोक्षिताश्चैव पन्नगास्तेन शंस मे ।
आस्तीकेन तदाचक्ष्व श्रोतुमिच्छाम्यशेषतः ॥ ००२ ॥

ऋषिरुवाच ॥

श्रोष्यसि त्वं रुरो सर्वमास्तीकचरितं महत् ।
ब्राह्मणानां कथयतामित्युक्त्वान्तरधीयत ॥ ००३ ॥

सूत उवाच ॥

रुरुश्चापि वनं सर्वं पर्यधावत्समन्ततः ।
तमृषिं द्रष्टुमन्विच्छन्संश्रान्तो न्यपतद्भुवि ॥ ००४ ॥

लब्धसञ्ज्ञो रुरुश्चायात्तच्चाचख्यौ पितुस्तदा ।
पिता चास्य तदाख्यानं पृष्टः सर्वं न्यवेदयत् ॥ ००५ ॥

---

# आस्तीकपर्व

## अध्याय ०१३

शौनक उवाच ॥

किमर्थं राजशार्दूलः स राजा जनमेजयः ।
सर्पसत्रेण सर्पाणां गतोऽन्तं तद्वदस्व मे ॥ ००१ ॥

आस्तीकश्च द्विजश्रेष्ठः किमर्थं जपतां वरः ।
मोक्षयामास भुजगान्दीप्तात्तस्माद्धुताशनात् ॥ ००२ ॥

कस्य पुत्रः स राजासीत्सर्पसत्रं य आहरत् ।
स च द्विजातिप्रवरः कस्य पुत्रो वदस्व मे ॥ ००३ ॥

सूत उवाच ॥

महदाख्यानमास्तीकं यत्रैतत्प्रोच्यते द्विज ।
सर्वमेतदशेषेण शृणु मे वदतां वर ॥ ००४ ॥

शौनक उवाच ॥

श्रोतुमिच्छाम्यशेषेण कथामेतां मनोरमाम् ।
आस्तीकस्य पुराणस्य ब्राह्मणस्य यशस्विनः ॥ ००५ ॥

सूत उवाच ॥

इतिहासमिमं वृद्धाः पुराणं परिचक्षते ।
कृष्णद्वैपायनप्रोक्तं नैमिषारण्यवासिनः ॥ ००६ ॥

पूर्वं प्रचोदितः सूतः पिता मे लोमहर्षणः ।
शिष्यो व्यासस्य मेधावी ब्राह्मणैरिदमुक्तवान् ॥ ००७ ॥

तस्मादहमुपश्रुत्य प्रवक्ष्यामि यथातथम् ।
इदमास्तीकमाख्यानं तुभ्यं शौनक पृच्छते ॥ ००८ ॥

आस्तीकस्य पिता ह्यासीत्प्रजापतिसमः प्रभुः ।
ब्रह्मचारी यताहारस्तपस्युग्रे रतः सदा ॥ ००९ ॥

जरत्कारुरिति ख्यात ऊर्ध्वरेता महानृषिः ।
यायावराणां धर्मज्ञः प्रवरः संशितव्रतः ॥ ०१० ॥

अटमानः कदाचित्स स्वान्ददर्श पितामहान् ।
लम्बमानान्महागर्ते पादैरूर्ध्वैरधोमुखान् ॥ ०११ ॥

तानब्रवीत्स दृष्ट्वैव जरत्कारुः पितामहान् ।
के भवन्तोऽवलम्बन्ते गर्तेऽस्मिन्वा अधोमुखाः ॥ ०१२ ॥

वीरणस्तम्बके लग्नाः सर्वतः परिभक्षिते ।
मूषकेन निगूढेन गर्तेऽस्मिन्नित्यवासिना ॥ ०१३ ॥

पितर ऊचुः ॥

यायावरा नाम वयमृषयः संशितव्रताः ।
संतानप्रक्षयाद्ब्रह्मन्नधो गच्छाम मेदिनीम् ॥ ०१४ ॥

अस्माकं संततिस्त्वेको जरत्कारुरिति श्रुतः ।
मन्दभाग्योऽल्पभाग्यानां तप एव समास्थितः ॥ ०१५ ॥

न स पुत्राञ्जनयितुं दारान्मूढश्चिकीर्षति ।
तेन लम्बामहे गर्ते संतानप्रक्षयादिह ॥ ०१६ ॥

अनाथास्तेन नाथेन यथा दुष्कृतिनस्तथा ।
कस्त्वं बन्धुरिवास्माकमनुशोचसि सत्तम ॥ ०१७ ॥

ज्ञातुमिच्छामहे ब्रह्मन्को भवानिह धिष्ठितः ।
किमर्थं चैव नः शोच्याननुकम्पितुमर्हसि ॥ ०१८ ॥

जरत्कारुरुवाच ॥

मम पूर्वे भवन्तो वै पितरः सपितामहाः ।
ब्रूत किं करवाण्यद्य जरत्कारुरहं स्वयम् ॥ ०१९ ॥

पितर ऊचुः ॥

यतस्व यत्नवांस्तात संतानाय कुलस्य नः ।
आत्मनोऽर्थेऽस्मदर्थे च धर्म इत्येव चाभिभो ॥ ०२० ॥

न हि धर्मफलैस्तात न तपोभिः सुसञ्चितैः ।
तां गतिं प्राप्नुवन्तीह पुत्रिणो यां व्रजन्ति ह ॥ ०२१ ॥

तद्दारग्रहणे यत्नं संतत्यां च मनः कुरु ।
पुत्रकास्मन्नियोगात्त्वमेतन्नः परमं हितम् ॥ ०२२ ॥

जरत्कारुरुवाच ॥

न दारान्वै करिष्यामि सदा मे भावितं मनः ।
भवतां तु हितार्थाय करिष्ये दारसङ्ग्रहम् ॥ ०२३ ॥

समयेन च कर्ताहमनेन विधिपूर्वकम् ।
तथा यद्युपलप्स्यामि करिष्ये नान्यथा त्वहम् ॥ ०२४ ॥

सनाम्नी या भवित्री मे दित्सिता चैव बन्धुभिः ।
भैक्षवत्तामहं कन्यामुपयंस्ये विधानतः ॥ ०२५ ॥

दरिद्राय हि मे भार्यां को दास्यति विशेषतः ।
प्रतिग्रहीष्ये भिक्षां तु यदि कश्चित्प्रदास्यति ॥ ०२६ ॥

एवं दारक्रियाहेतोः प्रयतिष्ये पितामहाः ।
अनेन विधिना शश्वन्न करिष्येऽहमन्यथा ॥ ०२७ ॥

तत्र चोत्पतस्यते जन्तुर्भवतां तारणाय वै ।
शाश्वतं स्थानमासाद्य मोदन्तां पितरो मम ॥ ०२८ ॥

सूत उवाच ॥

ततो निवेशाय तदा स विप्रः संशितव्रतः ।
महीं चचार दारार्थी न च दारानविन्दत ॥ ०२९ ॥

स कदाचिद्वनं गत्वा विप्रः पितृवचः स्मरन् ।
चुक्रोश कन्याभिक्षार्थी तिस्रो वाचः शनैरिव ॥ ०३० ॥

तं वासुकिः प्रत्यगृह्णादुद्यम्य भगिनीं तदा ।
न स तां प्रतिजग्राह न सनाम्नीति चिन्तयन् ॥ ०३१ ॥

सनाम्नीमुद्यतां भार्यां गृह्णीयामिति तस्य हि ।
मनो निविष्टमभवज्जरत्कारोर्महात्मनः ॥ ०३२ ॥

तमुवाच महाप्राज्ञो जरत्कारुर्महातपाः ।
किंनाम्नी भगिनीयं ते ब्रूहि सत्यं भुजङ्गम ॥ ०३३ ॥

वासुकिरुवाच ॥

जरत्कारो जरत्कारुः स्वसेयमनुजा मम ।
त्वदर्थं रक्षिता पूर्वं प्रतीच्छेमां द्विजोत्तम ॥ ०३४ ॥

सूत उवाच ॥

मात्रा हि भुजगाः शप्ताः पूर्वं ब्रह्मविदां वर ।

जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ॥ ०३५ ॥

तस्य शापस्य शान्त्यर्थं प्रददौ पन्नगोत्तमः ।
स्वसारमृषये तस्मै सुव्रताय तपस्विने ॥ ०३६ ॥

स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ।
आस्तीको नाम पुत्रश्च तस्यां जज्ञे महात्मनः ॥ ०३७ ॥

तपस्वी च महात्मा च वेदवेदाङ्गपारगः ।
समः सर्वस्य लोकस्य पितृमातृभयापहः ॥ ०३८ ॥

अथ कालस्य महतः पाण्डवेयो नराधिपः ।
आजहार महायज्ञं सर्पसत्रमिति श्रुतिः ॥ ०३९ ॥

तस्मिन्प्रवृत्ते सत्रे तु सर्पाणामन्तकाय वै ।
मोचयामास तं शापमास्तीकः सुमहायशाः ॥ ०४० ॥

नागांश्च मातुलांश्चैव तथा चान्यान्स बान्धवान् ।
पितृंश्च तारयामास संतत्या तपसा तथा ॥ ०४१ ॥

व्रतैश्च विविधैर्ब्रह्मन्स्वाध्यायैश्चानृणोऽभवत् ॥ ०४१ ॥

देवांश्च तर्पयामास यज्ञैर्विविधदक्षिणैः ।
ऋषींश्च ब्रह्मचर्येण संतत्या च पितामहान् ॥ ०४२ ॥

अपहृत्य गुरुं भारं पितृणां संशितव्रतः ।
जरत्कारुर्गतः स्वर्गं सहितः स्वैः पितामहैः ॥ ०४३ ॥

आस्तीकं च सुतं प्राप्य धर्मं चानुत्तमं मुनिः ।
जरत्कारुः सुमहता कालेन स्वर्गमीयिवान् ॥ ०४४ ॥

एतदाख्यानमास्तीकं यथावत्कीर्तितं मया ।
प्रब्रूहि भृगुशार्दूल किं भूयः कथ्यतामिति ॥ ०४५ ॥

---

# अध्याय ०१४

शौनक उवाच ॥

सौते कथय तामेतां विस्तरेण कथां पुनः ।
आस्तीकस्य कवेः साधोः शुश्रूषा परमा हि नः ॥ ००१ ॥

मधुरं कथ्यते सौम्य श्लक्ष्णाक्षरपदं त्वया ।
प्रीयामहे भृशं तात पितेवेदं प्रभाषसे ॥ ००२ ॥

अस्मच्छुश्रूषणे नित्यं पिता हि निरतस्तव ।
आचष्टैतद्यथाख्यानं पिता ते त्वं तथा वद ॥ ००३ ॥

सूत उवाच ॥

आयुष्यमिदमाख्यानमास्तीकं कथयामि ते ।
यथा श्रुतं कथयतः सकाशाद्वै पितुर्मया ॥ ००४ ॥

पुरा देवयुगे ब्रह्मन्प्रजापतिसुते शुभे ।
आस्तां भगिन्यौ रूपेण समुपेतेऽद्भुतेऽनघे ॥ ००५ ॥

ते भार्ये कश्यपस्यास्तां कद्रूश्च विनता च ह ।
प्रादात्ताभ्यां वरं प्रीतः प्रजापतिसमः पतिः ॥ ००६ ॥

कश्यपो धर्मपत्नीभ्यां मुदा परमया युतः ॥ ००६ ॥

वरातिसर्गं श्रुत्वैव कश्यपादुत्तमं च ते ।
हर्षादप्रतिमां प्रीतिं प्रापतुः स्म वरस्त्रियौ ॥ ००७ ॥

वव्रे कद्रूः सुतान्नागान्सहस्रं तुल्यतेजसः ।
द्वौ पुत्रौ विनता वव्रे कद्रूपुत्राधिकौ बले ॥ ००८ ॥

ओजसा तेजसा चैव विक्रमेणाधिकौ सुतौ ॥ ००८ ॥

तस्यै भर्ता वरं प्रादादध्यर्धं पुत्रमीप्सितम् ।
एवमस्त्विति तं चाह कश्यपं विनता तदा ॥ ००९ ॥

कृतकृत्या तु विनता लब्ध्वा वीर्याधिकौ सुतौ ।
कद्रूश्च लब्ध्वा पुत्राणां सहस्रं तुल्यतेजसाम् ॥ ०१० ॥

धार्यौ प्रयत्नतो गर्भावित्युक्त्वा स महातपाः ।
ते भार्ये वरसंहृष्टे कश्यपो वनमाविशत् ॥ ०११ ॥

कालेन महता कद्रूरण्डानां दशतीर्दश ।
जनयामास विप्रेन्द्र द्वे अण्डे विनता तदा ॥ ०१२ ॥

तयोरण्डानि निदधुः प्रहृष्टाः परिचारिकाः ।
सोपस्वेदेषु भाण्डेषु पञ्च वर्षशतानि च ॥ ०१३ ॥

ततः पञ्चशते काले कद्रूपुत्रा विनिःसृताः ।
अण्डाभ्यां विनतायास्तु मिथुनं न व्यदृश्यत ॥ ०१४ ॥

ततः पुत्रार्थिणी देवी व्रीडिता सा तपस्विनी ।
अण्डं बिभेद विनता तत्र पुत्रमदृक्षत ॥ ०१५ ॥

पूर्वार्धकायसंपन्नमितरेणाप्रकाशता ।
स पुत्रो रोषसंपन्नः शशापैनामिति श्रुतिः ॥ ०१६ ॥

योऽहमेवं कृतो मातस्त्वया लोभपरीतया ।
शरीरेणासमग्रोऽद्य तस्माद्दासी भविष्यसि ॥ ०१७ ॥

पञ्च वर्षशतान्यस्या यया विस्पर्धसे सह ।
एष च त्वां सुतो मातर्दास्यत्वान्मोक्षयिष्यति ॥ ०१८ ॥

यद्येनमपि मातस्त्वं मामिवाण्डविभेदनात् ।
न करिष्यस्यदेहं वा व्यङ्गं वापि तपस्विनम् ॥ ०१९ ॥

प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया ।
विशिष्टबलमीप्सन्त्या पञ्चवर्षशतात्परः ॥ ०२० ॥

एवं शप्त्वा ततः पुत्रो विनतामन्तरिक्षगः ।
अरुणो दृश्यते ब्रह्मन्प्रभातसमये सदा ॥ ०२१ ॥

गरुडोऽपि यथाकालं जज्ञे पन्नगसूदनः ।
स जातमात्रो विनतां परित्यज्य खमाविशत् ॥ ०२२ ॥

आदास्यन्नात्मनो भोज्यमन्नं विहितमस्य यत् ।
विधात्रा भृगुशार्दूल क्षुधितस्य बुभुक्षतः ॥ ०२३ ॥

---

# अध्याय ०१५

सूत उवाच ॥

एतस्मिन्नेव काले तु भगिन्यौ ते तपोधन ।
अपश्यतां समायान्तमुच्चैःश्रवसमन्तिकात् ॥ ००१ ॥

यं तं देवगणाः सर्वे हृष्टरूपा अपूजयन् ।
मथ्यमानेऽमृते जातमश्वरत्नमनुत्तमम् ॥ ००२ ॥

महौघबलमश्वानामुत्तमं जवतां वरम् ।
श्रीमन्तमजरं दिव्यं सर्वलक्षणलक्षितम् ॥ ००३ ॥

शौनक उवाच ॥

कथं तदमृतं देवैर्मथितं क्व च शंस मे ।
यत्र जज्ञे महावीर्यः सोऽश्वराजो महाद्युतिः ॥ ००४ ॥

सूत उवाच ॥

ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमम् ।
आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः ॥ ००५ ॥

काञ्चनाभरणं चित्रं देवगन्धर्वसेवितम् ।
अप्रमेयमनाधृष्यमधर्मबहुलैर्जनैः ॥ ००६ ॥

व्यालैराचरितं घोरैर्दिव्यौषधिविदीपितम् ।
नाकमावृत्य तिष्ठन्तमुच्छ्रयेण महागिरिम् ॥ ००७ ॥

अगम्यं मनसाप्यन्यैर्नदीवृक्षसमन्वितम् ।
नानापतगसंघैश्च नादितं सुमनोहरैः ॥ ००८ ॥

तस्य पृष्ठमुपारुह्य बहुरत्नाचितं शुभम् ।
अनन्तकल्पमुद्विद्धं सुराः सर्वे महौजसः ॥ ००९ ॥

ते मन्त्रयितुमारब्धास्तत्रासीना दिवौकसः ।
अमृतार्थे समागम्य तपोनियमसंस्थिताः ॥ ०१० ॥

तत्र नारायणो देवो ब्रह्माणमिदमब्रवीत् ।
चिन्तयत्सु सुरेष्वेवं मन्त्रयत्सु च सर्वशः ॥ ०११ ॥

देवैरसुरसंघैश्च मथ्यतां कलशोदधिः ।
भविष्यत्यमृतं तत्र मथ्यमाने महोदधौ ॥ ०१२ ॥

सर्वौषधीः समावाप्य सर्वरत्नानि चैव हि ।
मन्थध्वमुदधिं देवा वेत्स्यध्वममृतं ततः ॥ ०१३ ॥

---

# अध्याय ०१६

सूत उवाच ॥

ततोऽभ्रशिखराकारैर्गिरिशृङ्गैरलङ्कृतम् ।
मन्दरं पर्वतवरं लताजालसमावृतम् ॥ ००१ ॥

नानाविहगसंघुष्टं नानादंष्ट्रिसमाकुलम् ।
किंनरैरप्सरोभिश्च देवैरपि च सेवितम् ॥ ००२ ॥

एकादश सहस्राणि योजनानां समुच्छ्रितम् ।
अधो भूमेः सहस्रेषु तावत्स्वेव प्रतिष्ठितम् ॥ ००३ ॥

तमुद्धर्तुं न शक्ता वै सर्वे देवगणास्तदा ।
विष्णुमासीनमभ्येत्य ब्रह्माणं चेदमब्रुवन् ॥ ००४ ॥

भवन्तावत्र कुरुतां बुद्धिं नैःश्रेयसीं पराम् ।
मन्दरोद्धरणे यत्नः क्रियतां च हिताय नः ॥ ००५ ॥

तथेति चाब्रवीद्विष्णुर्ब्रह्मणा सह भार्गव ।
ततोऽनन्तः समुत्थाय ब्रह्मणा परिचोदितः ॥ ००६ ॥

नारायणेन चाप्युक्तस्तस्मिन्कर्मणि वीर्यवान् ॥ ००६ ॥

अथ पर्वतराजानं तमनन्तो महाबलः ।
उज्जहार बलाद्ब्रह्मन्सवनं सवनौकसम् ॥ ००७ ॥

ततस्तेन सुराः सार्धं समुद्रमुपतस्थिरे ।
तमूचुरमृतार्थाय निर्मथिष्यामहे जलम् ॥ ००८ ॥

अपांपतिरथोवाच ममाप्यंशो भवेत्ततः ।
सोढास्मि विपुलं मर्दं मन्दरभ्रमणादिति ॥ ००९ ॥

ऊचुश्च कूर्मराजानमकूपारं सुरासुराः ।
गिरेरधिष्ठानमस्य भवान्भवितुमर्हति ॥ ०१० ॥

कूर्मेण तु तथेत्युक्त्वा पृष्ठमस्य समर्पितम् ।
तस्य शैलस्य चाग्रं वै यन्त्रेणेन्द्रोऽभ्यपीडयत् ॥ ०११ ॥

मन्थानं मन्दरं कृत्वा तथा नेत्रं च वासुकिम् ।
देवा मथितुमारब्धाः समुद्रं निधिमम्भसाम् ॥ ०१२ ॥

अमृतार्थिनस्ततो ब्रह्मन्सहिता दैत्यदानवाः ॥ ०१२ ॥

एकमन्तमुपाश्लिष्टा नागराज्ञो महासुराः ।
विबुधाः सहिताः सर्वे यतः पुच्छं ततः स्थिताः ॥ ०१३ ॥

अनन्तो भगवान्देवो यतो नारायणस्ततः ।
शिर उद्यम्य नागस्य पुनः पुनरवाक्षिपत् ॥ ०१४ ॥

वासुकेरथ नागस्य सहसाक्षिप्यतः सुरैः ।
सधूमाः सार्चिषो वाता निष्पेतुरसकृन्मुखात् ॥ ०१५ ॥

ते धूमसंघाः संभूता मेघसंघाः सविद्युतः ।
अभ्यवर्षन्सुरगणाञ्श्रमसंतापकर्शितान् ॥ ०१६ ॥

तस्माच्च गिरिकूटाग्रात्प्रच्युताः पुष्पवृष्टयः ।
सुरासुरगणान्माल्यैः सर्वतः समवाकिरन् ॥ ०१७ ॥

बभूवात्र महाघोषो महामेघरवोपमः ।
उदधेर्मथ्यमानस्य मन्दरेण सुरासुरैः ॥ ०१८ ॥

तत्र नानाजलचरा विनिष्पिष्टा महाद्रिणा ।
विलयं समुपाजग्मुः शतशो लवणाम्भसि ॥ ०१९ ॥

वारुणानि च भूतानि विविधानि महीधरः ।
पातालतलवासीनि विलयं समुपानयत् ॥ ०२० ॥

तस्मिंश्च भ्राम्यमाणेऽद्रौ संघृष्यन्तः परस्परम् ।
न्यपतन्पतगोपेताः पर्वताग्रान्महाद्रुमाः ॥ ०२१ ॥

तेषां संघर्षजश्चाग्निरर्चिर्भिः प्रज्वलन्मुहुः ।
विद्युद्भिरिव नीलाभ्रमावृणोन्मन्दरं गिरिम् ॥ ०२२ ॥

ददाह कुञ्जरांश्चैव सिंहांश्चैव विनिःसृतान् ।
विगतासूनि सर्वाणि सत्त्वानि विविधानि च ॥ ०२३ ॥

तमग्निममरश्रेष्ठः प्रदहन्तं ततस्ततः ।
वारिणा मेघजेनेन्द्रः शमयामास सर्वतः ॥ ०२४ ॥

ततो नानाविधास्तत्र सुस्रुवुः सागराम्भसि ।
महाद्रुमाणां निर्यासा बहवश्चौषधीरसाः ॥ ०२५ ॥

तेषाममृतवीर्याणां रसानां पयसैव च ।
अमरत्वं सुरा जग्मुः काञ्चनस्य च निःस्रवात् ॥ ०२६ ॥

अथ तस्य समुद्रस्य तज्जातमुदकं पयः ।
रसोत्तमैर्विमिश्रं च ततः क्षीरादभूद्धृतम् ॥ ०२७ ॥

ततो ब्रह्माणमासीनं देवा वरदमब्रुवन् ।
श्रान्ताः स्म सुभृशं ब्रह्मन्नोद्भवत्यमृतं च तत् ॥ ०२८ ॥

ऋते नारायणं देवं दैत्या नागोत्तमास्तथा ।
चिरारब्धमिदं चापि सागरस्यापि मन्थनम् ॥ ०२९ ॥

ततो नारायणं देवं ब्रह्मा वचनमब्रवीत् ।
विधत्स्वैषां बलं विष्णो भवानत्र परायणम् ॥ ०३० ॥

विष्णुरुवाच ॥

बलं ददामि सर्वेषां कर्मैतद्ये समास्थिताः ।
क्षोभ्यतां कलशः सर्वैर्मन्दरः परिवर्त्यताम् ॥ ०३१ ॥

सूत उवाच ॥

नारायणवचः श्रुत्वा बलिनस्ते महोदधेः ।
तत्पयः सहिता भूयश्चक्रिरे भृशमाकुलम् ॥ ०३२ ॥

ततः शतसहस्रांशुः समान इव सागरात् ।
प्रसन्नभाः समुत्पन्नः सोमः शीतांशुरुज्ज्वलः ॥ ०३३ ॥

श्रीरनन्तरमुत्पन्ना घृतात्पाण्डुरवासिनी ।
सुरा देवी समुत्पन्ना तुरगः पाण्डुरस्तथा ॥ ०३४ ॥

कौस्तुभश्च मणिर्दिव्य उत्पन्नोऽमृतसंभवः ।
मरीचिविकचः श्रीमान्नारायण उरोगतः ॥ ०३५ ॥

श्रीः सुरा चैव सोमश्च तुरगश्च मनोजवः ।
यतो देवास्ततो जग्मुरादित्यपथमाश्रिताः ॥ ०३६ ॥

धन्वन्तरिस्ततो देवो वपुष्मानुदतिष्ठत ।
श्वेतं कमण्डलुं बिभ्रदमृतं यत्र तिष्ठति ॥ ०३७ ॥

एतदत्यद्भुतं दृष्ट्वा दानवानां समुत्थितः ।
अमृतार्थे महान्नादो ममेदमिति जल्पताम् ॥ ०३८ ॥

ततो नारायणो मायामास्थितो मोहिनीं प्रभुः ।
स्त्रीरूपमद्भुतं कृत्वा दानवानभिसंश्रितः ॥ ०३९ ॥

ततस्तदमृतं तस्यै ददुस्ते मूढचेतसः ।
स्त्रियै दानवदैतेयाः सर्वे तद्गतमानसाः ॥ ०४० ॥

---

# अध्याय ०१७

सूत उवाच ॥

अथावरणमुख्यानि नानाप्रहरणानि च ।
प्रगृह्याभ्यद्रवन्देवान्सहिता दैत्यदानवाः ॥ ००१ ॥

ततस्तदमृतं देवो विष्णुरादाय वीर्यवान् ।
जहार दानवेन्द्रेभ्यो नरेण सहितः प्रभुः ॥ ००२ ॥

ततो देवगणाः सर्वे पपुस्तदमृतं तदा ।
विष्णोः सकाशात्संप्राप्य संभ्रमे तुमुले सति ॥ ००३ ॥

ततः पिबत्सु तत्कालं देवेष्वमृतमीप्सितम् ।
राहुर्विबुधरूपेण दानवः प्रापिबत्तदा ॥ ००४ ॥

तस्य कण्ठमनुप्राप्ते दानवस्यामृते तदा ।
आख्यातं चन्द्रसूर्याभ्यां सुराणां हितकाम्यया ॥ ००५ ॥

ततो भगवता तस्य शिरश्छिन्नमलङ्कृतम् ।
चक्रायुधेन चक्रेण पिबतोऽमृतमोजसा ॥ ००६ ॥

तच्छैलशृङ्गप्रतिमं दानवस्य शिरो महत् ।
चक्रेणोत्कृत्तमपतच्चालयद्वसुधातलम् ॥ ००७ ॥

ततो वैरविनिर्बन्धः कृतो राहुमुखेन वै ।
शाश्वतश्चन्द्रसूर्याभ्यां ग्रसत्यद्यापि चैव तौ ॥ ००८ ॥

विहाय भगवांश्चापि स्त्रीरूपमतुलं हरिः ।
नानाप्रहरणैर्भीमैर्दानवान्समकम्पयत् ॥ ००९ ॥

ततः प्रवृत्तः सङ्ग्रामः समीपे लवणाम्भसः ।
सुराणामसुराणां च सर्वघोरतरो महान् ॥ ०१० ॥

प्रासाः सुविपुलास्तीक्ष्णा न्यपतन्त सहस्रशः ।

तोमराश्च सुतीक्ष्णाग्राः शस्त्राणि विविधानि च ॥ ०११ ॥

ततोऽसुराश्चक्रभिन्ना वमन्तो रुधिरं बहु ।
असिशक्तिगदारुग्णा निपेतुर्धरणीतले ॥ ०१२ ॥

छिन्नानि पट्टिशैश्चापि शिरांसि युधि दारुणे ।
तप्तकाञ्चनजालानि निपेतुरनिशं तदा ॥ ०१३ ॥

रुधिरेणावलिप्ताङ्गा निहताश्च महासुराः ।
अद्रीणामिव कूटानि धातुरक्तानि शेरते ॥ ०१४ ॥

हाहाकारः समभवत्तत्र तत्र सहस्रशः ।
अन्योन्यं छिन्दतां शस्त्रैरादित्ये लोहितायति ॥ ०१५ ॥

परिघैश्चायसैः पीतैः संनिकर्षे च मुष्टिभिः ।
निघ्नतां समरेऽन्योन्यं शब्दो दिवमिवास्पृशत् ॥ ०१६ ॥

छिन्धि भिन्धि प्रधावध्वं पातयाभिसरेति च ।
व्यश्रूयन्त महाघोराः शब्दास्तत्र समन्ततः ॥ ०१७ ॥

एवं सुतुमुले युद्धे वर्तमाने भयावहे ।
नरनारायणौ देवौ समाजग्मतुराहवम् ॥ ०१८ ॥

तत्र दिव्यं धनुर्दृष्ट्वा नरस्य भगवानपि ।
चिन्तयामास वै चक्रं विष्णुर्दानवसूदनम् ॥ ०१९ ॥

ततोऽम्बराच्चिन्तितमात्रमागतं ; महाप्रभं चक्रममित्रतापनम् ।
विभावसोस्तुल्यमकुण्ठमण्डलं ; सुदर्शनं भीममजय्यमुत्तमम् ॥ ०२० ॥

तदागतं ज्वलितहुताशनप्रभं ; भयङ्करं करिकरबाहुरच्युतः ।
मुमोच वै चपलमुदग्रवेगव ;न्महाप्रभं परनगरावदारणम् ॥ ०२१ ॥

तदन्तकज्वलनसमानवर्चसं ; पुनः पुनर्न्यपतत वेगवत्तदा ।
विदारयद्दितिदनुजान्सहस्रशः ; करेरितं पुरुषवरेण संयुगे ॥ ०२२ ॥

दहत्क्वचिज्ज्वलन इवावलेलिह ;त्प्रसह्य तानसुरगणान्न्यकृन्तत ।
प्रवेरितं वियति मुहुः क्षितौ तदा ; पपौ रणे रुधिरमथो पिशाचवत् ॥ ०२३ ॥

अथासुरा गिरिभिरदीनचेतसो ; मुहुर्मुहुः सुरगणमर्दयंस्तदा ।
महाबला विगलितमेघवर्चसः ; सहस्रशो गगनमभिप्रपद्य ह ॥ ०२४ ॥

अथाम्बराद्भयजननाः प्रपेदिरे ; सपादपा बहुविधमेघरूपिणः ।
महाद्रयः प्रविगलिताग्रसानवः ; परस्परं द्रुतमभिहत्य सस्वनाः ॥ ०२५ ॥

ततो मही प्रविचलिता सकानना ; महाद्रिपाताभिहता समन्ततः ।
परस्परं भृशमभिगर्जतां मुहू ; रणाजिरे भृशमभिसंप्रवर्तिते ॥ ०२६ ॥

नरस्ततो वरकनकाग्रभूषणै ;र्महेषुभिर्गगनपथं समावृणोत् ।
विदारयन्गिरिशिखराणि पत्रिभि ;र्महाभयेऽसुरगणविग्रहे तदा ॥ ०२७ ॥

ततो महीं लवणजलं च सागरं ; महासुराः प्रविविशुरर्दिताः सुरैः ।
वियद्गतं ज्वलितहुताशनप्रभं ; सुदर्शनं परिकुपितं निशाम्य च ॥ ०२८ ॥

ततः सुरैर्विजयमवाप्य मन्दरः ; स्वमेव देशं गमितः सुपूजितः ।
विनाद्य खं दिवमपि चैव सर्वश ;स्ततो गताः सलिलधरा यथागतम् ॥ ०२९ ॥

ततोऽमृतं सुनिहितमेव चक्रिरे ; सुराः परां मुदमभिगम्य पुष्कलाम् ।
ददौ च तं निधिममृतस्य रक्षितुं ; किरीटिने बलभिदथामरैः सह ॥ ०३० ॥

# अध्याय ०१८

सूत उवाच ॥

एतत्ते सर्वमाख्यातममृतं मथितं यथा ।
यत्र सोऽश्वः समुत्पन्नः श्रीमानतुलविक्रमः ॥ ००१ ॥

यं निशाम्य तदा कद्रूर्विनतामिदमब्रवीत् ।
उच्चैःश्रवा नु किंवर्णो भद्रे जानीहि माचिरम् ॥ ००२ ॥

विनतोवाच ॥

श्वेत एवाश्वराजोऽयं किं वा त्वं मन्यसे शुभे ।
ब्रूहि वर्णं त्वमप्यस्य ततोऽत्र विपणावहे ॥ ००३ ॥

कद्रूरुवाच ॥

कृष्णवालमहं मन्ये हयमेनं शुचिस्मिते ।
एहि सार्धं मया दीव्य दासीभावाय भामिनि ॥ ००४ ॥

सूत उवाच ॥

एवं ते समयं कृत्वा दासीभावाय वै मिथः ।
जग्मतुः स्वगृहानेव श्वो द्रक्ष्याव इति स्म ह ॥ ००५ ॥

ततः पुत्रसहस्रं तु कद्रूर्जिह्मं चिकीर्षती ।
आज्ञापयामास तदा वाला भूत्वाञ्जनप्रभाः ॥ ००६ ॥

आविशध्वं हयं क्षिप्रं दासी न स्यामहं यथा ।
तद्वाक्यं नान्वपद्यन्त ताञ्शशाप भुजङ्गमान् ॥ ००७ ॥

सर्पसत्रे वर्तमाने पावको वः प्रधक्ष्यति ।
जनमेजयस्य राजर्षेः पाण्डवेयस्य धीमतः ॥ ००८ ॥

शापमेनं तु शुश्राव स्वयमेव पितामहः ।
अतिक्रूरं समुद्दिष्टं कद्र्वा दैवादतीव हि ॥ ००९ ॥

सार्धं देवगणैः सर्वैर्वाचं तामन्वमोदत ।
बहुत्वं प्रेक्ष्य सर्पाणां प्रजानां हितकाम्यया ॥ ०१० ॥

तिग्मवीर्यविषा ह्येते दन्दशूका महाबलाः ।
तेषां तीक्ष्णविषत्वाद्धि प्रजानां च हिताय वै ॥ ०११ ॥

प्रादाद्विषहणीं विद्यां काश्यपाय महात्मने ॥ ०११ ॥

---

## अध्याय ०१९

सूत उवाच ॥

ततो रजन्यां व्युष्टायां प्रभात उदिते रवौ ।
कद्रूश्च विनता चैव भगिन्यौ ते तपोधन ॥ ००१ ॥

अमर्षिते सुसंरब्धे दास्ये कृतपणे तदा ।
जग्मतुस्तुरगं द्रष्टुमुच्चैःश्रवसमन्तिकात् ॥ ००२ ॥

ददृशाते तदा तत्र समुद्रं निधिमम्भसाम् ।
तिमिङ्गिलझषाकीर्णं मकरैरावृतं तथा ॥ ००३ ॥

सत्त्वैश्च बहुसाहस्रैर्नानारूपैः समावृतम् ।
उग्रैर्नित्यमनाधृष्यं कूर्मग्राहसमाकुलम् ॥ ००४ ॥

आकरं सर्वरत्नानामालयं वरुणस्य च ।
नागानामालयं रम्यमुत्तमं सरितां पतिम् ॥ ००५ ॥

पातालज्वलनावासमसुराणां च बन्धनम् ।
भयङ्करं च सत्त्वानां पयसां निधिमर्णवम् ॥ ००६ ॥

शुभं दिव्यममर्त्यानाममृतस्याकरं परम् ।
अप्रमेयमचिन्त्यं च सुपुण्यजलमद्भुतम् ॥ ००७ ॥

घोरं जलचरारावरौद्रं भैरवनिस्वनम् ।
गम्भीरावर्तकलिलं सर्वभूतभयङ्करम् ॥ ००८ ॥

वेलादोलानिलचलं क्षोभोद्वेगसमुत्थितम् ।
वीचीहस्तैः प्रचलितैर्नृत्यन्तमिव सर्वशः ॥ ००९ ॥

चन्द्रवृद्धिक्षयवशादुद्वृत्तोर्मिदुरासदम् ।
पाञ्चजन्यस्य जननं रत्नाकरमनुत्तमम् ॥ ०१० ॥

गां विन्दता भगवता गोविन्देनामितौजसा ।
वराहरूपिणा चान्तर्विक्षोभितजलाविलम् ॥ ०११ ॥

ब्रह्मर्षिणा च तपता वर्षाणां शतमत्रिणा ।
अनासादितगाधं च पातालतलमव्ययम् ॥ ०१२ ॥

अध्यात्मयोगनिद्रां च पद्मनाभस्य सेवतः ।
युगादिकालशयनं विष्णोरमिततेजसः ॥ ०१३ ॥

वडवामुखदीप्ताग्नेस्तोयहव्यप्रदं शुभम् ।

अगाधपारं विस्तीर्णमप्रमेयं सरित्पतिम् ॥ ०१४ ॥

महानदीभिर्बह्वीभिः स्पर्धयेव सहस्रशः ।
अभिसार्यमाणमनिशं ददृशाते महार्णवम् ॥ ०१५ ॥

गम्भीरं तिमिमकरोग्रसङ्कुलं तं ; गर्जन्तं जलचररावरौद्रनादैः ।
विस्तीर्णं ददृशतुरम्बरप्रकाशं ; तेऽगाधं निधिमुरुमम्भसामनन्तम् ॥ ०१६ ॥

इत्येवं झषमकरोर्मिसङ्कुलं तं ; गम्भीरं विकसितमम्बरप्रकाशम् ।
पातालज्वलनशिखाविदीपितं तं ; पश्यन्त्यौ द्रुतमभिपेततुस्तदानीम् ॥ ०१७ ॥

---

# अध्याय ०२०

सूत उवाच ॥

तं समुद्रमतिक्रम्य कद्रूर्विनतया सह ।
न्यपतत्तुरगाभ्याशे नचिरादिव शीघ्रगा ॥ ००१ ॥

निशाम्य च बहून्वालान्कृष्णान्पुच्छं समाश्रितान् ।
विनतां विषण्णवदनां कद्रूर्दास्ये न्ययोजयत् ॥ ००२ ॥

ततः सा विनता तस्मिन्पणितेन पराजिता ।
अभवद्दुःखसंतप्ता दासीभावं समास्थिता ॥ ००३ ॥

एतस्मिन्नन्तरे चैव गरुडः काल आगते ।
विना मात्रा महातेजा विदार्याण्डमजायत ॥ ००४ ॥

अग्निराशिरिवोद्भासन्समिद्धोऽतिभयङ्करः ।
प्रवृद्धः सहसा पक्षी महाकायो नभोगतः ॥ ००५ ॥

तं दृष्ट्वा शरणं जग्मुः प्रजाः सर्वा विभावसुम् ।
प्रणिपत्याब्रुवंश्चैनमासीनं विश्वरूपिणम् ॥ ००६ ॥

अग्ने मा त्वं प्रवर्धिष्ठाः कच्चिन्नो न दिधक्षसि ।
असौ हि राशिः सुमहान्समिद्धस्तव सर्पति ॥ ००७ ॥

अग्निरुवाच ॥

नैतदेवं यथा यूयं मन्यध्वमसुरार्दनाः ।
गरुडो बलवानेष मम तुल्यः स्वतेजसा ॥ ००८ ॥

सूत उवाच ॥

एवमुक्तास्ततो गत्वा गरुडं वाग्भिरस्तुवन् ।
अदूरादभ्युपेत्यैनं देवाः सर्षिगणास्तदा ॥ ००९ ॥

त्वमृषिस्त्वं महाभागस्त्वं देवः पतगेश्वरः ।
त्वं प्रभुस्तपनप्रख्यस्त्वं नस्त्राणमनुत्तमम् ॥ ०१० ॥

बलोर्मिमान्साधुरदीनसत्त्वः ; समृद्धिमान्दुष्प्रसहस्त्वमेव ।
तपः श्रुतं सर्वमहीनकीर्ते ; अनागतं चोपगतं च सर्वम् ॥ ०११ ॥

त्वमुत्तमः सर्वमिदं चराचरं ; गभस्तिभिर्भानुरिवावभाससे ।
समाक्षिपन्भानुमतः प्रभां मुहु ;स्त्वमन्तकः सर्वमिदं ध्रुवाध्रुवम् ॥ ०१२ ॥

दिवाकरः परिकुपितो यथा दहे ;त्प्रजास्तथा दहसि हुताशनप्रभ ।
भयङ्करः प्रलय इवाग्निरुत्थितो ; विनाशयन्युगपरिवर्तनान्तकृत् ॥ ०१३ ॥

खगेश्वरं शरणमुपस्थिता वयं ; महौजसं वितिमिरमभ्रगोचरम् ।
महाबलं गरुडमुपेत्य खेचरं ; परावरं वरदमजय्यविक्रमम् ॥ ०१४ ॥

एवं स्तुतः सुपर्णस्तु देवैः सर्षिगणैस्तदा ।
तेजसः प्रतिसंहारमात्मनः स चकार ह ॥ ०१५ ॥

---

# अध्याय ०२१

सूत उवाच ॥

ततः कामगमः पक्षी महावीर्यो महाबलः ।
मातुरन्तिकमागच्छत्परं तीरं महोदधेः ॥ ००१ ॥

यत्र सा विनता तस्मिन्पणितेन पराजिता ।
अतीव दुःखसंतप्ता दासीभावमुपागता ॥ ००२ ॥

ततः कदाचिद्विनतां प्रवणां पुत्रसंनिधौ ।
काल आहूय वचनं कद्रूरिदमभाषत ॥ ००३ ॥

नागानामालयं भद्रे सुरम्यं रमणीयकम् ।
समुद्रकुक्षावेकान्ते तत्र मां विनते वह ॥ ००४ ॥

ततः सुपर्णमाता तामवहत्सर्पमातरम् ।
पन्नगान्गरुडश्चापि मातुर्वचनचोदितः ॥ ००५ ॥

स सूर्यस्याभितो याति वैनतेयो विहङ्गमः ।
सूर्यरश्मिपरीताश्च मूर्च्छिताः पन्नगाभवन् ॥ ००६ ॥

तदवस्थान्सुतान्दृष्ट्वा कद्रूः शक्रमथास्तुवत् ॥ ००६ ॥

नमस्ते देवदेवेश नमस्ते बलसूदन ।
नमुचिघ्न नमस्तेऽस्तु सहस्राक्ष शचीपते ॥ ००७ ॥

सर्पाणां सूर्यतप्तानां वारिणा त्वं प्लवो भव ।
त्वमेव परमं त्राणमस्माकममरोत्तम ॥ ००८ ॥

ईशो ह्यसि पयः स्रष्टुं त्वमनल्पं पुरंदर ।
त्वमेव मेघस्त्वं वायुस्त्वमग्निर्वैद्युतोऽम्बरे ॥ ००९ ॥

त्वमभ्रघनविक्षेप्ता त्वामेवाहुः पुनर्घनम् ।
त्वं वज्रमतुलं घोरं घोषवांस्त्वं बलाहकः ॥ ०१० ॥

स्रष्टा त्वमेव लोकानां संहर्ता चापराजितः ।
त्वं ज्योतिः सर्वभूतानां त्वमादित्यो विभावसुः ॥ ०११ ॥

त्वं महद्भूतमाश्चर्यं त्वं राजा त्वं सुरोत्तमः ।
त्वं विष्णुस्त्वं सहस्राक्षस्त्वं देवस्त्वं परायणम् ॥ ०१२ ॥

त्वं सर्वममृतं देव त्वं सोमः परमार्चितः ।
त्वं मुहूर्तस्तिथिश्च त्वं लवस्त्वं वै पुनः क्षणः ॥ ०१३ ॥

शुक्लस्त्वं बहुलश्चैव कला काष्ठा त्रुटिस्तथा ।
संवत्सरर्तवो मासा रजन्यश्च दिनानि च ॥ ०१४ ॥

त्वमुत्तमा सगिरिवना वसुंधरा ; सभास्करं वितिमिरमम्बरं तथा ।
महोदधिः सतिमितिमिङ्गिलस्तथा ; महोर्मिमान्बहुमकरो झषालयः ॥ ०१५ ॥

महद्यशस्त्वमिति सदाभिपूज्यसे ; मनीषिभिर्मुदितमना महर्षिभिः ।
अभिष्टुतः पिबसि च सोममध्वरे ; वषट्कृतान्यपि च हवींषि भूतये ॥ ०१६ ॥

त्वं विप्रैः सततमिहेज्यसे फलार्थं ; वेदाङ्गेष्वतुलबलौघ गीयसे च ।
त्वद्धेतोर्यजनपरायणा द्विजेन्द्रा ; वेदाङ्गान्यभिगमयन्ति सर्ववेदैः ॥ ०१७ ॥

---

# अध्याय ०२२

सूत उवाच ॥

एवं स्तुतस्तदा कद्र्वा भगवान्हरिवाहनः ।
नीलजीमूतसंघातैर्व्योम सर्वं समावृणोत् ॥ ००१ ॥

ते मेघा मुमुचुस्तोयं प्रभूतं विद्युदुज्ज्वलाः ।
परस्परमिवात्यर्थं गर्जन्तः सततं दिवि ॥ ००२ ॥

संघातितमिवाकाशं जलदैः सुमहाद्भुतैः ।
सृजद्भिरतुलं तोयमजस्रं सुमहारवैः ॥ ००३ ॥

संप्रनृत्तमिवाकाशं धारोर्मिभिरनेकशः ।
मेघस्तनितनिर्घोषमम्बरं समपद्यत ॥ ००४ ॥

नागानामुत्तमो हर्शस्तदा वर्षति वासवे ।
आपूर्यत मही चापि सलिलेन समन्ततः ॥ ००५ ॥

---

# अध्याय ०२३

सूत उवाच ॥

सुपर्णेनोह्यमानास्ते जग्मुस्तं देशमाशु वै ।
सागराम्बुपरिक्षिप्तं पक्षिसंघनिनादितम् ॥ ००१ ॥

विचित्रफलपुष्पाभिर्वनराजिभिरावृतम् ।
भवनैरावृतं रम्यैस्तथा पद्माकरैरपि ॥ ००२ ॥

प्रसन्नसलिलैश्चापि ह्रदैश्चित्रैर्विभूषितम् ।
दिव्यगन्धवहैः पुण्यैर्मारुतैरुपवीजितम् ॥ ००३ ॥

उपजिघ्रद्भिराकाशं वृक्षैर्मलयजैरपि ।
शोभितं पुष्पवर्षाणि मुञ्चद्भिर्मारुतोद्धुतैः ॥ ००४ ॥

किरद्भिरिव तत्रस्थान्नागान्पुष्पाम्बुवृष्टिभिः ।
मनःसंहर्षणं पुण्यं गन्धर्वाप्सरसां प्रियम् ॥ ००५ ॥

नानापक्षिरुतं रम्यं कद्रूपुत्रप्रहर्षणम् ॥ ००५ ॥

तत्ते वनं समासाद्य विजह्रुः पन्नगा मुदा ।
अब्रुवंश्च महावीर्यं सुपर्णं पतगोत्तमम् ॥ ००६ ॥

वहास्मानपरं द्वीपं सुरम्यं विपुलोदकम् ।
त्वं हि देशान्बहून्रम्यान्पतन्पश्यसि खेचर ॥ ००७ ॥

स विचिन्त्याब्रवीत्पक्षी मातरं विनतां तदा ।
किं कारणं मया मातः कर्तव्यं सर्पभाषितम् ॥ ००८ ॥

विनतोवाच ॥

दासीभूतास्म्यनार्याया भगिन्याः पतगोत्तम ।
पणं वितथमास्थाय सर्पैरुपधिना कृतम् ॥ ००९ ॥

सूत उवाच ॥

तस्मिंस्तु कथिते मात्रा कारणे गगनेचरः ।
उवाच वचनं सर्पांस्तेन दुःखेन दुःखितः ॥ ०१० ॥

किमाहृत्य विदित्वा वा किं वा कृत्वेह पौरुषम् ।
दास्याद्वो विप्रमुच्येयं सत्यं शंसत लेलिहाः ॥ ०११ ॥

श्रुत्वा तमब्रुवन्सर्पा आहरामृतमोजसा ।
ततो दास्याद्विप्रमोक्षो भविता तव खेचर ॥ ०१२ ॥

---

# अध्याय ०२४

सूत उवाच ॥

इत्युक्तो गरुडः सर्पैस्ततो मातरमब्रवीत् ।
गच्छाम्यमृतमाहर्तुं भक्ष्यमिच्छामि वेदितुम् ॥ ००१ ॥

विनतोवाच ॥

समुद्रकुक्षावेकान्ते निषादालयमुत्तमम् ।
सहस्राणामनेकानां तान्भुक्त्वामृतमानय ॥ ००२ ॥

न तु ते ब्राह्मणं हन्तुं कार्या बुद्धिः कथञ्चन ।

अवध्यः सर्वभूतानां ब्राह्मणो ह्यनलोपमः ॥ ००३ ॥

अग्निरर्को विषं शस्त्रं विप्रो भवति कोपितः ।
भूतानामग्रभुग्विप्रो वर्णश्रेष्ठः पिता गुरुः ॥ ००४ ॥

गरुड उवाच ॥

यथाहमभिजानीयां ब्राह्मणं लक्षणैः शुभैः ।
तन्मे कारणतो मातः पृच्छतो वक्तुमर्हसि ॥ ००५ ॥

विनतोवाच ॥

यस्ते कण्ठमनुप्राप्तो निगीर्णं बडिशं यथा ।
दहेदङ्गारवत्पुत्र तं विद्याद्ब्राह्मणर्षभम् ॥ ००६ ॥

सूत उवाच ॥

प्रोवाच चैनं विनता पुत्रहार्दादिदं वचः ।
जानन्त्यप्यतुलं वीर्यमाशीर्वादसमन्वितम् ॥ ००७ ॥

पक्षौ ते मारुतः पातु चन्द्रः पृष्ठं तु पुत्रक ।
शिरस्तु पातु ते वह्निर्भास्करः सर्वमेव तु ॥ ००८ ॥

अहं च ते सदा पुत्र शान्तिस्वस्तिपरायणा ।
अरिष्टं व्रज पन्थानं वत्स कार्यार्थसिद्धये ॥ ००९ ॥

ततः स मातुर्वचनं निशम्य ; वितत्य पक्षौ नभ उत्पपात ।
ततो निषादान्बलवानुपागम ;द्बुभुक्षितः काल इवान्तको महान् ॥ ०१० ॥

स तान्निषादानुपसंहरंस्तदा ; रजः समुद्धूय नभःस्पृशं महत् ।
समुद्रकुक्षौ च विशोषयन्पयः ; समीपगान्भूमिधरान्विचालयन् ॥ ०११ ॥

ततः स चक्रे महदाननं तदा ; निषादमार्गं प्रतिरुध्य पक्षिराट् ।
ततो निषादास्त्वरिताः प्रवव्रजु ;र्यतो मुखं तस्य भुजङ्गभोजिनः ॥ ०१२ ॥

तदाननं विवृतमतिप्रमाणव ;त्समभ्ययुर्गगनमिवार्दिताः खगाः ।
सहस्रशः पवनरजोभ्रमोहिता ; महानिलप्रचलितपादपे वने ॥ ०१३ ॥

ततः खगो वदनममित्रतापनः ; समाहरत्परिचपलो महाबलः ।
निषूदयन्बहुविधमत्स्यभक्षिणो ; बुभुक्षितो गगनचरेश्वरस्तदा ॥ ०१४ ॥

---

# अध्याय ०२५

सूत उवाच ॥

तस्य कण्ठमनुप्राप्तो ब्राह्मणः सह भार्यया ।
दहन्दीप्त इवाङ्गारस्तमुवाचान्तरिक्षगः ॥ ००१ ॥

द्विजोत्तम विनिर्गच्छ तूर्णमास्यादपावृतात् ।
न हि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा ॥ ००२ ॥

ब्रुवाणमेवं गरुडं ब्राह्मणः समभाषत ।
निषादी मम भार्येयं निर्गच्छतु मया सह ॥ ००३ ॥

गरुड उवाच ॥

एतामपि निषादीं त्वं परिगृह्याशु निष्पत ।
तूर्णं संभावयात्मानमजीर्णं मम तेजसा ॥ ००४ ॥

सूत उवाच ॥

ततः स विप्रो निष्क्रान्तो निषादीसहितस्तदा ।
वर्धयित्वा च गरुडमिष्टं देशं जगाम ह ॥ ००५ ॥

सहभार्ये विनिष्क्रान्ते तस्मिन्विप्रे स पक्षिराट् ।
वितत्य पक्षावाकाशमुत्पपात मनोजवः ॥ ००६ ॥

ततोऽपश्यत्स पितरं पृष्टश्चाख्यातवान्पितुः ।
अहं हि सर्पैः प्रहितः सोममाहर्तुमुद्यतः ॥ ००७ ॥

मातुर्दास्यविमोक्षार्थमाहरिष्ये तमद्य वै ॥ ००७ ॥

मात्रा चास्मि समादिष्टो निषादान्भक्षयेति वै ।
न च मे तृप्तिरभवद्भक्षयित्वा सहस्रशः ॥ ००८ ॥

तस्माद्भोक्तव्यमपरं भगवन्प्रदिशस्व मे ।
यद्भुक्त्वामृतमाहर्तुं समर्थः स्यामहं प्रभो ॥ ००९ ॥

कश्यप उवाच ॥

आसीद्विभावसुर्नाम महर्षिः कोपनो भृशम् ।
भ्राता तस्यानुजश्चासीत्सुप्रतीको महातपाः ॥ ०१० ॥

स नेच्छति धनं भ्रात्रा सहैकस्थं महामुनिः ।
विभागं कीर्तयत्येव सुप्रतीकोऽथ नित्यशः ॥ ०११ ॥

अथाब्रवीच्च तं भ्राता सुप्रतीकं विभावसुः ।
विभागं बहवो मोहात्कर्तुमिच्छन्ति नित्यदा ॥ ०१२ ॥

ततो विभक्ता अन्योन्यं नाद्रियन्तेऽर्थमोहिताः ॥ ०१२ ॥

ततः स्वार्थपरान्मूढान्पृथग्भूतान्स्वकैर्धनैः ।
विदित्वा भेदयन्त्येतानमित्रा मित्ररूपिणः ॥ ०१३ ॥

विदित्वा चापरे भिन्नानन्तरेषु पतन्त्यथ ।
भिन्नानामतुलो नाशः क्षिप्रमेव प्रवर्तते ॥ ०१४ ॥

तस्माच्चैव विभागार्थं न प्रशंसन्ति पण्डिताः ।
गुरुशास्त्रे निबद्धानामन्योन्यमभिशङ्किनाम् ॥ ०१५ ॥

नियन्तुं न हि शक्यस्त्वं भेदतो धनमिच्छसि ।
यस्मात्तस्मात्सुप्रतीक हस्तित्वं समवाप्स्यसि ॥ ०१६ ॥

शप्तस्त्वेवं सुप्रतीको विभावसुमथाब्रवीत् ।
त्वमप्यन्तर्जलचरः कच्छपः संभविष्यसि ॥ ०१७ ॥

एवमन्योन्यशापात्तौ सुप्रतीकविभावसू ।
गजकच्छपतां प्राप्तावर्थार्थं मूढचेतसौ ॥ ०१८ ॥

रोषदोषानुषङ्गेण तिर्यग्योनिगतावपि ।
परस्परद्वेषरतौ प्रमाणबलदर्पितौ ॥ ०१९ ॥

सरस्यस्मिन्महाकायौ पूर्ववैरानुसारिणौ ।
तयोरेकतरः श्रीमान्समुपैति महागजः ॥ ०२० ॥

तस्य बृंहितशब्देन कूर्मोऽप्यन्तर्जलेशयः ।
उत्थितोऽसौ महाकायः कृत्स्नं सङ्क्षोभयन्सरः ॥ ०२१ ॥

तं दृष्ट्वावेष्टितकरः पतत्येष गजो जलम् ।
दन्तहस्ताग्रलाङ्गूलपादवेगेन वीर्यवान् ॥ ०२२ ॥

तं विक्षोभयमाणं तु सरो बहुझषाकुलम् ।
कूर्मोऽप्यभ्युद्यतशिरा युद्धायाभ्येति वीर्यवान् ॥ ०२३ ॥

षडुच्छ्रितो योजनानि गजस्तद्विगुणायतः ।
कूर्मस्त्रियोजनोत्सेधो दशयोजनमण्डलः ॥ ०२४ ॥

तावेतौ युद्धसंमत्तौ परस्परजयैषिणौ ।
उपयुज्याशु कर्मेदं साधयेप्सितमात्मनः ॥ ०२५ ॥

सूत उवाच ॥

स तच्छ्रुत्वा पितुर्वाक्यं भीमवेगोऽन्तरिक्षगः ।
नखेन गजमेकेन कूर्ममेकेन चाक्षिपत् ॥ ०२६ ॥

समुत्पपात चाकाशं तत उच्चैर्विहङ्गमः ।
सोऽलम्बतीर्थमासाद्य देववृक्षानुपागमत् ॥ ०२७ ॥

ते भीताः समकम्पन्त तस्य पक्षानिलाहताः ।
न नो भञ्ज्यादिति तदा दिव्याः कनकशाखिनः ॥ ०२८ ॥

प्रचलाङ्गान्स तान्दृष्ट्वा मनोरथफलाङ्कुरान् ।
अन्यानतुलरूपाङ्गानुपचक्राम खेचरः ॥ ०२९ ॥

काञ्चनै राजतैश्चैव फलैर्वैडूर्यशाखिनः ।
सागराम्बुपरिक्षिप्तान्भ्राजमानान्महाद्रुमान् ॥ ०३० ॥

तमुवाच खगश्रेष्ठं तत्र रोहिणपादपः ।
अतिप्रवृद्धः सुमहानापतन्तं मनोजवम् ॥ ०३१ ॥

यैषा मम महाशाखा शतयोजनमायता ।
एतामास्थाय शाखां त्वं खादेमौ गजकच्छपौ ॥ ०३२ ॥

ततो द्रुमं पतगसहस्रसेवितं ; महीधरप्रतिमवपुः प्रकम्पयन् ।
खगोत्तमो द्रुतमभिपत्य वेगवा ;न्बभञ्ज तामविरलपत्रसंवृताम् ॥ ०३३ ॥

---

# अध्याय ०२६

सूत उवाच ॥

स्पृष्टमात्रा तु पद्भ्यां सा गरुडेन बलीयसा ।
अभज्यत तरोः शाखा भग्नां चैनामधारयत् ॥ ००१ ॥

तां भग्नां स महाशाखां स्मयन्समवलोकयन् ।
अथात्र लम्बतोऽपश्यद्वालखिल्यानधोमुखान् ॥ ००२ ॥

स तद्विनाशसंत्रासादनुपत्य खगाधिपः ।
शाखामास्येन जग्राह तेषामेवान्ववेक्षया ॥ ००३ ॥

शनैः पर्यपतत्पक्षी पर्वतान्प्रविशातयन् ॥ ००३ ॥

एवं सोऽभ्यपतद्देशान्बहून्सगजकच्छपः ।
दयार्थं वालखिल्यानां न च स्थानमविन्दत ॥ ००४ ॥

स गत्वा पर्वतश्रेष्ठं गन्धमादनमव्ययम् ।
ददर्श कश्यपं तत्र पितरं तपसि स्थितम् ॥ ००५ ॥

ददर्श तं पिता चापि दिव्यरूपं विहङ्गमम् ।
तेजोवीर्यबलोपेतं मनोमारुतरंहसम् ॥ ००६ ॥

शैलशृङ्गप्रतीकाशं ब्रह्मदण्डमिवोद्यतम् ।
अचिन्त्यमनभिज्ञेयं सर्वभूतभयङ्करम् ॥ ००७ ॥

मायावीर्यधरं साक्षादग्निमिद्धमिवोद्यतम् ।
अप्रधृष्यमजेयं च देवदानवराक्षसैः ॥ ००८ ॥

भेत्तारं गिरिशृङ्गाणां नदीजलविशोषणम् ।
लोकसंलोडनं घोरं कृतान्तसमदर्शनम् ॥ ००९ ॥

तमागतमभिप्रेक्ष्य भगवान्कश्यपस्तदा ।
विदित्वा चास्य सङ्कल्पमिदं वचनमब्रवीत् ॥ ०१० ॥

पुत्र मा साहसं कार्षीर्मा सद्यो लप्स्यसे व्यथाम् ।
मा त्वा दहेयुः सङ्क्रुद्धा वालखिल्या मरीचिपाः ॥ ०११ ॥

प्रसादयामास स तान्कश्यपः पुत्रकारणात् ।
वालखिल्यांस्तपःसिद्धानिदमुद्दिश्य कारणम् ॥ ०१२ ॥

प्रजाहितार्थमारम्भो गरुडस्य तपोधनाः ।
चिकीर्षति महत्कर्म तदनुज्ञातुमर्हथ ॥ ०१३ ॥

एवमुक्ता भगवता मुनयस्ते समभ्ययुः ।
मुक्त्वा शाखां गिरिं पुण्यं हिमवन्तं तपोर्थिनः ॥ ०१४ ॥

ततस्तेष्वपयातेषु पितरं विनतात्मजः ।
शाखाव्याक्षिप्तवदनः पर्यपृच्छत कश्यपम् ॥ ०१५ ॥

भगवन्क्व विमुञ्चामि तरुशाखामिमामहम् ।
वर्जितं ब्राह्मणैर्देशमाख्यातु भगवान्मम ॥ ०१६ ॥

ततो निष्पुरुषं शैलं हिमसंरुद्धकन्दरम् ।

अगम्यं मनसाप्यन्यैस्तस्याचख्यौ स कश्यपः ॥ ०१७ ॥

तं पर्वतमहाकुक्षिमाविश्य मनसा खगः ।
जवेनाभ्यपतत्ताक्ष्र्यः सशाखागजकच्छपः ॥ ०१८ ॥

न तां वध्रः परिणहेच्छतचर्मा महानणुः ।
शाखिनो महतीं शाखां यां प्रगृह्य ययौ खगः ॥ ०१९ ॥

ततः स शतसाहस्रं योजनान्तरमागतः ।
कालेन नातिमहता गरुडः पततां वरः ॥ ०२० ॥

स तं गत्वा क्षणेनैव पर्वतं वचनात्पितुः ।
अमुञ्चन्महतीं शाखां सस्वनां तत्र खेचरः ॥ ०२१ ॥

पक्षानिलहतश्चास्य प्राकम्पत स शैलराट् ।
मुमोच पुष्पवर्षं च समागलितपादपः ॥ ०२२ ॥

शृङ्गाणि च व्यशीर्यन्त गिरेस्तस्य समन्ततः ।
मणिकाञ्चनचित्राणि शोभयन्ति महागिरिम् ॥ ०२३ ॥

शाखिनो बहवश्चापि शाखयाभिहतास्तया ।
काञ्चनैः कुसुमैर्भान्ति विद्युत्वन्त इवाम्बुदाः ॥ ०२४ ॥

ते हेमविकचा भूयो युक्ताः पर्वतधातुभिः ।
व्यराजञ्शाखिनस्तत्र सूर्यांशुप्रतिरञ्जिताः ॥ ०२५ ॥

ततस्तस्य गिरेः शृङ्गमास्थाय स खगोत्तमः ।
भक्षयामास गरुडस्तावुभौ गजकच्छपौ ॥ ०२६ ॥

ततः पर्वतकूटाग्रादुत्पपात मनोजवः ।
प्रावर्तन्ताथ देवानामुत्पाता भयवेदिनः ॥ ०२७ ॥

इन्द्रस्य वज्रं दयितं प्रजज्वाल व्यथान्वितम् ।
सधूमा चापतत्सार्चिर्दिवोल्का नभसश्च्युता ॥ ०२८ ॥

तथा वसूनां रुद्राणामादित्यानां च सर्वशः ।
साध्यानां मरुतां चैव ये चान्ये देवतागणाः ॥ ०२९ ॥

स्वं स्वं प्रहरणं तेषां परस्परमुपाद्रवत् ॥ ०२९ ॥

अभूतपूर्वं सङ्ग्रामे तदा देवासुरेऽपि च ।
ववुर्वाताः सनिर्घाताः पेतुरुल्काः समन्ततः ॥ ०३० ॥

निरभ्रमपि चाकाशं प्रजगर्ज महास्वनम् ।
देवानामपि यो देवः सोऽप्यवर्षदसृक्तदा ॥ ०३१ ॥

मम्लुर्माल्यानि देवानां शेमुस्तेजांसि चैव हि ।
उत्पातमेघा रौद्राश्च ववर्षुः शोणितं बहु ॥ ०३२ ॥

रजांसि मुकुटान्येषामुत्थितानि व्यधर्षयन् ॥ ०३२ ॥

ततस्त्राससमुद्विग्नः सह देवैः शतक्रतुः ।
उत्पातान्दारुणान्पश्यन्नित्युवाच बृहस्पतिम् ॥ ०३३ ॥

किमर्थं भगवन्घोरा महोत्पाताः समुत्थिताः ।
न च शत्रुं प्रपश्यामि युधि यो नः प्रधर्षयेत् ॥ ०३४ ॥

बृहस्पतिरुवाच ॥

तवापराधाद्देवेन्द्र प्रमादाच्च शतक्रतो ।
तपसा वालखिल्यानां भूतमुत्पन्नमद्भुतम् ॥ ०३५ ॥

कश्यपस्य मुनेः पुत्रो विनतायाश्च खेचरः ।
हर्तुं सोममनुप्राप्तो बलवान्कामरूपवान् ॥ ०३६ ॥

समर्थो बलिनां श्रेष्ठो हर्तुं सोमं विहङ्गमः ।
सर्वं संभावयाम्यस्मिन्नसाध्यमपि साधयेत् ॥ ०३७ ॥

सूत उवाच ॥

श्रुत्वैतद्वचनं शक्रः प्रोवाचामृतरक्षिणः ।
महावीर्यबलः पक्षी हर्तुं सोममिहोद्यतः ॥ ०३८ ॥

युष्मान्संबोधयाम्येष यथा स न हरेद्बलात् ।
अतुलं हि बलं तस्य बृहस्पतिरुवाच मे ॥ ०३९ ॥

तच्छ्रुत्वा विबुधा वाक्यं विस्मिता यत्नमास्थिताः ।
परिवार्यामृतं तस्थुर्वज्री चेन्द्रः शतक्रतुः ॥ ०४० ॥

धारयन्तो महार्हाणि कवचानि मनस्विनः ।
काञ्चनानि विचित्राणि वैडूर्यविकृतानि च ॥ ०४१ ॥

विविधानि च शस्त्राणि घोररूपाण्यनेकशः ।
शिततीक्ष्णाग्रधाराणि समुद्यम्य सहस्रशः ॥ ०४२ ॥

सविस्फुलिङ्गज्वालानि सधूमानि च सर्वशः ।
चक्राणि परिघांश्चैव त्रिशूलानि परश्वधान् ॥ ०४३ ॥

शक्तीश्च विविधास्तीक्ष्णाः करवालांश्च निर्मलान् ।
स्वदेहरूपाण्यादाय गदाश्चोग्रप्रदर्शनाः ॥ ०४४ ॥

तैः शस्त्रैर्भानुमद्भिस्ते दिव्याभरणभूषिताः ।
भानुमन्तः सुरगणास्तस्थुर्विगतकल्मषाः ॥ ०४५ ॥

अनुपमबलवीर्यतेजसो ; धृतमनसः परिरक्षणेऽमृतस्य ।
असुरपुरविदारणाः सुरा ; ज्वलनसमिद्धवपुःप्रकाशिनः ॥ ०४६ ॥

इति समरवरं सुरास्थितं ; परिघसहस्रशतैः समाकुलम् ।
विगलितमिव चाम्बरान्तरे ; तपनमरीचिविभासितं बभौ ॥ ०४७ ॥

---

# अध्याय ०२७

शौनक उवाच ॥

कोऽपराधो महेन्द्रस्य कः प्रमादश्च सूतज ।
तपसा वालखिल्यानां संभूतो गरुडः कथम् ॥ ००१ ॥

कश्यपस्य द्विजातेश्च कथं वै पक्षिराड्डुतः ।
अधृष्यः सर्वभूतानामवध्यश्चाभवत्कथम् ॥ ००२ ॥

कथं च कामचारी स कामवीर्यश्च खेचरः ।
एतदिच्छाम्यहं श्रोतुं पुराणे यदि पठ्यते ॥ ००३ ॥

सूत उवाच ॥

विषयोऽयं पुराणस्य यन्मां त्वं परिपृच्छसि ।
शृणु मे वदतः सर्वमेतत्सङ्क्षेपतो द्विज ॥ ००४ ॥

यजतः पुत्रकामस्य कश्यपस्य प्रजापतेः ।
साहाय्यमृषयो देवा गन्धर्वाश्च ददुः किल ॥ ००५ ॥

तत्रेध्मानयने शक्रो नियुक्तः कश्यपेन ह ।
मुनयो वालखिल्याश्च ये चान्ये देवतागणाः ॥ ००६ ॥

शक्रस्तु वीर्यसदृशमिध्मभारं गिरिप्रभम् ।
समुद्यम्यानयामास नातिकृच्छ्रादिव प्रभुः ॥ ००७ ॥

अथापश्यदृषीन्ह्रस्वानङ्गुष्ठोदरपर्वणः ।
पलाशवृन्तिकामेकां सहितान्वहतः पथि ॥ ००८ ॥

प्रलीनान्स्वेष्विवाङ्गेषु निराहारांस्तपोधनान् ।
क्लिश्यमानान्मन्दबलान्गोष्पदे संप्लुतोदके ॥ ००९ ॥

तांश्च सर्वान्स्मयाविष्टो वीर्योन्मत्तः पुरंदरः ।
अवहस्यात्यगाच्छीघ्रं लङ्घयित्वावमन्य च ॥ ०१० ॥

तेऽथ रोषसमाविष्टाः सुभृशं जातमन्यवः ।
आरेभिरे महत्कर्म तदा शक्रभयङ्करम् ॥ ०११ ॥

जुहुवुस्ते सुतपसो विधिवज्जातवेदसम् ।
मन्त्रैरुच्चावचैर्विप्रा येन कामेन तच्छृणु ॥ ०१२ ॥

कामवीर्यः कामगमो देवराजभयप्रदः ।
इन्द्रोऽन्यः सर्वदेवानां भवेदिति यतव्रताः ॥ ०१३ ॥

इन्द्राच्छतगुणः शौर्ये वीर्ये चैव मनोजवः ।
तपसो नः फलेनाद्य दारुणः संभवत्विति ॥ ०१४ ॥

तद्बुद्ध्वा भृशसंतप्तो देवराजः शतक्रतुः ।
जगाम शरणं तत्र कश्यपं संशितव्रतम् ॥ ०१५ ॥

तच्छ्रुत्वा देवराजस्य कश्यपोऽथ प्रजापतिः ।
वालखिल्यानुपागम्य कर्मसिद्धिमपृच्छत ॥ ०१६ ॥

एवमस्त्विति तं चापि प्रत्यूचुः सत्यवादिनः ।
तान्कश्यप उवाचेदं सान्त्वपूर्वं प्रजापतिः ॥ ०१७ ॥

अयमिन्द्रस्त्रिभुवने नियोगाद्ब्रह्मणः कृतः ।
इन्द्रार्थं च भवन्तोऽपि यत्नवन्तस्तपोधनाः ॥ ०१८ ॥

न मिथ्या ब्रह्मणो वाक्यं कर्तुमर्हथ सत्तमाः ।
भवतां च न मिथ्यायं सङ्कल्पो मे चिकीर्षितः ॥ ०१९ ॥

भवत्वेष पतत्रीणामिन्द्रोऽतिबलसत्त्ववान् ।
प्रसादः क्रियतां चैव देवराजस्य याचतः ॥ ०२० ॥

एवमुक्ताः कश्यपेन वालखिल्यास्तपोधनाः ।
प्रत्यूचुरभिसंपूज्य मुनिश्रेष्ठं प्रजापतिम् ॥ ०२१ ॥

इन्द्रार्थोऽयं समारम्भः सर्वेषां नः प्रजापते ।
अपत्यार्थं समारम्भो भवतश्चायमीप्सितः ॥ ०२२ ॥

तदिदं सफलं कर्म त्वया वै प्रतिगृह्यताम् ।
तथा चैव विधत्स्वात्र यथा श्रेयोऽनुपश्यसि ॥ ०२३ ॥

एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा ।
विनता नाम कल्याणी पुत्रकामा यशस्विनी ॥ ०२४ ॥

तपस्तप्त्वा व्रतपरा स्नाता पुंसवने शुचिः ।
उपचक्राम भर्तारं तामुवाचाथ कश्यपः ॥ ०२५ ॥

आरम्भः सफलो देवि भवितायं तवेप्सितः ।

जनयिष्यसि पुत्रौ द्वौ वीरौ त्रिभुवनेश्वरौ ॥ ०२६ ॥

तपसा वालखिल्यानां मम सङ्कल्पजौ तथा ।
भविष्यतो महाभागौ पुत्रौ ते लोकपूजितौ ॥ ०२७ ॥

उवाच चैनां भगवान्मारीचः पुनरेव ह ।
धार्यतामप्रमादेन गर्भोऽयं सुमहोदयः ॥ ०२८ ॥

एकः सर्वपतत्रीणामिन्द्रत्वं कारयिष्यति ।
लोकसंभावितो वीरः कामवीर्यो विहङ्गमः ॥ ०२९ ॥

शतक्रतुमथोवाच प्रीयमाणः प्रजापतिः ।
त्वत्सहायौ खगावेतौ भ्रातरौ ते भविष्यतः ॥ ०३० ॥

नैताभ्यां भविता दोषः सकाशात्ते पुरंदर ।
व्येतु ते शक्र संतापस्त्वमेवेन्द्रो भविष्यसि ॥ ०३१ ॥

न चाप्येवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः ।
न चावमान्या दर्पात्ते वाग्विषा भृशकोपनाः ॥ ०३२ ॥

एवमुक्तो जगामेन्द्रो निर्विशङ्कस्त्रिविष्टपम् ।
विनता चापि सिद्धार्था बभूव मुदिता तदा ॥ ०३३ ॥

जनयामास पुत्रौ द्वावरुणं गरुडं तथा ।
अरुणस्तयोस्तु विकल आदित्यस्य पुरःसरः ॥ ०३४ ॥

पतत्रीणां तु गरुड इन्द्रत्वेनाभ्यषिच्यत ।
तस्यैतत्कर्म सुमहच्छ्रूयतां भृगुनन्दन ॥ ०३५ ॥

# अध्याय ०२८

सूत उवाच ॥

ततस्तस्मिन्द्विजश्रेष्ठ समुदीर्णे तथाविधे ।
गरुत्मान्पक्षिराट्तूर्णं संप्राप्तो विबुधान्प्रति ॥ ००१ ॥

तं दृष्ट्वातिबलं चैव प्राकम्पन्त समन्ततः ।
परस्परं च प्रत्यघ्नन्सर्वप्रहरणान्यपि ॥ ००२ ॥

तत्र चासीदमेयात्मा विद्युदग्निसमप्रभः ।
भौवनः सुमहावीर्यः सोमस्य परिरक्षिता ॥ ००३ ॥

स तेन पतगेन्द्रेण पक्षतुण्डनखैः क्षतः ।
मुहूर्तमतुलं युद्धं कृत्वा विनिहतो युधि ॥ ००४ ॥

रजश्चोद्धूय सुमहत्पक्षवातेन खेचरः ।
कृत्वा लोकान्निरालोकांस्तेन देवानवाकिरत् ॥ ००५ ॥

तेनावकीर्णा रजसा देवा मोहमुपागमन् ।
न चैनं ददृशुश्छन्ना रजसामृतरक्षिणः ॥ ००६ ॥

एवं संलोडयामास गरुडस्त्रिदिवालयम् ।
पक्षतुण्डप्रहारैश्च देवान्स विददार ह ॥ ००७ ॥

ततो देवः सहस्राक्षस्तूर्णं वायुमचोदयत् ।
विक्षिपेमां रजोवृष्टिं तवैतत्कर्म मारुत ॥ ००८ ॥

अथ वायुरपोवाह तद्रजस्तरसा बली ।
ततो वितिमिरे जाते देवाः शकुनिमार्दयन् ॥ ००९ ॥

ननाद चोच्चैर्बलवान्महामेघरवः खगः ।
वध्यमानः सुरगणैः सर्वभूतानि भीषयन् ॥ ०१० ॥

उत्पपात महावीर्यः पक्षिराड्परवीरहा ॥ ०१० ॥

तमुत्पत्यान्तरिक्षस्थं देवानामुपरि स्थितम् ।
वर्मिणो विबुधाः सर्वे नानाशस्त्रैरवाकिरन् ॥ ०११ ॥

पट्टिशैः परिघैः शूलैर्गदाभिश्च सवासवाः ।
क्षुरान्तैर्ज्वलितैश्चापि चक्रैरादित्यरूपिभिः ॥ ०१२ ॥

नानाशस्त्रविसर्गैश्च वध्यमानः समन्ततः ।
कुर्वन्सुतुमुलं युद्धं पक्षिराण्न व्यकम्पत ॥ ०१३ ॥

विनर्दन्निव चाकाशे वैनतेयः प्रतापवान् ।
पक्षाभ्यामुरसा चैव समन्ताद्व्याक्षिपत्सुरान् ॥ ०१४ ॥

ते विक्षिप्तास्ततो देवाः प्रजग्मुर्गरुडार्दिताः ।
नखतुण्डक्षताश्चैव सुस्रुवुः शोणितं बहु ॥ ०१५ ॥

साध्याः प्राचीं सगन्धर्वा वसवो दक्षिणां दिशम् ।
प्रजग्मुः सहिता रुद्रैः पतगेन्द्रप्रधर्षिताः ॥ ०१६ ॥

दिशं प्रतीचीमादित्या नासत्या उत्तरां दिशम् ।
मुहुर्मुहुः प्रेक्षमाणा युध्यमाना महौजसम् ॥ ०१७ ॥

अश्वक्रन्देन वीरेण रेणुकेन च पक्षिणा ।
क्रथनेन च शूरेण तपनेन च खेचरः ॥ ०१८ ॥

उलूकश्वसनाभ्यां च निमेषेण च पक्षिणा ।
प्ररुजेन च संयुद्धं चकार प्रलिहेन च ॥ ०१९ ॥

तान्पक्षनखतुण्डाग्रैरभिनद्विनतासुतः ।
युगान्तकाले सङ्क्रुद्धः पिनाकीव महाबलः ॥ ०२० ॥

महावीर्या महोत्साहास्तेन ते बहुधा क्षताः ।
रेजुरभ्रघनप्रख्या रुधिरौघप्रवर्षिणः ॥ ०२१ ॥

तान्कृत्वा पतगश्रेष्ठः सर्वानुत्क्रान्तजीवितान् ।
अतिक्रान्तोऽमृतस्यार्थे सर्वतोऽग्निमपश्यत ॥ ०२२ ॥

आवृण्वानं महाज्वालमर्चिर्भिः सर्वतोऽम्बरम् ।
दहन्तमिव तीक्ष्णांशुं घोरं वायुसमीरितम् ॥ ०२३ ॥

ततो नवत्या नवतीर्मुखानां ; कृत्वा तरस्वी गरुडो महात्मा ।
नदीः समापीय मुखैस्ततस्तैः ; सुशीघ्रमागम्य पुनर्जवेन ॥ ०२४ ॥

ज्वलन्तमग्निं तममित्रतापनः ; समास्तरत्पत्ररथो नदीभिः ।
ततः प्रचक्रे वपुरन्यदल्पं ; प्रवेष्टुकामोऽग्निमभिप्रशाम्य ॥ ०२५ ॥

---

# अध्याय ०२९

सूत उवाच ॥

जाम्बूनदमयो भूत्वा मरीचिविकचोज्ज्वलः ।
प्रविवेश बलात्पक्षी वारिवेग इवार्णवम् ॥ ००१ ॥

स चक्रं क्षुरपर्यन्तमपश्यदमृतान्तिके ।
परिभ्रमन्तमनिशं तीक्ष्णधारमयस्मयम् ॥ ००२ ॥

ज्वलनार्कप्रभं घोरं छेदनं सोमहारिणाम् ।
घोररूपं तदत्यर्थं यन्त्रं देवैः सुनिर्मितम् ॥ ००३ ॥

तस्यान्तरं स दृष्ट्वैव पर्यवर्तत खेचरः ।
अरान्तरेणाभ्यपतत्सङ्क्षिप्याङ्गं क्षणेन ह ॥ ००४ ॥

अधश्चक्रस्य चैवात्र दीप्तानलसमद्युती ।
विद्युज्जिह्वौ महाघोरौ दीप्तास्यौ दीप्तलोचनौ ॥ ००५ ॥

चक्षुर्विषौ महावीर्यौ नित्यक्रुद्धौ तरस्विनौ ।
रक्षार्थमेवामृतस्य ददर्श भुजगोत्तमौ ॥ ००६ ॥

सदा संरब्धनयनौ सदा चानिमिषेक्षणौ ।
तयोरेकोऽपि यं पश्येत्स तूर्णं भस्मसाद्भवेत् ॥ ००७ ॥

तयोश्चक्षूंषि रजसा सुपर्णस्तूर्णमावृणोत् ।
अदृष्टरूपस्तौ चापि सर्वतः पर्यकालयत् ॥ ००८ ॥

तयोरङ्गे समाक्रम्य वैनतेयोऽन्तरिक्षगः ।
आच्छिनत्तरसा मध्ये सोममभ्यद्रवत्ततः ॥ ००९ ॥

समुत्पाट्यामृतं तत्तु वैनतेयस्ततो बली ।
उत्पपात जवेनैव यन्त्रमुन्मथ्य वीर्यवान् ॥ ०१० ॥

अपीत्वैवामृतं पक्षी परिगृह्याशु वीर्यवान् ।
अगच्छदपरिश्रान्त आवार्यार्कप्रभां खगः ॥ ०११ ॥

विष्णुना तु तदाकाशे वैनतेयः समेयिवान् ।
तस्य नारायणस्तुष्टस्तेनालौल्येन कर्मणा ॥ ०१२ ॥

तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् ।
स वव्रे तव तिष्ठेयमुपरीत्यन्तरिक्षगः ॥ ०१३ ॥

उवाच चैनं भूयोऽपि नारायणमिदं वचः ।
अजरश्चामरश्च स्याममृतेन विनाप्यहम् ॥ ०१४ ॥

प्रतिगृह्य वरौ तौ च गरुडो विष्णुमब्रवीत् ।
भवतेऽपि वरं दद्मि वृणीतां भगवानपि ॥ ०१५ ॥

तं वव्रे वाहनं कृष्णो गरुत्मन्तं महाबलम् ।
ध्वजं च चक्रे भगवानुपरि स्थास्यसीति तम् ॥ ०१६ ॥

अनुपत्य खगं त्विन्द्रो वज्रेणाङ्गेऽभ्यताडयत् ।
विहङ्गमं सुरामित्रं हरन्तममृतं बलात् ॥ ०१७ ॥

तमुवाचेन्द्रमाक्रन्दे गरुडः पततां वरः ।
प्रहसञ्श्लक्ष्णया वाचा तथा वज्रसमाहतः ॥ ०१८ ॥

ऋषेर्मानं करिष्यामि वज्रं यस्यास्थिसंभवम् ।
वज्रस्य च करिष्यामि तव चैव शतक्रतो ॥ ०१९ ॥

एष पत्रं त्यजाम्येकं यस्यान्तं नोपलप्स्यसे ।
न हि वज्रनिपातेन रुजा मेऽस्ति कदाचन ॥ ०२० ॥

तत्र तं सर्वभूतानि विस्मितान्यब्रुवंस्तदा ।
सुरूपं पत्रमालक्ष्य सुपर्णोऽयं भवत्विति ॥ ०२१ ॥

दृष्ट्वा तदद्भुतं चापि सहस्राक्षः पुरंदरः ।
खगो महदिदं भूतमिति मत्वाभ्यभाषत ॥ ०२२ ॥

बलं विज्ञातुमिच्छामि यत्ते परमनुत्तमम् ।

सख्यं चानन्तमिच्छामि त्वया सह खगोत्तम ॥ ०२३ ॥

---

# अध्याय ०३०

गरुड उवाच ॥

सख्यं मेऽस्तु त्वया देव यथेच्छसि पुरंदर ।
बलं तु मम जानीहि महच्चासह्यमेव च ॥ ००१ ॥

कामं नैतत्प्रशंसन्ति सन्तः स्वबलसंस्तवम् ।
गुणसङ्कीर्तनं चापि स्वयमेव शतक्रतो ॥ ००२ ॥

सखेति कृत्वा तु सखे पृष्टो वक्ष्याम्यहं त्वया ।
न ह्यात्मस्तवसंयुक्तं वक्तव्यमनिमित्ततः ॥ ००३ ॥

सपर्वतवनामुर्वीं ससागरवनामिमाम् ।
पक्षनाड्यैकया शक्र त्वां चैवात्रावलम्बिनम् ॥ ००४ ॥

सर्वान्संपिण्डितान्वापि लोकान्सस्थाणुजङ्गमान् ।
वहेयमपरिश्रान्तो विद्धीदं मे महद्बलम् ॥ ००५ ॥

सूत उवाच ॥

इत्युक्तवचनं वीरं किरीटी श्रीमतां वरः ।
आह शौनक देवेन्द्रः सर्वभूतहितः प्रभुः ॥ ००६ ॥

प्रतिगृह्यतामिदानीं मे सख्यमानन्त्यमुत्तमम् ।
न कार्यं तव सोमेन मम सोमः प्रदीयताम् ॥ ००७ ॥

अस्मांस्ते हि प्रबाधेयुर्येभ्यो दद्याद्भवानिमम् ॥ ००७ ॥

गरुड उवाच ॥

किञ्चित्कारणमुद्दिश्य सोमोऽयं नीयते मया ।
न दास्यामि समादातुं सोमं कस्मैचिदप्यहम् ॥ ००८ ॥

यत्रेमं तु सहस्राक्ष निक्षिपेयमहं स्वयम् ।
त्वमादाय ततस्तूर्णं हरेथास्त्रिदशेश्वर ॥ ००९ ॥

शक्र उवाच ॥

वाक्येनानेन तुष्टोऽहं यत्त्वयोक्तमिहाण्डज ।
यदिच्छसि वरं मत्तस्तद्गृहाण खगोत्तम ॥ ०१० ॥

सूत उवाच ॥

इत्युक्तः प्रत्युवाचेदं कद्रूपुत्राननुस्मरन् ।
स्मृत्वा चैवोपधिकृतं मातुर्दास्यनिमित्ततः ॥ ०११ ॥

ईशोऽहमपि सर्वस्य करिष्यामि तु तेऽर्थिताम् ।
भवेयुर्भुजगाः शक्र मम भक्ष्या महाबलाः ॥ ०१२ ॥

तथेत्युक्त्वान्वगच्छत्तं ततो दानवसूदनः ।
हरिष्यामि विनिक्षिप्तं सोममित्यनुभाष्य तम् ॥ ०१३ ॥

आजगाम ततस्तूर्णं सुपर्णो मातुरन्तिकम् ।
अथ सर्पानुवाचेदं सर्वान्परमहृष्टवत् ॥ ०१४ ॥

इदमानीतममृतं निक्षेप्स्यामि कुशेषु वः ।

स्नाता मङ्गलसंयुक्तास्ततः प्राश्नीत पन्नगाः ॥ ०१५ ॥

अदासी चैव मातेयमद्यप्रभृति चास्तु मे ।
यथोक्तं भवतामेतद्वचो मे प्रतिपादितम् ॥ ०१६ ॥

ततः स्नातुं गताः सर्पाः प्रत्युक्त्वा तं तथेत्युत ।
शक्रोऽप्यमृतमाक्षिप्य जगाम त्रिदिवं पुनः ॥ ०१७ ॥

अथागतास्तमुद्देशं सर्पाः सोमार्थिनस्तदा ।
स्नाताश्च कृतजप्याश्च प्रहृष्टाः कृतमङ्गलाः ॥ ०१८ ॥

तद्विज्ञाय हृतं सर्पाः प्रतिमायाकृतं च तत् ।
सोमस्थानमिदं चेति दर्भांस्ते लिलिहुस्तदा ॥ ०१९ ॥

ततो द्वैधीकृता जिह्वा सर्पाणां तेन कर्मणा ।
अभवंश्चामृतस्पर्शाद्दर्भास्तेऽथ पवित्रिणः ॥ ०२० ॥

ततः सुपर्णः परमप्रहृष्टवा ;न्विहृत्य मात्रा सह तत्र कानने ।
भुजङ्गभक्षः परमार्चितः खगै ;रहीनकीर्तिर्विनतामनन्दयत् ॥ ०२१ ॥

इमां कथां यः शृणुयान्नरः सदा ; पठेत वा द्विजजनमुख्यसंसदि ।
असंशयं त्रिदिवमियात्स पुण्यभा ;ङ्महात्मनः पतगपतेः प्रकीर्तनात् ॥ ०२२ ॥

---

# अध्याय ०३१

शौनक उवाच ॥

भुजङ्गमानां शापस्य मात्रा चैव सुतेन च ।

विनतायास्त्वया प्रोक्तं कारणं सूतनन्दन ॥ ००१ ॥

वरप्रदानं भर्त्रा च कद्रूविनतयोस्तथा ।
नामनी चैव ते प्रोक्ते पक्षिणोर्वैनतेययोः ॥ ००२ ॥

पन्नगानां तु नामानि न कीर्तयसि सूतज ।
प्राधान्येनापि नामानि श्रोतुमिच्छामहे वयम् ॥ ००३ ॥

सूत उवाच ॥

बहुत्वान्नामधेयानि भुजगानां तपोधन ।
न कीर्तयिष्ये सर्वेषां प्राधान्येन तु मे श‍ृणु ॥ ००४ ॥

शेषः प्रथमतो जातो वासुकिस्तदनन्तरम् ।
ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ ॥ ००५ ॥

कालियो मणिनागश्च नागश्चापूरणस्तथा ।
नागस्तथा पिञ्जरक एलापत्रोऽथ वामनः ॥ ००६ ॥

नीलानीलौ तथा नागौ कल्माषशबलौ तथा ।
आर्यकश्चादिकश्चैव नागश्च शलपोतकः ॥ ००७ ॥

सुमनोमुखो दधिमुखस्तथा विमलपिण्डकः ।
आप्तः कोटनकश्चैव शङ्खो वालशिखस्तथा ॥ ००८ ॥

निष्ठ्यूनको हेमगुहो नहुषः पिङ्गलस्तथा ।
बाह्यकर्णो हस्तिपदस्तथा मुद्गरपिण्डकः ॥ ००९ ॥

कम्बलाश्वतरौ चापि नागः कालीयकस्तथा ।
वृत्तसंवर्तकौ नागौ द्वौ च पद्माविति श्रुतौ ॥ ०१० ॥

नागः शङ्खनकश्चैव तथा च स्फण्डकोऽपरः ।
क्षेमकश्च महानागो नागः पिण्डारकस्तथा ॥ ०११ ॥

करवीरः पुष्पदंष्ट्र एळको बिल्वपाण्डुकः ।
मूषकादः शङ्खशिराः पूर्णदंष्ट्रो हरिद्रकः ॥ ०१२ ॥

अपराजितो ज्योतिकश्च पन्नगः श्रीवहस्तथा ।
कौरव्यो धृतराष्ट्रश्च पुष्करः शल्यकस्तथा ॥ ०१३ ॥

विरजाश्च सुबाहुश्च शालिपिण्डश्च वीर्यवान् ।
हस्तिभद्रः पिठरको मुखरः कोणवासनः ॥ ०१४ ॥

कुञ्जरः कुररश्चैव तथा नागः प्रभाकरः ।
कुमुदः कुमुदाक्षश्च तित्तिरिर्हलिकस्तथा ॥ ०१५ ॥

कर्कराकर्करौ चोभौ कुण्डोदरमहोदरौ ॥ ०१५ ॥

एते प्राधान्यतो नागाः कीर्तिता द्विजसत्तम ।
बहुत्वान्नामधेयानामितरे न प्रकीर्तिताः ॥ ०१६ ॥

एतेषां प्रसवो यश्च प्रसवस्य च संततिः ।
असंख्येयेति मत्वा तान्न ब्रवीमि द्विजोत्तम ॥ ०१७ ॥

बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
अशक्यान्येव संख्यातुं भुजगानां तपोधन ॥ ०१८ ॥

# अध्याय ०३२

शौनक उवाच ॥

जाता वै भुजगास्तात वीर्यवन्तो दुरासदाः ।
शापं तं त्वथ विज्ञाय कृतवन्तो नु किं परम् ॥ ००१ ॥

सूत उवाच ॥

तेषां तु भगवाञ्शेषस्त्यक्त्वा कद्रूं महायशाः ।
तपो विपुलमातस्थे वायुभक्षो यतव्रतः ॥ ००२ ॥

गन्धमादनमासाद्य बदर्यां च तपोरतः ।
गोकर्णे पुष्करारण्ये तथा हिमवतस्तटे ॥ ००३ ॥

तेषु तेषु च पुण्येषु तीर्थेष्वायतनेषु च ।
एकान्तशीली नियतः सततं विजितेन्द्रियः ॥ ००४ ॥

तप्यमानं तपो घोरं तं ददर्श पितामहः ।
परिशुष्कमांसत्वक्स्नायुं जटाचीरधरं प्रभुम् ॥ ००५ ॥

तमब्रवीत्सत्यधृतिं तप्यमानं पितामहः ।
किमिदं कुरुषे शेष प्रजानां स्वस्ति वै कुरु ॥ ००६ ॥

त्वं हि तीव्रेण तपसा प्रजास्तापयसेऽनघ ।
ब्रूहि कामं च मे शेष यत्ते हृदि चिरं स्थितम् ॥ ००७ ॥

शेष उवाच ॥

सोदर्या मम सर्वे हि भ्रातरो मन्दचेतसः ।
सह तैर्नोत्सहे वस्तुं तद्भवाननुमन्यताम् ॥ ००८ ॥

अभ्यसूयन्ति सततं परस्परममित्रवत् ।
ततोऽहं तप आतिष्ठे नैतान्पश्येयमित्युत ॥ ००९ ॥

न मर्षयन्ति सततं विनतां ससुतां च ते ।
अस्माकं चापरो भ्राता वैनतेयः पितामह ॥ ०१० ॥

तं च द्विषन्ति तेऽत्यर्थं स चापि सुमहाबलः ।
वरप्रदानात्स पितुः कश्यपस्य महात्मनः ॥ ०११ ॥

सोऽहं तपः समास्थाय मोक्ष्यामीदं कलेवरम् ।
कथं मे प्रेत्यभावेऽपि न तैः स्यात्सह सङ्गमः ॥ ०१२ ॥

ब्रह्मोवाच ॥

जानामि शेष सर्वेषां भ्रातृणां ते विचेष्टितम् ।
मातुश्चाप्यपराधाद्वै भ्रातृणां ते महद्भयम् ॥ ०१३ ॥

कृतोऽत्र परिहारश्च पूर्वमेव भुजङ्गम ।
भ्रातृणां तव सर्वेषां न शोकं कर्तुमर्हसि ॥ ०१४ ॥

वृणीष्व च वरं मत्तः शेष यत्तेऽभिकाङ्क्षितम् ।
दित्सामि हि वरं तेऽद्य प्रीतिर्मे परमा त्वयि ॥ ०१५ ॥

दिष्ट्या च बुद्धिर्धर्मे ते निविष्टा पन्नगोत्तम ।
अतो भूयश्च ते बुद्धिर्धर्मे भवतु सुस्थिरा ॥ ०१६ ॥

शेष उवाच ॥

एष एव वरो मेऽद्य काङ्क्षितः प्रपितामह ।
धर्मे मे रमतां बुद्धिः शमे तपसि चेश्वर ॥ ०१७ ॥

ब्रह्मोवाच ॥

प्रीतोऽस्म्यनेन ते शेष दमेन प्रशमेन च ।
त्वया त्विदं वचः कार्यं मन्नियोगात्प्रजाहितम् ॥ ०१८ ॥

इमां महीं शैलवनोपपन्नां ; ससागरां साकरपत्तनां च ।
त्वं शेष सम्यक्चलितां यथाव ;त्सङ्गृह्य तिष्ठस्व यथाचला स्यात् ॥ ०१९ ॥

शेष उवाच ॥

यथाह देवो वरदः प्रजापति ;र्महीपतिर्भूतपतिर्जगत्पतिः ।
तथा महीं धारयितास्मि निश्चलां ; प्रयच्छ तां मे शिरसि प्रजापते ॥ ०२० ॥

ब्रह्मोवाच ॥

अधो महीं गच्छ भुजङ्गमोत्तम ; स्वयं तवैषा विवरं प्रदास्यति ।
इमां धरां धारयता त्वया हि मे ; महत्प्रियं शेष कृतं भविष्यति ॥ ०२१ ॥

सूत उवाच ॥

तथेति कृत्वा विवरं प्रविश्य स ; प्रभुर्भुवो भुजगवराग्रजः स्थितः ।
बिभर्ति देवीं शिरसा महीमिमां ; समुद्रनेमिं परिगृह्य सर्वतः ॥ ०२२ ॥

ब्रह्मोवाच ॥

शेषोऽसि नागोत्तम धर्मदेवो ; महीमिमां धारयसे यदेकः ।
अनन्तभोगः परिगृह्य सर्वां ; यथाहमेवं बलभिद्यथा वा ॥ ०२३ ॥

सूत उवाच ॥

अधो भूमेर्वसत्येवं नागोऽनन्तः प्रतापवान् ।

धारयन्वसुधामेकः शासनाद्ब्रह्मणो विभुः ॥ ०२४ ॥

सुपर्णं च सखायं वै भगवानमरोत्तमः ।
प्रादादनन्ताय तदा वैनतेयं पितामहः ॥ ०२५ ॥

---

# अध्याय ०३३

सूत उवाच ॥

मातुः सकाशात्तं शापं श्रुत्वा पन्नगसत्तमः ।
वासुकिश्चिन्तयामास शापोऽयं न भवेत्कथम् ॥ ००१ ॥

ततः स मन्त्रयामास भ्रातृभिः सह सर्वशः ।
ऐरावतप्रभृतिभिर्ये स्म धर्मपरायणाः ॥ ००२ ॥

वासुकिरुवाच ॥

अयं शापो यथोद्दिष्टो विदितं वस्तथानघाः ।
तस्य शापस्य मोक्षार्थं मन्त्रयित्वा यतामहे ॥ ००३ ॥

सर्वेषामेव शापानां प्रतिघातो हि विद्यते ।
न तु मात्राभिशप्तानां मोक्षो विद्येत पन्नगाः ॥ ००४ ॥

अव्ययस्याप्रमेयस्य सत्यस्य च तथाग्रतः ।
शप्ता इत्येव मे श्रुत्वा जायते हृदि वेपथुः ॥ ००५ ॥

नूनं सर्वविनाशोऽयमस्माकं समुदाहृतः ।
न ह्येनां सोऽव्ययो देवः शपन्तीं प्रत्यषेधयत् ॥ ००६ ॥

तस्मात्संमन्त्रयामोऽत्र भुजगानामनामयम् ।
यथा भवेत सर्वेषां मा नः कालोऽत्यगादयम् ॥ ००७ ॥

अपि मन्त्रयमाणा हि हेतुं पश्याम मोक्षणे ।
यथा नष्टं पुरा देवा गूढमग्निं गुहागतम् ॥ ००८ ॥

यथा स यज्ञो न भवेद्यथा वापि पराभवेत् ।
जनमेजयस्य सर्पाणां विनाशकरणाय हि ॥ ००९ ॥

सूत उवाच ॥

तथेत्युक्त्वा तु ते सर्वे काद्रवेयाः समागताः ।
समयं चक्रिरे तत्र मन्त्रबुद्धिविशारदाः ॥ ०१० ॥

एके तत्राब्रुवन्नागा वयं भूत्वा द्विजर्षभाः ।
जनमेजयं तं भिक्षामो यज्ञस्ते न भवेदिति ॥ ०११ ॥

अपरे त्वब्रुवन्नागास्तत्र पण्डितमानिनः ।
मन्त्रिणोऽस्य वयं सर्वे भविष्यामः सुसंमताः ॥ ०१२ ॥

स नः प्रक्ष्यति सर्वेषु कार्येष्वर्थविनिश्चयम् ।
तत्र बुद्धिं प्रवक्ष्यामो यथा यज्ञो निवर्तते ॥ ०१३ ॥

स नो बहुमतान्राजा बुद्ध्वा बुद्धिमतां वरः ।
यज्ञार्थं प्रक्ष्यति व्यक्तं नेति वक्ष्यामहे वयम् ॥ ०१४ ॥

दर्शयन्तो बहून्दोषान्प्रेत्य चेह च दारुणान् ।
हेतुभिः कारणैश्चैव यथा यज्ञो भवेन्न सः ॥ ०१५ ॥

अथवा य उपाध्यायः क्रतौ तस्मिन्भविष्यति ।

सर्पसत्रविधानज्ञो राजकार्यहिते रतः ॥ ०१६ ॥

तं गत्वा दशतां कश्चिद्भुजगः स मरिष्यति ।
तस्मिन्हते यज्ञकरे क्रतुः स न भविष्यति ॥ ०१७ ॥

ये चान्ये सर्पसत्रज्ञा भविष्यन्त्यस्य ऋत्विजः ।
तांश्च सर्वान्दशिष्यामः कृतमेवं भविष्यति ॥ ०१८ ॥

तत्रापरेऽमन्त्रयन्त धर्मात्मानो भुजङ्गमाः ।
अबुद्धिरेषा युष्माकं ब्रह्महत्या न शोभना ॥ ०१९ ॥

सम्यक्सद्धर्ममूला हि व्यसने शान्तिरुत्तमा ।
अधर्मोत्तरता नाम कृत्स्नं व्यापादयेज्जगत् ॥ ०२० ॥

अपरे त्वब्रुवन्नागाः समिद्धं जातवेदसम् ।
वर्षैर्निर्वापयिष्यामो मेघा भूत्वा सविद्युतः ॥ ०२१ ॥

स्रुग्भाण्डं निशि गत्वा वा अपरे भुजगोत्तमाः ।
प्रमत्तानां हरन्त्वाशु विघ्न एवं भविष्यति ॥ ०२२ ॥

यज्ञे वा भुजगास्तस्मिञ्शतशोऽथ सहस्रशः ।
जनं दशन्तु वै सर्वमेवं त्रासो भविष्यति ॥ ०२३ ॥

अथवा संस्कृतं भोज्यं दूषयन्तु भुजङ्गमाः ।
स्वेन मूत्रपुरीषेण सर्वभोज्यविनाशिना ॥ ०२४ ॥

अपरे त्वब्रुवंस्तत्र ऋत्विजोऽस्य भवामहे ।
यज्ञविघ्नं करिष्यामो दीयतां दक्षिणा इति ॥ ०२५ ॥

वश्यतां च गतोऽसौ नः करिष्यति यथेप्सितम् ॥ ०२५ ॥

अपरे त्वब्रुवंस्तत्र जले प्रक्रीडितं नृपम् ।
गृहमानीय बध्नीमः क्रतुरेवं भवेन्न सः ॥ ०२६ ॥

अपरे त्वब्रुवंस्तत्र नागाः सुकृतकारिणः ।
दशामैनं प्रगृह्याशु कृतमेवं भविष्यति ॥ ०२७ ॥

छिन्नं मूलमनर्थानां मृते तस्मिन्भविष्यति ॥ ०२७ ॥

एषा वै नैष्ठिकी बुद्धिः सर्वेषामेव संमता ।
यथा वा मन्यसे राजंस्तत्क्षिप्रं संविधीयताम् ॥ ०२८ ॥

इत्युक्त्वा समुदैक्षन्त वासुकिं पन्नगेश्वरम् ।
वासुकिश्चापि सञ्चिन्त्य तानुवाच भुजङ्गमान् ॥ ०२९ ॥

नैषा वो नैष्ठिकी बुद्धिर्मता कर्तुं भुजङ्गमाः ।
सर्वेषामेव मे बुद्धिः पन्नगानां न रोचते ॥ ०३० ॥

किं त्वत्र संविधातव्यं भवतां यद्भवेद्धितम् ।
अनेनाहं भृशं तप्ये गुणदोषौ मदाश्रयौ ॥ ०३१ ॥

---

# अध्याय ०३४

सूत उवाच ॥

श्रुत्वा तु वचनं तेषां सर्वेषामिति चेति च ।
वासुकेश्च वचः श्रुत्वा एलापत्रोऽब्रवीदिदम् ॥ ००१ ॥

न स यज्ञो न भविता न स राजा तथाविधः ।

जनमेजयः पाण्डवेयो यतोऽस्माकं महाभयम् ॥ ००२ ॥

दैवेनोपहतो राजन्यो भवेदिह पूरुषः ।
स दैवमेवाश्रयते नान्यत्तत्र परायणम् ॥ ००३ ॥

तदिदं दैवमस्माकं भयं पन्नगसत्तमाः ।
दैवमेवाश्रयामोऽत्र शृणुध्वं च वचो मम ॥ ००४ ॥

अहं शापे समुत्सृष्टे समश्रौषं वचस्तदा ।
मातुरुत्सङ्गमारूढो भयात्पन्नगसत्तमाः ॥ ००५ ॥

देवानां पन्नगश्रेष्ठास्तीक्ष्णास्तीक्ष्णा इति प्रभो ।
पितामहमुपागम्य दुःखार्तानां महाद्युते ॥ ००६ ॥

देवा ऊचुः ॥

का हि लब्ध्वा प्रियान्पुत्राञ्शपेदेवं पितामह ।
ऋते कद्रूं तीक्ष्णरूपां देवदेव तवाग्रतः ॥ ००७ ॥

तथेति च वचस्तस्यास्त्वयाप्युक्तं पितामह ।
एतदिच्छाम विज्ञातुं कारणं यन्न वारिता ॥ ००८ ॥

ब्रह्मोवाच ॥

बहवः पन्नगास्तीक्ष्णा भीमवीर्या विषोल्बणाः ।
प्रजानां हितकामोऽहं न निवारितवांस्तदा ॥ ००९ ॥

ये दन्दशूकाः क्षुद्राश्च पापचारा विषोल्बणाः ।
तेषां विनाशो भविता न तु ये धर्मचारिणः ॥ ०१० ॥

यन्निमित्तं च भविता मोक्षस्तेषां महाभयात् ।

पन्नगानां निबोधध्वं तस्मिन्काले तथागते ॥ ०११ ॥

यायावरकुले धीमान्भविष्यति महानृषिः ।
जरत्कारुरिति ख्यातस्तेजस्वी नियतेन्द्रियः ॥ ०१२ ॥

तस्य पुत्रो जरत्कारोरुत्पत्स्यति महातपाः ।
आस्तीको नाम यज्ञं स प्रतिषेत्स्यति तं तदा ॥ ०१३ ॥

तत्र मोक्ष्यन्ति भुजगा ये भविष्यन्ति धार्मिकाः ॥ ०१३ ॥

देवा ऊचुः ॥

स मुनिप्रवरो देव जरत्कारुर्महातपाः ।
कस्यां पुत्रं महात्मानं जनयिष्यति वीर्यवान् ॥ ०१४ ॥

ब्रह्मोवाच ॥

सनामायां सनामा स कन्यायां द्विजसत्तमः ।
अपत्यं वीर्यवान्देवा वीर्यवज्जनयिष्यति ॥ ०१५ ॥

एलापत्र उवाच ॥

एवमस्त्विति तं देवाः पितामहमथाब्रुवन् ।
उक्त्वा चैवं गता देवाः स च देवः पितामहः ॥ ०१६ ॥

सोऽहमेवं प्रपश्यामि वासुके भगिनीं तव ।
जरत्कारुरिति ख्यातां तां तस्मै प्रतिपादय ॥ ०१७ ॥

भैक्षवद्भिक्षमाणाय नागानां भयशान्तये ।
ऋषये सुव्रताय त्वमेष मोक्षः श्रुतो मया ॥ ०१८ ॥

# अध्याय ०३५

सूत उवाच ॥

एलापत्रस्य तु वचः श्रुत्वा नागा द्विजोत्तम ।
सर्वे प्रहृष्टमनसः साधु साध्वित्यपूजयन् ॥ ००१ ॥

ततः प्रभृति तां कन्यां वासुकिः पर्यरक्षत ।
जरत्कारुं स्वसारं वै परं हर्षमवाप च ॥ ००२ ॥

ततो नातिमहान्कालः समतीत इवाभवत् ।
अथ देवासुराः सर्वे ममन्थुर्वरुणालयम् ॥ ००३ ॥

तत्र नेत्रमभून्नागो वासुकिर्बलिनां वरः ।
समाप्यैव च तत्कर्म पितामहमुपागमन् ॥ ००४ ॥

देवा वासुकिना सार्धं पितामहमथाब्रुवन् ।
भगवञ्शापभीतोऽयं वासुकिस्तप्यते भृशम् ॥ ००५ ॥

तस्येदं मानसं शल्यं समुद्धर्तुं त्वमर्हसि ।
जनन्याः शापजं देव ज्ञातीनां हितकाङ्क्षिणः ॥ ००६ ॥

हितो ह्ययं सदास्माकं प्रियकारी च नागराट् ।
कुरु प्रसादं देवेश शमयास्य मनोज्वरम् ॥ ००७ ॥

ब्रह्मोवाच ॥

मयैवैतद्वितीर्णं वै वचनं मनसामराः ।

एलापत्रेण नागेन यदस्याभिहितं पुरा ॥ ००८ ॥

तत्करोत्वेष नागेन्द्रः प्राप्तकालं वचस्तथा ।
विनशिष्यन्ति ये पापा न तु ये धर्मचारिणः ॥ ००९ ॥

उत्पन्नः स जरत्कारुस्तपस्युग्रे रतो द्विजः ।
तस्यैष भगिनीं काले जरत्कारुं प्रयच्छतु ॥ ०१० ॥

यदेलापत्रेण वचस्तदोक्तं भुजगेन ह ।
पन्नगानां हितं देवास्तत्तथा न तदन्यथा ॥ ०११ ॥

सूत उवाच ॥

एतच्छ्रुत्वा स नागेन्द्रः पितामहवचस्तदा ।
सर्पान्बहूञ्जरत्कारौ नित्ययुक्तान्समादधत् ॥ ०१२ ॥

जरत्कारुर्यदा भार्यामिच्छेद्वरयितुं प्रभुः ।
शीघ्रमेत्य ममाख्येयं तन्नः श्रेयो भविष्यति ॥ ०१३ ॥

---

# अध्याय ०३६

शौनक उवाच ॥

जरत्कारुरिति प्रोक्तं यत्त्वया सूतनन्दन ।
इच्छाम्येतदहं तस्य ऋषेः श्रोतुं महात्मनः ॥ ००१ ॥

किं कारणं जरत्कारोर्नामैतत्प्रथितं भुवि ।
जरत्कारुनिरुक्तं त्वं यथावद्वक्तुमर्हसि ॥ ००२ ॥

सूत उवाच ॥

जरेति क्षयमाहुर्वै दारुणं कारुसञ्ज्ञितम् ।
शरीरं कारु तस्यासीत्तत्स धीमाञ्शनैः शनैः ॥ ००३ ॥

क्षपयामास तीव्रेण तपसेत्यत उच्यते ।
जरत्कारुरिति ब्रह्मन्वासुकेर्भगिनी तथा ॥ ००४ ॥

एवमुक्तस्तु धर्मात्मा शौनकः प्राहसत्तदा ।
उग्रश्रवसमामन्त्र्य उपपन्नमिति ब्रुवन् ॥ ००५ ॥

सूत उवाच ॥

अथ कालस्य महतः स मुनिः संशितव्रतः ।
तपस्यभिरतो धीमान्न दारानभ्यकाङ्क्षत ॥ ००६ ॥

स ऊर्ध्वरेतास्तपसि प्रसक्तः ; स्वाध्यायवान्वीतभयक्लमः सन् ।
चचार सर्वां पृथिवीं महात्मा ; न चापि दारान्मनसाप्यकाङ्क्षत् ॥ ००७ ॥

ततोऽपरस्मिन्संप्राप्ते काले कस्मिंश्चिदेव तु ।
परिक्षिदिति विख्यातो राजा कौरववंशभृत् ॥ ००८ ॥

यथा पाण्डुर्महाबाहुर्धनुर्धरवरो भुवि ।
बभूव मृगयाशीलः पुरास्य प्रपितामहः ॥ ००९ ॥

मृगान्विध्यन्वराहांश्च तरक्षून्महिषांस्तथा ।
अन्यांश्च विविधान्वन्यांश्चचार पृथिवीपतिः ॥ ०१० ॥

स कदाचिन्मृगं विद्ध्वा बाणेन नतपर्वणा ।
पृष्ठतो धनुरादाय ससार गहने वने ॥ ०११ ॥

यथा हि भगवान्रुद्रो विद्ध्वा यज्ञमृगं दिवि ।
अन्वगच्छद्धनुष्पाणिः पर्यन्वेषंस्ततस्ततः ॥ ०१२ ॥

न हि तेन मृगो विद्धो जीवन्गच्छति वै वनम् ।
पूर्वरूपं तु तन्नूनमासीत्स्वर्गगतिं प्रति ॥ ०१३ ॥

परिक्षितस्तस्य राज्ञो विद्धो यन्नष्टवान्मृगः ॥ ०१३ ॥

दूरं चापहृतस्तेन मृगेण स महीपतिः ।
परिश्रान्तः पिपासार्त आससाद मुनिं वने ॥ ०१४ ॥

गवां प्रचारेष्वासीनं वत्सानां मुखनिःसृतम् ।
भूयिष्ठमुपयुञ्जानं फेनमापिबतां पयः ॥ ०१५ ॥

तमभिद्रुत्य वेगेन स राजा संशितव्रतम् ।
अपृच्छद्धनुरुद्यम्य तं मुनिं क्षुच्छ्रमान्वितः ॥ ०१६ ॥

भो भो ब्रह्मन्नहं राजा परिक्षिदभिमन्युजः ।
मया विद्धो मृगो नष्टः कच्चित्त्वं दृष्टवानसि ॥ ०१७ ॥

स मुनिस्तस्य नोवाच किञ्चिन्मौनव्रते स्थितः ।
तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासजत् ॥ ०१८ ॥

धनुष्कोट्या समुत्क्षिप्य स चैनं समुदैक्षत ।
न च किञ्चिदुवाचैनं शुभं वा यदि वाशुभम् ॥ ०१९ ॥

स राजा क्रोधमुत्सृज्य व्यथितस्तं तथागतम् ।
दृष्ट्वा जगाम नगरमृषिस्त्वास्ते तथैव सः ॥ ०२० ॥

तरुणस्तस्य पुत्रोऽभूत्तिग्मतेजा महातपाः ।

शृङ्गी नाम महाक्रोधो दुष्प्रसादो महाव्रतः ॥ ०२१ ॥

स देवं परमीशानं सर्वभूतहिते रतम् ।
ब्रह्माणमुपतस्थे वै काले काले सुसंयतः ॥ ०२२ ॥

स तेन समनुज्ञातो ब्रह्मणा गृहमेयिवान् ॥ ०२२ ॥

सख्योक्तः क्रीडमानेन स तत्र हसता किल ।
संरम्भी कोपनोऽतीव विषकल्प ऋषेः सुतः ॥ ०२३ ॥

ऋषिपुत्रेण नर्मार्थं कृशेन द्विजसत्तम ॥ ०२३ ॥

तेजस्विनस्तव पिता तथैव च तपस्विनः ।
शवं स्कन्धेन वहति मा शृङ्गिन्गर्वितो भव ॥ ०२४ ॥

व्याहरत्स्वृषिपुत्रेषु मा स्म किञ्चिद्वचो वदीः ।
अस्मद्विधेषु सिद्धेषु ब्रह्मवित्सु तपस्विषु ॥ ०२५ ॥

क्व ते पुरुषमानित्वं क्व ते वाचस्तथाविधाः ।
दर्पजाः पितरं यस्त्वं द्रष्टा शवधरं तथा ॥ ०२६ ॥

---

# अध्याय ०३७

सूत उवाच ॥

एवमुक्तः स तेजस्वी शृङ्गी कोपसमन्वितः ।
मृतधारं गुरुं श्रुत्वा पर्यतप्यत मन्युना ॥ ००१ ॥

स तं कृशमभिप्रेक्ष्य सूनृतां वाचमुत्सृजन् ।
अपृच्छत कथं तातः स मेऽद्य मृतधारकः ॥ ००२ ॥

कृश उवाच ॥

राज्ञा परिक्षिता तात मृगयां परिधावता ।
अवसक्तः पितुस्तेऽद्य मृतः स्कन्धे भुजङ्गमः ॥ ००३ ॥

शृङ्ग्युवाच ॥

किं मे पित्रा कृतं तस्य राज्ञोऽनिष्टं दुरात्मनः ।
ब्रूहि त्वं कृश तत्त्वेन पश्य मे तपसो बलम् ॥ ००४ ॥

कृश उवाच ॥

स राजा मृगयां यातः परिक्षिदभिमन्युजः ।
ससार मृगमेकाकी विद्ध्वा बाणेन पत्रिणा ॥ ००५ ॥

न चापश्यन्मृगं राजा चरंस्तस्मिन्महावने ।
पितरं ते स दृष्ट्वैव पप्रच्छानभिभाषिणम् ॥ ००६ ॥

तं स्थाणुभूतं तिष्ठन्तं क्षुत्पिपासाश्रमातुरः ।
पुनः पुनर्मृगं नष्टं पप्रच्छ पितरं तव ॥ ००७ ॥

स च मौनव्रतोपेतो नैव तं प्रत्यभाषत ।
तस्य राजा धनुष्कोट्या सर्पं स्कन्धे समासृजत् ॥ ००८ ॥

शृङ्गिंस्तव पिताद्यासौ तथैवास्ते यतव्रतः ।
सोऽपि राजा स्वनगरं प्रतियातो गजाह्वयम् ॥ ००९ ॥

सूत उवाच ॥

श्रुत्वैवमृषिपुत्रस्तु दिवं स्तब्ध्वेव विष्ठितः ।
कोपसंरक्तनयनः प्रज्वलन्निव मन्युना ॥ ०१० ॥

आविष्टः स तु कोपेन शशाप नृपतिं तदा ।
वार्युपस्पृश्य तेजस्वी क्रोधवेगबलात्कृतः ॥ ०११ ॥

शृङ्ग्युवाच ॥

योऽसौ वृद्धस्य तातस्य तथा कृच्छ्रगतस्य च ।
स्कन्धे मृतमवास्राक्षीत्पन्नगं राजकिल्बिषी ॥ ०१२ ॥

तं पापमतिसङ्क्रुद्धस्तक्षकः पन्नगोत्तमः ।
आशीविषस्तिग्मतेजा मद्वाक्यबलचोदितः ॥ ०१३ ॥

सप्तरात्रादितो नेता यमस्य सदनं प्रति ।
द्विजानामवमन्तारं कुरूणामयशस्करम् ॥ ०१४ ॥

सूत उवाच ॥

इति शप्त्वा नृपं क्रुद्धः शृङ्गी पितरमभ्ययात् ।
आसीनं गोचरे तस्मिन्वहन्तं शवपन्नगम् ॥ ०१५ ॥

स तमालक्ष्य पितरं शृङ्गी स्कन्धगतेन वै ।
शवेन भुजगेनासीद्भूयः क्रोधसमन्वितः ॥ ०१६ ॥

दुःखाच्चाश्रूणि मुमुचे पितरं चेदमब्रवीत् ।
श्रुत्वेमां धर्षणां तात तव तेन दुरात्मना ॥ ०१७ ॥

राज्ञा परिक्षिता कोपादशपं तमहं नृपम् ।
यथार्हति स एवोग्रं शापं कुरुकुलाधमः ॥ ०१८ ॥

सप्तमेऽहनि तं पापं तक्षकः पन्नगोत्तमः ।
वैवस्वतस्य भवनं नेता परमदारुणम् ॥ ०१९ ॥

तमब्रवीत्पिता ब्रह्मंस्तथा कोपसमन्वितम् ।
न मे प्रियं कृतं तात नैष धर्मस्तपस्विनाम् ॥ ०२० ॥

वयं तस्य नरेन्द्रस्य विषये निवसामहे ।
न्यायतो रक्षितास्तेन तस्य पापं न रोचये ॥ ०२१ ॥

सर्वथा वर्तमानस्य राज्ञो ह्यस्मद्विधैः सदा ।
क्षन्तव्यं पुत्र धर्मो हि हतो हन्ति न संशयः ॥ ०२२ ॥

यदि राजा न रक्षेत पीडा वै नः परा भवेत् ।
न शक्नुयाम चरितुं धर्मं पुत्र यथासुखम् ॥ ०२३ ॥

रक्ष्यमाणा वयं तात राजभिः शास्त्रदृष्टिभिः ।
चरामो विपुलं धर्मं तेषां चांशोऽस्ति धर्मतः ॥ ०२४ ॥

परिक्षित्तु विशेषेण यथास्य प्रपितामहः ।
रक्षत्यस्मान्यथा राज्ञा रक्षितव्याः प्रजास्तथा ॥ ०२५ ॥

तेनेह क्षुधितेनाद्य श्रान्तेन च तपस्विना ।
अजानता व्रतमिदं कृतमेतदसंशयम् ॥ ०२६ ॥

तस्मादिदं त्वया बाल्यात्सहसा दुष्कृतं कृतम् ।
न ह्यर्हति नृपः शापमस्मत्तः पुत्र सर्वथा ॥ ०२७ ॥

# अध्याय ०३८

शृङ्ग्युवाच ॥

यद्येतत्साहसं तात यदि वा दुष्कृतं कृतम् ।
प्रियं वाप्यप्रियं वा ते वागुक्ता न मृषा मया ॥ ००१ ॥

नैवान्यथेदं भविता पितरेष ब्रवीमि ते ।
नाहं मृषा प्रब्रवीमि स्वैरेष्वपि कुतः शपन् ॥ ००२ ॥

शमीक उवाच ॥

जानाम्युग्रप्रभावं त्वां पुत्र सत्यगिरं तथा ।
नानृतं ह्युक्तपूर्वं ते नैतन्मिथ्या भविष्यति ॥ ००३ ॥

पित्रा पुत्रो वयःस्थोऽपि सततं वाच्य एव तु ।
यथा स्याद्गुणसंयुक्तः प्राप्नुयाच्च महद्यशः ॥ ००४ ॥

किं पुनर्बाल एव त्वं तपसा भावितः प्रभो ।
वर्धते च प्रभवतां कोपोऽतीव महात्मनाम् ॥ ००५ ॥

सोऽहं पश्यामि वक्तव्यं त्वयि धर्मभृतां वर ।
पुत्रत्वं बालतां चैव तवावेक्ष्य च साहसम् ॥ ००६ ॥

स त्वं शमयुतो भूत्वा वन्यमाहारमाहरन् ।
चर क्रोधमिमं त्यक्त्वा नैवं धर्मं प्रहास्यसि ॥ ००७ ॥

क्रोधो हि धर्मं हरति यतीनां दुःखसञ्चितम् ।
ततो धर्मविहीनानां गतिरिष्टा न विद्यते ॥ ००८ ॥

शम एव यतीनां हि क्षमिणां सिद्धिकारकः ।

क्षमावतामयं लोकः परश्चैव क्षमावताम् ॥ ००९ ॥

तस्माच्चरेथाः सततं क्षमाशीलो जितेन्द्रियः ।
क्षमया प्राप्स्यसे लोकान्ब्रह्मणः समनन्तरान् ॥ ०१० ॥

मया तु शममास्थाय यच्छक्यं कर्तुमद्य वै ।
तत्करिष्येऽद्य ताताहं प्रेषयिष्ये नृपाय वै ॥ ०११ ॥

मम पुत्रेण शप्तोऽसि बालेनाकृतबुद्धिना ।
ममेमां धर्षणां त्वत्तः प्रेक्ष्य राजन्नमर्षिणा ॥ ०१२ ॥

सूत उवाच ॥

एवमादिश्य शिष्यं स प्रेषयामास सुव्रतः ।
परिक्षिते नृपतये दयापन्नो महातपाः ॥ ०१३ ॥

संदिश्य कुशलप्रश्नं कार्यवृत्तान्तमेव च ।
शिष्यं गौरमुखं नाम शीलवन्तं समाहितम् ॥ ०१४ ॥

सोऽभिगम्य ततः शीघ्रं नरेन्द्रं कुरुवर्धनम् ।
विवेश भवनं राज्ञः पूर्वं द्वाःस्थैर्निवेदितः ॥ ०१५ ॥

पूजितश्च नरेन्द्रेण द्विजो गौरमुखस्ततः ।
आचख्यौ परिविश्रान्तो राज्ञे सर्वमशेषतः ॥ ०१६ ॥

शमीकवचनं घोरं यथोक्तं मन्त्रिसंनिधौ ॥ ०१६ ॥

शमीको नाम राजेन्द्र विषये वर्तते तव ।
ऋषिः परमधर्मात्मा दान्तः शान्तो महातपाः ॥ ०१७ ॥

तस्य त्वया नरव्याघ्र सर्पः प्राणैर्वियोजितः ।

अवसक्तो धनुष्कोट्या स्कन्धे भरतसत्तम ॥ ०१८ ॥

क्षान्तवांस्तव तत्कर्म पुत्रस्तस्य न चक्षमे ॥ ०१८ ॥

तेन शप्तोऽसि राजेन्द्र पितुरज्ञातमद्य वै ।
तक्षकः सप्तरात्रेण मृत्युस्ते वै भविष्यति ॥ ०१९ ॥

तत्र रक्षां कुरुष्वेति पुनः पुनरथाब्रवीत् ।
तदन्यथा न शक्यं च कर्तुं केनचिदप्युत ॥ ०२० ॥

न हि शक्नोति संयन्तुं पुत्रं कोपसमन्वितम् ।
ततोऽहं प्रेषितस्तेन तव राजन्हितार्थिना ॥ ०२१ ॥

इति श्रुत्वा वचो घोरं स राजा कुरुनन्दनः ।
पर्यतप्यत तत्पापं कृत्वा राजा महातपाः ॥ ०२२ ॥

तं च मौनव्रतधरं श्रुत्वा मुनिवरं तदा ।
भूय एवाभवद्राजा शोकसंतप्तमानसः ॥ ०२३ ॥

अनुक्रोशात्मतां तस्य शमीकस्यावधार्य तु ।
पर्यतप्यत भूयोऽपि कृत्वा तत्किल्बिषं मुनेः ॥ ०२४ ॥

न हि मृत्युं तथा राजा श्रुत्वा वै सोऽन्वतप्यत ।
अशोचदमरप्रख्यो यथा कृत्वेह कर्म तत् ॥ ०२५ ॥

ततस्तं प्रेषयामास राजा गौरमुखं तदा ।
भूयः प्रसादं भगवान्करोत्विति ममेति वै ॥ ०२६ ॥

तस्मिंश्च गतमात्रे वै राजा गौरमुखे तदा ।
मन्त्रिभिर्मन्त्रयामास सह संविग्नमानसः ॥ ०२७ ॥

निश्चित्य मन्त्रिभिश्चैव सहितो मन्त्रतत्त्ववित् ।
प्रासादं कारयामास एकस्तम्भं सुरक्षितम् ॥ ०२८ ॥

रक्षां च विदधे तत्र भिषजश्चौषधानि च ।
ब्राह्मणान्सिद्धमन्त्रांश्च सर्वतो वै न्यवेशयत् ॥ ०२९ ॥

राजकार्याणि तत्रस्थः सर्वाण्येवाकरोच्च सः ।
मन्त्रिभिः सह धर्मज्ञः समन्तात्परिरक्षितः ॥ ०३० ॥

प्राप्ते तु दिवसे तस्मिन्सप्तमे द्विजसत्तम ।
काश्यपोऽभ्यागमद्विद्वांस्तं राजानं चिकित्सितुम् ॥ ०३१ ॥

श्रुतं हि तेन तदभूदद्य तं राजसत्तमम् ।
तक्षकः पन्नगश्रेष्ठो नेष्यते यमसादनम् ॥ ०३२ ॥

तं दष्टं पन्नगेन्द्रेण करिष्येऽहमपज्वरम् ।
तत्र मेऽर्थश्च धर्मश्च भवितेति विचिन्तयन् ॥ ०३३ ॥

तं ददर्श स नागेन्द्रस्तक्षकः काश्यपं पथि ।
गच्छन्तमेकमनसं द्विजो भूत्वा वयोतिगः ॥ ०३४ ॥

तमब्रवीत्पन्नगेन्द्रः काश्यपं मुनिपुङ्गवम् ।
क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति ॥ ०३५ ॥

काश्यप उवाच ॥

नृपं कुरुकुलोत्पन्नं परिक्षितमरिंदमम् ।
तक्षकः पन्नगश्रेष्ठस्तेजसाद्य प्रधक्ष्यति ॥ ०३६ ॥

तं दष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसा ।
पाण्डवानां कुलकरं राजानममितौजसम् ॥ ०३७ ॥

गच्छामि सौम्य त्वरितं सद्यः कर्तुमपज्वरम् ॥ ०३७ ॥

तक्षक उवाच ॥

अहं स तक्षको ब्रह्मंस्तं धक्ष्यामि महीपतिम् ।
निवर्तस्व न शक्तस्त्वं मया दष्टं चिकित्सितुम् ॥ ०३८ ॥

काश्यप उवाच ॥

अहं तं नृपतिं नाग त्वया दष्टमपज्वरम् ।
करिष्य इति मे बुद्धिर्विद्याबलमुपाश्रितः ॥ ०३९ ॥

---

# अध्याय ०३९

तक्षक उवाच ॥

दष्टं यदि मयेह त्वं शक्तः किञ्चिच्चिकित्सितुम् ।
ततो वृक्षं मया दष्टमिमं जीवय काश्यप ॥ ००१ ॥

परं मन्त्रबलं यत्ते तद्दर्शय यतस्व च ।
न्यग्रोधमेनं धक्ष्यामि पश्यतस्ते द्विजोत्तम ॥ ००२ ॥

काश्यप उवाच ॥

दश नागेन्द्र वृक्षं त्वं यमेनमभिमन्यसे ।
अहमेनं त्वया दष्टं जीवयिष्ये भुजङ्गम ॥ ००३ ॥

सूत उवाच ॥

एवमुक्तः स नागेन्द्रः काश्यपेन महात्मना ।
अदशद्वृक्षमभ्येत्य न्यग्रोधं पन्नगोत्तमः ॥ ००४ ॥

स वृक्षस्तेन दष्टः सन्सद्य एव महाद्युते ।
आशीविषविषोपेतः प्रजज्वाल समन्ततः ॥ ००५ ॥

तं दग्ध्वा स नगं नागः काश्यपं पुनरब्रवीत् ।
कुरु यत्नं द्विजश्रेष्ठ जीवयैनं वनस्पतिम् ॥ ००६ ॥

भस्मीभूतं ततो वृक्षं पन्नगेन्द्रस्य तेजसा ।
भस्म सर्वं समाहृत्य काश्यपो वाक्यमब्रवीत् ॥ ००७ ॥

विद्याबलं पन्नगेन्द्र पश्य मेऽस्मिन्वनस्पतौ ।
अहं सञ्जीवयाम्येनं पश्यतस्ते भुजङ्गम ॥ ००८ ॥

ततः स भगवान्विद्वान्काश्यपो द्विजसत्तमः ।
भस्मराशीकृतं वृक्षं विद्यया समजीवयत् ॥ ००९ ॥

अङ्कुरं तं स कृतवांस्ततः पर्णद्वयान्वितम् ।
पलाशिनं शाखिनं च तथा विटपिनं पुनः ॥ ०१० ॥

तं दृष्ट्वा जीवितं वृक्षं काश्यपेन महात्मना ।
उवाच तक्षको ब्रह्मन्नेतदत्यद्भुतं त्वयि ॥ ०११ ॥

विप्रेन्द्र यद्विषं हन्या मम वा मद्विधस्य वा ।
कं त्वमर्थमभिप्रेप्सुर्यासि तत्र तपोधन ॥ ०१२ ॥

यत्तेऽभिलषितं प्राप्तुं फलं तस्मान्नृपोत्तमात् ।
अहमेव प्रदास्यामि तत्ते यद्यपि दुर्लभम् ॥ ०१३ ॥

विप्रशापाभिभूते च क्षीणायुषि नराधिपे ।
घटमानस्य ते विप्र सिद्धिः संशयिता भवेत् ॥ ०१४ ॥

ततो यशः प्रदीप्तं ते त्रिषु लोकेषु विश्रुतम् ।
विरश्मिरिव घर्मांशुरन्तर्धानमितो व्रजेत् ॥ ०१५ ॥

काश्यप उवाच ॥

धनार्थी याम्यहं तत्र तन्मे दित्स भुजङ्गम ।
ततोऽहं विनिवर्तिष्ये गृहायोरगसत्तम ॥ ०१६ ॥

तक्षक उवाच ॥

यावद्धनं प्रार्थयसे तस्माद्राज्ञस्ततोऽधिकम् ।
अहं तेऽद्य प्रदास्यामि निवर्तस्व द्विजोत्तम ॥ ०१७ ॥

सूत उवाच ॥

तक्षकस्य वचः श्रुत्वा काश्यपो द्विजसत्तमः ।
प्रदध्यौ सुमहातेजा राजानं प्रति बुद्धिमान् ॥ ०१८ ॥

दिव्यज्ञानः स तेजस्वी ज्ञात्वा तं नृपतिं तदा ।
क्षीणायुषं पाण्डवेयमपावर्तत काश्यपः ॥ ०१९ ॥

लब्ध्वा वित्तं मुनिवरस्तक्षकाद्यावदीप्सितम् ॥ ०१९ ॥

निवृत्ते काश्यपे तस्मिन्समयेन महात्मनि ।
जगाम तक्षकस्तूर्णं नगरं नागसाह्वयम् ॥ ०२० ॥

अथ शुश्राव गच्छन्स तक्षको जगतीपतिम् ।

मन्त्रागदैर्विषहरै रक्ष्यमाणं प्रयत्नतः ॥ ०२१ ॥

स चिन्तयामास तदा मायायोगेन पार्थिवः ।
मया वञ्चयितव्योऽसौ क उपायो भवेदिति ॥ ०२२ ॥

ततस्तापसरूपेण प्राहिणोत्स भुजङ्गमान् ।
फलपत्रोदकं गृह्य राज्ञे नागोऽथ तक्षकः ॥ ०२३ ॥

तक्षक उवाच ॥

गच्छध्वं यूयमव्यग्रा राजानं कार्यवत्तया ।
फलपत्रोदकं नाम प्रतिग्राहयितुं नृपम् ॥ ०२४ ॥

सूत उवाच ॥

ते तक्षकसमादिष्टास्तथा चक्रुर्भुजङ्गमाः ।
उपनिन्युस्तथा राज्ञे दर्भानापः फलानि च ॥ ०२५ ॥

तच्च सर्वं स राजेन्द्रः प्रतिजग्राह वीर्यवान् ।
कृत्वा च तेषां कार्याणि गम्यतामित्युवाच तान् ॥ ०२६ ॥

गतेषु तेषु नागेषु तापसच्छद्मरूपिषु ।
अमात्यान्सुहृदश्चैव प्रोवाच स नराधिपः ॥ ०२७ ॥

भक्षयन्तु भवन्तो वै स्वादूनीमानि सर्वशः ।
तापसैरुपनीतानि फलानि सहिता मया ॥ ०२८ ॥

ततो राजा ससचिवः फलान्यादातुमैच्छत ।
यद्गृहीतं फलं राज्ञा तत्र कृमिरभूदणुः ॥ ०२९ ॥

ह्रस्वकः कृष्णनयनस्ताम्रो वर्णेन शौनक ॥ ०२९ ॥

स तं गृह्य नृपश्रेष्ठः सचिवानिदमब्रवीत् ।
अस्तमभ्येति सविता विषादद्य न मे भयम् ॥ ०३० ॥

सत्यवागस्तु स मुनिः कृमिको मां दशत्वयम् ।
तक्षको नाम भूत्वा वै तथा परिहृतं भवेत् ॥ ०३१ ॥

ते चैनमन्ववर्तन्त मन्त्रिणः कालचोदिताः ।
एवमुक्त्वा स राजेन्द्रो ग्रीवायां संनिवेश्य ह ॥ ०३२ ॥

कृमिकं प्राहसत्तूर्णं मुमूर्षुर्नष्टचेतनः ॥ ०३२ ॥

हसन्नेव च भोगेन तक्षकेणाभिवेष्टितः ।
तस्मात्फलाद्विनिष्क्रम्य यत्तद्राज्ञे निवेदितम् ॥ ०३३ ॥

---

# अध्याय ०४०

सूत उवाच ॥

तं तथा मन्त्रिणो दृष्ट्वा भोगेन परिवेष्टितम् ।
विवर्णवदनाः सर्वे रुरुदुर्भृशदुःखिताः ॥ ००१ ॥

तं तु नादं ततः श्रुत्वा मन्त्रिणस्ते प्रदुद्रुवुः ।
अपश्यंश्चैव ते यान्तमाकाशे नागमद्भुतम् ॥ ००२ ॥

सीमन्तमिव कुर्वाणं नभसः पद्मवर्चसम् ।
तक्षकं पन्नगश्रेष्ठं भृशं शोकपरायणाः ॥ ००३ ॥

ततस्तु ते तद्गृहमग्निना वृतं ; प्रदीप्यमानं विषजेन भोगिनः ।
भयात्परित्यज्य दिशः प्रपेदिरे ; पपात तच्चाशनिताडितं यथा ॥ ००४ ॥

ततो नृपे तक्षकतेजसा हते ; प्रयुज्य सर्वाः परलोकसत्क्रियाः ।
शुचिर्द्विजो राजपुरोहितस्तदा ; तथैव ते तस्य नृपस्य मन्त्रिणः ॥ ००५ ॥

नृपं शिशुं तस्य सुतं प्रचक्रिरे ; समेत्य सर्वे पुरवासिनो जनाः ।
नृपं यमाहुस्तममित्रघातिनं ; कुरुप्रवीरं जनमेजयं जनाः ॥ ००६ ॥

स बाल एवार्यमतिर्नृपोत्तमः ; सहैव तैर्मन्त्रिपुरोहितैस्तदा ।
शशास राज्यं कुरुपुङ्गवाग्रजो ; यथास्य वीरः प्रपितामहस्तथा ॥ ००७ ॥

ततस्तु राजानममित्रतापनं ; समीक्ष्य ते तस्य नृपस्य मन्त्रिणः ।
सुवर्णवर्माणमुपेत्य काशिपं ; वपुष्टमार्थं वरयां प्रचक्रमुः ॥ ००८ ॥

ततः स राजा प्रददौ वपुष्टमां ; कुरुप्रवीराय परीक्ष्य धर्मतः ।
स चापि तां प्राप्य मुदा युतोऽभव ;न्न चान्यनारीषु मनो दधे क्वचित् ॥ ००९ ॥

सरःसु फुल्लेषु वनेषु चैव ह ; प्रसन्नचेता विजहार वीर्यवान् ।
तथा स राजन्यवरो विजह्विवा ;न्यथोर्वशीं प्राप्य पुरा पुरूरवाः ॥ ०१० ॥

वपुष्टमा चापि वरं पतिं तदा ; प्रतीतरूपं समवाप्य भूमिपम् ।
भावेन रामा रमयां बभूव वै ; विहारकालेष्ववरोधसुन्दरी ॥ ०११ ॥

---

# अध्याय ०४१

सूत उवाच ॥

एतस्मिन्नेव काले तु जरत्कारुर्महातपाः ।
चचार पृथिवीं कृत्स्नां यत्रसायङ्गृहो मुनिः ॥ ००१ ॥

चरन्दीक्षां महातेजा दुश्चरामकृतात्मभिः ।
तीर्थेष्वाप्लवनं कुर्वन्पुण्येषु विचचार ह ॥ ००२ ॥

वायुभक्षो निराहारः शुष्यन्नहरहर्मुनिः ।
स ददर्श पितृन्गर्ते लम्बमानानधोमुखान् ॥ ००३ ॥

एकतन्त्ववशिष्टं वै वीरणस्तम्बमाश्रितान् ।
तं च तन्तुं शनैराखुमाददानं बिलाश्रयम् ॥ ००४ ॥

निराहारान्कृशान्दीनान्गर्तेऽऽर्तांस्त्राणमिच्छतः ।
उपसृत्य स तान्दीनान्दीनरूपोऽभ्यभाषत ॥ ००५ ॥

के भवन्तोऽवलम्बन्ते वीरणस्तम्बमाश्रिताः ।
दुर्बलं खादितैर्मूलैराखुना बिलवासिना ॥ ००६ ॥

वीरणस्तम्बके मूलं यदप्येकमिह स्थितम् ।
तदप्ययं शनैराखुरादत्ते दशनैः शितैः ॥ ००७ ॥

छेत्स्यतेऽल्पावशिष्टत्वादेतदप्यचिरादिव ।
ततः स्थ पतितारोऽत्र गर्ते अस्मिन्नधोमुखाः ॥ ००८ ॥

ततो मे दुःखमुत्पन्नं दृष्ट्वा युष्मानधोमुखान् ।
कृच्छ्रामापदमापन्नान्प्रियं किं करवाणि वः ॥ ००९ ॥

तपसोऽस्य चतुर्थेन तृतीयेनापि वा पुनः ।
अर्धेन वापि निस्तर्तुमापदं ब्रूत माचिरम् ॥ ०१० ॥

अथवापि समग्रेण तरन्तु तपसा मम ।
भवन्तः सर्व एवास्मात्काममेवं विधीयताम् ॥ ०११ ॥

पितर ऊचुः ॥

वृद्धो भवान्ब्रह्मचारी यो नस्त्रातुमिहेच्छति ।
न तु विप्राग्र्य तपसा शक्यमेतद्व्यपोहितुम् ॥ ०१२ ॥

अस्ति नस्तात तपसः फलं प्रवदतां वर ।
संतानप्रक्षयाद्ब्रह्मन्पतामो निरयेऽशुचौ ॥ ०१३ ॥

लम्बतामिह नस्तात न ज्ञानं प्रतिभाति वै ।
येन त्वां नाभिजानीमो लोके विख्यातपौरुषम् ॥ ०१४ ॥

वृद्धो भवान्महाभागो यो नः शोच्यान्सुदुःखितान् ।
शोचस्युपेत्य कारुण्याच्छृणु ये वै वयं द्विज ॥ ०१५ ॥

यायावरा नाम वयमृषयः संशितव्रताः ।
लोकात्पुण्यादिह भ्रष्टाः संतानप्रक्षयाद्विभो ॥ ०१६ ॥

प्रनष्टं नस्तपः पुण्यं न हि नस्तन्तुरस्ति वै ।
अस्ति त्वेकोऽद्य नस्तन्तुः सोऽपि नास्ति यथा तथा ॥ ०१७ ॥

मन्दभाग्योऽल्पभाग्यानां बन्धुः स किल नः कुले ।
जरत्कारुरिति ख्यातो वेदवेदाङ्गपारगः ॥ ०१८ ॥

नियतात्मा महात्मा च सुव्रतः सुमहातपाः ॥ ०१८ ॥

तेन स्म तपसो लोभात्कृच्छ्रमापादिता वयम् ।
न तस्य भार्या पुत्रो वा बान्धवो वास्ति कश्चन ॥ ०१९ ॥

तस्माल्लम्बामहे गर्ते नष्टसञ्ज्ञा ह्यनाथवत् ।
स वक्तव्यस्त्वया दृष्ट्वा अस्माकं नाथवत्तया ॥ ०२० ॥

पितरस्तेऽवलम्बन्ते गर्ते दीना अधोमुखाः ।
साधु दारान्कुरुष्वेति प्रजायस्वेति चाभिभो ॥ ०२१ ॥

कुलतन्तुर्हि नः शिष्टस्त्वमेवैकस्तपोधन ॥ ०२१ ॥

यं तु पश्यसि नो ब्रह्मन्वीरणस्तम्बमाश्रितान् ।
एषोऽस्माकं कुलस्तम्ब आसीत्स्वकुलवर्धनः ॥ ०२२ ॥

यानि पश्यसि वै ब्रह्मन्मूलानीहास्य वीरुधः ।
एते नस्तन्तवस्तात कालेन परिभक्षिताः ॥ ०२३ ॥

यत्त्वेतत्पश्यसि ब्रह्मन्मूलमस्यार्धभक्षितम् ।
तत्र लम्बामहे सर्वे सोऽप्येकस्तप आस्थितः ॥ ०२४ ॥

यमाखुं पश्यसि ब्रह्मन्काल एष महाबलः ।
स तं तपोरतं मन्दं शनैः क्षपयते तुदन् ॥ ०२५ ॥

जरत्कारुं तपोलुब्धं मन्दात्मानमचेतसम् ॥ ०२५ ॥

न हि नस्तत्तपस्तस्य तारयिष्यति सत्तम ।
छिन्नमूलान्परिभ्रष्टान्कालोपहतचेतसः ॥ ०२६ ॥

नरकप्रतिष्ठान्पश्यास्मान्यथा दुष्कृतिनस्तथा ॥ ०२६ ॥

अस्मासु पतितेष्वत्र सह पूर्वैः पितामहैः ।
छिन्नः कालेन सोऽप्यत्र गन्ता वै नरकं ततः ॥ ०२७ ॥

तपो वाप्यथवा यज्ञो यच्चान्यत्पावनं महत् ।

तत्सर्वं न समं तात संतत्येति सतां मतम् ॥ ०२८ ॥

स तात दृष्ट्वा ब्रूयास्त्वं जरत्कारुं तपस्विनम् ।
यथादृष्टमिदं चास्मै त्वयाख्येयमशेषतः ॥ ०२९ ॥

यथा दारान्प्रकुर्यात्स पुत्रांश्चोत्पादयेद्यथा ।
तथा ब्रह्मंस्त्वया वाच्यः सोऽस्माकं नाथवत्तया ॥ ०३० ॥

---

# अध्याय ०४२

सूत उवाच ॥

एतच्छ्रुत्वा जरत्कारुर्दुःखशोकपरायणः ।
उवाच स्वान्पितॄन्दुःखाद्बाष्पसंदिग्धया गिरा ॥ ००१ ॥

अहमेव जरत्कारुः किल्बिषी भवतां सुतः ।
तद्दण्डं धारयत मे दुष्कृतेरकृतात्मनः ॥ ००२ ॥

पितर ऊचुः ॥

पुत्र दिष्ट्यासि संप्राप्त इमं देशं यदृच्छया ।
किमर्थं च त्वया ब्रह्मन्न कृतो दारसङ्ग्रहः ॥ ००३ ॥

जरत्कारुरुवाच ॥

ममायं पितरो नित्यं हृद्यर्थः परिवर्तते ।
ऊर्ध्वरेताः शरीरं वै प्रापयेयममुत्र वै ॥ ००४ ॥

एवं दृष्ट्वा तु भवतः शकुन्तानिव लम्बतः ।
मया निवर्तिता बुद्धिर्ब्रह्मचर्यात्पितामहाः ॥ ००५ ॥

करिष्ये वः प्रियं कामं निवेक्ष्ये नात्र संशयः ।
सनाम्नीं यद्यहं कन्यामुपलप्स्ये कदाचन ॥ ००६ ॥

भविष्यति च या काचिद्भैक्षवत्स्वयमुद्यता ।
प्रतिग्रहीता तामस्मि न भरेयं च यामहम् ॥ ००७ ॥

एवंविधमहं कुर्यां निवेशं प्राप्नुयां यदि ।
अन्यथा न करिष्ये तु सत्यमेतत्पितामहाः ॥ ००८ ॥

सूत उवाच ॥

एवमुक्त्वा तु स पितॄंश्चचार पृथिवीं मुनिः ।
न च स्म लभते भार्यां वृद्धोऽयमिति शौनक ॥ ००९ ॥

यदा निर्वेदमापन्नः पितृभिश्चोदितस्तथा ।
तदारण्यं स गत्वोच्चैश्चुक्रोश भृशदुःखितः ॥ ०१० ॥

यानि भूतानि सन्तीह स्थावराणि चराणि च ।
अन्तर्हितानि वा यानि तानि शृण्वन्तु मे वचः ॥ ०११ ॥

उग्रे तपसि वर्तन्तं पितरश्चोदयन्ति माम् ।
निविशस्वेति दुःखार्तास्तेषां प्रियचिकीर्षया ॥ ०१२ ॥

निवेशार्थ्यखिलां भूमिं कन्याभैक्षं चरामि भोः ।
दरिद्रो दुःखशीलश्च पितृभिः संनियोजितः ॥ ०१३ ॥

यस्य कन्यास्ति भूतस्य ये मयेह प्रकीर्तिताः ।
ते मे कन्यां प्रयच्छन्तु चरतः सर्वतोदिशम् ॥ ०१४ ॥

मम कन्या सनाम्नी या भैक्षवच्चोद्यता भवेत् ।
भरेयं चैव यां नाहं तां मे कन्यां प्रयच्छत ॥ ०१५ ॥

ततस्ते पन्नगा ये वै जरत्कारौ समाहिताः ।
तामादाय प्रवृत्तिं ते वासुकेः प्रत्यवेदयन् ॥ ०१६ ॥

तेषां श्रुत्वा स नागेन्द्रः कन्यां तां समलङ्कृताम् ।
प्रगृह्यारण्यमगमत्समीपं तस्य पन्नगः ॥ ०१७ ॥

तत्र तां भैक्षवत्कन्यां प्रादात्तस्मै महात्मने ।
नागेन्द्रो वासुकिर्ब्रह्मन्न स तां प्रत्यगृह्णत ॥ ०१८ ॥

असनामेति वै मत्वा भरणे चाविचारिते ।
मोक्षभावे स्थितश्चापि द्वन्द्वीभूतः परिग्रहे ॥ ०१९ ॥

ततो नाम स कन्यायाः पप्रच्छ भृगुनन्दन ।
वासुके भरणं चास्या न कुर्यामित्युवाच ह ॥ ०२० ॥

---

# अध्याय ०४३

सूत उवाच ॥

वासुकिस्त्वब्रवीद्वाक्यं जरत्कारुमृषिं तदा ।
सनामा तव कन्येयं स्वसा मे तपसान्विता ॥ ००१ ॥

भरिष्यामि च ते भार्यां प्रतीच्छेमां द्विजोत्तम ।
रक्षणं च करिष्येऽस्याः सर्वशक्त्या तपोधन ॥ ००२ ॥

प्रतिश्रुते तु नागेन भरिष्ये भगिनीमिति ।
जरत्कारुस्तदा वेश्म भुजगस्य जगाम ह ॥ ००३ ॥

तत्र मन्त्रविदां श्रेष्ठस्तपोवृद्धो महाव्रतः ।
जग्राह पाणिं धर्मात्मा विधिमन्त्रपुरस्कृतम् ॥ ००४ ॥

ततो वासगृहं शुभ्रं पन्नगेन्द्रस्य संमतम् ।
जगाम भार्यामादाय स्तूयमानो महर्षिभिः ॥ ००५ ॥

शयनं तत्र वै क्लृप्तं स्पर्ध्यास्तरणसंवृतम् ।
तत्र भार्यासहायः स जरत्कारुरुवास ह ॥ ००६ ॥

स तत्र समयं चक्रे भार्यया सह सत्तमः ।
विप्रियं मे न कर्तव्यं न च वाच्यं कदाचन ॥ ००७ ॥

त्यजेयमप्रिये हि त्वां कृते वासं च ते गृहे ।
एतद्गृहाण वचनं मया यत्समुदीरितम् ॥ ००८ ॥

ततः परमसंविग्ना स्वसा नागपतेस्तु सा ।
अतिदुःखान्विता वाचं तमुवाचैवमस्त्विति ॥ ००९ ॥

तथैव सा च भर्तारं दुःखशीलमुपाचरत् ।
उपायैः श्वेतकाकीयैः प्रियकामा यशस्विनी ॥ ०१० ॥

ऋतुकाले ततः स्नाता कदाचिद्वासुकेः स्वसा ।
भर्तारं तं यथान्यायमुपतस्थे महामुनिम् ॥ ०११ ॥

तत्र तस्याः समभवद्गर्भो ज्वलनसंनिभः ।
अतीव तपसा युक्तो वैश्वानरसमद्युतिः ॥ ०१२ ॥

शुक्लपक्षे यथा सोमो व्यवर्धत तथैव सः ॥ ०१२ ॥

ततः कतिपयाहस्य जरत्कारुर्महातपाः ।
उत्सङ्गेऽस्याः शिरः कृत्वा सुष्वाप परिखिन्नवत् ॥ ०१३ ॥

तस्मिंश्च सुप्ते विप्रेन्द्रे सवितास्तमियाद्गिरिम् ।
अह्नः परिक्षये ब्रह्मंस्ततः साचिन्तयत्तदा ॥ ०१४ ॥

वासुकेर्भगिनी भीता धर्मलोपान्मनस्विनी ॥ ०१४ ॥

किं नु मे सुकृतं भूयाद्भर्तुरुत्थापनं न वा ।
दुःखशीलो हि धर्मात्मा कथं नास्यापराध्नुयाम् ॥ ०१५ ॥

कोपो वा धर्मशीलस्य धर्मलोपोऽथ वा पुनः ।
धर्मलोपो गरीयान्वै स्यादत्रेत्यकरोन्मनः ॥ ०१६ ॥

उत्थापयिष्ये यद्येनं ध्रुवं कोपं करिष्यति ।
धर्मलोपो भवेदस्य संध्यातिक्रमणे ध्रुवम् ॥ ०१७ ॥

इति निश्चित्य मनसा जरत्कारुर्भुजङ्गमा ।
तमृषिं दीप्ततपसं शयानमनलोपमम् ॥ ०१८ ॥

उवाचेदं वचः श्लक्ष्णं ततो मधुरभाषिणी ॥ ०१८ ॥

उत्तिष्ठ त्वं महाभाग सूर्योऽस्तमुपगच्छति ।
संध्यामुपास्स्व भगवन्नपः स्पृष्ट्वा यतव्रतः ॥ ०१९ ॥

प्रादुष्कृताग्निहोत्रोऽयं मुहूर्तो रम्यदारुणः ।
संध्या प्रवर्तते चेयं पश्चिमायां दिशि प्रभो ॥ ०२० ॥

एवमुक्तः स भगवाञ्जरत्कारुर्महातपाः ।

भार्यां प्रस्फुरमाणोष्ठ इदं वचनमब्रवीत् ॥ ०२१ ॥

अवमानः प्रयुक्तोऽयं त्वया मम भुजङ्गमे ।
समीपे ते न वत्स्यामि गमिष्यामि यथागतम् ॥ ०२२ ॥

न हि तेजोऽस्ति वामोरु मयि सुप्ते विभावसोः ।
अस्तं गन्तुं यथाकालमिति मे हृदि वर्तते ॥ ०२३ ॥

न चाप्यवमतस्येह वस्तुं रोचेत कस्यचित् ।
किं पुनर्धर्मशीलस्य मम वा मद्विधस्य वा ॥ ०२४ ॥

एवमुक्ता जरत्कारुर्भर्त्रा हृदयकम्पनम् ।
अब्रवीद्भगिनी तत्र वासुकेः संनिवेशने ॥ ०२५ ॥

नावमानात्कृतवती तवाहं प्रतिबोधनम् ।
धर्मलोपो न ते विप्र स्यादित्येतत्कृतं मया ॥ ०२६ ॥

उवाच भार्यामित्युक्तो जरत्कारुर्महातपाः ।
ऋषिः कोपसमाविष्टस्त्यक्तुकामो भुजङ्गमाम् ॥ ०२७ ॥

न मे वागनृतं प्राह गमिष्येऽहं भुजङ्गमे ।
समयो ह्येष मे पूर्वं त्वया सह मिथः कृतः ॥ ०२८ ॥

सुखमस्म्युषितो भद्रे ब्रूयास्त्वं भ्रातरं शुभे ।
इतो मयि गते भीरु गतः स भगवानिति ॥ ०२९ ॥

त्वं चापि मयि निष्क्रान्ते न शोकं कर्तुमर्हसि ॥ ०२९ ॥

इत्युक्ता सानवद्याङ्गी प्रत्युवाच पतिं तदा ।
जरत्कारुं जरत्कारुश्चिन्ताशोकपरायणा ॥ ०३० ॥

बाष्पगद्गदया वाचा मुखेन परिशुष्यता ।
कृताञ्जलिर्वरारोहा पर्यश्रुनयना ततः ॥ ०३१ ॥

धैर्यमालम्ब्य वामोरूर्हृदयेन प्रवेपता ॥ ०३१ ॥

न मामर्हसि धर्मज्ञ परित्यक्तुमनागसम् ।
धर्मे स्थितां स्थितो धर्मे सदा प्रियहिते रताम् ॥ ०३२ ॥

प्रदाने कारणं यच्च मम तुभ्यं द्विजोत्तम ।
तदलब्धवतीं मन्दां किं मां वक्ष्यति वासुकिः ॥ ०३३ ॥

मातृशापाभिभूतानां ज्ञातीनां मम सत्तम ।
अपत्यमीप्सितं त्वत्तस्तच्च तावन्न दृश्यते ॥ ०३४ ॥

त्वत्तो ह्यपत्यलाभेन ज्ञातीनां मे शिवं भवेत् ।
संप्रयोगो भवेन्नायं मम मोघस्त्वया द्विज ॥ ०३५ ॥

ज्ञातीनां हितमिच्छन्ती भगवंस्त्वां प्रसादये ।
इममव्यक्तरूपं मे गर्भमाधाय सत्तम ॥ ०३६ ॥

कथं त्यक्त्वा महात्मा सन्गन्तुमिच्छस्यनागसम् ॥ ०३६ ॥

एवमुक्तस्तु स मुनिर्भार्यां वचनमब्रवीत् ।
यद्युक्तमनुरूपं च जरत्कारुस्तपोधनः ॥ ०३७ ॥

अस्त्येष गर्भः सुभगे तव वैश्वानरोपमः ।
ऋषिः परमधर्मात्मा वेदवेदाङ्गपारगः ॥ ०३८ ॥

एवमुक्त्वा स धर्मात्मा जरत्कारुर्महानृषिः ।
उग्राय तपसे भूयो जगाम कृतनिश्चयः ॥ ०३९ ॥

# अध्याय ०४४

सूत उवाच ॥

गतमात्रं तु भर्तारं जरत्कारुरवेदयत् ।
भ्रातुस्त्वरितमागम्य यथातथ्यं तपोधन ॥ ००१ ॥

ततः स भुजगश्रेष्ठः श्रुत्वा सुमहदप्रियम् ।
उवाच भगिनीं दीनां तदा दीनतरः स्वयम् ॥ ००२ ॥

जानासि भद्रे यत्कार्यं प्रदाने कारणं च यत् ।
पन्नगानां हितार्थाय पुत्रस्ते स्यात्ततो यदि ॥ ००३ ॥

स सर्पसत्रात्किल नो मोक्षयिष्यति वीर्यवान् ।
एवं पितामहः पूर्वमुक्तवान्मां सुरैः सह ॥ ००४ ॥

अप्यस्ति गर्भः सुभगे तस्मात्ते मुनिसत्तमात् ।
न चेच्छाम्यफलं तस्य दारकर्म मनीषिणः ॥ ००५ ॥

कामं च मम न न्याय्यं प्रष्टुं त्वां कार्यमीदृशम् ।
किं तु कार्यगरीयस्त्वात्ततस्त्वाहमचूचुदम् ॥ ००६ ॥

दुर्वासतां विदित्वा च भर्तुस्तेऽतितपस्विनः ।
नैनमन्वागमिष्यामि कदाचिद्धि शपेत्स माम् ॥ ००७ ॥

आचक्ष्व भद्रे भर्तुस्त्वं सर्वमेव विचेष्टितम् ।
शल्यमुद्धर मे घोरं भद्रे हृदि चिरस्थितम् ॥ ००८ ॥

जरत्कारुस्ततो वाक्यमित्युक्ता प्रत्यभाषत ।
आश्वासयन्ती संतप्तं वासुकिं पन्नगेश्वरम् ॥ ००९ ॥

पृष्टो मयापत्यहेतोः स महात्मा महातपाः ।
अस्तीत्युदरमुद्दिश्य ममेदं गतवांश्च सः ॥ ०१० ॥

स्वैरेष्वपि न तेनाहं स्मरामि वितथं क्वचित् ।
उक्तपूर्वं कुतो राजन्सांपराये स वक्ष्यति ॥ ०११ ॥

न संतापस्त्वया कार्यः कार्यं प्रति भुजङ्गमे ।
उत्पत्स्यति हि ते पुत्रो ज्वलनार्कसमद्युतिः ॥ ०१२ ॥

इत्युक्त्वा हि स मां भ्रातर्गतो भर्ता तपोवनम् ।
तस्माद्व्येतु परं दुःखं तवेदं मनसि स्थितम् ॥ ०१३ ॥

एतच्छ्रुत्वा स नागेन्द्रो वासुकिः परया मुदा ।
एवमस्त्विति तद्वाक्यं भगिन्याः प्रत्यगृह्णत ॥ ०१४ ॥

सान्त्वमानार्थदानैश्च पूजया चानुरूपया ।
सोदर्यां पूजयामास स्वसारं पन्नगोत्तमः ॥ ०१५ ॥

ततः स ववृधे गर्भो महातेजा रविप्रभः ।
यथा सोमो द्विजश्रेष्ठ शुक्लपक्षोदितो दिवि ॥ ०१६ ॥

यथाकालं तु सा ब्रह्मन्प्रजज्ञे भुजगस्वसा ।
कुमारं देवगर्भाभं पितृमातृभयापहम् ॥ ०१७ ॥

ववृधे स च तत्रैव नागराजनिवेशने ।
वेदांश्चाधिजगे साङ्गान्भार्गवाच्च्यवनात्मजात् ॥ ०१८ ॥

चरितव्रतो बाल एव बुद्धिसत्त्वगुणान्वितः ।

नाम चास्याभवत्ख्यातं लोकेष्वास्तीक इत्युत ॥ ०१९ ॥

अस्तीत्युक्त्वा गतो यस्मात्पिता गर्भस्थमेव तम् ।
वनं तस्मादिदं तस्य नामास्तीकेति विश्रुतम् ॥ ०२० ॥

स बाल एव तत्रस्थश्चरन्नमितबुद्धिमान् ।
गृहे पन्नगराजस्य प्रयत्नात्पर्यरक्ष्यत ॥ ०२१ ॥

भगवानिव देवेशः शूलपाणिर्हिरण्यदः ।
विवर्धमानः सर्वांस्तान्पन्नगानभ्यहर्षयत् ॥ ०२२ ॥

---

# अध्याय ०४५

शौनक उवाच ॥

यदपृच्छत्तदा राजा मन्त्रिणो जनमेजयः ।
पितुः स्वर्गगतिं तन्मे विस्तरेण पुनर्वद ॥ ००१ ॥

सूत उवाच ॥

शृणु ब्रह्मन्यथा पृष्टा मन्त्रिणो नृपतेस्तदा ।
आख्यातवन्तस्ते सर्वे निधनं तत्परिक्षितः ॥ ००२ ॥

जनमेजय उवाच ॥

जानन्ति तु भवन्तस्तद्यथावृत्तः पिता मम ।
आसीद्यथा च निधनं गतः काले महायशाः ॥ ००३ ॥

श्रुत्वा भवत्सकाशाद्धि पितुर्वृत्तमशेषतः ।
कल्याणं प्रतिपत्स्यामि विपरीतं न जातु चित् ॥ ००४ ॥

सूत उवाच ॥

मन्त्रिणोऽथाब्रुवन्वाक्यं पृष्टास्तेन महात्मना ।
सर्वधर्मविदः प्राज्ञा राजानं जनमेजयम् ॥ ००५ ॥

धर्मात्मा च महात्मा च प्रजापालः पिता तव ।
आसीदिह यथावृत्तः स महात्मा शृणुष्व तत् ॥ ००६ ॥

चातुर्वर्ण्यं स्वधर्मस्थं स कृत्वा पर्यरक्षत ।
धर्मतो धर्मविद्राजा धर्मो विग्रहवानिव ॥ ००७ ॥

ररक्ष पृथिवीं देवीं श्रीमानतुलविक्रमः ।
द्वेष्टारस्तस्य नैवासन्स च न द्वेष्टि कञ्चन ॥ ००८ ॥

समः सर्वेषु भूतेषु प्रजापतिरिवाभवत् ॥ ००८ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव स्वकर्मसु ।
स्थिताः सुमनसो राजंस्तेन राज्ञा स्वनुष्ठिताः ॥ ००९ ॥

विधवानाथकृपणान्विकलांश्च बभार सः ।
सुदर्शः सर्वभूतानामासीत्सोम इवापरः ॥ ०१० ॥

तुष्टपुष्टजनः श्रीमान्सत्यवाग्दृढविक्रमः ।
धनुर्वेदे च शिष्योऽभून्नृपः शारद्वतस्य सः ॥ ०११ ॥

गोविन्दस्य प्रियश्चासीत्पिता ते जनमेजय ।
लोकस्य चैव सर्वस्य प्रिय आसीन्महायशाः ॥ ०१२ ॥

परिक्षीणेषु कुरुषु उत्तरायामजायत ।
परिक्षिदभवत्तेन सौभद्रस्यात्मजो बली ॥ ०१३ ॥

राजधर्मार्थकुशलो युक्तः सर्वगुणैर्नृपः ।
जितेन्द्रियश्चात्मवांश्च मेधावी वृद्धसेवितः ॥ ०१४ ॥

षड्वर्गविन्महाबुद्धिर्नीतिधर्मविदुत्तमः ।
प्रजा इमास्तव पिता षष्टिं वर्षाण्यपालयत् ॥ ०१५ ॥

ततो दिष्टान्तमापन्नः सर्पेणानतिवर्तितम् ॥ ०१५ ॥

ततस्त्वं पुरुषश्रेष्ठ धर्मेण प्रतिपेदिवान् ।
इदं वर्षसहस्राय राज्यं कुरुकुलागतम् ॥ ०१६ ॥

बाल एवाभिजातोऽसि सर्वभूतानुपालकः ॥ ०१६ ॥

जनमेजय उवाच ॥

नास्मिन्कुले जातु बभूव राजा ; यो न प्रजानां हितकृत्प्रियश्च ।
विशेषतः प्रेक्ष्य पितामहानां ; वृत्तं महद्वृत्तपरायणानाम् ॥ ०१७ ॥

कथं निधनमापन्नः पिता मम तथाविधः ।
आचक्षध्वं यथावन्मे श्रोतुमिच्छामि तत्त्वतः ॥ ०१८ ॥

सूत उवाच ॥

एवं सञ्चोदिता राज्ञा मन्त्रिणस्ते नराधिपम् ।
ऊचुः सर्वे यथावृत्तं राज्ञः प्रियहिते रताः ॥ ०१९ ॥

बभूव मृगयाशीलस्तव राजन्पिता सदा ।
यथा पाण्डुर्महाभागो धनुर्धरवरो युधि ॥ ०२० ॥

अस्मास्वासज्य सर्वाणि राजकार्याण्यशेषतः ॥ ०२० ॥

स कदाचिद्वनचरो मृगं विव्याध पत्रिणा ।
विद्ध्वा चान्वसरत्तूर्णं तं मृगं गहने वने ॥ ०२१ ॥

पदातिर्बद्धनिस्त्रिंशस्ततायुधकलापवान् ।
न चाससाद गहने मृगं नष्टं पिता तव ॥ ०२२ ॥

परिश्रान्तो वयःस्थश्च षष्टिवर्षो जरान्वितः ।
क्षुधितः स महारण्ये ददर्श मुनिमन्तिके ॥ ०२३ ॥

स तं पप्रच्छ राजेन्द्रो मुनिं मौनव्रतान्वितम् ।
न च किञ्चिदुवाचैनं स मुनिः पृच्छतोऽपि सन् ॥ ०२४ ॥

ततो राजा क्षुच्छ्रमार्तस्तं मुनिं स्थाणुवत्स्थितम् ।
मौनव्रतधरं शान्तं सद्यो मन्युवशं ययौ ॥ ०२५ ॥

न बुबोध हि तं राजा मौनव्रतधरं मुनिम् ।
स तं मन्युसमाविष्टो धर्षयामास ते पिता ॥ ०२६ ॥

मृतं सर्पं धनुष्कोट्या समुत्क्षिप्य धरातलात् ।
तस्य शुद्धात्मनः प्रादात्स्कन्धे भरतसत्तम ॥ ०२७ ॥

न चोवाच स मेधावी तमथो साध्वसाधु वा ।
तस्थौ तथैव चाक्रुध्यन्सर्पं स्कन्धेन धारयन् ॥ ०२८ ॥

# अध्याय ०४६

मन्त्रिण ऊचुः ॥

ततः स राजा राजेन्द्र स्कन्धे तस्य भुजङ्गमम् ।
मुनेः क्षुत्क्षाम आसज्य स्वपुरं पुनराययौ ॥ ००१ ॥

ऋषेस्तस्य तु पुत्रोऽभूद्गवि जातो महायशाः ।
शृङ्गी नाम महातेजास्तिग्मवीर्योऽतिकोपनः ॥ ००२ ॥

ब्रह्माणं सोऽभ्युपागम्य मुनिः पूजां चकार ह ।
अनुज्ञातो गतस्तत्र शृङ्गी शुश्राव तं तदा ॥ ००३ ॥

सख्युः सकाशात्पितरं पित्रा ते धर्षितं तथा ॥ ००३ ॥

मृतं सर्पं समासक्तं पित्रा ते जनमेजय ।
वहन्तं कुरुशार्दूल स्कन्धेनानपकारिणम् ॥ ००४ ॥

तपस्विनमतीवाथ तं मुनिप्रवरं नृप ।
जितेन्द्रियं विशुद्धं च स्थितं कर्मण्यथाद्भुते ॥ ००५ ॥

तपसा द्योतितात्मानं स्वेष्वङ्गेषु यतं तथा ।
शुभाचारं शुभकथं सुस्थिरं तमलोलुपम् ॥ ००६ ॥

अक्षुद्रमनसूयं च वृद्धं मौनव्रते स्थितम् ।
शरण्यं सर्वभूतानां पित्रा विप्रकृतं तव ॥ ००७ ॥

शशापाथ स तच्छ्रुत्वा पितरं ते रुषान्वितः ।
ऋषेः पुत्रो महातेजा बालोऽपि स्थविरैर्वरः ॥ ००८ ॥

स क्षिप्रमुदकं स्पृष्ट्वा रोषादिदमुवाच ह ।

पितरं तेऽभिसंधाय तेजसा प्रज्वलन्निव ॥ ००९ ॥

अनागसि गुरौ यो मे मृतं सर्पमवासृजत् ।
तं नागस्तक्षकः क्रुद्धस्तेजसा सादयिष्यति ॥ ०१० ॥

सप्तरात्रादितः पापं पश्य मे तपसो बलम् ॥ ०१० ॥

इत्युक्त्वा प्रययौ तत्र पिता यत्रास्य सोऽभवत् ।
दृष्ट्वा च पितरं तस्मै शापं तं प्रत्यवेदयत् ॥ ०११ ॥

स चापि मुनिशार्दूलः प्रेषयामास ते पितुः ।
शप्तोऽसि मम पुत्रेण यत्तो भव महीपते ॥ ०१२ ॥

तक्षकस्त्वां महाराज तेजसा सादयिष्यति ॥ ०१२ ॥

श्रुत्वा तु तद्वचो घोरं पिता ते जनमेजय ।
यत्तोऽभवत्परित्रस्तस्तक्षकात्पन्नगोत्तमात् ॥ ०१३ ॥

ततस्तस्मिंस्तु दिवसे सप्तमे समुपस्थिते ।
राज्ञः समीपं ब्रह्मर्षिः काश्यपो गन्तुमैच्छत ॥ ०१४ ॥

तं ददर्शाथ नागेन्द्रः काश्यपं तक्षकस्तदा ।
तमब्रवीत्पन्नगेन्द्रः काश्यपं त्वरितं व्रजन् ॥ ०१५ ॥

क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति ॥ ०१५ ॥

काश्यप उवाच ॥

यत्र राजा कुरुश्रेष्ठः परिक्षिन्नाम वै द्विज ।
तक्षकेण भुजङ्गेन धक्ष्यते किल तत्र वै ॥ ०१६ ॥

गच्छाम्यहं तं त्वरितः सद्यः कर्तुमपज्वरम् ।
मयाभिपन्नं तं चापि न सर्पो धर्षयिष्यति ॥ ०१७ ॥

तक्षक उवाच ॥

किमर्थं तं मया दष्टं सञ्जीवयितुमिच्छसि ।
ब्रूहि काममहं तेऽद्य दद्मि स्वं वेश्म गम्यताम् ॥ ०१८ ॥

मन्त्रिण ऊचुः ॥

धनलिप्सुरहं तत्र यामीत्युक्तश्च तेन सः ।
तमुवाच महात्मानं मानयञ्श्लक्ष्णया गिरा ॥ ०१९ ॥

यावद्धनं प्रार्थयसे तस्माद्राज्ञस्ततोऽधिकम् ।
गृहाण मत्त एव त्वं संनिवर्तस्व चानघ ॥ ०२० ॥

स एवमुक्तो नागेन काश्यपो द्विपदां वरः ।
लब्ध्वा वित्तं निववृते तक्षकाद्यावदीप्सितम् ॥ ०२१ ॥

तस्मिन्प्रतिगते विप्रे छद्मनोपेत्य तक्षकः ।
तं नृपं नृपतिश्रेष्ठ पितरं धार्मिकं तव ॥ ०२२ ॥

प्रासादस्थं यत्तमपि दग्धवान्विषवह्निना ।
ततस्त्वं पुरुषव्याघ्र विजयायाभिषेचितः ॥ ०२३ ॥

एतद्दृष्टं श्रुतं चापि यथावन्नृपसत्तम ।
अस्माभिर्निखिलं सर्वं कथितं ते सुदारुणम् ॥ ०२४ ॥

श्रुत्वा चैतं नृपश्रेष्ठ पार्थिवस्य पराभवम् ।
अस्य चर्षेरुत्तङ्कस्य विधत्स्व यदनन्तरम् ॥ ०२५ ॥

जनमेजय उवाच ॥

एतत्तु श्रोतुमिच्छामि अटव्यां निर्जने वने ।
संवादं पन्नगेन्द्रस्य काश्यपस्य च यत्तदा ॥ ०२६ ॥

केन दृष्टं श्रुतं चापि भवतां श्रोत्रमागतम् ।
श्रुत्वा चाथ विधास्यामि पन्नगान्तकरीं मतिम् ॥ ०२७ ॥

मन्त्रिण ऊचुः ॥

शृणु राजन्यथास्माकं येनैतत्कथितं पुरा ।
समागमं द्विजेन्द्रस्य पन्नगेन्द्रस्य चाध्वनि ॥ ०२८ ॥

तस्मिन्वृक्षे नरः कश्चिदिन्धनार्थाय पार्थिव ।
विचिन्वन्पूर्वमारूढः शुष्कशाखं वनस्पतिम् ॥ ०२९ ॥

अबुध्यमानौ तं तत्र वृक्षस्थं पन्नगद्विजौ ॥ ०२९ ॥

स तु तेनैव वृक्षेण भस्मीभूतोऽभवत्तदा ।
द्विजप्रभावाद्राजेन्द्र जीवितः सवनस्पतिः ॥ ०३० ॥

तेन गत्वा नृपश्रेष्ठ नगरेऽस्मिन्निवेदितम् ।
यथावृत्तं तु तत्सर्वं तक्षकस्य द्विजस्य च ॥ ०३१ ॥

एतत्ते कथितं राजन्यथावृत्तं यथाश्रुतम् ।
श्रुत्वा तु नृपशार्दूल प्रकुरुष्व यथेप्सितम् ॥ ०३२ ॥

सूत उवाच ॥

मन्त्रिणां तु वचः श्रुत्वा स राजा जनमेजयः ।
पर्यतप्यत दुःखार्तः प्रत्यपिंषत्करे करम् ॥ ०३३ ॥

निःश्वासमुष्णमसकृद्दीर्घं राजीवलोचनः ।
मुमोचाश्रूणि च तदा नेत्राभ्यां प्रततं नृपः ॥ ०३४ ॥

उवाच च महीपालो दुःखशोकसमन्वितः ॥ ०३४ ॥

श्रुत्वैतद्भवतां वाक्यं पितुर्मे स्वर्गतिं प्रति ।
निश्चितेयं मम मतिर्या वै तां मे निबोधत ॥ ०३५ ॥

अनन्तरमहं मन्ये तक्षकाय दुरात्मने ।
प्रतिकर्तव्यमित्येव येन मे हिंसितः पिता ॥ ०३६ ॥

ऋषेर्हि शृङ्गेर्वचनं कृत्वा दग्ध्वा च पार्थिवम् ।
यदि गच्छेदसौ पापो ननु जीवेत्पिता मम ॥ ०३७ ॥

परिहीयेत किं तस्य यदि जीवेत्स पार्थिवः ।
काश्यपस्य प्रसादेन मन्त्रिणां सुनयेन च ॥ ०३८ ॥

स तु वारितवान्मोहात्काश्यपं द्विजसत्तमम् ।
सञ्जिजीवयिषुं प्राप्तं राजानमपराजितम् ॥ ०३९ ॥

महानतिक्रमो ह्येष तक्षकस्य दुरात्मनः ।
द्विजस्य योऽददद्द्रव्यं मा नृपं जीवयेदिति ॥ ०४० ॥

उत्तङ्कस्य प्रियं कुर्वन्नात्मनश्च महत्प्रियम् ।
भवतां चैव सर्वेषां यास्याम्यपचितिं पितुः ॥ ०४१ ॥

# अध्याय ०४७

सूत उवाच ॥

एवमुक्त्वा ततः श्रीमान्मन्त्रिभिश्चानुमोदितः ।
आरुरोह प्रतिज्ञां स सर्पसत्राय पार्थिवः ॥ ००१ ॥

ब्रह्मन्भरतशार्दूलो राजा पारिक्षितस्तदा ॥ ००१ ॥

पुरोहितमथाहूय ऋत्विजं वसुधाधिपः ।
अब्रवीद्वाक्यसंपन्नः संपदर्थकरं वचः ॥ ००२ ॥

यो मे हिंसितवांस्तातं तक्षकः स दुरात्मवान् ।
प्रतिकुर्यां यथा तस्य तद्भवन्तो ब्रुवन्तु मे ॥ ००३ ॥

अपि तत्कर्म विदितं भवतां येन पन्नगम् ।
तक्षकं संप्रदीप्तेऽग्नौ प्राप्स्येऽहं सहबान्धवम् ॥ ००४ ॥

यथा तेन पिता मह्यं पूर्वं दग्धो विषाग्निना ।
तथाहमपि तं पापं दग्धुमिच्छामि पन्नगम् ॥ ००५ ॥

ऋत्विज ऊचुः ॥

अस्ति राजन्महत्सत्रं त्वदर्थं देवनिर्मितम् ।
सर्पसत्रमिति ख्यातं पुराणे कथ्यते नृप ॥ ००६ ॥

आहर्ता तस्य सत्रस्य त्वन्नान्योऽस्ति नराधिप ।
इति पौराणिकाः प्राहुरस्माकं चास्ति स क्रतुः ॥ ००७ ॥

सूत उवाच ॥

एवमुक्तः स राजर्षिर्मेने सर्पं हि तक्षकम् ।
हुताशनमुखं दीप्तं प्रविष्टमिति सत्तम ॥ ००८ ॥

ततोऽब्रवीन्मन्त्रविदस्तान्राजा ब्राह्मणांस्तदा ।
आहरिष्यामि तत्सत्रं संभाराः संभ्रियन्तु मे ॥ ००९ ॥

ततस्ते ऋत्विजस्तस्य शास्त्रतो द्विजसत्तम ।
देशं तं मापयामासुर्यज्ञायतनकारणात् ॥ ०१० ॥

यथावज्ज्ञानविदुषः सर्वे बुद्ध्या परं गताः ॥ ०१० ॥

ऋद्ध्या परमया युक्तमिष्टं द्विजगणायुतम् ।
प्रभूतधनधान्याढ्यमृत्विग्भिः सुनिवेशितम् ॥ ०११ ॥

निर्माय चापि विधिवद्यज्ञायतनमीप्सितम् ।
राजानं दीक्षयामासुः सर्पसत्राप्तये तदा ॥ ०१२ ॥

इदं चासीत्तत्र पूर्वं सर्पसत्रे भविष्यति ।
निमित्तं महदुत्पन्नं यज्ञविघ्नकरं तदा ॥ ०१३ ॥

यज्ञस्यायतने तस्मिन्क्रियमाणे वचोऽब्रवीत् ।
स्थपतिर्बुद्धिसंपन्नो वास्तुविद्याविशारदः ॥ ०१४ ॥

इत्यब्रवीत्सूत्रधारः सूतः पौराणिकस्तदा ।
यस्मिन्देशे च काले च मापनेयं प्रवर्तिता ॥ ०१५ ॥

ब्राह्मणं कारणं कृत्वा नायं संस्थास्यते क्रतुः ॥ ०१५ ॥

एतच्छ्रुत्वा तु राजा स प्राग्दीक्षाकालमब्रवीत् ।
क्षत्तारं नेह मे कश्चिदज्ञातः प्रविशेदिति ॥ ०१६ ॥

ततः कर्म प्रववृते सर्पसत्रे विधानतः ।
पर्यक्रामंश्च विधिवत्स्वे स्वे कर्मणि याजकाः ॥ ०१७ ॥

परिधाय कृष्णवासांसि धूमसंरक्तलोचनाः ।
जुहुवुर्मन्त्रवच्चैव समिद्धं जातवेदसम् ॥ ०१८ ॥

कम्पयन्तश्च सर्वेषामुरगाणां मनांसि ते ।
सर्पानाजुहुवुस्तत्र सर्वानग्निमुखे तदा ॥ ०१९ ॥

ततः सर्पाः समापेतुः प्रदीप्ते हव्यवाहने ।
विवेष्टमानाः कृपणा आह्वयन्तः परस्परम् ॥ ०२० ॥

विस्फुरन्तः श्वसन्तश्च वेष्टयन्तस्तथा परे ।
पुच्छैः शिरोभिश्च भृशं चित्रभानुं प्रपेदिरे ॥ ०२१ ॥

श्वेताः कृष्णाश्च नीलाश्च स्थविराः शिशवस्तथा ।
रुवन्तो भैरवान्नादान्पेतुर्दीप्ते विभावसौ ॥ ०२२ ॥

एवं शतसहस्राणि प्रयुतान्यर्बुदानि च ।
अवशानि विनष्टानि पन्नगानां द्विजोत्तम ॥ ०२३ ॥

इन्दुरा इव तत्रान्ये हस्तिहस्ता इवापरे ।
मत्ता इव च मातङ्गा महाकाया महाबलाः ॥ ०२४ ॥

उच्चावचाश्च बहवो नानावर्णा विषोल्बणाः ।
घोराश्च परिघप्रख्या दन्दशूका महाबलाः ॥ ०२५ ॥

प्रपेतुरग्नावुरगा मातृवाग्दण्डपीडिताः ॥ ०२५ ॥

# अध्याय ०४८

शौनक उवाच ॥

सर्पसत्रे तदा राज्ञः पाण्डवेयस्य धीमतः ।
जनमेजयस्य के त्वासन्नृत्विजः परमर्षयः ॥ ००१ ॥

के सदस्या बभूवुश्च सर्पसत्रे सुदारुणे ।
विषादजननेऽत्यर्थं पन्नगानां महाभये ॥ ००२ ॥

सर्वं विस्तरतस्तात भवाञ्शंसितुमर्हति ।
सर्पसत्रविधानज्ञा विज्ञेयास्ते हि सूतज ॥ ००३ ॥

सूत उवाच ॥

हन्त ते कथयिष्यामि नामानीह मनीषिणाम् ।
ये ऋत्विजः सदस्याश्च तस्यासन्नृपतेस्तदा ॥ ००४ ॥

तत्र होता बभूवाथ ब्राह्मणश्चण्डभार्गवः ।
च्यवनस्यान्वये जातः ख्यातो वेदविदां वरः ॥ ००५ ॥

उद्गाता ब्राह्मणो वृद्धो विद्वान्कौत्सार्यजैमिनिः ।
ब्रह्माभवच्छार्ङ्गरवो अध्वर्युर्बोधपिङ्गलः ॥ ००६ ॥

सदस्यश्चाभवद्व्यासः पुत्रशिष्यसहायवान् ।
उद्दालकः शमठकः श्वेतकेतुश्च पञ्चमः ॥ ००७ ॥

असितो देवलश्चैव नारदः पर्वतस्तथा ।
आत्रेयः कुण्डजठरो द्विजः कुटिघटस्तथा ॥ ००८ ॥

वात्स्यः श्रुतश्रवा वृद्धस्तपःस्वाध्यायशीलवान् ।

कहोडो देवशर्मा च मौद्गल्यः शमसौभरः ॥ ००९ ॥

एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः ।
सदस्या अभवंस्तत्र सत्रे पारिक्षितस्य ह ॥ ०१० ॥

जुह्वत्स्वृत्विक्ष्वथ तदा सर्पसत्रे महाक्रतौ ।
अहयः प्रापतंस्तत्र घोराः प्राणिभयावहाः ॥ ०११ ॥

वसामेदोवहाः कुल्या नागानां संप्रवर्तिताः ।
ववौ गन्धश्च तुमुलो दह्यतामनिशं तदा ॥ ०१२ ॥

पततां चैव नागानां धिष्ठितानां तथाम्बरे ।
अश्रूयतानिशं शब्दः पच्यतां चाग्निना भृशम् ॥ ०१३ ॥

तक्षकस्तु स नागेन्द्रः पुरंदरनिवेशनम् ।
गतः श्रुत्वैव राजानं दीक्षितं जनमेजयम् ॥ ०१४ ॥

ततः सर्वं यथावृत्तमाख्याय भुजगोत्तमः ।
अगच्छच्छरणं भीत आगस्कृत्वा पुरंदरम् ॥ ०१५ ॥

तमिन्द्रः प्राह सुप्रीतो न तवास्तीह तक्षक ।
भयं नागेन्द्र तस्माद्वै सर्पसत्रात्कथञ्चन ॥ ०१६ ॥

प्रसादितो मया पूर्वं तवार्थाय पितामहः ।
तस्मात्तव भयं नास्ति व्येतु ते मानसो ज्वरः ॥ ०१७ ॥

एवमाश्वासितस्तेन ततः स भुजगोत्तमः ।
उवास भवने तत्र शक्रस्य मुदितः सुखी ॥ ०१८ ॥

अजस्रं निपतत्स्वग्नौ नागेषु भृशदुःखितः ।
अल्पशेषपरीवारो वासुकिः पर्यतप्यत ॥ ०१९ ॥

कश्मलं चाविशद्घोरं वासुकिं पन्नगेश्वरम् ।
स घूर्णमानहृदयो भगिनीमिदमब्रवीत् ॥ ०२० ॥

दह्यन्तेऽङ्गानि मे भद्रे दिशो न प्रतिभान्ति च ।
सीदामीव च संमोहाद्घूर्णतीव च मे मनः ॥ ०२१ ॥

दृष्टिर्भ्रमति मेऽतीव हृदयं दीर्यतीव च ।
पतिष्याम्यवशोऽद्याहं तस्मिन्दीप्ते विभावसौ ॥ ०२२ ॥

पारिक्षितस्य यज्ञोऽसौ वर्ततेऽस्मज्जिघांसया ।
व्यक्तं मयापि गन्तव्यं पितृराजनिवेशनम् ॥ ०२३ ॥

अयं स कालः संप्राप्तो यदर्थमसि मे स्वसः ।
जरत्कारोः पुरा दत्ता सा त्राह्यस्मान्सबान्धवान् ॥ ०२४ ॥

आस्तीकः किल यज्ञं तं वर्तन्तं भुजगोत्तमे ।
प्रतिषेत्स्यति मां पूर्वं स्वयमाह पितामहः ॥ ०२५ ॥

तद्वत्से ब्रूहि वत्सं स्वं कुमारं वृद्धसंमतम् ।
ममाद्य त्वं सभृत्यस्य मोक्षार्थं वेदवित्तमम् ॥ ०२६ ॥

---

# अध्याय ०४९

सूत उवाच ॥

तत आहूय पुत्रं स्वं जरत्कारुर्भुजङ्गमा ।

वासुकेर्नागराजस्य वचनादिदमब्रवीत् ॥ ००१ ॥

अहं तव पितुः पुत्र भ्रात्रा दत्ता निमित्ततः ।
कालः स चायं संप्राप्तस्तत्कुरुष्व यथातथम् ॥ ००२ ॥

आस्तीक उवाच ॥

किंनिमित्तं मम पितुर्दत्ता त्वं मातुलेन मे ।
तन्ममाचक्ष्व तत्त्वेन श्रुत्वा कर्तास्मि तत्तथा ॥ ००३ ॥

सूत उवाच ॥

तत आचष्ट सा तस्मै बान्धवानां हितैषिणी ।
भगिनी नागराजस्य जरत्कारुरविक्लवा ॥ ००४ ॥

भुजगानामशेषाणां माता कद्रूरिति श्रुतिः ।
तया शप्ता रुषितया सुता यस्मान्निबोध तत् ॥ ००५ ॥

उच्चैःश्रवाः सोऽश्वराजो यन्मिथ्या न कृतो मम ।
विनतानिमित्तं पणिते दासभावाय पुत्रकाः ॥ ००६ ॥

जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ।
तत्र पञ्चत्वमापन्नाः प्रेतलोकं गमिष्यथ ॥ ००७ ॥

तां च शप्तवतीमेवं साक्षाल्लोकपितामहः ।
एवमस्त्विति तद्वाक्यं प्रोवाचानुमुमोद च ॥ ००८ ॥

वासुकिश्चापि तच्छ्रुत्वा पितामहवचस्तदा ।
अमृते मथिते तात देवाञ्शरणमीयिवान् ॥ ००९ ॥

सिद्धार्थाश्च सुराः सर्वे प्राप्यामृतमनुत्तमम् ।

भ्रातरं मे पुरस्कृत्य प्रजापतिमुपागमन् ॥ ०१० ॥

ते तं प्रसादयामासुर्देवाः सर्वे पितामहम् ।
राज्ञा वासुकिना सार्धं स शापो न भवेदिति ॥ ०११ ॥

वासुकिर्नागराजोऽयं दुःखितो ज्ञातिकारणात् ।
अभिशापः स मात्रास्य भगवन्न भवेदिति ॥ ०१२ ॥

ब्रह्मोवाच ॥

जरत्कारुर्जरत्कारुं यां भार्यां समवाप्स्यति ।
तत्र जातो द्विजः शापाद्भुजगान्मोक्षयिष्यति ॥ ०१३ ॥

जरत्कारुरुवाच ॥

एतच्छ्रुत्वा तु वचनं वासुकिः पन्नगेश्वरः ।
प्रादान्माममरप्रख्य तव पित्रे महात्मने ॥ ०१४ ॥

प्रागेवानागते काले तत्र त्वं मय्यजायथाः ॥ ०१४ ॥

अयं स कालः संप्राप्तो भयान्नस्त्रातुमर्हसि ।
भ्रातरं चैव मे तस्मात्त्रातुमर्हसि पावकात् ॥ ०१५ ॥

अमोघं नः कृतं तत्स्याद्यदहं तव धीमते ।
पित्रे दत्ता विमोक्षार्थं कथं वा पुत्र मन्यसे ॥ ०१६ ॥

सूत उवाच ॥

एवमुक्तस्तथेत्युक्त्वा सोऽस्तीको मातरं तदा ।
अब्रवीद्दुःखसंतप्तं वासुकिं जीवयन्निव ॥ ०१७ ॥

अहं त्वां मोक्षयिष्यामि वासुके पन्नगोत्तम ।
तस्माच्छापान्महासत्त्व सत्यमेतद्ब्रवीमि ते ॥ ०१८ ॥

भव स्वस्थमना नाग न हि ते विद्यते भयम् ।
प्रयतिष्ये तथा सौम्य यथा श्रेयो भविष्यति ॥ ०१९ ॥

न मे वागनृतं प्राह स्वैरेष्वपि कुतोऽन्यथा ॥ ०१९ ॥

तं वै नृपवरं गत्वा दीक्षितं जनमेजयम् ।
वाग्भिर्मङ्गलयुक्ताभिस्तोषयिष्येऽद्य मातुल ॥ ०२० ॥

यथा स यज्ञो नृपतेर्निर्वर्तिष्यति सत्तम ॥ ०२० ॥

स संभावय नागेन्द्र मयि सर्वं महामते ।
न ते मयि मनो जातु मिथ्या भवितुमर्हति ॥ ०२१ ॥

वासुकिरुवाच ॥

आस्तीक परिघूर्णामि हृदयं मे विदीर्यते ।
दिशश्च न प्रजानामि ब्रह्मदण्डनिपीडितः ॥ ०२२ ॥

आस्तीक उवाच ॥

न संतापस्त्वया कार्यः कथञ्चित्पन्नगोत्तम ।
दीप्तादग्नेः समुत्पन्नं नाशयिष्यामि ते भयम् ॥ ०२३ ॥

ब्रह्मदण्डं महाघोरं कालाग्निसमतेजसम् ।
नाशयिष्यामि मात्र त्वं भयं कार्षीः कथञ्चन ॥ ०२४ ॥

सूत उवाच ॥

ततः स वासुकेर्घोरमपनीय मनोज्वरम् ।
आधाय चात्मनोऽङ्गेषु जगाम त्वरितो भृशम् ॥ ०२५ ॥

जनमेजयस्य तं यज्ञं सर्वैः समुदितं गुणैः ।
मोक्षाय भुजगेन्द्राणामास्तीको द्विजसत्तमः ॥ ०२६ ॥

स गत्वापश्यदास्तीको यज्ञायतनमुत्तमम् ।
वृतं सदस्यैर्बहुभिः सूर्यवह्निसमप्रभैः ॥ ०२७ ॥

स तत्र वारितो द्वाःस्थैः प्रविशन्द्विजसत्तमः ।
अभितुष्टाव तं यज्ञं प्रवेशार्थी द्विजोत्तमः ॥ ०२८ ॥

---

# अध्याय ०५०

आस्तीक उवाच ॥

सोमस्य यज्ञो वरुणस्य यज्ञः ; प्रजापतेर्यज्ञ आसीत्प्रयागे ।
तथा यज्ञोऽयं तव भारताग्र्य ; पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ००१ ॥

शक्रस्य यज्ञः शतसंख्य उक्त ;स्तथापरस्तुल्यसंख्यः शतं वै ।
तथा यज्ञोऽयं तव भारताग्र्य ; पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ००२ ॥

यमस्य यज्ञो हरिमेधसश्च ; यथा यज्ञो रन्तिदेवस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य ; पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ००३ ॥

गयस्य यज्ञः शशबिन्दोश्च राज्ञो ; यज्ञस्तथा वैश्रवणस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य ; पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ००४ ॥

नृगस्य यज्ञस्त्वजमीढस्य चासी ;द्यथा यज्ञो दाशरथेश्च राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य ; पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ००५ ॥

यज्ञः श्रुतो नो दिवि देवसूनो ;र्युधिष्ठिरस्याजमीढस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य ; पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ००६ ॥

कृष्णस्य यज्ञः सत्यवत्याः सुतस्य ; स्वयं च कर्म प्रचकार यत्र ।
तथा यज्ञोऽयं तव भारताग्र्य ; पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ००७ ॥

इमे हि ते सूर्यहुताशवर्चसः ; समासते वृत्रहणः क्रतुं यथा ।
नैषां ज्ञानं विद्यते ज्ञातुमद्य ; दत्तं येभ्यो न प्रणश्येत्कथञ्चित् ॥ ००८ ॥

ऋत्विक्समो नास्ति लोकेषु चैव ; द्वैपायनेनेति विनिश्चितं मे ।
एतस्य शिष्या हि क्षितिं चरन्ति ; सर्वर्त्विजः कर्मसु स्वेषु दक्षाः ॥ ००९ ॥

विभावसुश्चित्रभानुर्महात्मा ; हिरण्यरेता विश्वभुक्कृष्णवर्त्मा ।
प्रदक्षिणावर्तशिखः प्रदीप्तो ; हव्यं तवेदं हुतभुग्वष्टि देवः ॥ ०१० ॥

नेह त्वदन्यो विद्यते जीवलोके ; समो नृपः पालयिता प्रजानाम् ।
धृत्या च ते प्रीतमनाः सदाहं ; त्वं वा राजा धर्मराजो यमो वा ॥ ०११ ॥

शक्रः साक्षाद्वज्रपाणिर्यथेह ; त्राता लोकेऽस्मिंस्त्वं तथेह प्रजानाम् ।
मतस्त्वं नः पुरुषेन्द्रेह लोके ; न च त्वदन्यो गृहपतिरस्ति यज्ञे ॥ ०१२ ॥

खट्वाङ्गनाभागदिलीपकल्पो ; ययातिमान्धातृसमप्रभावः ।
आदित्यतेजःप्रतिमानतेजा ; भीष्मो यथा भ्राजसि सुव्रतस्त्वम् ॥ ०१३ ॥

वाल्मीकिवत्ते निभृतं सुधैर्यं ; वसिष्ठवत्ते नियतश्च कोपः ।
प्रभुत्वमिन्द्रेण समं मतं मे ; द्युतिश्च नारायणवद्विभाति ॥ ०१४ ॥

यमो यथा धर्मविनिश्चयज्ञः ; कृष्णो यथा सर्वगुणोपपन्नः ।

श्रियां निवासोऽसि यथा वसूनां ; निधानभूतोऽसि तथा क्रतूनाम् ॥ ०१५ ॥

दम्भोद्भवेनासि समो बलेन ; रामो यथा शस्त्रविदस्त्रविच्च ।
और्वत्रिताभ्यामसि तुल्यतेजा ; दुष्प्रेक्षणीयोऽसि भगीरथो वा ॥ ०१६ ॥

सूत उवाच ॥

एवं स्तुताः सर्व एव प्रसन्ना ; राजा सदस्या ऋत्विजो हव्यवाहः ।
तेषां दृष्ट्वा भावितानीङ्गितानि ; प्रोवाच राजा जनमेजयोऽथ ॥ ०१७ ॥

---

# अध्याय ०५१

जनमेजय उवाच ॥

बालो वाक्यं स्थविर इव प्रभाषते ; नायं बालः स्थविरोऽयं मतो मे ।
इच्छाम्यहं वरमस्मै प्रदातुं ; तन्मे विप्रा वितरध्वं समेताः ॥ ००१ ॥

सदस्या ऊचुः ॥

बालोऽपि विप्रो मान्य एवेह राज्ञां ; यश्चाविद्वान्यश्च विद्वान्यथावत् ।
सर्वान्कामांस्त्वत्त एषोऽर्हतेऽद्य ; यथा च नस्तक्षक एति शीघ्रम् ॥ ००२ ॥

सूत उवाच ॥

व्याहर्तुकामे वरदे नृपे द्विजं ; वरं वृणीष्वेति ततोऽभ्युवाच ।
होता वाक्यं नातिहृष्टान्तरात्मा ; कर्मण्यस्मिंस्तक्षको नैति तावत् ॥ ००३ ॥

जनमेजय उवाच ॥

यथा चेदं कर्म समाप्यते मे ; यथा च नस्तक्षक एति शीघ्रम् ।
तथा भवन्तः प्रयतन्तु सर्वे ; परं शक्त्या स हि मे विद्विषाणः ॥ ००४ ॥

ऋत्विज ऊचुः ॥

यथा शास्त्राणि नः प्राहुर्यथा शंसति पावकः ।
इन्द्रस्य भवने राजंस्तक्षको भयपीडितः ॥ ००५ ॥

सूत उवाच ॥

यथा सूतो लोहिताक्षो महात्मा ; पौराणिको वेदितवान्पुरस्तात् ।
स राजानं प्राह पृष्टस्तदानीं ; यथाहुर्विप्रास्तद्वदेतन्नृदेव ॥ ००६ ॥

पुराणमागम्य ततो ब्रवीम्यहं ; दत्तं तस्मै वरमिन्द्रेण राजन् ।
वसेह त्वं मत्सकाशे सुगुप्तो ; न पावकस्त्वां प्रदहिष्यतीति ॥ ००७ ॥

एतच्छ्रुत्वा दीक्षितस्तप्यमान ; आस्ते होतारं चोदयन्कर्मकाले ।
होता च यत्तः स जुहाव मन्त्रै ;रथो इन्द्रः स्वयमेवाजगाम ॥ ००८ ॥

विमानमारुह्य महानुभावः ; सर्वैर्देवैः परिसंस्तूयमानः ।
बलाहकैश्चाप्यनुगम्यमानो ; विद्याधरैरप्सरसां गणैश्च ॥ ००९ ॥

तस्योत्तरीये निहितः स नागो ; भयोद्विग्नः शर्म नैवाभ्यगच्छत् ।
ततो राजा मन्त्रविदोऽब्रवीत्पुनः ; क्रुद्धो वाक्यं तक्षकस्यान्तमिच्छन् ॥ ०१० ॥

इन्द्रस्य भवने विप्रा यदि नागः स तक्षकः ।
तमिन्द्रेणैव सहितं पातयध्वं विभावसौ ॥ ०११ ॥

ऋत्विज ऊचुः ॥

अयमायाति वै तूर्णं तक्षकस्ते वशं नृप ।
श्रूयतेऽस्य महान्नादो रुवतो भैरवं भयात् ॥ ०१२ ॥

नूनं मुक्तो वज्रभृता स नागो ; भ्रष्टश्चाङ्कान्मन्त्रविस्रस्तकायः ।
घूर्णन्नाकाशे नष्टसञ्ज्ञोऽभ्युपैति ; तीव्रान्निःश्वासान्निःश्वसन्पन्नगेन्द्रः ॥ ०१३ ॥

वर्तते तव राजेन्द्र कर्मैतद्विधिवत्प्रभो ।
अस्मै तु द्विजमुख्याय वरं त्वं दातुमर्हसि ॥ ०१४ ॥

जनमेजय उवाच ॥

बालाभिरूपस्य तवाप्रमेय ; वरं प्रयच्छामि यथानुरूपम् ।
वृणीष्व यत्तेऽभिमतं हृदि स्थितं ; तत्ते प्रदास्याम्यपि चेददेयम् ॥ ०१५ ॥

सूत उवाच ॥

पतिष्यमाणे नागेन्द्रे तक्षके जातवेदसि ।
इदमन्तरमित्येवं तदास्तीकोऽभ्यचोदयत् ॥ ०१६ ॥

वरं ददासि चेन्मह्यं वृणोमि जनमेजय ।
सत्रं ते विरमत्वेतन्न पतेयुरिहोरगाः ॥ ०१७ ॥

एवमुक्तस्ततो राजा ब्रह्मन्पारिक्षितस्तदा ।
नातिहृष्टमना वाक्यमास्तीकमिदमब्रवीत् ॥ ०१८ ॥

सुवर्णं रजतं गाश्च यच्चान्यन्मन्यसे विभो ।
तत्ते दद्यां वरं विप्र न निवर्तेत्क्रतुर्मम ॥ ०१९ ॥

आस्तीक उवाच ॥

सुवर्णं रजतं गाश्च न त्वां राजन्वृणोम्यहम् ।

सत्रं ते विरमत्वेतत्स्वस्ति मातृकुलस्य नः ॥ ०२० ॥

सूत उवाच ॥

आस्तीकेनैवमुक्तस्तु राजा पारिक्षितस्तदा ।
पुनः पुनरुवाचेदमास्तीकं वदतां वरम् ॥ ०२१ ॥

अन्यं वरय भद्रं ते वरं द्विजवरोत्तम ।
अयाचत न चाप्यन्यं वरं स भृगुनन्दन ॥ ०२२ ॥

ततो वेदविदस्तत्र सदस्याः सर्व एव तम् ।
राजानमूचुः सहिता लभतां ब्राह्मणो वरम् ॥ ०२३ ॥

---

# अध्याय ०५२

शौनक उवाच ॥

ये सर्पाः सर्पसत्रेऽस्मिन्पतिता हव्यवाहने ।
तेषां नामानि सर्वेषां श्रोतुमिच्छामि सूतज ॥ ००१ ॥

सूत उवाच ॥

सहस्राणि बहून्यस्मिन्प्रयुतान्यर्बुदानि च ।
न शक्यं परिसंख्यातुं बहुत्वाद्वेदवित्तम ॥ ००२ ॥

यथास्मृति तु नामानि पन्नगानां निबोध मे ।
उच्यमानानि मुख्यानां हुतानां जातवेदसि ॥ ००३ ॥

वासुकेः कुलजांस्तावत्प्राधान्येन निबोध मे ।
नीलरक्तान्सितान्घोरान्महाकायान्विषोल्बणान् ॥ ००४ ॥

कोटिको मानसः पूर्णः सहः पैलो हलीसकः ।
पिच्छिलः कोणपश्चक्रः कोणवेगः प्रकालनः ॥ ००५ ॥

हिरण्यवाहः शरणः कक्षकः कालदन्तकः ।
एते वासुकिजा नागाः प्रविष्टा हव्यवाहनम् ॥ ००६ ॥

तक्षकस्य कुले जातान्प्रवक्ष्यामि निबोध तान् ।
पुच्छण्डको मण्डलकः पिण्डभेत्ता रभेणकः ॥ ००७ ॥

उच्छिखः सुरसो द्रङ्गो बलहेडो विरोहणः ।
शिलीशलकरो मूकः सुकुमारः प्रवेपनः ॥ ००८ ॥

मुद्गरः शशरोमा च सुमना वेगवाहनः ।
एते तक्षकजा नागाः प्रविष्टा हव्यवाहनम् ॥ ००९ ॥

पारावतः पारियात्रः पाण्डरो हरिणः कृशः ।
विहङ्गः शरभो मोदः प्रमोदः संहताङ्गदः ॥ ०१० ॥

ऐरावतकुलादेते प्रैविष्टा हव्यवाहनम् ।
कौरव्यकुलजान्नागाञ्शृणु मे द्विजसत्तम ॥ ०११ ॥

ऐण्डिलः कुण्डलो मुण्डो वेणिस्कन्धः कुमारकः ।
बाहुकः श्रृङ्गवेगश्च धूर्तकः पातपातरौ ॥ ०१२ ॥

धृतराष्ट्रकुले जाताञ्शृणु नागान्यथातथम् ।
कीर्त्यमानान्मया ब्रह्मन्वातवेगान्विषोल्बणान् ॥ ०१३ ॥

शङ्कुकर्णः पिङ्गलकः कुठारमुखमेचकौ ।

पूर्णाङ्गदः पूर्णमुखः प्रहसः शकुनिर्हरिः ॥ ०१४ ॥

आमाहठः कोमठकः श्वसनो मानवो वटः ।
भैरवो मुण्डवेदाङ्गः पिशङ्गश्चोद्रपारगः ॥ ०१५ ॥

ऋषभो वेगवान्नाम पिण्डारकमहाहनू ।
रक्ताङ्गः सर्वसारङ्गः समृद्धः पाटराक्षसौ ॥ ०१६ ॥

वराहको वारणकः सुमित्रश्चित्रवेदिकः ।
पराशरस्तरुणको मणिस्कन्धस्तथारुणिः ॥ ०१७ ॥

इति नागा मया ब्रह्मन्कीर्तिताः कीर्तिवर्धनाः ।
प्राधान्येन बहुत्वात्तु न सर्वे परिकीर्तिताः ॥ ०१८ ॥

एतेषां पुत्रपौत्रास्तु प्रसवस्य च संततिः ।
न शक्याः परिसंख्यातुं ये दीप्तं पावकं गताः ॥ ०१९ ॥

सप्तशीर्षा द्विशीर्षाश्च पञ्चशीर्षास्तथापरे ।
कालानलविषा घोरा हुताः शतसहस्रशः ॥ ०२० ॥

महाकाया महावीर्याः शैलशृङ्गसमुच्छ्रयाः ।
योजनायामविस्तारा द्वियोजनसमायताः ॥ ०२१ ॥

कामरूपाः कामगमा दीप्तानलविषोल्बणाः ।
दग्धास्तत्र महासत्रे ब्रह्मदण्डनिपीडिताः ॥ ०२२ ॥

# अध्याय ०५३

सूत उवाच ॥

इदमत्यद्भुतं चान्यदास्तीकस्यानुशुश्रुमः ।
तथा वरैश्छन्द्यमाने राज्ञा पारिक्षितेन ह ॥ ००१ ॥

इन्द्रहस्ताच्च्युतो नागः ख एव यदतिष्ठत ।
ततश्चिन्तापरो राजा बभूव जनमेजयः ॥ ००२ ॥

हूयमाने भृशं दीप्ते विधिवत्पावके तदा ।
न स्म स प्रापतद्वह्नौ तक्षको भयपीडितः ॥ ००३ ॥

शौनक उवाच ॥

किं सूत तेषां विप्राणां मन्त्रग्रामो मनीषिणाम् ।
न प्रत्यभात्तदाग्नौ यन्न पपात स तक्षकः ॥ ००४ ॥

सूत उवाच ॥

तमिन्द्रहस्ताद्विस्रस्तं विसञ्ज्ञं पन्नगोत्तमम् ।
आस्तीकस्तिष्ठ तिष्ठेति वाचस्तिस्रोऽभ्युदैरयत् ॥ ००५ ॥

वितस्थे सोऽन्तरिक्षेऽथ हृदयेन विदूयता ।
यथा तिष्ठेत वै कश्चिद्गोचक्रस्यान्तरा नरः ॥ ००६ ॥

ततो राजाब्रवीद्वाक्यं सदस्यैश्चोदितो भृशम् ।
काममेतद्भवत्वेवं यथास्तीकस्य भाषितम् ॥ ००७ ॥

समाप्यतामिदं कर्म पन्नगाः सन्त्वनामयाः ।
प्रीयतामयमास्तीकः सत्यं सूतवचोऽस्तु तत् ॥ ००८ ॥

ततो हलहलाशब्दः प्रीतिजः समवर्तत ।
आस्तीकस्य वरे दत्ते तथैवोपरराम च ॥ ००९ ॥

स यज्ञः पाण्डवेयस्य राज्ञः पारिक्षितस्य ह ।
प्रीतिमांश्चाभवद्राजा भारतो जनमेजयः ॥ ०१० ॥

ऋत्विग्भ्यः ससदस्येभ्यो ये तत्रासन्समागताः ।
तेभ्यश्च प्रददौ वित्तं शतशोऽथ सहस्रशः ॥ ०११ ॥

लोहिताक्षाय सूताय तथा स्थपतये विभुः ।
येनोक्तं तत्र सत्राग्रे यज्ञस्य विनिवर्तनम् ॥ ०१२ ॥

निमित्तं ब्राह्मण इति तस्मै वित्तं ददौ बहु ।
ततश्चकारावभृथं विधिदृष्टेन कर्मणा ॥ ०१३ ॥

आस्तीकं प्रेषयामास गृहानेव सुसत्कृतम् ।
राजा प्रीतमनाः प्रीतं कृतकृत्यं मनीषिणम् ॥ ०१४ ॥

पुनरागमनं कार्यमिति चैनं वचोऽब्रवीत् ।
भविष्यसि सदस्यो मे वाजिमेधे महाक्रतौ ॥ ०१५ ॥

तथेत्युक्त्वा प्रदुद्राव स चास्तीको मुदा युतः ।
कृत्वा स्वकार्यमतुलं तोषयित्वा च पार्थिवम् ॥ ०१६ ॥

स गत्वा परमप्रीतो मातरं मातुलं च तम् ।
अभिगम्योपसङ्गृह्य यथावृत्तं न्यवेदयत् ॥ ०१७ ॥

एतच्छ्रुत्वा प्रीयमाणाः समेता ; ये तत्रासन्पन्नगा वीतमोहाः ।
तेऽऽस्तीके वै प्रीतिमन्तो बभूवु ;रूचुश्चैनं वरमिष्टं वृणीष्व ॥ ०१८ ॥

भूयो भूयः सर्वशस्तेऽब्रुवंस्तं ; किं ते प्रियं करवामोऽद्य विद्वन् ।
प्रीता वयं मोक्षिताश्चैव सर्वे ; कामं किं ते करवामोऽद्य वत्स ॥ ०१९ ॥

आस्तीक उवाच ॥

सायं प्रातः सुप्रसन्नात्मरूपा ; लोके विप्रा मानवाश्चेतरेऽपि ।
धर्माख्यानं ये वदेयुर्ममेदं ; तेषां युष्मद्भ्यो नैव किञ्चिद्भयं स्यात् ॥ ०२० ॥

सूत उवाच ॥

तैश्चाप्युक्तो भागिनेयः प्रसन्नै ;रेतत्सत्यं काममेवं चरन्तः ।
प्रीत्या युक्ता ईप्सितं सर्वशस्ते ; कर्तारः स्म प्रवणा भागिनेय ॥ ०२१ ॥

जरत्कारोर्जरत्कार्वां समुत्पन्नो महायशाः ।
आस्तीकः सत्यसंधो मां पन्नगेभ्योऽभिरक्षतु ॥ ०२२ ॥

असितं चार्तिमन्तं च सुनीथं चापि यः स्मरेत् ।
दिवा वा यदि वा रात्रौ नास्य सर्पभयं भवेत् ॥ ०२३ ॥

सूत उवाच ॥

मोक्षयित्वा स भुजगान्सर्पसत्राद्द्विजोत्तमः ।
जगाम काले धर्मात्मा दिष्टान्तं पुत्रपौत्रवान् ॥ ०२४ ॥

इत्याख्यानं मयास्तीकं यथावत्कीर्तितं तव ।
यत्कीर्तयित्वा सर्पेभ्यो न भयं विद्यते क्वचित् ॥ ०२५ ॥

श्रुत्वा धर्मिष्ठमाख्यानमास्तीकं पुण्यवर्धनम् ।
आस्तीकस्य कवेर्विप्र श्रीमच्चरितमादितः ॥ ०२६ ॥

शौनक उवाच ॥

भृगुवंशात्प्रभृत्येव त्वया मे कथितं महत् ।
आख्यानमखिलं तात सौते प्रीतोऽस्मि तेन ते ॥ ०२७ ॥

प्रक्ष्यामि चैव भूयस्त्वां यथावत्सूतनन्दन ।
यां कथां व्याससंपन्नां तां च भूयः प्रचक्ष्व मे ॥ ०२८ ॥

तस्मिन्परमदुष्प्रापे सर्पसत्रे महात्मनाम् ।
कर्मान्तरेषु विधिवत्सदस्यानां महाकवे ॥ ०२९ ॥

या बभूवुः कथाश्चित्रा येष्वर्थेषु यथातथम् ।
त्वत्त इच्छामहे श्रोतुं सौते त्वं वै विचक्षणः ॥ ०३० ॥

सूत उवाच ॥

कर्मान्तरेष्वकथयन्द्विजा वेदाश्रयाः कथाः ।
व्यासस्त्वकथयन्नित्यमाख्यानं भारतं महत् ॥ ०३१ ॥

शौनक उवाच ॥

महाभारतमाख्यानं पाण्डवानां यशस्करम् ।
जनमेजयेन यत्पृष्टः कृष्णद्वैपायनस्तदा ॥ ०३२ ॥

श्रावयामास विधिवत्तदा कर्मान्तरेषु सः ।
तामहं विधिवत्पुण्यां श्रोतुमिच्छामि वै कथाम् ॥ ०३३ ॥

मनःसागरसंभूतां महर्षेः पुण्यकर्मणः ।
कथयस्व सतां श्रेष्ठ न हि तृप्यामि सूतज ॥ ०३४ ॥

सूत उवाच ॥

हन्त ते कथयिष्यामि महदाख्यानमुत्तमम् ।
कृष्णद्वैपायनमतं महाभारतमादितः ॥ ०३५ ॥

तज्जुषस्वोत्तममते कथ्यमानं मया द्विज ।
शंसितुं तन्मनोहर्षो ममापीह प्रवर्तते ॥ ०३६ ॥

---

# आदिवंशावतरणपर्व

## अध्याय ०५४

सूत उवाच ॥

श्रुत्वा तु सर्पसत्राय दीक्षितं जनमेजयम् ।
अभ्यागच्छदृषिर्विद्वान्कृष्णद्वैपायनस्तदा ॥ ००१ ॥

जनयामास यं काली शक्तेः पुत्रात्पराशरात् ।
कन्यैव यमुनाद्वीपे पाण्डवानां पितामहम् ॥ ००२ ॥

जातमात्रश्च यः सद्य इष्ट्या देहमवीवृधत् ।
वेदांश्चाधिजगे साङ्गान्सेतिहासान्महायशाः ॥ ००३ ॥

यं नातितपसा कश्चिन्न वेदाध्ययनेन च ।
न व्रतैर्नोपवासैश्च न प्रसूत्या न मन्युना ॥ ००४ ॥

विव्यासैकं चतुर्धा यो वेदं वेदविदां वरः ।
परावरज्ञो ब्रह्मर्षिः कविः सत्यव्रतः शुचिः ॥ ००५ ॥

यः पाण्डुं धृतराष्ट्रं च विदुरं चाप्यजीजनत् ।
शंतनोः संततिं तन्वन्पुण्यकीर्तिर्महायशाः ॥ ००६ ॥

जनमेजयस्य राजर्षेः स तद्यज्ञसदस्तदा ।
विवेश शिष्यैः सहितो वेदवेदाङ्गपारगैः ॥ ००७ ॥

तत्र राजानमासीनं ददर्श जनमेजयम् ।
वृतं सदस्यैर्बहुभिर्देवैरिव पुरंदरम् ॥ ००८ ॥

तथा मूर्धावसिक्तैश्च नानाजनपदेश्वरैः ।
ऋत्विग्भिर्देवकल्पैश्च कुशलैर्यज्ञसंस्तरे ॥ ००९ ॥

जनमेजयस्तु राजर्षिर्दृष्ट्वा तमृषिमागतम् ।
सगणोऽभ्युद्ययौ तूर्णं प्रीत्या भरतसत्तमः ॥ ०१० ॥

काञ्चनं विष्टरं तस्मै सदस्यानुमते प्रभुः ।
आसनं कल्पयामास यथा शक्रो बृहस्पतेः ॥ ०११ ॥

तत्रोपविष्टं वरदं देवर्षिगणपूजितम् ।
पूजयामास राजेन्द्रः शास्त्रदृष्टेन कर्मणा ॥ ०१२ ॥

पाद्यमाचमनीयं च अर्घ्यं गां च विधानतः ।
पितामहाय कृष्णाय तदर्हाय न्यवेदयत् ॥ ०१३ ॥

प्रतिगृह्य च तां पूजां पाण्डवाज्जनमेजयात् ।
गां चैव समनुज्ञाय व्यासः प्रीतोऽभवत्तदा ॥ ०१४ ॥

तथा संपूजयित्वा तं यत्नेन प्रपितामहम् ।
उपोपविश्य प्रीतात्मा पर्यपृच्छदनामयम् ॥ ०१५ ॥

भगवानपि तं दृष्ट्वा कुशलं प्रतिवेद्य च ।

सदस्यैः पूजितः सर्वैः सदस्यानभ्यपूजयत् ॥ ०१६ ॥

ततस्तं सत्कृतं सर्वैः सदस्यैर्जनमेजयः ।
इदं पश्चाद्द्विजश्रेष्ठं पर्यपृच्छत्कृताञ्जलिः ॥ ०१७ ॥

कुरूणां पाण्डवानां च भवान्प्रत्यक्षदर्शिवान् ।
तेषां चरितमिच्छामि कथ्यमानं त्वया द्विज ॥ ०१८ ॥

कथं समभवद्भेदस्तेषामक्लिष्टकर्मणाम् ।
तच्च युद्धं कथं वृत्तं भूतान्तकरणं महत् ॥ ०१९ ॥

पितामहानां सर्वेषां दैवेनाविष्टचेतसाम् ।
कार्त्स्न्येनैतत्समाचक्ष्व भगवन्कुशलो ह्यसि ॥ ०२० ॥

तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा ।
शशास शिष्यमासीनं वैशंपायनमन्तिके ॥ ०२१ ॥

कुरूणां पाण्डवानां च यथा भेदोऽभवत्पुरा ।
तदस्मै सर्वमाचक्ष्व यन्मत्तः श्रुतवानसि ॥ ०२२ ॥

गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा ।
आचचक्षे ततः सर्वमितिहासं पुरातनम् ॥ ०२३ ॥

तस्मै राज्ञे सदस्येभ्यः क्षत्रियेभ्यश्च सर्वशः ।
भेदं राज्यविनाशं च कुरुपाण्डवयोस्तदा ॥ ०२४ ॥

# अध्याय ०५५

वैशंपायन उवाच ॥

गुरवे प्राङ्नमस्कृत्य मनोबुद्धिसमाधिभिः ।
संपूज्य च द्विजान्सर्वांस्तथान्यान्विदुषो जनान् ॥ ००१ ॥

महर्षेः सर्वलोकेषु विश्रुतस्यास्य धीमतः ।
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः ॥ ००२ ॥

श्रोतुं पात्रं च राजंस्त्वं प्राप्येमां भारतीं कथाम् ।
गुरोर्वक्त्रं परिस्पन्दो मुदा प्रोत्साहतीव माम् ॥ ००३ ॥

शृणु राजन्यथा भेदः कुरुपाण्डवयोरभूत् ।
राज्यार्थे द्यूतसंभूतो वनवासस्तथैव च ॥ ००४ ॥

यथा च युद्धमभवत्पृथिवीक्षयकारकम् ।
तत्तेऽहं संप्रवक्ष्यामि पृच्छते भरतर्षभ ॥ ००५ ॥

मृते पितरि ते वीरा वनादेत्य स्वमन्दिरम् ।
नचिरादिव विद्वांसो वेदे धनुषि चाभवन् ॥ ००६ ॥

तांस्तथा रूपवीर्यौजःसंपन्नान्पौरसंमतान् ।
नामृष्यन्कुरवो दृष्ट्वा पाण्डवाञ्श्रीयशोभृतः ॥ ००७ ॥

ततो दुर्योधनः क्रूरः कर्णश्च सहसौबलः ।
तेषां निग्रहनिर्वासान्विविधांस्ते समाचरन् ॥ ००८ ॥

ददावथ विषं पापो भीमाय धृतराष्ट्रजः ।
जरयामास तद्वीरः सहान्नेन वृकोदरः ॥ ००९ ॥

प्रमाणकोट्यां संसुप्तं पुनर्बद्ध्वा वृकोदरम् ।
तोयेषु भीमं गङ्गायाः प्रक्षिप्य पुरमाव्रजत् ॥ ०१० ॥

यदा प्रबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम् ।
उदतिष्ठन्महाराज भीमसेनो गतव्यथः ॥ ०११ ॥

आशीविषैः कृष्णसर्पैः सुप्तं चैनमदंशयत् ।
सर्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा ॥ ०१२ ॥

तेषां तु विप्रकारेषु तेषु तेषु महामतिः ।
मोक्षणे प्रतिघाते च विदुरोऽवहितोऽभवत् ॥ ०१३ ॥

स्वर्गस्थो जीवलोकस्य यथा शक्रः सुखावहः ।
पाण्डवानां तथा नित्यं विदुरोऽपि सुखावहः ॥ ०१४ ॥

यदा तु विविधोपायैः संवृतैर्विवृतैरपि ।
नाशक्नोद्विनिहन्तुं तान्दैवभाव्यर्थरक्षितान् ॥ ०१५ ॥

ततः संमन्त्र्य सचिवैर्वृषदुःशासनादिभिः ।
धृतराष्ट्रमनुज्ञाप्य जातुषं गृहमादिशत् ॥ ०१६ ॥

तत्र तान्वासयामास पाण्डवानमितौजसः ।
अदाहयच्च विस्रब्धान्पावकेन पुनस्तदा ॥ ०१७ ॥

विदुरस्यैव वचनात्खनित्री विहिता ततः ।
मोक्षयामास योगेन ते मुक्ताः प्राद्रवन्भयात् ॥ ०१८ ॥

ततो महावने घोरे हिडिम्बं नाम राक्षसम् ।
भीमसेनोऽवधीत्क्रुद्धो भुवि भीमपराक्रमः ॥ ०१९ ॥

अथ संधाय ते वीरा एकचक्रां व्रजंस्तदा ।

ब्रह्मरूपधरा भूत्वा मात्रा सह परंतपाः ॥ ०२० ॥

तत्र ते ब्राह्मणार्थाय बकं हत्वा महाबलम् ।
ब्राह्मणैः सहिता जग्मुः पाञ्चालानां पुरं ततः ॥ ०२१ ॥

ते तत्र द्रौपदीं लब्ध्वा परिसंवत्सरोषिताः ।
विदिता हास्तिनपुरं प्रत्याजग्मुररिंदमाः ॥ ०२२ ॥

त उक्ता धृतराष्ट्रेण राज्ञा शांतनवेन च ।
भ्रातृभिर्विग्रहस्तात कथं वो न भवेदिति ॥ ०२३ ॥

अस्माभिः खाण्डवप्रस्थे युष्मद्वासोऽनुचिन्तितः ॥ ०२३ ॥

तस्माज्जनपदोपेतं सुविभक्तमहापथम् ।
वासाय खाण्डवप्रस्थं व्रजध्वं गतमन्यवः ॥ ०२४ ॥

तयोस्ते वचनाज्जग्मुः सह सर्वैः सुहृज्जनैः ।
नगरं खाण्डवप्रस्थं रत्नान्यादाय सर्वशः ॥ ०२५ ॥

तत्र ते न्यवसन्राजन्संवत्सरगणान्बहून् ।
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीक्षितः ॥ ०२६ ॥

एवं धर्मप्रधानास्ते सत्यव्रतपरायणाः ।
अप्रमत्तोत्थिताः क्षान्ताः प्रतपन्तोऽहितांस्तदा ॥ ०२७ ॥

अजयद्भीमसेनस्तु दिशं प्राचीं महाबलः ।
उदीचीमर्जुनो वीरः प्रतीचीं नकुलस्तथा ॥ ०२८ ॥

दक्षिणां सहदेवस्तु विजिग्ये परवीरहा ।
एवं चक्रुरिमां सर्वे वशे कृत्स्नां वसुंधराम् ॥ ०२९ ॥

पञ्चभिः सूर्यसङ्काशैः सूर्येण च विराजता ।
षड्सूर्येवाबभौ पृथ्वी पाण्डवैः सत्यविक्रमैः ॥ ०३० ॥

ततो निमित्ते कस्मिंश्चिद्धर्मराजो युधिष्ठिरः ।
वनं प्रस्थापयामास भ्रातरं वै धनञ्जयम् ॥ ०३१ ॥

स वै संवत्सरं पूर्णं मासं चैकं वनेऽवसत् ।
ततोऽगच्छद्धृषीकेशं द्वारवत्यां कदाचन ॥ ०३२ ॥

लब्धवांस्तत्र बीभत्सुर्भार्यां राजीवलोचनाम् ।
अनुजां वासुदेवस्य सुभद्रां भद्रभाषिणीम् ॥ ०३३ ॥

सा शचीव महेन्द्रेण श्रीः कृष्णेनेव सङ्गता ।
सुभद्रा युयुजे प्रीता पाण्डवेनार्जुनेन ह ॥ ०३४ ॥

अतर्पयच्च कौन्तेयः खाण्डवे हव्यवाहनम् ।
बीभत्सुर्वासुदेवेन सहितो नृपसत्तम ॥ ०३५ ॥

नातिभारो हि पार्थस्य केशवेनाभवत्सह ।
व्यवसायसहायस्य विष्णोः शत्रुवधेष्विव ॥ ०३६ ॥

पार्थायाग्निर्ददौ चापि गाण्डीवं धनुरुत्तमम् ।
इषुधी चाक्षयैर्बाणै रथं च कपिलक्षणम् ॥ ०३७ ॥

मोक्षयामास बीभत्सुर्मयं तत्र महासुरम् ।
स चकार सभां दिव्यां सर्वरत्नसमाचिताम् ॥ ०३८ ॥

तस्यां दुर्योधनो मन्दो लोभं चक्रे सुदुर्मतिः ।
ततोऽक्षैर्वञ्चयित्वा च सौबलेन युधिष्ठिरम् ॥ ०३९ ॥

वनं प्रस्थापयामास सप्त वर्षाणि पञ्च च ।

अज्ञातमेकं राष्ट्रे च तथा वर्षं त्रयोदशम् ॥ ०४० ॥

ततश्चतुर्दशे वर्षे याचमानाः स्वकं वसु ।
नालभन्त महाराज ततो युद्धमवर्तत ॥ ०४१ ॥

ततस्ते सर्वमुत्साद्य हत्वा दुर्योधनं नृपम् ।
राज्यं विद्रुतभूयिष्ठं प्रत्यपद्यन्त पाण्डवाः ॥ ०४२ ॥

एवमेतत्पुरावृत्तं तेषामक्लिष्टकर्मणाम् ।
भेदो राज्यविनाशश्च जयश्च जयतां वर ॥ ०४३ ॥

---

# अध्याय ०५६

जनमेजय उवाच ॥

कथितं वै समासेन त्वया सर्वं द्विजोत्तम ।
महाभारतमाख्यानं कुरूणां चरितं महत् ॥ ००१ ॥

कथां त्वनघ चित्रार्थामिमां कथयति त्वयि ।
विस्तरश्रवणे जातं कौतूहलमतीव मे ॥ ००२ ॥

स भवान्विस्तरेणेमां पुनराख्यातुमर्हति ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ ००३ ॥

न तत्कारणमल्पं हि धर्मज्ञा यत्र पाण्डवाः ।
अवध्यान्सर्वशो जघ्नुः प्रशस्यन्ते च मानवैः ॥ ००४ ॥

किमर्थं ते नरव्याघ्राः शक्ताः सन्तो ह्यनागसः ।

प्रयुज्यमानान्सङ्क्लेशान्क्षान्तवन्तो दुरात्मनाम् ॥ ००५ ॥

कथं नागायुतप्राणो बाहुशाली वृकोदरः ।
परिक्लिश्यन्नपि क्रोधं धृतवान्वै द्विजोत्तम ॥ ००६ ॥

कथं सा द्रौपदी कृष्णा क्लिश्यमाना दुरात्मभिः ।
शक्ता सती धार्तराष्ट्रान्नादहद्घोरचक्षुषा ॥ ००७ ॥

कथं व्यतिक्रमन्द्यूते पार्थौ माद्रीसुतौ तथा ।
अनुव्रजन्नरव्याघ्रं वञ्च्यमानं दुरात्मभिः ॥ ००८ ॥

कथं धर्मभृतां श्रेष्ठः सुतो धर्मस्य धर्मवित् ।
अनर्हः परमं क्लेशं सोढवान्स युधिष्ठिरः ॥ ००९ ॥

कथं च बहुलाः सेनाः पाण्डवः कृष्णसारथिः ।
अस्यन्नेकोऽनयत्सर्वाः पितृलोकं धनञ्जयः ॥ ०१० ॥

एतदाचक्ष्व मे सर्वं यथावृत्तं तपोधन ।
यद्यच्च कृतवन्तस्ते तत्र तत्र महारथाः ॥ ०११ ॥

वैशंपायन उवाच ॥

महर्षेः सर्वलोकेषु पूजितस्य महात्मनः ।
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः ॥ ०१२ ॥

इदं शतसहस्रं हि श्लोकानां पुण्यकर्मणाम् ।
सत्यवत्यात्मजेनेह व्याख्यातममितौजसा ॥ ०१३ ॥

य इदं श्रावयेद्विद्वान्यश्चेदं शृणुयान्नरः ।
ते ब्रह्मणः स्थानमेत्य प्राप्नुयुर्देवतुल्यताम् ॥ ०१४ ॥

इदं हि वेदैः समितं पवित्रमपि चोत्तमम् ।
श्राव्याणामुत्तमं चेदं पुराणमृषिसंस्तुतम् ॥ ०१५ ॥

अस्मिन्नर्थश्च धर्मश्च निखिलेनोपदिश्यते ।
इतिहासे महापुण्ये बुद्धिश्च परिनैष्ठिकी ॥ ०१६ ॥

अक्षुद्रान्दानशीलांश्च सत्यशीलाननास्तिकान् ।
कार्ष्णं वेदमिमं विद्वाञ्श्रावयित्वार्थमश्नुते ॥ ०१७ ॥

भ्रूणहत्याकृतं चापि पापं जह्यादसंशयम् ।
इतिहासमिमं श्रुत्वा पुरुषोऽपि सुदारुणः ॥ ०१८ ॥

जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।
महीं विजयते सर्वां शत्रूंश्चापि पराजयेत् ॥ ०१९ ॥

इदं पुंसवनं श्रेष्ठमिदं स्वस्त्ययनं महत् ।
महिषीयुवराजाभ्यां श्रोतव्यं बहुशस्तथा ॥ ०२० ॥

अर्थशास्त्रमिदं पुण्यं धर्मशास्त्रमिदं परम् ।
मोक्षशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥ ०२१ ॥

संप्रत्याचक्षते चैव आख्यास्यन्ति तथापरे ।
पुत्राः शुश्रूषवः सन्ति प्रेष्याश्च प्रियकारिणः ॥ ०२२ ॥

शरीरेण कृतं पापं वाचा च मनसैव च ।
सर्वं तत्त्यजति क्षिप्रमिदं शृण्वन्नरः सदा ॥ ०२३ ॥

भारतानां महज्जन्म शृण्वतामनसूयताम् ।
नास्ति व्याधिभयं तेषां परलोकभयं कुतः ॥ ०२४ ॥

धन्यं यशस्यमायुष्यं स्वर्ग्यं पुण्यं तथैव च ।

कृष्णद्वैपायनेनेदं कृतं पुण्यचिकीर्षुणा ॥ ०२५ ॥

कीर्तिं प्रथयता लोके पाण्डवानां महात्मनाम् ।
अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम् ॥ ०२६ ॥

यथा समुद्रो भगवान्यथा च हिमवान्गिरिः ।
ख्यातावुभौ रत्ननिधी तथा भारतमुच्यते ॥ ०२७ ॥

य इदं श्रावयेद्विद्वान्ब्राह्मणानिह पर्वसु ।
धूतपाप्मा जितस्वर्गो ब्रह्मभूयं स गच्छति ॥ ०२८ ॥

यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः ।
अक्षय्यं तस्य तच्छ्राद्धमुपतिष्ठेत्पितॄनपि ॥ ०२९ ॥

अह्ना यदेनश्चाज्ञानात्प्रकरोति नरश्चरन् ।
तन्महाभारताख्यानं श्रुत्वैव प्रविलीयते ॥ ०३० ॥

भारतानां महज्जन्म महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ ०३१ ॥

त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ।
महाभारतमाख्यानं कृतवानिदमुत्तमम् ॥ ०३२ ॥

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥ ०३३ ॥

# अध्याय ०५७

वैशंपायन उवाच ॥

राजोपरिचरो नाम धर्मनित्यो महीपतिः ।
बभूव मृगयां गन्तुं स कदाचिद्धृतव्रतः ॥ ००१ ॥

स चेदिविषयं रम्यं वसुः पौरवनन्दनः ।
इन्द्रोपदेशाज्जग्राह ग्रहणीयं महीपतिः ॥ ००२ ॥

तमाश्रमे न्यस्तशस्त्रं निवसन्तं तपोरतिम् ।
देवः साक्षात्स्वयं वज्री समुपायान्महीपतिम् ॥ ००३ ॥

इन्द्रत्वमर्हो राजायं तपसेत्यनुचिन्त्य वै ।
तं सान्त्वेन नृपं साक्षात्तपसः संन्यवर्तयत् ॥ ००४ ॥

इन्द्र उवाच ॥

न सङ्कीर्येत धर्मोऽयं पृथिव्यां पृथिवीपते ।
तं पाहि धर्मो हि धृतः कृत्स्नं धारयते जगत् ॥ ००५ ॥

लोक्यं धर्मं पालय त्वं नित्ययुक्तः समाहितः ।
धर्मयुक्तस्ततो लोकान्पुण्यानाप्स्यसि शाश्वतान् ॥ ००६ ॥

दिविष्ठस्य भुविष्ठस्त्वं सखा भूत्वा मम प्रियः ।
ऊधः पृथिव्या यो देशस्तमावस नराधिप ॥ ००७ ॥

पशव्यश्चैव पुण्यश्च सुस्थिरो धनधान्यवान् ।
स्वारक्ष्यश्चैव सौम्यश्च भोग्यैर्भूमिगुणैर्युतः ॥ ००८ ॥

अत्यन्यानेष देशो हि धनरत्नादिभिर्युतः ।

वसुपूर्णा च वसुधा वस चेदिषु चेदिप ॥ ००९ ॥

धर्मशीला जनपदाः सुसंतोषाश्च साधवः ।
न च मिथ्याप्रलापोऽत्र स्वैरेष्वपि कुतोऽन्यथा ॥ ०१० ॥

न च पित्रा विभज्यन्ते नरा गुरुहिते रताः ।
युञ्जते धुरि नो गाश्च कृशाः संधुक्षयन्ति च ॥ ०११ ॥

सर्वे वर्णाः स्वधर्मस्थाः सदा चेदिषु मानद ।
न तेऽस्त्यविदितं किञ्चित्त्रिषु लोकेषु यद्भवेत् ॥ ०१२ ॥

देवोपभोग्यं दिव्यं च आकाशे स्फाटिकं महत् ।
आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते ॥ ०१३ ॥

त्वमेकः सर्वमर्त्येषु विमानवरमास्थितः ।
चरिष्यस्युपरिस्थो वै देवो विग्रहवानिव ॥ ०१४ ॥

ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम् ।
धारयिष्यति सङ्ग्रामे या त्वां शस्त्रैरविक्षतम् ॥ ०१५ ॥

लक्षणं चैतदेवेह भविता ते नराधिप ।
इन्द्रमालेति विख्यातं धन्यमप्रतिमं महत् ॥ ०१६ ॥

वैशंपायन उवाच ॥

यष्टिं च वैणवीं तस्मै ददौ वृत्रनिषूदनः ।
इष्टप्रदानमुद्दिश्य शिष्टानां परिपालिनीम् ॥ ०१७ ॥

तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा ।
प्रवेशं कारयामास गते संवत्सरे तदा ॥ ०१८ ॥

ततः प्रभृति चाद्यापि यष्ट्याः क्षितिपसत्तमैः ।
प्रवेशः क्रियते राजन्यथा तेन प्रवर्तितः ॥ ०१९ ॥

अपरेद्युस्तथा चास्याः क्रियते उच्छ्रयो नृपैः ।
अलङ्कृतायाः पिटकैर्गन्धैर्माल्यैश्च भूषणैः ॥ ०२० ॥

माल्यदामपरिक्षिप्ता विधिवत्क्रियतेऽपि च ॥ ०२० ॥

भगवान्पूज्यते चात्र हास्यरूपेण शङ्करः ।
स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः ॥ ०२१ ॥

एतां पूजां महेन्द्रस्तु दृष्ट्वा देव कृतां शुभाम् ।
वसुना राजमुख्येन प्रीतिमानब्रवीद्विभुः ॥ ०२२ ॥

ये पूजयिष्यन्ति नरा राजानश्च महं मम ।
कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः ॥ ०२३ ॥

तेषां श्रीर्विजयश्चैव सराष्ट्राणां भविष्यति ।
तथा स्फीतो जनपदो मुदितश्च भविष्यति ॥ ०२४ ॥

एवं महात्मना तेन महेन्द्रेण नराधिप ।
वसुः प्रीत्या मघवता महाराजोऽभिसत्कृतः ॥ ०२५ ॥

उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः ।
भूमिदानादिभिर्दानैर्यथा पूता भवन्ति वै ॥ ०२६ ॥

वरदानमहायज्ञैस्तथा शक्रोत्सवेन ते ॥ ०२६ ॥

संपूजितो मघवता वसुश्चेदिपतिस्तदा ।
पालयामास धर्मेण चेदिस्थः पृथिवीमिमाम् ॥ ०२७ ॥

इन्द्रप्रीत्या भूमिपतिश्चकारेन्द्रमहं वसुः ॥ ०२७ ॥

पुत्राश्चास्य महावीर्याः पञ्चासन्नमितौजसः ।
नानाराज्येषु च सुतान्स सम्राडभ्यषेचयत् ॥ ०२८ ॥

महारथो मगधराड्विश्रुतो यो बृहद्रथः ।
प्रत्यग्रहः कुशाम्बश्च यमाहुर्मणिवाहनम् ॥ ०२९ ॥

मच्छिल्लश्च यदुश्चैव राजन्यश्चापराजितः ॥ ०२९ ॥

एते तस्य सुता राजन्राजर्षेर्भूरितेजसः ।
न्यवेशयन्नामभिः स्वैस्ते देशांश्च पुराणि च ॥ ०३० ॥

वासवाः पञ्च राजानः पृथग्वंशाश्च शाश्वताः ॥ ०३० ॥

वसन्तमिन्द्रप्रासादे आकाशे स्फाटिके च तम् ।
उपतस्थुर्महात्मानं गन्धर्वाप्सरसो नृपम् ॥ ०३१ ॥

राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम् ॥ ०३१ ॥

पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः ।
अरौत्सीच्चेतनायुक्तः कामात्कोलाहलः किल ॥ ०३२ ॥

गिरिं कोलाहलं तं तु पदा वसुरताडयत् ।
निश्चक्राम नदी तेन प्रहारविवरेण सा ॥ ०३३ ॥

तस्यां नद्यामजनयन्मिथुनं पर्वतः स्वयम् ।
तस्माद्विमोक्षणात्प्रीता नदी राज्ञे न्यवेदयत् ॥ ०३४ ॥

यः पुमानभवत्तत्र तं स राजर्षिसत्तमः ।
वसुर्वसुप्रदश्चक्रे सेनापतिमरिंदमम् ॥ ०३५ ॥

चकार पत्नीं कन्यां तु दयितां गिरिकां नृपः ॥ ०३५ ॥

वसोः पत्नी तु गिरिका कामात्काले न्यवेदयत् ।
ऋतुकालमनुप्राप्तं स्नाता पुंसवने शुचिः ॥ ०३६ ॥

तदहः पितरश्चैनमूचुर्जहि मृगानिति ।
तं राजसत्तमं प्रीतास्तदा मतिमतां वरम् ॥ ०३७ ॥

स पितॄणां नियोगं तमव्यतिक्रम्य पार्थिवः ।
चचार मृगयां कामी गिरिकामेव संस्मरन् ॥ ०३८ ॥

अतीव रूपसंपन्नां साक्षाच्छ्रियमिवापराम् ॥ ०३८ ॥

तस्य रेतः प्रचस्कन्द चरतो रुचिरे वने ।
स्कन्नमात्रं च तद्रेतो वृक्षपत्रेण भूमिपः ॥ ०३९ ॥

प्रतिजग्राह मिथ्या मे न स्कन्देद्रेत इत्युत ।
ऋतुश्च तस्याः पत्न्या मे न मोघः स्यादिति प्रभुः ॥ ०४० ॥

सञ्चिन्त्यैवं तदा राजा विचार्य च पुनः पुनः ।
अमोघत्वं च विज्ञाय रेतसो राजसत्तमः ॥ ०४१ ॥

शुक्रप्रस्थापने कालं महिष्याः प्रसमीक्ष्य सः ।
अभिमन्त्र्याथ तच्छुक्रमारात्तिष्ठन्तमाशुगम् ॥ ०४२ ॥

सूक्ष्मधर्मार्थतत्त्वज्ञो ज्ञात्वा श्येनं ततोऽब्रवीत् ॥ ०४२ ॥

मत्प्रियार्थमिदं सौम्य शुक्रं मम गृहं नय ।
गिरिकायाः प्रयच्छाशु तस्या ह्यार्तवमद्य वै ॥ ०४३ ॥

गृहीत्वा तत्तदा श्येनस्तूर्णमुत्पत्य वेगवान् ।
जवं परममास्थाय प्रदुद्राव विहङ्गमः ॥ ०४४ ॥

तमपश्यदथायान्तं श्येनं श्येनस्तथापरः ।
अभ्यद्रवच्च तं सद्यो दृष्ट्वैवामिषशङ्कया ॥ ०४५ ॥

तुण्डयुद्धमथाकाशे तावुभौ संप्रचक्रतुः ।
युध्यतोरपतद्रेतस्तच्चापि यमुनाम्भसि ॥ ०४६ ॥

तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सराः ।
मीनभावमनुप्राप्ता बभूव यमुनाचरी ॥ ०४७ ॥

श्येनपादपरिभ्रष्टं तद्वीर्यमथ वासवम् ।
जग्राह तरसोपेत्य साद्रिका मत्स्यरूपिणी ॥ ०४८ ॥

कदाचिदथ मत्सीं तां बबन्धुर्मत्स्यजीविनः ।
मासे च दशमे प्राप्ते तदा भरतसत्तम ॥ ०४९ ॥

उज्जह्रुरुदरात्तस्याः स्त्रीपुमांसं च मानुषम् ॥ ०४९ ॥

आश्चर्यभूतं मत्वा तद्राज्ञस्ते प्रत्यवेदयन् ।
काये मत्स्या इमौ राजन्संभूतौ मानुषाविति ॥ ०५० ॥

तयोः पुमांसं जग्राह राजोपरिचरस्तदा ।
स मत्स्यो नाम राजासीद्धार्मिकः सत्यसङ्गरः ॥ ०५१ ॥

साप्सरा मुक्तशापा च क्षणेन समपद्यत ।
पुरोक्ता या भगवता तिर्यग्योनिगता शुभे ॥ ०५२ ॥

मानुषौ जनयित्वा त्वं शापमोक्षमवाप्स्यसि ॥ ०५२ ॥

ततः सा जनयित्वा तौ विशस्ता मत्स्यघातिना ।
संत्यज्य मत्स्यरूपं सा दिव्यं रूपमवाप्य च ॥ ०५३ ॥

सिद्धर्षिचारणपथं जगामाथ वराप्सराः ॥ ०५३ ॥

या कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी ।
राज्ञा दत्ताथ दाशाय इयं तव भवत्विति ॥ ०५४ ॥

रूपसत्त्वसमायुक्ता सर्वैः समुदिता गुणैः ॥ ०५४ ॥

सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात् ।
आसीन्मत्स्यसगन्धैव कञ्चित्कालं शुचिस्मिता ॥ ०५५ ॥

शुश्रूषार्थं पितुर्नावं तां तु वाहयतीं जले ।
तीर्थयात्रां परिक्रामन्नपश्यद्वै पराशरः ॥ ०५६ ॥

अतीव रूपसंपन्नां सिद्धानामपि काङ्क्षिताम् ।
दृष्ट्वैव च स तां धीमांश्चकमे चारुदर्शनाम् ॥ ०५७ ॥

विद्वांस्तां वासवीं कन्यां कार्यवान्मुनिपुङ्गवः ॥ ०५७ ॥

साब्रवीत्पश्य भगवन्पारावारे ऋषीन्स्थितान् ।
आवयोर्दृश्यतोरेभिः कथं नु स्यात्समागमः ॥ ०५८ ॥

एवं तयोक्तो भगवान्नीहारमसृजत्प्रभुः ।
येन देशः स सर्वस्तु तमोभूत इवाभवत् ॥ ०५९ ॥

दृष्ट्वा सृष्टं तु नीहारं ततस्तं परमर्षिणा ।
विस्मिता चाब्रवीत्कन्या व्रीडिता च मनस्विनी ॥ ०६० ॥

विद्धि मां भगवन्कन्यां सदा पितृवशानुगाम् ।

त्वत्संयोगाच्च दुष्येत कन्याभावो ममानघ ॥ ०६१ ॥

कन्यात्वे दूषिते चापि कथं शक्ष्ये द्विजोत्तम ।
गन्तुं गृहं गृहे चाहं धीमन्न स्थातुमुत्सहे ॥ ०६२ ॥

एतत्सञ्चिन्त्य भगवन्विधत्स्व यदनन्तरम् ॥ ०६२ ॥

एवमुक्तवतीं तां तु प्रीतिमानृषिसत्तमः ।
उवाच मत्प्रियं कृत्वा कन्यैव त्वं भविष्यसि ॥ ०६३ ॥

वृणीष्व च वरं भीरु यं त्वमिच्छसि भामिनि ।
वृथा हि न प्रसादो मे भूतपूर्वः शुचिस्मिते ॥ ०६४ ॥

एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमम् ।
स चास्यै भगवान्प्रादान्मनसः काङ्क्षितं प्रभुः ॥ ०६५ ॥

ततो लब्धवरा प्रीता स्त्रीभावगुणभूषिता ।
जगाम सह संसर्गमृषिणाद्भुतकर्मणा ॥ ०६६ ॥

तेन गन्धवतीत्येव नामास्याः प्रथितं भुवि ।
तस्यास्तु योजनाद्गन्धमाजिघ्रन्ति नरा भुवि ॥ ०६७ ॥

ततो योजनगन्धेति तस्या नाम परिश्रुतम् ।
पराशरोऽपि भगवाञ्जगाम स्वं निवेशनम् ॥ ०६८ ॥

इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमम् ।
पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा ॥ ०६९ ॥

जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ॥ ०६९ ॥

स मातरमुपस्थाय तपस्येव मनो दधे ।

स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ॥ ०७० ॥

एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ।
द्वीपे न्यस्तः स यद्बालस्तस्माद्द्वैपायनोऽभवत् ॥ ०७१ ॥

पादापसारिणं धर्मं विद्वान्स तु युगे युगे ।
आयुः शक्तिं च मर्त्यानां युगानुगमवेक्ष्य च ॥ ०७२ ॥

ब्रह्मणो ब्राह्मणानां च तथानुग्रहकाम्यया ।
विव्यास वेदान्यस्माच्च तस्माद्व्यास इति स्मृतः ॥ ०७३ ॥

वेदानध्यापयामास महाभारतपञ्चमान् ।
सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् ॥ ०७४ ॥

प्रभुर्वरिष्ठो वरदो वैशंपायनमेव च ।
संहितास्तैः पृथक्त्वेन भारतस्य प्रकाशिताः ॥ ०७५ ॥

तथा भीष्मः शांतनवो गङ्गायाममितद्युतिः ।
वसुवीर्यात्समभवन्महावीर्यो महायशाः ॥ ०७६ ॥

शूले प्रोतः पुराणर्षिरचोरश्चोरशङ्कया ।
अणीमाण्डव्य इति वै विख्यातः सुमहायशाः ॥ ०७७ ॥

स धर्ममाहूय पुरा महर्षिरिदमुक्तवान् ।
इषीकया मया बाल्यादेका विद्धा शकुन्तिका ॥ ०७८ ॥

तत्किल्बिषं स्मरे धर्म नान्यत्पापमहं स्मरे ।
तन्मे सहस्रसमितं कस्मान्नेहाजयत्तपः ॥ ०७९ ॥

गरीयान्ब्राह्मणवधः सर्वभूतवधाद्यतः ।
तस्मात्त्वं किल्बिषादस्माच्छूद्रयोनौ जनिष्यसि ॥ ०८० ॥

तेन शापेन धर्मोऽपि शूद्रयोनावजायत ।
विद्वान्विदुररूपेण धार्मी तनुरकिल्बिषी ॥ ०८१ ॥

सञ्जयो मुनिकल्पस्तु जज्ञे सूतो गवल्गणात् ।
सूर्याच्च कुन्तिकन्यायां जज्ञे कर्णो महारथः ॥ ०८२ ॥

सहजं कवचं बिभ्रत्कुण्डलोद्योतिताननः ॥ ०८२ ॥

अनुग्रहार्थं लोकानां विष्णुर्लोकनमस्कृतः ।
वसुदेवात्तु देवक्यां प्रादुर्भूतो महायशाः ॥ ०८३ ॥

अनादिनिधनो देवः स कर्ता जगतः प्रभुः ।
अव्यक्तमक्षरं ब्रह्म प्रधानं निर्गुणात्मकम् ॥ ०८४ ॥

आत्मानमव्ययं चैव प्रकृतिं प्रभवं परम् ।
पुरुषं विश्वकर्माणं सत्त्वयोगं ध्रुवाक्षरम् ॥ ०८५ ॥

अनन्तमचलं देवं हंसं नारायणं प्रभुम् ।
धातारमजरं नित्यं तमाहुः परमव्ययम् ॥ ०८६ ॥

पुरुषः स विभुः कर्ता सर्वभूतपितामहः ।
धर्मसंवर्धनार्थाय प्रजज्ञेऽन्धकवृष्णिषु ॥ ०८७ ॥

अस्त्रज्ञौ तु महावीर्यौ सर्वशास्त्रविशारदौ ।
सात्यकिः कृतवर्मा च नारायणमनुव्रतौ ॥ ०८८ ॥

सत्यकाद्धृदिकाच्चैव जज्ञातेऽस्त्रविशारदौ ॥ ०८८ ॥

भरद्वाजस्य च स्कन्नं द्रोण्यां शुक्रमवर्धत ।
महर्षेरुग्रतपसस्तस्माद्द्रोणो व्यजायत ॥ ०८९ ॥

गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः ।
अश्वत्थाम्नश्च जननी कृपश्चैव महाबलः ॥ ०९० ॥

अश्वत्थामा ततो जज्ञे द्रोणादस्त्रभृतां वरः ॥ ०९० ॥

तथैव धृष्टद्युम्नोऽपि साक्षादग्निसमद्युतिः ।
वैताने कर्मणि तते पावकात्समजायत ॥ ०९१ ॥

वीरो द्रोणविनाशाय धनुषा सह वीर्यवान् ॥ ०९१ ॥

तथैव वेद्यां कृष्णापि जज्ञे तेजस्विनी शुभा ।
विभ्राजमाना वपुषा बिभ्रती रूपमुत्तमम् ॥ ०९२ ॥

प्रह्लादशिष्यो नग्नजित्सुबलश्चाभवत्ततः ।
तस्य प्रजा धर्महन्त्री जज्ञे देवप्रकोपनात् ॥ ०९३ ॥

गान्धारराजपुत्रोऽभूच्छकुनिः सौबलस्तथा ।
दुर्योधनस्य माता च जज्ञातेऽर्थविदावुभौ ॥ ०९४ ॥

कृष्णद्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः ।
क्षेत्रे विचित्रवीर्यस्य पाण्डुश्चैव महाबलः ॥ ०९५ ॥

पाण्डोस्तु जज्ञिरे पञ्च पुत्रा देवसमाः पृथक् ।
द्वयोः स्त्रियोर्गुणज्येष्ठस्तेषामासीद्युधिष्ठिरः ॥ ०९६ ॥

धर्माद्युधिष्ठिरो जज्ञे मारुतात्तु वृकोदरः ।
इन्द्राद्धनञ्जयः श्रीमान्सर्वशस्त्रभृतां वरः ॥ ०९७ ॥

जज्ञाते रूपसंपन्नावश्विभ्यां तु यमावुभौ ।
नकुलः सहदेवश्च गुरुशुश्रूषणे रतौ ॥ ०९८ ॥

तथा पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ।
दुर्योधनप्रभृतयो युयुत्सुः करणस्तथा ॥ ०९९ ॥

अभिमन्युः सुभद्रायामर्जुनादभ्यजायत ।
स्वस्रीयो वासुदेवस्य पौत्रः पाण्डोर्महात्मनः ॥ १०० ॥

पाण्डवेभ्योऽपि पञ्चभ्यः कृष्णायां पञ्च जज्ञिरे ।
कुमारा रूपसंपन्नाः सर्वशस्त्रविशारदाः ॥ १०१ ॥

प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ १०२ ॥

तथैव सहदेवाच्च श्रुतसेनः प्रतापवान् ।
हिडिम्बायां च भीमेन वने जज्ञे घटोत्कचः ॥ १०३ ॥

शिखण्डी द्रुपदाज्जज्ञे कन्या पुत्रत्वमागता ।
यां यक्षः पुरुषं चक्रे स्थूणः प्रियचिकीर्षया ॥ १०४ ॥

कुरूणां विग्रहे तस्मिन्समागच्छन्बहून्यथ ।
राज्ञां शतसहस्राणि योत्स्यमानानि संयुगे ॥ १०५ ॥

तेषामपरिमेयानि नामधेयानि सर्वशः ।
न शक्यं परिसंख्यातुं वर्षाणामयुतैरपि ॥ १०६ ॥

एते तु कीर्तिता मुख्या यैराख्यानमिदं ततम् ॥ १०६ ॥

# अध्याय ०५८

जनमेजय उवाच ॥

य एते कीर्तिता ब्रह्मन्ये चान्ये नानुकीर्तिताः ।
सम्यक्ताञ्श्रोतुमिच्छामि राज्ञश्चान्यान्सुवर्चसः ॥ ००१ ॥

यदर्थमिह संभूता देवकल्पा महारथाः ।
भुवि तन्मे महाभाग सम्यगाख्यातुमर्हसि ॥ ००२ ॥

वैशंपायन उवाच ॥

रहस्यं खल्विदं राजन्देवानामिति नः श्रुतम् ।
तत्तु ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ॥ ००३ ॥

त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा ।
जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे ॥ ००४ ॥

तदा निःक्षत्रिये लोके भार्गवेण कृते सति ।
ब्राह्मणान्क्षत्रिया राजन्गार्भार्थिन्योऽभिचक्रमुः ॥ ००५ ॥

ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः ।
ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा ॥ ००६ ॥

तेभ्यस्तु लेभिरे गर्भान्क्षत्रियास्ताः सहस्रशः ।
ततः सुषुविरे राजन्क्षत्रियान्वीर्यसंमतान् ॥ ००७ ॥

कुमारांश्च कुमारीश्च पुनः क्षत्राभिवृद्धये ॥ ००७ ॥

एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः ।
जातमृध्यत धर्मेण सुदीर्घेणायुषान्वितम् ॥ ००८ ॥

चत्वारोऽपि तदा वर्णा बभूवुर्ब्राह्मणोत्तराः ॥ ००८ ॥

अभ्यगच्छन्नृतौ नारीं न कामान्नानृतौ तथा ।
तथैवान्यानि भूतानि तिर्यग्योनिगतान्यपि ॥ ००९ ॥

ऋतौ दारांश्च गच्छन्ति तदा स्म भरतर्षभ ॥ ००९ ॥

ततोऽवर्धन्त धर्मेण सहस्रशतजीविनः ।
ताः प्रजाः पृथिवीपाल धर्मव्रतपरायणाः ॥ ०१० ॥

आधिभिर्व्याधिभिश्चैव विमुक्ताः सर्वशो नराः ॥ ०१० ॥

अथेमां सागरापाङ्गां गां गजेन्द्रगताखिलाम् ।
अध्यतिष्ठत्पुनः क्षत्रं सशैलवनकाननाम् ॥ ०११ ॥

प्रशासति पुनः क्षत्रे धर्मेणेमां वसुंधराम् ।
ब्राह्मणाद्यास्तदा वर्णा लेभिरे मुदमुत्तमाम् ॥ ०१२ ॥

कामक्रोधोद्भवान्दोषान्निरस्य च नराधिपाः ।
दण्डं दण्ड्येषु धर्मेण प्रणयन्तोऽन्वपालयन् ॥ ०१३ ॥

तथा धर्मपरे क्षत्रे सहस्राक्षः शतक्रतुः ।
स्वादु देशे च काले च ववर्षाप्याययन्प्रजाः ॥ ०१४ ॥

न बाल एव म्रियते तदा कश्चिन्नराधिप ।
न च स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनः ॥ ०१५ ॥

एवमायुष्मतीभिस्तु प्रजाभिर्भरतर्षभ ।
इयं सागरपर्यन्ता समापूर्यत मेदिनी ॥ ०१६ ॥

ईजिरे च महायज्ञैः क्षत्रिया बहुदक्षिणैः ।
साङ्गोपनिषदान्वेदान्विप्राश्चाधीयते तदा ॥ ०१७ ॥

न च विक्रीणते ब्रह्म ब्राह्मणाः स्म तदा नृप ।
न च शूद्रसमाभ्याशे वेदानुच्चारयन्त्युत ॥ ०१८ ॥

कारयन्तः कृषिं गोभिस्तथा वैश्याः क्षिताविह ।
न गामयुञ्जन्त धुरि कृशाङ्गाश्चाप्यजीवयन् ॥ ०१९ ॥

फेनपांश्च तथा वत्सान्न दुहन्ति स्म मानवाः ।
न कूटमानैर्वणिजः पण्यं विक्रीणते तदा ॥ ०२० ॥

कर्माणि च नरव्याघ्र धर्मोपेतानि मानवाः ।
धर्ममेवानुपश्यन्तश्चक्रुर्धर्मपरायणाः ॥ ०२१ ॥

स्वकर्मनिरताश्चासन्सर्वे वर्णा नराधिप ।
एवं तदा नरव्याघ्र धर्मो न ह्रसते क्वचित् ॥ ०२२ ॥

काले गावः प्रसूयन्ते नार्यश्च भरतर्षभ ।
फलन्त्यृतुषु वृक्षाश्च पुष्पाणि च फलानि च ॥ ०२३ ॥

एवं कृतयुगे सम्यग्वर्तमाने तदा नृप ।
आपूर्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशम् ॥ ०२४ ॥

ततः समुदिते लोके मानुषे भरतर्षभ ।
असुरा जज्ञिरे क्षेत्रे राज्ञां मनुजपुङ्गव ॥ ०२५ ॥

आदित्यैर्हि तदा दैत्या बहुशो निर्जिता युधि ।
ऐश्वर्याद्भ्रंशिताश्चापि संबभूवुः क्षिताविह ॥ ०२६ ॥

इह देवत्वमिच्छन्तो मानुषेषु मनस्विनः ।

जज्ञिरे भुवि भूतेषु तेषु तेष्वसुरा विभो ॥ ०२७ ॥

गोष्वश्वेषु च राजेन्द्र खरोष्ट्रमहिषेषु च ।
क्रव्यादेषु च भूतेषु गजेषु च मृगेषु च ॥ ०२८ ॥

जातैरिह महीपाल जायमानैश्च तैर्मही ।
न शशाकात्मनात्मानमियं धारयितुं धरा ॥ ०२९ ॥

अथ जाता महीपालाः केचिद्बलसमन्विताः ।
दितेः पुत्रा दनोश्चैव तस्माल्लोकादिह च्युताः ॥ ०३० ॥

वीर्यवन्तोऽवलिप्तास्ते नानारूपधरा महीम् ।
इमां सागरपर्यन्तां परीयुररिमर्दनाः ॥ ०३१ ॥

ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्चैवाप्यपीडयन् ।
अन्यानि चैव भूतानि पीडयामासुरोजसा ॥ ०३२ ॥

त्रासयन्तो विनिघ्नन्तस्तांस्तान्भूतगणांश्च ते ।
विचेरुः सर्वतो राजन्महीं शतसहस्रशः ॥ ०३३ ॥

आश्रमस्थान्महर्षींश्च धर्षयन्तस्ततस्ततः ।
अब्रह्मण्या वीर्यमदा मत्ता मदबलेन च ॥ ०३४ ॥

एवं वीर्यबलोत्सिक्तैर्भूरियं तैर्महासुरैः ।
पीड्यमाना महीपाल ब्रह्माणमुपचक्रमे ॥ ०३५ ॥

न हीमां पवनो राजन्न नागा न नगा महीम् ।
तदा धारयितुं शेकुराक्रान्तां दानवैर्बलात् ॥ ०३६ ॥

ततो मही महीपाल भारार्ता भयपीडिता ।
जगाम शरणं देवं सर्वभूतपितामहम् ॥ ०३७ ॥

सा संवृतं महाभागैर्देवद्विजमहर्षिभिः ।
ददर्श देवं ब्रह्माणं लोककर्तारमव्ययम् ॥ ०३८ ॥

गन्धर्वैरप्सरोभिश्च बन्दिकर्मसु निष्ठितैः ।
वन्द्यमानं मुदोपेतैर्ववन्दे चैनमेत्य सा ॥ ०३९ ॥

अथ विज्ञापयामास भूमिस्तं शरणार्थिनी ।
संनिधौ लोकपालानां सर्वेषामेव भारत ॥ ०४० ॥

तत्प्रधानात्मनस्तस्य भूमेः कृत्यं स्वयंभुवः ।
पूर्वमेवाभवद्राजन्विदितं परमेष्ठिनः ॥ ०४१ ॥

स्रष्टा हि जगतः कस्मान्न संबुध्येत भारत ।
सुरासुराणां लोकानामशेषेण मनोगतम् ॥ ०४२ ॥

तमुवाच महाराज भूमिं भूमिपतिर्विभुः ।
प्रभवः सर्वभूतानामीशः शंभुः प्रजापतिः ॥ ०४३ ॥

यदर्थमसि संप्राप्ता मत्सकाशं वसुंधरे ।
तदर्थं संनियोक्ष्यामि सर्वानेव दिवौकसः ॥ ०४४ ॥

इत्युक्त्वा स महीं देवो ब्रह्मा राजन्विसृज्य च ।
आदिदेश तदा सर्वान्विबुधान्भूतकृत्स्वयम् ॥ ०४५ ॥

अस्या भूमेर्निरसितुं भारं भागैः पृथक्पृथक् ।
अस्यामेव प्रसूयध्वं विरोधायेति चाब्रवीत् ॥ ०४६ ॥

तथैव च समानीय गन्धर्वाप्सरसां गणान् ।
उवाच भगवान्सर्वानिदं वचनमुत्तमम् ॥ ०४७ ॥

स्वैरंशैः संप्रसूयध्वं यथेष्टं मानुषेष्विति ॥ ०४७ ॥

अथ शक्रादयः सर्वे श्रुत्वा सुरगुरोर्वचः ।
तथ्यमर्थ्यं च पथ्यं च तस्य ते जगृहुस्तदा ॥ ०४८ ॥

अथ ते सर्वशोंऽशैः स्वैर्गन्तुं भूमिं कृतक्षणाः ।
नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः ॥ ०४९ ॥

यः स चक्रगदापाणिः पीतवासासितप्रभः ।
पद्मनाभः सुरारिघ्नः पृथुचार्वञ्चितेक्षणः ॥ ०५० ॥

तं भुवः शोधनायेन्द्र उवाच पुरुषोत्तमम् ।
अंशेनावतरस्वेति तथेत्याह च तं हरिः ॥ ०५१ ॥

---

# अध्याय ०५९

वैशंपायन उवाच ॥

अथ नारायणेनेन्द्रश्चकार सह संविदम् ।
अवतर्तुं महीं स्वर्गादंशतः सहितः सुरैः ॥ ००१ ॥

आदिश्य च स्वयं शक्रः सर्वानेव दिवौकसः ।
निर्जगाम पुनस्तस्मात्क्षयान्नारायणस्य ह ॥ ००२ ॥

तेऽमरारिविनाशाय सर्वलोकहिताय च ।
अवतेरुः क्रमेणेमां महीं स्वर्गाद्दिवौकसः ॥ ००३ ॥

ततो ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च ।

जज्ञिरे राजशार्दूल यथाकामं दिवौकसः ॥ ००४ ॥

दानवान्राक्षसांश्चैव गन्धर्वान्पन्नगांस्तथा ।
पुरुषादानि चान्यानि जघ्नुः सत्त्वान्यनेकशः ॥ ००५ ॥

दानवा राक्षसाश्चैव गन्धर्वाः पन्नगास्तथा ।
न तान्बलस्थान्बाल्येऽपि जघ्नुर्भरतसत्तम ॥ ००६ ॥

जनमेजय उवाच ॥

देवदानवसंघानां गन्धर्वाप्सरसां तथा ।
मानवानां च सर्वेषां तथा वै यक्षरक्षसाम् ॥ ००७ ॥

श्रोतुमिच्छामि तत्त्वेन संभवं कृत्स्नमादितः ।
प्राणिनां चैव सर्वेषां सर्वशः सर्वविद्ध्यसि ॥ ००८ ॥

वैशंपायन उवाच ॥

हन्त ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ।
सुरादीनामहं सम्यग्लोकानां प्रभवाप्ययम् ॥ ००९ ॥

ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ ०१० ॥

मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः ।
प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ॥ ०११ ॥

अदितिर्दितिर्दनुः काला अनायुः सिंहिका मुनिः ।
क्रोधा प्रावा अरिष्टा च विनता कपिला तथा ॥ ०१२ ॥

कद्रूश्च मनुजव्याघ्र दक्षकन्यैव भारत ।

एतासां वीर्यसंपन्नं पुत्रपौत्रमनन्तकम् ॥ ०१३ ॥

अदित्यां द्वादशादित्याः संभूता भुवनेश्वराः ।
ये राजन्नामतस्तांस्ते कीर्तयिष्यामि भारत ॥ ०१४ ॥

धाता मित्रोऽर्यमा शक्रो वरुणश्चांश एव च ।
भगो विवस्वान्पूषा च सविता दशमस्तथा ॥ ०१५ ॥

एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ।
जघन्यजः स सर्वेषामादित्यानां गुणाधिकः ॥ ०१६ ॥

एक एव दितेः पुत्रो हिरण्यकशिपुः स्मृतः ।
नाम्ना ख्यातास्तु तस्येमे पुत्राः पञ्च महात्मनः ॥ ०१७ ॥

प्रह्लादः पूर्वजस्तेषां संह्लादस्तदनन्तरम् ।
अनुह्लादस्तृतीयोऽभूत्तस्माच्च शिबिबाष्कलौ ॥ ०१८ ॥

प्रह्लादस्य त्रयः पुत्राः ख्याताः सर्वत्र भारत ।
विरोचनश्च कुम्भश्च निकुम्भश्चेति विश्रुताः ॥ ०१९ ॥

विरोचनस्य पुत्रोऽभूद्बलिरेकः प्रतापवान् ।
बलेश्च प्रथितः पुत्रो बाणो नाम महासुरः ॥ ०२० ॥

चत्वारिंशद्दनोः पुत्राः ख्याताः सर्वत्र भारत ।
तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः ॥ ०२१ ॥

शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः ।
असिलोमा च केशी च दुर्जयश्चैव दानवः ॥ ०२२ ॥

अयःशिरा अश्वशिरा अयःशङ्कुश्च वीर्यवान् ।
तथा गगनमूर्धा च वेगवान्केतुमांश्च यः ॥ ०२३ ॥

स्वर्भानुरश्वोऽश्वपतिर्वृषपर्वाजकस्तथा ।
अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महासुरः ॥ ०२४ ॥

इसृपा एकचक्रश्च विरूपाक्षो हराहरौ ।
निचन्द्रश्च निकुम्भश्च कुपथः कापथस्तथा ॥ ०२५ ॥

शरभः शलभश्चैव सूर्याचन्द्रमसौ तथा ।
इति ख्याता दनोर्वंशे दानवाः परिकीर्तिताः ॥ ०२६ ॥

अन्यौ तु खलु देवानां सूर्याचन्द्रमसौ स्मृतौ ॥ ०२६ ॥

इमे च वंशे प्रथिताः सत्त्ववन्तो महाबलाः ।
दनुपुत्रा महाराज दश दानवपुङ्गवाः ॥ ०२७ ॥

एकाक्षो मृतपा वीरः प्रलम्बनरकावपि ।
वातापिः शत्रुतपनः शठश्चैव महासुरः ॥ ०२८ ॥

गविष्ठश्च दनायुश्च दीर्घजिह्वश्च दानवः ।
असंख्येयाः स्मृतास्तेषां पुत्राः पौत्राश्च भारत ॥ ०२९ ॥

सिंहिका सुषुवे पुत्रं राहुं चन्द्रार्कमर्दनम् ।
सुचन्द्रं चन्द्रहन्तारं तथा चन्द्रविमर्दनम् ॥ ०३० ॥

क्रूरस्वभावं क्रूरायाः पुत्रपौत्रमनन्तकम् ।
गणः क्रोधवशो नाम क्रूरकर्मारिमर्दनः ॥ ०३१ ॥

अनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः ।
विक्षरो बलवीरौ च वृत्रश्चैव महासुरः ॥ ०३२ ॥

कालायाः प्रथिताः पुत्राः कालकल्पाः प्रहारिणः ।

भुवि ख्याता महावीर्या दानवेषु परंतपाः ॥ ०३३ ॥

विनाशनश्च क्रोधश्च हन्ता क्रोधस्य चापरः ।
क्रोधशत्रुस्तथैवान्यः कालेया इति विश्रुताः ॥ ०३४ ॥

असुराणामुपाध्यायः शुक्रस्त्वृषिसुतोऽभवत् ।
ख्याताश्चोशनसः पुत्राश्चत्वारोऽसुरयाजकाः ॥ ०३५ ॥

त्वष्टावरस्तथात्रिश्च द्वावन्यौ मन्त्रकर्मिणौ ।
तेजसा सूर्यसङ्काशा ब्रह्मलोकप्रभावनाः ॥ ०३६ ॥

इत्येष वंशप्रभवः कथितस्ते तरस्विनाम् ।
असुराणां सुराणां च पुराणे संश्रुतो मया ॥ ०३७ ॥

एतेषां यदपत्यं तु न शक्यं तदशेषतः ।
प्रसंख्यातुं महीपाल गुणभूतमनन्तकम् ॥ ०३८ ॥

तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुडारुणौ ।
आरुणिर्वारुणिश्चैव वैनतेया इति स्मृताः ॥ ०३९ ॥

शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजङ्गमः ।
कूर्मश्च कुलिकश्चैव काद्रवेया महाबलाः ॥ ०४० ॥

भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा ।
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः ॥ ०४१ ॥

पत्रवानर्कपर्णश्च प्रयुतश्चैव विश्रुतः ।
भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी ॥ ०४२ ॥

तथा शालिशिरा राजन्प्रद्युम्नश्च चतुर्दशः ।
कलिः पञ्चदशश्चैव नारदश्चैव षोडशः ॥ ०४३ ॥

इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ॥ ०४३ ॥

अतस्तु भूतान्यन्यानि कीर्तयिष्यामि भारत ।
अनवद्यामनुवशामनूनामरुणां प्रियाम् ॥ ०४४ ॥

अनूपां सुभगां भासीमिति प्रावा व्यजायत ॥ ०४४ ॥

सिद्धः पूर्णश्च बर्ही च पूर्णाशश्च महायशाः ।
ब्रह्मचारी रतिगुणः सुपर्णश्चैव सप्तमः ॥ ०४५ ॥

विश्वावसुश्च भानुश्च सुचन्द्रो दशमस्तथा ।
इत्येते देवगन्धर्वाः प्रावेयाः परिकीर्तिताः ॥ ०४६ ॥

इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणम् ।
प्रावासूत महाभागा देवी देवर्षितः पुरा ॥ ०४७ ॥

अलम्बुसा मिश्रकेषी विद्युत्पर्णा तुलानघा ।
अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा ॥ ०४८ ॥

असिता च सुबाहुश्च सुव्रता सुभुजा तथा ।
सुप्रिया चातिबाहुश्च विख्यातौ च हहाहुहू ॥ ०४९ ॥

तुम्बुरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः ॥ ०४९ ॥

अमृतं ब्राह्मणा गावो गन्धर्वाप्सरसस्तथा ।
अपत्यं कपिलायास्तु पुराणे परिकीर्तितम् ॥ ०५० ॥

इति ते सर्वभूतानां संभवः कथितो मया ।
यथावत्परिसंख्यातो गन्धर्वाप्सरसां तथा ॥ ०५१ ॥

भुजगानां सुपर्णानां रुद्राणां मरुतां तथा ।
गवां च ब्राह्मणानां च श्रीमतां पुण्यकर्मणाम् ॥ ०५२ ॥

आयुष्यश्चैव पुण्यश्च धन्यः श्रुतिसुखावहः ।
श्रोतव्यश्चैव सततं श्राव्यश्चैवानसूयता ॥ ०५३ ॥

इमं तु वंशं नियमेन यः पठे ;न्महात्मनां ब्राह्मणदेवसंनिधौ ।
अपत्यलाभं लभते स पुष्कलं ; श्रियं यशः प्रेत्य च शोभनां गतिम् ॥ ०५४ ॥

---

# अध्याय ०६०

वैशंपायन उवाच ॥

ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।
एकादश सुताः स्थाणोः ख्याताः परममानसाः ॥ ००१ ॥

मृगव्याधश्च शर्वश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परंतपः ॥ ००२ ॥

दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः ।
स्थाणुर्भवश्च भगवान्रुद्रा एकादश स्मृताः ॥ ००३ ॥

मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ।
षडेते ब्रह्मणः पुत्रा वीर्यवन्तो महर्षयः ॥ ००४ ॥

त्रयस्त्वङ्गिरसः पुत्रा लोके सर्वत्र विश्रुताः ।
बृहस्पतिरुतथ्यश्च संवर्तश्च धृतव्रताः ॥ ००५ ॥

अत्रेस्तु बहवः पुत्राः श्रूयन्ते मनुजाधिप ।
सर्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः ॥ ००६ ॥

राक्षसास्तु पुलस्त्यस्य वानराः किंनरास्तथा ।
पुलहस्य मृगाः सिंहा व्याघ्राः किंपुरुषास्तथा ॥ ००७ ॥

क्रतोः क्रतुसमाः पुत्राः पतङ्गसहचारिणः ।
विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः ॥ ००८ ॥

दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवानृषिः ।
ब्रह्मणः पृथिवीपाल पुत्रः पुत्रवतां वरः ॥ ००९ ॥

वामादजायताङ्गुष्ठाद्भार्या तस्य महात्मनः ।
तस्यां पञ्चाशतं कन्याः स एवाजनयन्मुनिः ॥ ०१० ॥

ताः सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः ।
पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजापतिः ॥ ०११ ॥

ददौ स दश धर्माय सप्तविंशतिमिन्दवे ।
दिव्येन विधिना राजन्कश्यपाय त्रयोदश ॥ ०१२ ॥

नामतो धर्मपत्न्यस्ताः कीर्त्यमाना निबोध मे ।
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा ॥ ०१३ ॥

बुद्धिर्लज्जा मतिश्चैव पत्न्यो धर्मस्य ता दश ।
द्वाराण्येतानि धर्मस्य विहितानि स्वयंभुवा ॥ ०१४ ॥

सप्तविंशति सोमस्य पत्न्यो लोके परिश्रुताः ।
कालस्य नयने युक्ताः सोमपत्न्यः शुभव्रताः ॥ ०१५ ॥

सर्वा नक्षत्रयोगिन्यो लोकयात्राविधौ स्थिताः ॥ ०१५ ॥

पितामहो मुनिर्देवस्तस्य पुत्रः प्रजापतिः ।
तस्याष्टौ वसवः पुत्रास्तेषां वक्ष्यामि विस्तरम् ॥ ०१६ ॥

धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः ॥ ०१७ ॥

धूम्रायाश्च धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा ।
चन्द्रमास्तु मनस्विन्याः श्वसायाः श्वसनस्तथा ॥ ०१८ ॥

रतायाश्चाप्यहः पुत्रः शाण्डिल्याश्च हुताशनः ।
प्रत्यूषश्च प्रभासश्च प्रभातायाः सुतौ स्मृतौ ॥ ०१९ ॥

धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा ।
ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः ॥ ०२० ॥

सोमस्य तु सुतो वर्चा वर्चस्वी येन जायते ।
मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा ॥ ०२१ ॥

अह्नः सुतः स्मृतो ज्योतिः श्रमः शान्तस्तथा मुनिः ।
अग्नेः पुत्रः कुमारस्तु श्रीमाञ्शरवणालयः ॥ ०२२ ॥

तस्य शाखो विशाखश्च नैगमेशश्च पृष्ठजः ।
कृत्तिकाभ्युपपत्तेश्च कार्त्तिकेय इति स्मृतः ॥ ०२३ ॥

अनिलस्य शिवा भार्या तस्याः पुत्रः पुरोजवः ।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ॥ ०२४ ॥

प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाथ देवलम् ।
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ॥ ०२५ ॥

बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी ।
योगसिद्धा जगत्सर्वमसक्तं विचरत्युत ॥ ०२६ ॥

प्रभासस्य तु भार्या सा वसूनामष्टमस्य ह ॥ ०२६ ॥

विश्वकर्मा महाभागो जज्ञे शिल्पप्रजापतिः ।
कर्ता शिल्पसहस्राणां त्रिदशानां च वर्धकिः ॥ ०२७ ॥

भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः ।
यो दिव्यानि विमानानि देवतानां चकार ह ॥ ०२८ ॥

मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः ।
पूजयन्ति च यं नित्यं विश्वकर्माणमव्ययम् ॥ ०२९ ॥

स्तनं तु दक्षिणं भित्त्वा ब्रह्मणो नरविग्रहः ।
निःसृतो भगवान्धर्मः सर्वलोकसुखावहः ॥ ०३० ॥

त्रयस्तस्य वराः पुत्राः सर्वभूतमनोहराः ।
शमः कामश्च हर्षश्च तेजसा लोकधारिणः ॥ ०३१ ॥

कामस्य तु रतिर्भार्या शमस्य प्राप्तिरङ्गना ।
नन्दी तु भार्या हर्षस्य यत्र लोकाः प्रतिष्ठिताः ॥ ०३२ ॥

मरीचेः कश्यपः पुत्रः कश्यपस्य सुरासुराः ।
जज्ञिरे नृपशार्दूल लोकानां प्रभवस्तु सः ॥ ०३३ ॥

त्वाष्ट्री तु सवितुर्भार्या वडवारूपधारिणी ।
असूयत महाभागा सान्तरिक्षेऽश्विनावुभौ ॥ ०३४ ॥

द्वादशैवादितेः पुत्राः शक्रमुख्या नराधिप ।

तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिताः ॥ ०३५ ॥

त्रयस्त्रिंशत इत्येते देवास्तेषामहं तव ।
अन्वयं संप्रवक्ष्यामि पक्षैश्च कुलतो गणान् ॥ ०३६ ॥

रुद्राणामपरः पक्षः साध्यानां मरुतां तथा ।
वसूनां भार्गवं विद्याद्विश्वेदेवांस्तथैव च ॥ ०३७ ॥

वैनतेयस्तु गरुडो बलवानरुणस्तथा ।
बृहस्पतिश्च भगवानादित्येष्वेव गण्यते ॥ ०३८ ॥

अश्विभ्यां गुह्यकान्विद्धि सर्वौषध्यस्तथा पशून् ।
एष देवगणो राजन्कीर्तितस्तेऽनुपूर्वशः ॥ ०३९ ॥

यं कीर्तयित्वा मनुजः सर्वपापैः प्रमुच्यते ॥ ०३९ ॥

ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान्भृगुः ।
भृगोः पुत्रः कविर्विद्वाञ्शुक्रः कविसुतो ग्रहः ॥ ०४० ॥

त्रैलोक्यप्राणयात्रार्थे वर्षावर्षे भयाभये ।
स्वयंभुवा नियुक्तः सन्भुवनं परिधावति ॥ ०४१ ॥

योगाचार्यो महाबुद्धिर्दैत्यानामभवद्गुरुः ।
सुराणां चापि मेधावी ब्रह्मचारी यतव्रतः ॥ ०४२ ॥

तस्मिन्नियुक्ते विभुना योगक्षेमाय भार्गवे ।
अन्यमुत्पादयामास पुत्रं भृगुरनिन्दितम् ॥ ०४३ ॥

च्यवनं दीप्ततपसं धर्मात्मानं मनीषिणम् ।
यः स रोषाच्च्युतो गर्भान्मातुर्मोक्षाय भारत ॥ ०४४ ॥

आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः ।
और्वस्तस्यां समभवदूरुं भित्त्वा महायशाः ॥ ०४५ ॥

महातपा महातेजा बाल एव गुणैर्युतः ॥ ०४५ ॥

ऋचीकस्तस्य पुत्रस्तु जमदग्निस्ततोऽभवत् ।
जमदग्नेस्तु चत्वार आसन्पुत्रा महात्मनः ॥ ०४६ ॥

रामस्तेषां जघन्योऽभूदजघन्यैर्गुणैर्युतः ।
सर्वशस्त्रास्त्रकुशलः क्षत्रियान्तकरो वशी ॥ ०४७ ॥

और्वस्यासीत्पुत्रशतं जमदग्निपुरोगमम् ।
तेषां पुत्रसहस्राणि बभूवुर्भृगुविस्तरः ॥ ०४८ ॥

द्वौ पुत्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणम् ।
लोके धाता विधाता च यौ स्थितौ मनुना सह ॥ ०४९ ॥

तयोरेव स्वसा देवी लक्ष्मीः पद्मगृहा शुभा ।
तस्यास्तु मानसाः पुत्रास्तुरगा व्योमचारिणः ॥ ०५० ॥

वरुणस्य भार्या ज्येष्ठा तु शुक्राद्देवी व्यजायत ।
तस्याः पुत्रं बलं विद्धि सुरां च सुरनन्दिनीम् ॥ ०५१ ॥

प्रजानामन्नकामानामन्योन्यपरिभक्षणात् ।
अधर्मस्तत्र सञ्जातः सर्वभूतविनाशनः ॥ ०५२ ॥

तस्यापि निर्ऋतिर्भार्या नैर्ऋता येन राक्षसाः ।
घोरास्तस्यास्त्रयः पुत्राः पापकर्मरताः सदा ॥ ०५३ ॥

भयो महाभयश्चैव मृत्युर्भूतान्तकस्तथा ॥ ०५३ ॥

काकीं श्येनीं च भासीं च धृतराष्ट्रीं तथा शुकीम् ।
ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुताः ॥ ०५४ ॥

उलूकान्सुषुवे काकी श्येनी श्येनान्व्यजायत ।
भासी भासानजनयद्गृध्रांश्चैव जनाधिप ॥ ०५५ ॥

धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ।
चक्रवाकांश्च भद्रं ते प्रजज्ञे सा तु भामिनी ॥ ०५६ ॥

शुकी विजज्ञे धर्मज्ञ शुकानेव मनस्विनी ।
कल्याणगुणसंपन्ना सर्वलक्षणपूजिता ॥ ०५७ ॥

नव क्रोधवशा नारीः प्रजज्ञेऽप्यात्मसंभवाः ।
मृगीं च मृगमन्दां च हरिं भद्रमनामपि ॥ ०५८ ॥

मातङ्गीमथ शार्दूलीं श्वेतां सुरभिमेव च ।
सर्वलक्षणसंपन्नां सुरसां च यशस्विनीम् ॥ ०५९ ॥

अपत्यं तु मृगाः सर्वे मृग्या नरवरात्मज ।
ऋक्षाश्च मृगमन्दायाः सृमराश्चमरा अपि ॥ ०६० ॥

ततस्त्वैरावतं नागं जज्ञे भद्रमना सुतम् ।
ऐरावतः सुतस्तस्या देवनागो महागजः ॥ ०६१ ॥

हर्याश्च हरयोऽपत्यं वानराश्च तरस्विनः ।
गोलाङ्गूलांश्च भद्रं ते हर्याः पुत्रान्प्रचक्षते ॥ ०६२ ॥

प्रजज्ञे त्वथ शार्दूली सिंहान्व्याघ्रांश्च भारत ।
द्वीपिनश्च महाभाग सर्वानेव न संशयः ॥ ०६३ ॥

मातङ्ग्यास्त्वथ मातङ्गा अपत्यानि नराधिप ।

दिशागजं तु श्वेताख्यं श्वेताजनयदाशुगम् ॥ ०६४ ॥

तथा दुहितरौ राजन्सुरभिर्वै व्यजायत ।
रोहिणीं चैव भद्रं ते गन्धर्वीं च यशस्विनीम् ॥ ०६५ ॥

रोहिण्यां जज्ञिरे गावो गन्धर्व्यां वाजिनः सुताः ॥ ०६५ ॥

सुरसाजनयन्नागात्राजन्कद्रूश्च पन्नगान् ।
सप्त पिण्डफलान्वृक्षाननलापि व्यजायत ॥ ०६६ ॥

अनलायाः शुकी पुत्री कद्र्वास्तु सुरसा सुता ॥ ०६६ ॥

अरुणस्य भार्या श्येनी तु वीर्यवन्तौ महाबलौ ।
संपातिं जनयामास तथैव च जटायुषम् ॥ ०६७ ॥

द्वौ पुत्रौ विनतायास्तु विख्यातौ गरुडारुणौ ॥ ०६७ ॥

इत्येष सर्वभूतानां महतां मनुजाधिप ।
प्रभवः कीर्तितः सम्यङ्मया मतिमतां वर ॥ ०६८ ॥

यं श्रुत्वा पुरुषः सम्यक्पूतो भवति पाप्मनः ।
सर्वज्ञतां च लभते गतिमग्र्यां च विन्दति ॥ ०६९ ॥

---

# अध्याय ०६१

जनमेजय उवाच ॥

देवानां दानवानां च यक्षाणामथ रक्षसाम् ।
अन्येषां चैव भूतानां सर्वेषां भगवन्नहम् ॥ ००१ ॥

श्रोतुमिच्छामि तत्त्वेन मानुषेषु महात्मनाम् ।
जन्म कर्म च भूतानामेतेषामनुपूर्वशः ॥ ००२ ॥

वैशंपायन उवाच ॥

मानुषेषु मनुष्येन्द्र संभूता ये दिवौकसः ।
प्रथमं दानवांश्चैव तांस्ते वक्ष्यामि सर्वशः ॥ ००३ ॥

विप्रचित्तिरिति ख्यातो य आसीद्दानवर्षभः ।
जरासंध इति ख्यातः स आसीन्मनुजर्षभः ॥ ००४ ॥

दितेः पुत्रस्तु यो राजन्हिरण्यकशिपुः स्मृतः ।
स जज्ञे मानुषे लोके शिशुपालो नरर्षभः ॥ ००५ ॥

संह्राद इति विख्यातः प्रह्रादस्यानुजस्तु यः ।
स शल्य इति विख्यातो जज्ञे बाह्लीकपुङ्गवः ॥ ००६ ॥

अनुह्रादस्तु तेजस्वी योऽभूत्ख्यातो जघन्यजः ।
धृष्टकेतुरिति ख्यातः स आसीन्मनुजेश्वरः ॥ ००७ ॥

यस्तु राजञ्शिबिर्नाम दैतेयः परिकीर्तितः ।
द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः ॥ ००८ ॥

बाष्कलो नाम यस्तेषामासीदसुरसत्तमः ।
भगदत्त इति ख्यातः स आसीन्मनुजेश्वरः ॥ ००९ ॥

अयःशिरा अश्वशिरा अयःशङ्कुश्च वीर्यवान् ।
तथा गगनमूर्धा च वेगवांश्चात्र पञ्चमः ॥ ०१० ॥

पञ्चैते जज्ञिरे राजन्वीर्यवन्तो महासुराः ।
केकयेषु महात्मानः पार्थिवर्षभसत्तमाः ॥ ०११ ॥

केतुमानिति विख्यातो यस्ततोऽन्यः प्रतापवान् ।
अमितौजा इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ ०१२ ॥

स्वर्भानुरिति विख्यातः श्रीमान्यस्तु महासुरः ।
उग्रसेन इति ख्यात उग्रकर्मा नराधिपः ॥ ०१३ ॥

यस्त्वश्व इति विख्यातः श्रीमानासीन्महासुरः ।
अशोको नाम राजासीन्महावीर्यपराक्रमः ॥ ०१४ ॥

तस्मादवरजो यस्तु राजन्नश्वपतिः स्मृतः ।
दैतेयः सोऽभवद्राजा हार्दिक्यो मनुजर्षभः ॥ ०१५ ॥

वृषपर्वेति विख्यातः श्रीमान्यस्तु महासुरः ।
दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ ०१६ ॥

अजकस्त्वनुजो राजन्य आसीद्वृषपर्वणः ।
स मल्ल इति विख्यातः पृथिव्यामभवन्नृपः ॥ ०१७ ॥

अश्वग्रीव इति ख्यातः सत्त्ववान्यो महासुरः ।
रोचमान इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ ०१८ ॥

सूक्ष्मस्तु मतिमान्राजन्कीर्तिमान्यः प्रकीर्तितः ।
बृहन्त इति विख्यातः क्षितावासीत्स पार्थिवः ॥ ०१९ ॥

तुहुण्ड इति विख्यातो य आसीदसुरोत्तमः ।
सेनाबिन्दुरिति ख्यातः स बभूव नराधिपः ॥ ०२० ॥

इसृपा नाम यस्तेषामसुराणां बलाधिकः ।
पापजिन्नाम राजासीद्भुवि विख्यातविक्रमः ॥ ०२१ ॥

एकचक्र इति ख्यात आसीद्यस्तु महासुरः ।
प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ ॥ ०२२ ॥

विरूपाक्षस्तु दैतेयश्चित्रयोधी महासुरः ।
चित्रवर्मेति विख्यातः क्षितावासीत्स पार्थिवः ॥ ०२३ ॥

हरस्त्वरिहरो वीर आसीद्यो दानवोत्तमः ।
सुवास्तुरिति विख्यातः स जज्ञे मनुजर्षभः ॥ ०२४ ॥

अहरस्तु महातेजाः शत्रुपक्षक्षयङ्करः ।
बाह्लीको नाम राजा स बभूव प्रथितः क्षितौ ॥ ०२५ ॥

निचन्द्रश्चन्द्रवक्त्रश्च य आसीदसुरोत्तमः ।
मुञ्जकेश इति ख्यातः श्रीमानासीत्स पार्थिवः ॥ ०२६ ॥

निकुम्भस्त्वजितः संख्ये महामतिरजायत ।
भूमौ भूमिपतिः श्रेष्ठो देवाधिप इति स्मृतः ॥ ०२७ ॥

शरभो नाम यस्तेषां दैतेयानां महासुरः ।
पौरवो नाम राजर्षिः स बभूव नरेष्विह ॥ ०२८ ॥

द्वितीयः शलभस्तेषामसुराणां बभूव यः ।
प्रह्लादो नाम बाह्लीकः स बभूव नराधिपः ॥ ०२९ ॥

चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपोपमः ।
ऋषिको नाम राजर्षिर्बभूव नृपसत्तमः ॥ ०३० ॥

मृतपा इति विख्यातो य आसीदसुरोत्तमः ।

पश्चिमानूपकं विद्धि तं नृपं नृपसत्तम ॥ ०३१ ॥

गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः ।
द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ ०३२ ॥

मयूर इति विख्यातः श्रीमान्यस्तु महासुरः ।
स विश्व इति विख्यातो बभूव पृथिवीपतिः ॥ ०३३ ॥

सुपर्ण इति विख्यातस्तस्मादवरजस्तु यः ।
कालकीर्तिरिति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ ०३४ ॥

चन्द्रहन्तेति यस्तेषां कीर्तितः प्रवरोऽसुरः ।
शुनको नाम राजर्षिः स बभूव नराधिपः ॥ ०३५ ॥

विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः ।
जानकिर्नाम राजर्षिः स बभूव नराधिपः ॥ ०३६ ॥

दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभः ।
काशिराज इति ख्यातः पृथिव्यां पृथिवीपतिः ॥ ०३७ ॥

ग्रहं तु सुषुवे यं तं सिंही चन्द्रार्कमर्दनम् ।
क्राथ इत्यभिविख्यातः सोऽभवन्मनुजाधिपः ॥ ०३८ ॥

अनायुषस्तु पुत्राणां चतुर्णां प्रवरोऽसुरः ।
विक्षरो नाम तेजस्वी वसुमित्रोऽभवन्नृपः ॥ ०३९ ॥

द्वितीयो विक्षराद्यस्तु नराधिप महासुरः ।
पांसुराष्ट्राधिप इति विश्रुतः सोऽभवन्नृपः ॥ ०४० ॥

बलवीर इति ख्यातो यस्त्वासीदसुरोत्तमः ।
पौण्ड्रमत्स्यक इत्येव स बभूव नराधिपः ॥ ०४१ ॥

वृत्र इत्यभिविख्यातो यस्तु राजन्महासुरः ।
मणिमान्नाम राजर्षिः स बभूव नराधिपः ॥ ०४२ ॥

क्रोधहन्तेति यस्तस्य बभूवावरजोऽसुरः ।
दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ ॥ ०४३ ॥

क्रोधवर्धन इत्येव यस्त्वन्यः परिकीर्तितः ।
दण्डधार इति ख्यातः सोऽभवन्मनुजेश्वरः ॥ ०४४ ॥

कालकायास्तु ये पुत्रास्तेषामष्टौ नराधिपाः ।
जज्ञिरे राजशार्दूल शार्दूलसमविक्रमाः ॥ ०४५ ॥

मगधेषु जयत्सेनः श्रीमानासीत्स पार्थिवः ।
अष्टानां प्रवरस्तेषां कालेयानां महासुरः ॥ ०४६ ॥

द्वितीयस्तु ततस्तेषां श्रीमान्हरिहयोपमः ।
अपराजित इत्येव स बभूव नराधिपः ॥ ०४७ ॥

तृतीयस्तु महाराज महाबाहुर्महासुरः ।
निषादाधिपतिर्जज्ञे भुवि भीमपराक्रमः ॥ ०४८ ॥

तेषामन्यतमो यस्तु चतुर्थः परिकीर्तितः ।
श्रेणिमानिति विख्यातः क्षितौ राजर्षिसत्तमः ॥ ०४९ ॥

पञ्चमस्तु बभूवैषां प्रवरो यो महासुरः ।
महौजा इति विख्यातो बभूवेह परंतपः ॥ ०५० ॥

षष्ठस्तु मतिमान्यो वै तेषामासीन्महासुरः ।
अभीरुरिति विख्यातः क्षितौ राजर्षिसत्तमः ॥ ०५१ ॥

समुद्रसेनश्च नृपस्तेषामेवाभवद्गणात् ।
विश्रुतः सागरान्तायां क्षितौ धर्मार्थतत्त्ववित् ॥ ०५२ ॥

बृहन्नामाष्टमस्तेषां कालेयानां परंतपः ।
बभूव राजन्धर्मात्मा सर्वभूतहिते रतः ॥ ०५३ ॥

गणः क्रोधवशो नाम यस्ते राजन्प्रकीर्तितः ।
ततः सञ्जज्ञिरे वीराः क्षिताविह नराधिपाः ॥ ०५४ ॥

नन्दिकः कर्णवेष्टश्च सिद्धार्थः कीटकस्तथा ।
सुवीरश्च सुबाहुश्च महावीरोऽथ बाह्लिकः ॥ ०५५ ॥

क्रोधो विचित्यः सुरसः श्रीमान्नीलश्च भूमिपः ।
वीरधामा च कौरव्य भूमिपालश्च नामतः ॥ ०५६ ॥

दन्तवक्रश्च नामासीद्दुर्जयश्चैव नामतः ।
रुक्मी च नृपशार्दूलो राजा च जनमेजयः ॥ ०५७ ॥

आषाढो वायुवेगश्च भूरितेजास्तथैव च ।
एकलव्यः सुमित्रश्च वाटधानोऽथ गोमुखः ॥ ०५८ ॥

कारूषकाश्च राजानः क्षेमधूर्तिस्तथैव च ।
श्रुतायुरुद्धवश्चैव बृहत्सेनस्तथैव च ॥ ०५९ ॥

क्षेमोग्रतीर्थः कुहरः कलिङ्गेषु नराधिपः ।
मतिमांश्च मनुष्येन्द्र ईश्वरश्चेति विश्रुतः ॥ ०६० ॥

गणात्क्रोधवशादेवं राजपूगोऽभवत्क्षितौ ।
जातः पुरा महाराज महाकीर्तिर्महाबलः ॥ ०६१ ॥

यस्त्वासीद्देवको नाम देवराजसमद्युतिः ।

स गन्धर्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः ॥ ०६२ ॥

बृहस्पतेर्बृहत्कीर्तेर्देवर्षेर्विद्धि भारत ।
अंशाद्द्रोणं समुत्पन्नं भारद्वाजमयोनिजम् ॥ ०६३ ॥

धन्विनां नृपशार्दूल यः स सर्वास्त्रवित्तमः ।
बृहत्कीर्तिर्महातेजाः सञ्जज्ञे मनुजेष्विह ॥ ०६४ ॥

धनुर्वेदे च वेदे च यं तं वेदविदो विदुः ।
वरिष्ठमिन्द्रकर्माणं द्रोणं स्वकुलवर्धनम् ॥ ०६५ ॥

महादेवान्तकाभ्यां च कामात्क्रोधाच्च भारत ।
एकत्वमुपपन्नानां जज्ञे शूरः परंतपः ॥ ०६६ ॥

अश्वत्थामा महावीर्यः शत्रुपक्षक्षयङ्करः ।
वीरः कमलपत्राक्षः क्षितावासीन्नराधिप ॥ ०६७ ॥

जज्ञिरे वसवस्त्वष्टौ गङ्गायां शंतनोः सुताः ।
वसिष्ठस्य च शापेन नियोगाद्वासवस्य च ॥ ०६८ ॥

तेषामवरजो भीष्मः कुरूणामभयङ्करः ।
मतिमान्वेदविद्वाग्मी शत्रुपक्षक्षयङ्करः ॥ ०६९ ॥

जामदग्न्येन रामेण यः स सर्वविदां वरः ।
अयुध्यत महातेजा भार्गवेण महात्मना ॥ ०७० ॥

यस्तु राजन्कृपो नाम ब्रह्मर्षिरभवत्क्षितौ ।
रुद्राणां तं गणाद्विद्धि संभूतमतिपौरुषम् ॥ ०७१ ॥

शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः ।
द्वापरं विद्धि तं राजन्संभूतमरिमर्दनम् ॥ ०७२ ॥

सात्यकिः सत्यसंधस्तु योऽसौ वृष्णिकुलोद्वहः ।
पक्षात्स जज्ञे मरुतां देवानामरिमर्दनः ॥ ०७३ ॥

द्रुपदश्चापि राजर्षिस्तत एवाभवद्गणात् ।
मानुषे नृप लोकेऽस्मिन्सर्वशस्त्रभृतां वरः ॥ ०७४ ॥

ततश्च कृतवर्माणं विद्धि राजञ्जनाधिपम् ।
जातमप्रतिकर्माणं क्षत्रियर्षभसत्तमम् ॥ ०७५ ॥

मरुतां तु गणाद्विद्धि सञ्जातमरिमर्दनम् ।
विराटं नाम राजर्षिं परराष्ट्रप्रतापनम् ॥ ०७६ ॥

अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः ।
स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः ॥ ०७७ ॥

धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनादपि ।
दीर्घबाहुर्महातेजाः प्रज्ञाचक्षुर्नराधिपः ॥ ०७८ ॥

मातुर्दोषादृषेः कोपादन्ध एव व्यजायत ॥ ०७८ ॥

अत्रेस्तु सुमहाभागं पुत्रं पुत्रवतां वरम् ।
विदुरं विद्धि लोकेऽस्मिञ्जातं बुद्धिमतां वरम् ॥ ०७९ ॥

कलेरंशात्तु सञ्जज्ञे भुवि दुर्योधनो नृपः ।
दुर्बुद्धिर्दुर्मतिश्चैव कुरूणामयशस्करः ॥ ०८० ॥

जगतो यः स सर्वस्य विद्विष्टः कलिपूरुषः ।
यः सर्वां घातयामास पृथिवीं पुरुषाधमः ॥ ०८१ ॥

येन वैरं समुद्दीप्तं भूतान्तकरणं महत् ॥ ०८१ ॥

पौलस्त्या भ्रातरः सर्वे जज्ञिरे मनुजेष्विह ।
शतं दुःशासनादीनां सर्वेषां क्रूरकर्मणाम् ॥ ०८२ ॥

दुर्मुखो दुःसहश्चैव ये चान्ये नानुशब्दिताः ।
दुर्योधनसहायास्ते पौलस्त्या भरतर्षभ ॥ ०८३ ॥

धर्मस्यांशं तु राजानं विद्धि राजन्युधिष्ठिरम् ।
भीमसेनं तु वातस्य देवराजस्य चार्जुनम् ॥ ०८४ ॥

अश्विनोस्तु तथैवांशौ रूपेणाप्रतिमौ भुवि ।
नकुलः सहदेवश्च सर्वलोकमनोहरौ ॥ ०८५ ॥

यः सुवर्चा इति ख्यातः सोमपुत्रः प्रतापवान् ।
अभिमन्युर्बृहत्कीर्तिरर्जुनस्य सुतोऽभवत् ॥ ०८६ ॥

अग्नेरंशं तु विद्धि त्वं धृष्टद्युम्नं महारथम् ।
शिखण्डिनमथो राजन्स्त्रीपुंसं विद्धि राक्षसम् ॥ ०८७ ॥

द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ ।
विश्वेदेवगणान्राजंस्तान्विद्धि भरतर्षभ ॥ ०८८ ॥

आमुक्तकवचः कर्णो यस्तु जज्ञे महारथः ।
दिवाकरस्य तं विद्धि देवस्यांशमनुत्तमम् ॥ ०८९ ॥

यस्तु नारायणो नाम देवदेवः सनातनः ।
तस्यांशो मानुषेष्वासीद्वासुदेवः प्रतापवान् ॥ ०९० ॥

शेषस्यांशस्तु नागस्य बलदेवो महाबलः ।
सनत्कुमारं प्रद्युम्नं विद्धि राजन्महौजसम् ॥ ०९१ ॥

एवमन्ये मनुष्येन्द्र बहवोंऽशा दिवौकसाम् ।
जज्ञिरे वसुदेवस्य कुले कुलविवर्धनाः ॥ ०९२ ॥

गणस्त्वप्सरसां यो वै मया राजन्प्रकीर्तितः ।
तस्य भागः क्षितौ जज्ञे नियोगाद्वासवस्य च ॥ ०९३ ॥

तानि षोडश देवीनां सहस्राणि नराधिप ।
बभूवुर्मानुषे लोके नारायणपरिग्रहः ॥ ०९४ ॥

श्रियस्तु भागः सञ्जज्ञे रत्यर्थं पृथिवीतले ।
द्रुपदस्य कुले कन्या वेदिमध्यादनिन्दिता ॥ ०९५ ॥

नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी ।
पद्मायताक्षी सुश्रोणी असितायतमूर्धजा ॥ ०९६ ॥

सर्वलक्षणसंपन्ना वैडूर्यमणिसंनिभा ।
पञ्चानां पुरुषेन्द्राणां चित्तप्रमथिनी रहः ॥ ०९७ ॥

सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते ।
कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा ॥ ०९८ ॥

इति देवासुराणां ते गन्धर्वाप्सरसां तथा ।
अंशावतरणं राजन्राक्षसानां च कीर्तितम् ॥ ०९९ ॥

ये पृथिव्यां समुद्भूता राजानो युद्धदुर्मदाः ।
महात्मानो यदूनां च ये जाता विपुले कुले ॥ १०० ॥

धन्यं यशस्यं पुत्रीयमायुष्यं विजयावहम् ।
इदमंशावतरणं श्रोतव्यमनसूयता ॥ १०१ ॥

अंशावतरणं श्रुत्वा देवगन्धर्वरक्षसाम् ।

प्रभवाप्ययवित्प्राज्ञो न कृच्छ्रेष्ववसीदति ॥ १०२ ॥

---

# संभवपर्व

## शंकुतलोपाख्यानम्

## अध्याय ०६२

जनमेजय उवाच ॥

त्वत्तः श्रुतमिदं ब्रह्मन्देवदानवरक्षसाम् ।
अंशावतरणं सम्यग्गन्धर्वाप्सरसां तथा ॥ ००१ ॥

इमं तु भूय इच्छामि कुरूणां वंशमादितः ।
कथ्यमानं त्वया विप्र विप्रर्षिगणसंनिधौ ॥ ००२ ॥

वैशंपायन उवाच ॥

पौरवाणां वंशकरो दुःषन्तो नाम वीर्यवान् ।
पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ॥ ००३ ॥

चतुर्भागं भुवः कृत्स्नं स भुङ्क्ते मनुजेश्वरः ।
समुद्रावरणांश्चापि देशान्स समितिञ्जयः ॥ ००४ ॥

आम्लेच्छाटविकान्सर्वान्स भुङ्क्ते रिपुमर्दनः ।
रत्नाकरसमुद्रान्तांश्चातुर्वर्ण्यजनावृतान् ॥ ००५ ॥

न वर्णसङ्करकरो नाकृष्यकरकृज्जनः ।
न पापकृत्कश्चिदासीत्तस्मिन्राजनि शासति ॥ ००६ ॥

धर्म्यां रतिं सेवमाना धर्मार्थावभिपेदिरे ।
तदा नरा नरव्याघ्र तस्मिञ्जनपदेश्वरे ॥ ००७ ॥

नासीच्चोरभयं तात न क्षुधाभयमण्वपि ।
नासीद्व्याधिभयं चापि तस्मिञ्जनपदेश्वरे ॥ ००८ ॥

स्वैर्धर्मै रेमिरे वर्णा दैवे कर्मणि निःस्पृहाः ।
तमाश्रित्य महीपालमासंश्चैवाकुतोभयाः ॥ ००९ ॥

कालवर्षी च पर्जन्यः सस्यानि फलवन्ति च ।
सर्वरत्नसमृद्धा च मही वसुमती तदा ॥ ०१० ॥

स चाद्भुतमहावीर्यो वज्रसंहननो युवा ।
उद्यम्य मन्दरं दोर्भ्यां हरेत्सवनकाननम् ॥ ०११ ॥

धनुष्यथ गदायुद्धे त्सरुप्रहरणेषु च ।
नागपृष्ठेऽश्वपृष्ठे च बभूव परिनिष्ठितः ॥ ०१२ ॥

बले विष्णुसमश्चासीत्तेजसा भास्करोपमः ।
अक्षुब्धत्वेऽर्णवसमः सहिष्णुत्वे धरासमः ॥ ०१३ ॥

संमतः स महीपालः प्रसन्नपुरराष्ट्रवान् ।
भूयो धर्मपरैर्भावैर्विदितं जनमावसत् ॥ ०१४ ॥

# अध्याय ०६३

वैशंपायन उवाच ॥

स कदाचिन्महाबाहुः प्रभूतबलवाहनः ।
वनं जगाम गहनं हयनागशतैर्वृतः ॥ ००१ ॥

खड्गशक्तिधरैर्वीरैर्गदामुसलपाणिभिः ।
प्रासतोमरहस्तैश्च ययौ योधशतैर्वृतः ॥ ००२ ॥

सिंहनादैश्च योधानां शङ्खदुन्दुभिनिस्वनैः ।
रथनेमिस्वनैश्चापि सनागवरबृंहितैः ॥ ००३ ॥

हेषितस्वनमिश्रैश्च क्ष्वेडितास्फोटितस्वनैः ।
आसीत्किलकिलाशब्दस्तस्मिन्गच्छति पार्थिवे ॥ ००४ ॥

प्रासादवरशृङ्गस्थाः परया नृपशोभया ।
ददृशुस्तं स्त्रियस्तत्र शूरमात्मयशस्करम् ॥ ००५ ॥

शक्रोपमममित्रघ्नं परवारणवारणम् ।
पश्यन्तः स्त्रीगणास्तत्र शस्त्रपाणिं स्म मेनिरे ॥ ००६ ॥

अयं स पुरुषव्याघ्रो रणेऽद्भुतपराक्रमः ।
यस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ॥ ००७ ॥

इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा नराधिपम् ।
तुष्टुवुः पुष्पवृष्टीश्च ससृजुस्तस्य मूर्धनि ॥ ००८ ॥

तत्र तत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः ।
निर्ययौ परया प्रीत्या वनं मृगजिघांसया ॥ ००९ ॥

सुदूरमनुजग्मुस्तं पौरजानपदास्तदा ।
न्यवर्तन्त ततः पश्चादनुज्ञाता नृपेण ह ॥ ०१० ॥

सुपर्णप्रतिमेनाथ रथेन वसुधाधिपः ।
महीमापूरयामास घोषेण त्रिदिवं तथा ॥ ०११ ॥

स गच्छन्ददृशे धीमान्नन्दनप्रतिमं वनम् ।
बिल्वार्कखदिराकीर्णं कपित्थधवसङ्कुलम् ॥ ०१२ ॥

विषमं पर्वतप्रस्थैरश्मभिश्च समावृतम् ।
निर्जलं निर्मनुष्यं च बहुयोजनमायतम् ॥ ०१३ ॥

मृगसंघैर्वृतं घोरैरन्यैश्चापि वनेचरैः ॥ ०१३ ॥

तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः ।
लोडयामास दुःषन्तः सूदयन्विविधान्मृगान् ॥ ०१४ ॥

बाणगोचरसंप्राप्तांस्तत्र व्याघ्रगणान्बहून् ।
पातयामास दुःषन्तो निर्बिभेद च सायकैः ॥ ०१५ ॥

दूरस्थान्सायकैः कांश्चिदभिनत्स नरर्षभः ।
अभ्याशमागतांश्चान्यान्खड्गेन निरकृन्तत ॥ ०१६ ॥

कांश्चिदेणान्स निर्जघ्ने शक्त्या शक्तिमतां वरः ।
गदामण्डलतत्त्वज्ञश्चचारामितविक्रमः ॥ ०१७ ॥

तोमरैरसिभिश्चापि गदामुसलकर्पणैः ।
चचार स विनिघ्नन्वै वन्यांस्तत्र मृगद्विजान् ॥ ०१८ ॥

राज्ञा चाद्भुतवीर्येण योधैश्च समरप्रियैः ।
लोड्यमानं महारण्यं तत्यजुश्च महामृगाः ॥ ०१९ ॥

तत्र विद्रुतसंघानि हतयूथपतीनि च ।
मृगयूथान्यथौत्सुक्याच्छब्दं चक्रुस्ततस्ततः ॥ ०२० ॥

शुष्कां चापि नदीं गत्वा जलनैराश्यकर्शिताः ।
व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः ॥ ०२१ ॥

क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि ।
केचित्तत्र नरव्याघ्रैरभक्ष्यन्त बुभुक्षितैः ॥ ०२२ ॥

केचिदग्निमथोत्पाद्य समिध्य च वनेचराः ।
भक्षयन्ति स्म मांसानि प्रकुट्य विधिवत्तदा ॥ ०२३ ॥

तत्र केचिद्गजा मत्ता बलिनः शस्त्रविक्षताः ।
सङ्कोच्याग्रकरान्भीताः प्रद्रवन्ति स्म वेगिताः ॥ ०२४ ॥

शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं बहु ।
वन्या गजवरास्तत्र ममृदुर्मनुजान्बहून् ॥ ०२५ ॥

तद्वनं बलमेघेन शरधारेण संवृतम् ।
व्यरोचन्महिषाकीर्णं राज्ञा हतमहामृगम् ॥ ०२६ ॥

---

# अध्याय ०६४

वैशंपायन उवाच ॥

ततो मृगसहस्राणि हत्वा विपुलवाहनः ।

राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह ॥ ००१ ॥

एक एवोत्तमबलः क्षुत्पिपासासमन्वितः ।
स वनस्यान्तमासाद्य महदीरिणमासदत् ॥ ००२ ॥

तच्चाप्यतीत्य नृपतिरुत्तमाश्रमसंयुतम् ।
मनःप्रह्लादजननं दृष्टिकान्तमतीव च ॥ ००३ ॥

शीतमारुतसंयुक्तं जगामान्यन्महद्वनम् ॥ ००३ ॥

पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् ।
विपुलं मधुरारावैर्नादितं विहगैस्तथा ॥ ००४ ॥

प्रवृद्धविटपैर्वृक्षैः सुखच्छायैः समावृतम् ।
षट्पदाघूर्णितलतं लक्ष्म्या परमया युतम् ॥ ००५ ॥

नापुष्पः पादपः कश्चिन्नाफलो नापि कण्टकी ।
षट्पदैर्वाप्यनाकीर्णस्तस्मिन्वै काननेऽभवत् ॥ ००६ ॥

विहगैर्नादितं पुष्पैरलङ्कृतमतीव च ।
सर्वर्तुकुसुमैर्वृक्षैरतीव सुखशाद्वलम् ॥ ००७ ॥

मनोरमं महेष्वासो विवेश वनमुत्तमम् ॥ ००७ ॥

मारुतागलितास्तत्र द्रुमाः कुसुमशालिनः ।
पुष्पवृष्टिं विचित्रां स्म व्यसृजंस्ते पुनः पुनः ॥ ००८ ॥

दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्मधुरस्वरैः ।
विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः ॥ ००९ ॥

तेषां तत्र प्रवालेषु पुष्पभारावनामिषु ।

रुवन्ति रावं विहगाः षट्पदैः सहिता मृदु ॥ ०१० ॥

तत्र प्रदेशांश्च बहून्कुसुमोत्करमण्डितान् ।
लतागृहपरिक्षिप्तान्मनसः प्रीतिवर्धनान् ॥ ०११ ॥

संपश्यन्स महातेजा बभूव मुदितस्तदा ॥ ०११ ॥

परस्पराश्लिष्टशाखैः पादपैः कुसुमाचितैः ।
अशोभत वनं तत्तैर्महेन्द्रध्वजसंनिभैः ॥ ०१२ ॥

सुखशीतः सुगन्धी च पुष्परेणुवहोऽनिलः ।
परिक्रामन्वने वृक्षानुपैतीव रिरंसया ॥ ०१३ ॥

एवङ्गुणसमायुक्तं ददर्श स वनं नृपः ।
नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसंनिभम् ॥ ०१४ ॥

प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमम् ।
आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥ ०१५ ॥

नानावृक्षसमाकीर्णं संप्रज्वलितपावकम् ।
यतिभिर्वालखिल्यैश्च वृतं मुनिगणान्वितम् ॥ ०१६ ॥

अग्न्यागारैश्च बहुभिः पुष्पसंस्तरसंस्तृतम् ।
महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च ॥ ०१७ ॥

मालिनीमभितो राजन्नदीं पुण्यां सुखोदकाम् ।
नैकपक्षिगणाकीर्णां तपोवनमनोरमाम् ॥ ०१८ ॥

तत्र व्यालमृगान्सौम्यान्पश्यन्प्रीतिमवाप सः ॥ ०१८ ॥

तं चाप्यतिरथः श्रीमानाश्रमं प्रत्यपद्यत ।

देवलोकप्रतीकाशं सर्वतः सुमनोहरम् ॥ ०१९ ॥

नदीमाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः ।
सर्वप्राणभृतां तत्र जननीमिव विष्ठिताम् ॥ ०२० ॥

सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम् ।
सकिंनरगणावासां वानरर्क्षनिषेविताम् ॥ ०२१ ॥

पुण्यस्वाध्यायसंघुष्टां पुलिनैरुपशोभिताम् ।
मत्तवारणशार्दूलभुजगेन्द्रनिषेविताम् ॥ ०२२ ॥

नदीमाश्रमसंबद्धां दृष्ट्वाश्रमपदं तथा ।
चकाराभिप्रवेशाय मतिं स नृपतिस्तदा ॥ ०२३ ॥

अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया ।
नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥ ०२४ ॥

मत्तबर्हिणसंघुष्टं प्रविवेश महद्वनम् ॥ ०२४ ॥

तत्स चैत्ररथप्रख्यं समुपेत्य नरेश्वरः ।
अतीव गुणसंपन्नमनिर्देश्यं च वर्चसा ॥ ०२५ ॥

महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम् ॥ ०२५ ॥

रथिनीमश्वसंबाधां पदातिगणसङ्कुलाम् ।
अवस्थाप्य वनद्वारि सेनामिदमुवाच सः ॥ ०२६ ॥

मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनम् ।
काश्यपं स्थीयतामत्र यावदागमनं मम ॥ ०२७ ॥

तद्वनं नन्दनप्रख्यमासाद्य मनुजेश्वरः ।

क्षुत्पिपासे जहौ राजा हर्षं चावाप पुष्कलम् ॥ ०२८ ॥

सामात्यो राजलिङ्गानि सोऽपनीय नराधिपः ।
पुरोहितसहायश्च जगामाश्रममुत्तमम् ॥ ०२९ ॥

दिदृक्षुस्तत्र तमृषिं तपोराशिमथाव्ययम् ॥ ०२९ ॥

ब्रह्मलोकप्रतीकाशमाश्रमं सोऽभिवीक्ष्य च ।
षट्पदोद्गीतसंघुष्टं नानाद्विज गणायुतम् ॥ ०३० ॥

ऋचो बह्वृचमुख्यैश्च प्रेर्यमाणाः पदक्रमैः ।
शुश्राव मनुजव्याघ्रो विततेष्विह कर्मसु ॥ ०३१ ॥

यज्ञविद्याङ्गविद्भिश्च क्रमद्भिश्च क्रमानपि ।
अमितात्मभिः सुनियतैः शुशुभे स तदाश्रमः ॥ ०३२ ॥

अथर्ववेदप्रवराः पूगयाज्ञिक संमताः ।
संहितामीरयन्ति स्म पदक्रमयुतां तु ते ॥ ०३३ ॥

शब्दसंस्कारसंयुक्तं ब्रुवद्भिश्चापरैर्द्विजैः ।
नादितः स बभौ श्रीमान्ब्रह्मलोक इवाश्रमः ॥ ०३४ ॥

यज्ञसंस्कारविद्भिश्च क्रमशिक्षा विशारदैः ।
न्यायतत्त्वार्थविज्ञानसंपन्नैर्वेदपारगैः ॥ ०३५ ॥

नानावाक्यसमाहारसमवायविशारदैः ।
विशेषकार्यविद्भिश्च मोक्षधर्मपरायणैः ॥ ०३६ ॥

स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः ।
लोकायतिकमुख्यैश्च समन्तादनुनादितम् ॥ ०३७ ॥

तत्र तत्र च विप्रेन्द्रान्नियतान्संशितव्रतान् ।
जपहोमपरान्सिद्धान्ददर्श परवीरहा ॥ ०३८ ॥

आसनानि विचित्राणि पुष्पवन्ति महीपतिः ।
प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागमत् ॥ ०३९ ॥

देवतायतनानां च पूजां प्रेक्ष्य कृतां द्विजैः ।
ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ॥ ०४० ॥

स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम् ।
नातृप्यत्प्रेक्षमाणो वै तपोधनगणैर्युतम् ॥ ०४१ ॥

स काश्यपस्यायतनं महाव्रतै ;र्वृतं समन्तादृषिभिस्तपोधनैः ।
विवेश सामात्यपुरोहितोऽरिहा ; विविक्तमत्यर्थमनोहरं शिवम् ॥ ०४२ ॥

---

# अध्याय ०६५

वैशंपायन उवाच ॥

ततो गच्छन्महाबाहुरेकोऽमात्यान्विसृज्य तान् ।
नापश्यदाश्रमे तस्मिंस्तमृषिं संशितव्रतम् ॥ ००१ ॥

सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तमाश्रमम् ।
उवाच क इहेत्युच्चैर्वनं संनादयन्निव ॥ ००२ ॥

श्रुत्वाथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी ।
निश्चक्रामाश्रमात्तस्मात्तापसीवेषधारिणी ॥ ००३ ॥

सा तं दृष्ट्वैव राजानं दुःषन्तमसितेक्षणा ।
स्वागतं त इति क्षिप्रमुवाच प्रतिपूज्य च ॥ ००४ ॥

आसनेनार्चयित्वा च पाद्येनार्घ्येण चैव हि ।
पप्रच्छानामयं राजन्कुशलं च नराधिपम् ॥ ००५ ॥

यथावदर्चयित्वा सा पृष्ट्वा चानामयं तदा ।
उवाच स्मयमानेव किं कार्यं क्रियतामिति ॥ ००६ ॥

तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम् ।
दृष्ट्वा सर्वानवद्याङ्गीं यथावत्प्रतिपूजितः ॥ ००७ ॥

आगतोऽहं महाभागमृषिं कण्वमुपासितुम् ।
क्व गतो भगवान्भद्रे तन्ममाचक्ष्व शोभने ॥ ००८ ॥

शकुन्तलोवाच ॥

गतः पिता मे भगवान्फलान्याहर्तुमाश्रमात् ।
मुहूर्तं संप्रतीक्षस्व द्रक्ष्यस्येनमिहागतम् ॥ ००९ ॥

वैशंपायन उवाच ॥

अपश्यमानस्तमृषिं तया चोक्तस्तथा नृपः ।
तां च दृष्ट्वा वरारोहां श्रीमतीं चारुहासिनीम् ॥ ०१० ॥

विभ्राजमानां वपुषा तपसा च दमेन च ।
रूपयौवनसंपन्नामित्युवाच महीपतिः ॥ ०११ ॥

कासि कस्यासि सुश्रोणि किमर्थं चागता वनम् ।
एवंरूपगुणोपेता कुतस्त्वमसि शोभने ॥ ०१२ ॥

दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः ।
इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने ॥ ०१३ ॥

एवमुक्ता तदा कन्या तेन राज्ञा तदाश्रमे ।
उवाच हसती वाक्यमिदं सुमधुराक्षरम् ॥ ०१४ ॥

कण्वष्याहं भगवतो दुःषन्त दुहिता मता ।
तपस्विनो धृतिमतो धर्मज्ञस्य यशस्विनः ॥ ०१५ ॥

दुःषन्त उवाच ॥

ऊर्ध्वरेता महाभागो भगवा.ण्ल्लोकपूजितः ।
चलेद्धि वृत्ताद्धर्मोऽपि न चलेत्संशितव्रतः ॥ ०१६ ॥

कथं त्वं तस्य दुहिता संभूता वरवर्णिनी ।
संशयो मे महानत्र तं मे छेत्तुमिहार्हसि ॥ ०१७ ॥

शकुन्तलोवाच ॥

यथायमागमो मह्यं यथा चेदमभूत्पुरा ।
शृणु राजन्यथातत्त्वं यथास्मि दुहिता मुनेः ॥ ०१८ ॥

ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत् ।
तस्मै प्रोवाच भगवान्यथा तच्छृणु पार्थिव ॥ ०१९ ॥

तप्यमानः किल पुरा विश्वामित्रो महत्तपः ।
सुभृशं तापयामास शक्रं सुरगणेश्वरम् ॥ ०२० ॥

तपसा दीप्तवीर्योऽयं स्थानान्मां च्यावयेदिति ।
भीतः पुरंदरस्तस्मान्मेनकामिदमब्रवीत् ॥ ०२१ ॥

गुणैर्दिव्यैरप्सरसां मेनके त्वं विशिष्यसे ।
श्रेयो मे कुरु कल्याणि यत्त्वां वक्ष्यामि तच्छृणु ॥ ०२२ ॥

असावादित्यसङ्काशो विश्वामित्रो महातपाः ।
तप्यमानस्तपो घोरं मम कम्पयते मनः ॥ ०२३ ॥

मेनके तव भारोऽयं विश्वामित्रः सुमध्यमे ।
संशितात्मा सुदुर्धर्ष उग्रे तपसि वर्तते ॥ ०२४ ॥

स मां न च्यावयेत्स्थानात्तं वै गत्वा प्रलोभय ।
चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमम् ॥ ०२५ ॥

रूपयौवनमाधुर्यचेष्टितस्मितभाषितैः ।
लोभयित्वा वरारोहे तपसः संनिवर्तय ॥ ०२६ ॥

मेनकोवाच ॥

महातेजाः स भगवान्सदैव च महातपाः ।
कोपनश्च तथा ह्येनं जानाति भगवानपि ॥ ०२७ ॥

तेजसस्तपसश्चैव कोपस्य च महात्मनः ।
त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथम् ॥ ०२८ ॥

महाभागं वसिष्ठं यः पुत्रैरिष्टैर्व्ययोजयत् ।
क्षत्रे जातश्च यः पूर्वमभवद्ब्राह्मणो बलात् ॥ ०२९ ॥

शौचार्थं यो नदीं चक्रे दुर्गमां बहुभिर्जलैः ।
यां तां पुण्यतमां लोके कौशिकीति विदुर्जनाः ॥ ०३० ॥

बभार यत्रास्य पुरा काले दुर्गे महात्मनः ।
दारान्मतङ्गो धर्मात्मा राजर्षिर्व्याधतां गतः ॥ ०३१ ॥

अतीतकाले दुर्भिक्षे यत्रैत्य पुनराश्रमम् ।
मुनिः पारेति नद्या वै नाम चक्रे तदा प्रभुः ॥ ०३२ ॥

मतङ्गं याजयां चक्रे यत्र प्रीतमनाः स्वयम् ।
त्वं च सोमं भयाद्यस्य गतः पातुं शुरेश्वर ॥ ०३३ ॥

अति नक्षत्रवंशांश्च क्रुद्धो नक्षत्रसंपदा ।
प्रति श्रवणपूर्वाणि नक्षत्राणि ससर्ज यः ॥ ०३४ ॥

एतानि यस्य कर्माणि तस्याहं भृशमुद्विजे ।
यथा मां न दहेत्क्रुद्धस्तथाज्ञापय मां विभो ॥ ०३५ ॥

तेजसा निर्दहेल्लोकान्कम्पयेद्धरणीं पदा ।
सङ्क्षिपेच्च महामेरुं तूर्णमावर्तयेत्तथा ॥ ०३६ ॥

तादृशं तपसा युक्तं प्रदीप्तमिव पावकम् ।
कथमस्मद्विधा बाला जितेन्द्रियमभिस्पृशेत् ॥ ०३७ ॥

हुताशनमुखं दीप्तं सूर्यचन्द्राक्षितारकम् ।
कालजिह्वं सुरश्रेष्ठ कथमस्मद्विधा स्पृशेत् ॥ ०३८ ॥

यमश्च सोमश्च महर्षयश्च ; साध्या विश्वे वालखिल्याश्च सर्वे ।
एतेऽपि यस्योद्विजन्ते प्रभावा ;त्कस्मात्तस्मान्मादृशी नोद्विजेत ॥ ०३९ ॥

त्वयैवमुक्ता च कथं समीप ;मृषेर्न गच्छेयमहं सुरेन्द्र ।
रक्षां तु मे चिन्तय देवराज ; यथा त्वदर्थं रक्षिताहं चरेयम् ॥ ०४० ॥

कामं तु मे मारुतस्तत्र वासः ; प्रक्रीडिताया विवृणोतु देव ।
भवेच्च मे मन्मथस्तत्र कार्ये ; सहायभूतस्तव देवप्रसादात् ॥ ०४१ ॥

वनाच्च वायुः सुरभिः प्रवाये ;त्तस्मिन्काले तमृषिं लोभयन्त्याः ।
तथेत्युक्त्वा विहिते चैव तस्मिं ;स्ततो ययौ साश्रमं कौशिकस्य ॥ ०४२ ॥

---

# अध्याय ०६६

शकुन्तलोवाच ॥

एवमुक्तस्तया शक्रः संदिदेश सदागतिम् ।
प्रातिष्ठत तदा काले मेनका वायुना सह ॥ ००१ ॥

अथापश्यद्वरारोहा तपसा दग्धकिल्बिषम् ।
विश्वामित्रं तपस्यन्तं मेनका भीरुराश्रमे ॥ ००२ ॥

अभिवाद्य ततः सा तं प्राक्रीडदृषिसंनिधौ ।
अपोवाह च वासोऽस्या मारुतः शशिसंनिभम् ॥ ००३ ॥

सागच्छत्त्वरिता भूमिं वासस्तदभिलिङ्गती ।
उत्स्मयन्तीव सव्रीडं मारुतं वरवर्णिनी ॥ ००४ ॥

गृद्धां वाससि संभ्रान्तां मेनकां मुनिसत्तमः ।
अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा ॥ ००५ ॥

तस्या रूपगुणं दृष्ट्वा स तु विप्रर्षभस्तदा ।
चकार भावं संसर्गे तया कामवशं गतः ॥ ००६ ॥

न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता ।
तौ तत्र सुचिरं कालं वने व्यहरतामुभौ ॥ ००७ ॥

रममाणौ यथाकामं यथैकदिवसं तथा ॥ ००७ ॥

जनयामास स मुनिर्मेनकायां शकुन्तलाम् ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥ ००८ ॥

जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ।
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥ ००९ ॥

तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समन्तात्पर्यवारयन् ॥ ०१० ॥

नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ।
पर्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ॥ ०११ ॥

उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ।
निर्जने विपिनेऽरण्ये शकुन्तैः परिवारिताम् ॥ ०१२ ॥

आनयित्वा ततश्चैनां दुहितृत्वे न्ययोजयम् ॥ ०१२ ॥

शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते ।
क्रमेण ते त्रयोऽप्युक्ताः पितरो धर्मनिश्चये ॥ ०१३ ॥

निर्जने च वने यस्माच्छकुन्तैः परिरक्षिता ।
शकुन्तलेति नामास्याः कृतं चापि ततो मया ॥ ०१४ ॥

एवं दुहितरं विद्धि मम सौम्य शकुन्तलाम् ।
शकुन्तला च पितरं मन्यते मामनिन्दिता ॥ ०१५ ॥

एतदाचष्ट पृष्टः सन्मम जन्म महर्षये ।
सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ॥ ०१६ ॥

कण्वं हि पितरं मन्ये पितरं स्वमजानती ।
इति ते कथितं राजन्यथावृत्तं श्रुतं मया ॥ ०१७ ॥

---

## अध्याय ०६७

दुःषन्त उवाच ॥

सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे ।
भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते ॥ ००१ ॥

सुवर्णमाला वासांसि कुण्डले परिहाटके ।
नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ॥ ००२ ॥

आहरामि तवाद्याहं निष्कादीन्यजिनानि च ।
सर्वं राज्यं तवाद्यास्तु भार्या मे भव शोभने ॥ ००३ ॥

गान्धर्वेण च मां भीरु विवाहेनैहि सुन्दरि ।
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ॥ ००४ ॥

शकुन्तलोवाच ॥

फलाहारो गतो राजन्पिता मे इत आश्रमात् ।
तं मुहूर्तं प्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥ ००५ ॥

दुःषन्त उवाच ॥

इच्छामि त्वां वरारोहे भजमानामनिन्दिते ।
त्वदर्थं मां स्थितं विद्धि त्वद्गतं हि मनो मम ॥ ००६ ॥

आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः ॥ ००७ ॥

अष्टावेव समासेन विवाहा धर्मतः स्मृताः ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥ ००८ ॥

गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ।
तेषां धर्मान्यथापूर्वं मनुः स्वायंभुवोऽब्रवीत् ॥ ००९ ॥

प्रशस्तांश्चतुरः पूर्वान्ब्राह्मणस्योपधारय ।
षडानुपूर्व्या क्षत्रस्य विद्धि धर्म्याननिन्दिते ॥ ०१० ॥

राज्ञां तु राक्षसोऽप्युक्तो विड्शूद्रेष्वासुरः स्मृतः ।
पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ॥ ०११ ॥

पैशाचश्चासुरश्चैव न कर्तव्यौ कथञ्चन ।
अनेन विधिना कार्यो धर्मस्यैषा गतिः स्मृता ॥ ०१२ ॥

गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः ।
पृथग्वा यदि वा मिश्रौ कर्तव्यौ नात्र संशयः ॥ ०१३ ॥

सा त्वं मम सकामस्य सकामा वरवर्णिनि ।
गान्धर्वेण विवाहेन भार्या भवितुमर्हसि ॥ ०१४ ॥

शकुन्तलोवाच ॥

यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम ।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥ ०१५ ॥

सत्यं मे प्रतिजानीहि यत्त्वां वक्ष्याम्यहं रहः ।

मम जायेत यः पुत्रः स भवेत्त्वदनन्तरम् ॥ ०१६ ॥

युवराजो महाराज सत्यमेतद्ब्रवीहि मे ।
यद्येतदेवं दुःषन्त अस्तु मे सङ्गमस्त्वया ॥ ०१७ ॥

वैशंपायन उवाच ॥

एवमस्त्विति तां राजा प्रत्युवाचाविचारयन् ।
अपि च त्वां नयिष्यामि नगरं स्वं शुचिस्मिते ॥ ०१८ ॥

यथा त्वमर्हा सुश्रोणि सत्यमेतद्ब्रवीमि ते ॥ ०१८ ॥

एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ।
जग्राह विधिवत्पाणावुवास च तया सह ॥ ०१९ ॥

विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः ।
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् ॥ ०२० ॥

तया त्वामानयिष्यामि निवासं स्वं शुचिस्मिते ॥ ०२० ॥

इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय ।
मनसा चिन्तयन्प्रायात्काश्यपं प्रति पार्थिवः ॥ ०२१ ॥

भगवांस्तपसा युक्तः श्रुत्वा किं नु करिष्यति ।
एवं सञ्चिन्तयन्नेव प्रविवेश स्वकं पुरम् ॥ ०२२ ॥

मुहूर्तयाते तस्मिंस्तु कण्वोऽप्याश्रममागमत् ।
शकुन्तला च पितरं ह्रिया नोपजगाम तम् ॥ ०२३ ॥

विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः ।
उवाच भगवान्प्रीतः पश्यन्दिव्येन चक्षुषा ॥ ०२४ ॥

त्वयाद्य राजान्वयया मामनादृत्य यत्कृतः ।
पुंसा सह समायोगो न स धर्मोपघातकः ॥ ०२५ ॥

क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः ॥ ०२६ ॥

धर्मात्मा च महात्मा च दुःषन्तः पुरुषोत्तमः ।
अभ्यगच्छः पतिं यं त्वं भजमानं शकुन्तले ॥ ०२७ ॥

महात्मा जनिता लोके पुत्रस्तव महाबलः ।
य इमां सागरापाङ्गां कृत्स्नां भोक्ष्यति मेदिनीम् ॥ ०२८ ॥

परं चाभिप्रयातस्य चक्रं तस्य महात्मनः ।
भविष्यत्यप्रतिहतं सततं चक्रवर्तिनः ॥ ०२९ ॥

ततः प्रक्षाल्य पादौ सा विश्रान्तं मुनिमब्रवीत् ।
विनिधाय ततो भारं संनिधाय फलानि च ॥ ०३० ॥

मया पतिर्वृतो योऽसौ दुःषन्तः पुरुषोत्तमः ।
तस्मै ससचिवाय त्वं प्रसादं कर्तुमर्हसि ॥ ०३१ ॥

कण्व उवाच ॥

प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि ।
गृहाण च वरं मत्तस्तत्कृते यदभीप्सितम् ॥ ०३२ ॥

वैशंपायन उवाच ॥

ततो धर्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा ।
शकुन्तला पौरवाणां दुःषन्तहितकाम्यया ॥ ०३३ ॥

# अध्याय ०६८

वैशंपायन उवाच ॥

प्रतिज्ञाय तु दुःषन्ते प्रतियाते शकुन्तला ।
गर्भं सुषाव वामोरुः कुमारममितौजसम् ॥ ००१ ॥

त्रिषु वर्षेषु पूर्णेषु दिप्तानलसमद्युतिम् ।
रूपौदार्यगुणोपेतं दौःषन्तिं जनमेजय ॥ ००२ ॥

जातकर्मादिसंस्कारं कण्वः पुण्यकृतां वरः ।
तस्याथ कारयामास वर्धमानस्य धीमतः ॥ ००३ ॥

दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो युवा ।
चक्राङ्कितकरः श्रीमान्महामूर्धा महाबलः ॥ ००४ ॥

कुमारो देवगर्भाभः स तत्राशु व्यवर्धत ॥ ००४ ॥

षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति ।
व्याघ्रान्सिंहान्वराहांश्च गजांश्च महिषांस्तथा ॥ ००५ ॥

बद्ध्वा वृक्षेषु बलवानाश्रमस्य समन्ततः ।
आरोहन्दमयंश्चैव क्रीडंश्च परिधावति ॥ ००६ ॥

ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ।
अस्त्वयं सर्वदमनः सर्वं हि दमयत्ययम् ॥ ००७ ॥

स सर्वदमनो नाम कुमारः समपद्यत ।
विक्रमेणौजसा चैव बलेन च समन्वितः ॥ ००८ ॥

तं कुमारमृषिर्दृष्ट्वा कर्म चास्यातिमानुषम् ।
समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम् ॥ ००९ ॥

तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह ।
शकुन्तलामिमां शीघ्रं सहपुत्रामितोऽऽश्रमात् ॥ ०१० ॥

भर्त्रे प्रापयताद्यैव सर्वलक्षणपूजिताम् ॥ ०१० ॥

नारीणां चिरवासो हि बान्धवेषु न रोचते ।
कीर्तिचारित्रधर्मघ्नस्तस्मान्नयत माचिरम् ॥ ०११ ॥

तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्तामितौजसः ।
शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम् ॥ ०१२ ॥

गृहीत्वामरगर्भाभं पुत्रं कमललोचनम् ।
आजगाम ततः शुभ्रा दुःषन्तविदिताद्वनात् ॥ ०१३ ॥

अभिसृत्य च राजानं विदिता सा प्रवेशिता ।
सह तेनैव पुत्रेण तरुणादित्यवर्चसा ॥ ०१४ ॥

पूजयित्वा यथान्यायमब्रवीत्तं शकुन्तला ।
अयं पुत्रस्त्वया राजन्यौवराज्येऽभिषिच्यताम् ॥ ०१५ ॥

त्वया ह्ययं सुतो राजन्मय्युत्पन्नः सुरोपमः ।
यथासमयमेतस्मिन्वर्तस्व पुरुषोत्तम ॥ ०१६ ॥

यथा समागमे पूर्वं कृतः स समयस्त्वया ।

तं स्मरस्व महाभाग कण्वाश्रमपदं प्रति ॥ ०१७ ॥

सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि ।
अब्रवीन्न स्मरामीति कस्य त्वं दुष्टतापसि ॥ ०१८ ॥

धर्मकामार्थसंबन्धं न स्मरामि त्वया सह ।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु ॥ ०१९ ॥

सैवमुक्ता वरारोहा व्रीडितेव मनस्विनी ।
विसञ्ज्ञेव च दुःखेन तस्थौ स्थाणुरिवाचला ॥ ०२० ॥

संरम्भामर्षताम्राक्षी स्फुरमाणोष्ठसंपुटा ।
कटाक्षैर्निर्दहन्तीव तिर्यग्राजानमैक्षत ॥ ०२१ ॥

आकारं गूहमाना च मन्युनाभिसमीरिता ।
तपसा संभृतं तेजो धारयामास वै तदा ॥ ०२२ ॥

सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता ।
भर्तारमभिसंप्रेक्ष्य क्रुद्धा वचनमब्रवीत् ॥ ०२३ ॥

जानन्नपि महाराज कस्मादेवं प्रभाषसे ।
न जानामीति निःसङ्गं यथान्यः प्राकृतस्तथा ॥ ०२४ ॥

अत्र ते हृदयं वेद सत्यस्यैवानृतस्य च ।
कल्याण बत साक्षी त्वं मात्मानमवमन्यथाः ॥ ०२५ ॥

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ ०२६ ॥

एकोऽहमस्मीति च मन्यसे त्वं ; न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्मणः पापकस्य ; तस्यान्तिके त्वं वृजिनं करोषि ॥ ०२७ ॥

मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति ।
विदन्ति चैनं देवाश्च स्वश्चैवान्तरपूरुषः ॥ ०२८ ॥

आदित्यचन्द्रावनिलानलौ च ; द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये ; धर्मश्च जानाति नरस्य वृत्तम् ॥ ०२९ ॥

यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् ।
हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ॥ ०३० ॥

न तु तुष्यति यस्यैष पुरुषस्य दुरात्मनः ।
तं यमः पापकर्माणं निर्यातयति दुष्कृतम् ॥ ०३१ ॥

अवमन्यात्मनात्मानमन्यथा प्रतिपद्यते ।
देवा न तस्य श्रेयांसो यस्यात्मापि न कारणम् ॥ ०३२ ॥

स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम् ।
अर्घ्यार्हां नार्चयसि मां स्वयं भार्यामुपस्थिताम् ॥ ०३३ ॥

किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि ।
न खल्वहमिदं शून्ये रौमि किं न शृणोषि मे ॥ ०३४ ॥

यदि मे याचमानाया वचनं न करिष्यसि ।
दुःषन्त शतधा मूर्धा ततस्तेऽद्य फलिष्यति ॥ ०३५ ॥

भार्यां पतिः संप्रविश्य स यस्माज्जायते पुनः ।
जायाया इति जायात्वं पुराणाः कवयो विदुः ॥ ०३६ ॥

यदागमवतः पुंसस्तदपत्यं प्रजायते ।
तत्तारयति संतत्या पूर्वप्रेतान्पितामहान् ॥ ०३७ ॥

पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ ०३८ ॥

सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥ ०३९ ॥

अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा ।
भार्या मूलं त्रिवर्गस्य भार्या मित्रं मरिष्यतः ॥ ०४० ॥

भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः ।
भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः ॥ ०४१ ॥

सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः ।
पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥ ०४२ ॥

कान्तारेष्वपि विश्रामो नरस्याध्वनिकस्य वै ।
यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ॥ ०४३ ॥

संसरन्तमपि प्रेतं विषमेष्वेकपातिनम् ।
भार्यैवान्वेति भर्तारं सततं या पतिव्रता ॥ ०४४ ॥

प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते ।
पूर्वं मृतं च भर्तारं पश्चात्साध्व्यनुगच्छति ॥ ०४५ ॥

एतस्मात्कारणाद्राजन्पाणिग्रहणमिष्यते ।
यदाप्नोति पतिर्भार्यामिह लोके परत्र च ॥ ०४६ ॥

आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः ।
तस्माद्भार्यां नरः पश्येन्मातृवत्पुत्रमातरम् ॥ ०४७ ॥

भार्यायां जनितं पुत्रमादर्शे स्वमिवाननम् ।

ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥ ०४८ ॥

दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः ।
ह्लादन्ते स्वेषु दारेषु घर्मार्ताः सलिलेष्विव ॥ ०४९ ॥

सुसंरब्धोऽपि रामाणां न ब्रूयादप्रियं बुधः ।
रतिं प्रीतिं च धर्मं च तास्वायत्तमवेक्ष्य च ॥ ०५० ॥

आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम् ।
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः ॥ ०५१ ॥

परिपत्य यदा सूनुर्धरणीरेणुगुण्ठितः ।
पितुराश्लिष्यतेऽङ्गानि किमिवास्त्यधिकं ततः ॥ ०५२ ॥

स त्वं स्वयमनुप्राप्तं साभिलाषमिमं सुतम् ।
प्रेक्षमाणं च काक्षेण किमर्थमवमन्यसे ॥ ०५३ ॥

अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः ।
न भरेथाः कथं नु त्वं धर्मज्ञः सन्स्वमात्मजम् ॥ ०५४ ॥

न वाससां न रामाणां नापां स्पर्शस्तथा सुखः ।
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ॥ ०५५ ॥

ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ।
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥ ०५६ ॥

स्पृशतु त्वां समाश्लिष्य पुत्रोऽयं प्रियदर्शनः ।
पुत्रस्पर्शात्सुखतरः स्पर्शो लोके न विद्यते ॥ ०५७ ॥

त्रिषु वर्षेषु पूर्णेषु प्रजाताहमरिंदम ।
इमं कुमारं राजेन्द्र तव शोकप्रणाशनम् ॥ ०५८ ॥

आहर्ता वाजिमेधस्य शतसंख्यस्य पौरव ।
इति वागन्तरिक्षे मां सूतकेऽभ्यवदत्पुरा ॥ ०५९ ॥

ननु नामाङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः ।
मूर्ध्नि पुत्रानुपाघ्राय प्रतिनन्दन्ति मानवाः ॥ ०६० ॥

वेदेष्वपि वदन्तीमं मन्त्रवादं द्विजातयः ।
जातकर्मणि पुत्राणां तवापि विदितं तथा ॥ ०६१ ॥

अङ्गादङ्गात्संभवसि हृदयादभिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ ०६२ ॥

पोषो हि त्वदधीनो मे संतानमपि चाक्षयम् ।
तस्मात्त्वं जीव मे वत्स सुसुखी शरदां शतम् ॥ ०६३ ॥

त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात्पुरुषोऽपरः ।
सरसीवामलेऽऽत्मानं द्वितीयं पश्य मे सुतम् ॥ ०६४ ॥

यथा ह्याहवनीयोऽग्निर्गार्हपत्यात्प्रणीयते ।
तथा त्वत्तः प्रसूतोऽयं त्वमेकः सन्द्विधा कृतः ॥ ०६५ ॥

मृगापकृष्टेन हि ते मृगयां परिधावता ।
अहमासादिता राजन्कुमारी पितुराश्रमे ॥ ०६६ ॥

उर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।
विश्वाची च घृताची च षडेवाप्सरसां वराः ॥ ०६७ ॥

तासां मां मेनका नाम ब्रह्मयोनिर्वराप्सराः ।
दिवः संप्राप्य जगतीं विश्वामित्रादजीजनत् ॥ ०६८ ॥

सा मां हिमवतः पृष्ठे सुषुवे मेनकाप्सराः ।
अवकीर्य च मां याता परात्मजमिवासती ॥ ०६९ ॥

किं नु कर्माशुभं पूर्वं कृतवत्यस्मि जन्मनि ।
यदहं बान्धवैस्त्यक्ता बाल्ये संप्रति च त्वया ॥ ०७० ॥

कामं त्वया परित्यक्ता गमिष्याम्यहमाश्रमम् ।
इमं तु बालं संत्यक्तुं नार्हस्यात्मजमात्मना ॥ ०७१ ॥

दुःषन्त उवाच ॥

न पुत्रमभिजानामि त्वयि जातं शकुन्तले ।
असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः ॥ ०७२ ॥

मेनका निरनुक्रोशा बन्धकी जननी तव ।
यया हिमवतः पृष्ठे निर्माल्येव प्रवेरिता ॥ ०७३ ॥

स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव ।
विश्वामित्रो ब्राह्मणत्वे लुब्धः कामपरायणः ॥ ०७४ ॥

मेनकाप्सरसां श्रेष्ठा महर्षीणां च ते पिता ।
तयोरपत्यं कस्मात्त्वं पुंश्चलीवाभिधास्यसि ॥ ०७५ ॥

अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे ।
विशेषतो मत्सकाशे दुष्टतापसि गम्यताम् ॥ ०७६ ॥

क्व महर्षिः सदैवोग्रः साप्सरा क्व च मेनका ।
क्व च त्वमेवं कृपणा तापसीवेषधारिणी ॥ ०७७ ॥

अतिकायश्च पुत्रस्ते बालोऽपि बलवानयम् ।
कथमल्पेन कालेन शालस्कन्ध इवोद्गतः ॥ ०७८ ॥

सुनिकृष्टा च योनिस्ते पुंश्चली प्रतिभासि मे ।
यदृच्छया कामरागाज्जाता मेनकया ह्यसि ॥ ०७९ ॥

सर्वमेतत्परोक्षं मे यत्त्वं वदसि तापसि ।
नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया ॥ ०८० ॥

---

# अध्याय ०६९

शकुन्तलोवाच ॥

राजन्सर्षपमात्राणि परच्छिद्राणि पश्यसि ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ॥ ००१ ॥

मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम् ।
ममैवोद्रिच्यते जन्म दुःषन्त तव जन्मतः ॥ ००२ ॥

क्षितावटसि राजंस्त्वमन्तरिक्षे चराम्यहम् ।
आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥ ००३ ॥

महेन्द्रस्य कुबेरस्य यमस्य वरुणस्य च ।
भवनान्यनुसंयामि प्रभावं पश्य मे नृप ॥ ००४ ॥

सत्यश्चापि प्रवादोऽयं यं प्रवक्ष्यामि तेऽनघ ।
निदर्शनार्थं न द्वेषात्तच्छ्रुत्वा क्षन्तुमर्हसि ॥ ००५ ॥

विरूपो यावदादर्शे नात्मनः पश्यते मुखम् ।
मन्यते तावदात्मानमन्येभ्यो रूपवत्तरम् ॥ ००६ ॥

यदा तु मुखमादर्शे विकृतं सोऽभिवीक्षते ।
तदेतरं विजानाति आत्मानं नेतरं जनम् ॥ ००७ ॥

अतीव रूपसंपन्नो न किञ्चिदवमन्यते ।
अतीव जल्पन्दुर्वाचो भवतीह विहेठकः ॥ ००८ ॥

मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥ ००९ ॥

प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ ०१० ॥

अन्यान्परिवदन्साधुर्यथा हि परितप्यते ।
तथा परिवदन्नन्यांस्तुष्टो भवति दुर्जनः ॥ ०११ ॥

अभिवाद्य यथा वृद्धान्सन्तो गच्छन्ति निर्वृतिम् ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥ ०१२ ॥

सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः ।
यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥ ०१३ ॥

अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते ।
यत्र दुर्जन इत्याह दुर्जनः सज्जनं स्वयम् ॥ ०१४ ॥

सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव ।
अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः ॥ ०१५ ॥

स्वयमुत्पाद्य वै पुत्रं सदृशं योऽवमन्यते ।
तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते ॥ ०१६ ॥

कुलवंशप्रतिष्ठां हि पितरः पुत्रमब्रुवन् ।
उत्तमं सर्वधर्माणां तस्मात्पुत्रं न संत्यजेत् ॥ ०१७ ॥

स्वपत्नीप्रभवान्पञ्च लब्धान्क्रीतान्विवर्धितान् ।
कृतानन्यासु चोत्पन्नान्पुत्रान्वै मनुरब्रवीत् ॥ ०१८ ॥

धर्मकीर्त्यावहा नृणां मनसः प्रीतिवर्धनाः ।
त्रायन्ते नरकाज्जाताः पुत्रा धर्मप्लवाः पितॄन् ॥ ०१९ ॥

स त्वं नृपतिशार्दूल न पुत्रं त्यक्तुमर्हसि ।
आत्मानं सत्यधर्मौ च पालयानो महीपते ॥ ०२० ॥

नरेन्द्रसिंह कपटं न वोढुं त्वमिहार्हसि ॥ ०२० ॥

वरं कूपशताद्वापी वरं वापीशतात्क्रतुः ।
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥ ०२१ ॥

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ०२२ ॥

सर्ववेदाधिगमनं सर्वतीर्थावगाहनम् ।
सत्यं च वदतो राजन्समं वा स्यान्न वा समम् ॥ ०२३ ॥

नास्ति सत्यात्परो धर्मो न सत्याद्विद्यते परम् ।
न हि तीव्रतरं किञ्चिदनृतादिह विद्यते ॥ ०२४ ॥

राजन्सत्यं परं ब्रह्म सत्यं च समयः परः ।
मा त्याक्षीः समयं राजन्सत्यं सङ्गतमस्तु ते ॥ ०२५ ॥

अनृते चेत्प्रसङ्गस्ते श्रद्दधासि न चेत्स्वयम् ।
आत्मनो हन्त गच्छामि त्वादृशे नास्ति सङ्गतम् ॥ ०२६ ॥

ऋतेऽपि त्वयि दुःषन्त शैलराजावतंसकाम् ।
चतुरन्तामिमामुर्वीं पुत्रो मे पालयिष्यति ॥ ०२७ ॥

वैशंपायन उवाच ॥

एतावदुक्त्वा वचनं प्रातिष्ठत शकुन्तला ।
अथान्तरिक्षे दुःषन्तं वागुवाचाशरीरिणी ॥ ०२८ ॥

ऋत्विक्पुरोहिताचार्यैर्मन्त्रिभिश्चावृतं तदा ॥ ०२८ ॥

भस्त्रा माता पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुःषन्त मावमंस्थाः शकुन्तलाम् ॥ ०२९ ॥

रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ ०३० ॥

जाया जनयते पुत्रमात्मनोऽङ्गं द्विधा कृतम् ।
तस्माद्भरस्व दुःषन्त पुत्रं शाकुन्तलं नृप ॥ ०३१ ॥

अभूतिरेषा कस्त्यज्याज्जीवञ्जीवन्तमात्मजम् ।
शाकुन्तलं महात्मानं दौःषन्तिं भर पौरव ॥ ०३२ ॥

भर्तव्योऽयं त्वया यस्मादस्माकं वचनादपि ।
तस्माद्भवत्वयं नाम्ना भरतो नाम ते सुतः ॥ ०३३ ॥

तच्छ्रुत्वा पौरवो राजा व्याहृतं वै दिवौकसाम् ।
पुरोहितममात्यांश्च संप्रहृष्टोऽब्रवीदिदम् ॥ ०३४ ॥

शृण्वन्त्वेतद्भवन्तोऽस्य देवदूतस्य भाषितम् ।
अहमप्येवमेवैनं जानामि स्वयमात्मजम् ॥ ०३५ ॥

यद्यहं वचनादेव गृह्णीयामिममात्मजम् ।
भवेद्धि शङ्का लोकस्य नैवं शुद्धो भवेदयम् ॥ ०३६ ॥

तं विशोध्य तदा राजा देवदूतेन भारत ।
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥ ०३७ ॥

मूर्ध्नि चैनमुपाघ्राय सस्नेहं परिषस्वजे ।
सभाज्यमानो विप्रैश्च स्तूयमानश्च बन्दिभिः ॥ ०३८ ॥

स मुदं परमां लेभे पुत्रसंस्पर्शजां नृपः ॥ ०३८ ॥

तां चैव भार्यां धर्मज्ञः पूजयामास धर्मतः ।
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः ॥ ०३९ ॥

कृतो लोकपरोक्षोऽयं संबन्धो वै त्वया सह ।
तस्मादेतन्मया देवि त्वच्छुद्ध्यर्थं विचारितम् ॥ ०४० ॥

मन्यते चैव लोकस्ते स्त्रीभावान्मयि सङ्गतम् ।
पुत्रश्चायं वृतो राज्ये मया तस्माद्विचारितम् ॥ ०४१ ॥

यच्च कोपितयात्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये ।
प्रणयिन्या विशालाक्षि तत्क्षान्तं ते मया शुभे ॥ ०४२ ॥

तामेवमुक्त्वा राजर्षिर्दुःषन्तो महिषीं प्रियाम् ।
वासोभिरन्नपानैश्च पूजयामास भारत ॥ ०४३ ॥

दुःषन्तश्च ततो राजा पुत्रं शाकुन्तलं तदा ।
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् ॥ ०४४ ॥

तस्य तत्प्रथितं चक्रं प्रावर्तत महात्मनः ।

भास्वरं दिव्यमजितं लोकसंनादनं महत् ॥ ०४५ ॥

स विजित्य महीपालांश्चकार वशवर्तिनः ।
चचार च सतां धर्मं प्राप चानुत्तमं यशः ॥ ०४६ ॥

स राजा चक्रवर्त्यासीत्सार्वभौमः प्रतापवान् ।
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः ॥ ०४७ ॥

याजयामास तं कण्वो दक्षवद्भूरिदक्षिणम् ।
श्रीमान्गोविततं नाम वाजिमेधमवाप सः ॥ ०४८ ॥

यस्मिन्सहस्रं पद्मानां कण्वाय भरतो ददौ ॥ ०४८ ॥

भरताद्भारती कीर्तिर्येनेदं भारतं कुलम् ।
अपरे ये च पूर्वे च भारता इति विश्रुताः ॥ ०४९ ॥

भरतस्यान्ववाये हि देवकल्पा महौजसः ।
बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः ॥ ०५० ॥

येषामपरिमेयानि नामधेयानि सर्वशः ।
तेषां तु ते यथामुख्यं कीर्तयिष्यामि भारत ॥ ०५१ ॥

महाभागान्देवकल्पान्सत्यार्जवपरायणान् ॥ ०५१ ॥

# ययात्युपाख्यानम्

## अध्याय ०७०

वैशंपायन उवाच ॥

प्रजापतेस्तु दक्षस्य मनोर्वैवस्वतस्य च ।
भरतस्य कुरोः पूरोरजमीढस्य चान्वये ॥ ००१ ॥

यादवानामिमं वंशं पौरवाणां च सर्वशः ।
तथैव भारतानां च पुण्यं स्वस्त्ययनं महत् ॥ ००२ ॥

धन्यं यशस्यमायुष्यं कीर्तयिष्यामि तेऽनघ ॥ ००२ ॥

तेजोभिरुदिताः सर्वे महर्षिसमतेजसः ।
दश प्रचेतसः पुत्राः सन्तः पूर्वजनाः स्मृताः ॥ ००३ ॥

मेघजेनाग्निना ये ते पूर्वं दग्धा महौजसः ॥ ००३ ॥

तेभ्यः प्राचेतसो जज्ञे दक्षो दक्षादिमाः प्रजाः ।
संभूताः पुरुषव्याघ्र स हि लोकपितामहः ॥ ००४ ॥

वीरिण्या सह सङ्गम्य दक्षः प्राचेतसो मुनिः ।
आत्मतुल्यानजनयत्सहस्रं संशितव्रतान् ॥ ००५ ॥

सहस्रसंख्यान्समितान्सुतान्दक्षस्य नारदः ।
मोक्षमध्यापयामास सांख्यज्ञानमनुत्तमम् ॥ ००६ ॥

ततः पञ्चाशतं कन्याः पुत्रिका अभिसंदधे ।
प्रजापतिः प्रजा दक्षः सिसृक्षुर्जनमेजय ॥ ००७ ॥

ददौ स दश धर्माय कश्यपाय त्रयोदश ।
कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ॥ ००८ ॥

त्रयोदशानां पत्नीनां या तु दाक्षायणी वरा ।
मारीचः कश्यपस्तस्यामादित्यान्समजीजनत् ॥ ००९ ॥

इन्द्रादीन्वीर्यसंपन्नान्विवस्वन्तमथापि च ॥ ००९ ॥

विवस्वतः सुतो जज्ञे यमो वैवस्वतः प्रभुः ।
मार्तण्डश्च यमस्यापि पुत्रो राजन्नजायत ॥ ०१० ॥

मार्तण्डस्य मनुर्धीमानजायत सुतः प्रभुः ।
मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत् ॥ ०११ ॥

ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः ॥ ०११ ॥

तत्राभवत्तदा राजन्ब्रह्म क्षत्रेण सङ्गतम् ।
ब्राह्मणा मानवास्तेषां साङ्गं वेदमदीधरन् ॥ ०१२ ॥

वेनं धृष्णुं नरिष्यन्तं नाभागेक्ष्वाकुमेव च ।
करूषमथ शर्यातिं तथैवात्राष्टमीमिलाम् ॥ ०१३ ॥

पृषध्रनवमानाहुः क्षत्रधर्मपरायणान् ।
नाभागारिष्टदशमान्मनोः पुत्रान्महाबलान् ॥ ०१४ ॥

पञ्चाशतं मनोः पुत्रास्तथैवान्येऽभवन्क्षितौ ।
अन्योन्यभेदात्ते सर्वे विनेशुरिति नः श्रुतम् ॥ ०१५ ॥

पुरूरवास्ततो विद्वानिलायां समपद्यत ।
सा वै तस्याभवन्माता पिता चेति हि नः श्रुतम् ॥ ०१६ ॥

त्रयोदश समुद्रस्य द्वीपानश्नन्पुरूरवाः ।
अमानुषैर्वृतः सत्त्वैर्मानुषः सन्महायशाः ॥ ०१७ ॥

विप्रैः स विग्रहं चक्रे वीर्योन्मत्तः पुरूरवाः ।
जहार च स विप्राणां रत्नान्युत्क्रोशतामपि ॥ ०१८ ॥

सनत्कुमारस्तं राजन्ब्रह्मलोकादुपेत्य ह ।
अनुदर्शयां ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ ॥ ०१९ ॥

ततो महर्षिभिः क्रुद्धैः शप्तः सद्यो व्यनश्यत ।
लोभान्वितो मदबलान्नष्टसञ्ज्ञो नराधिपः ॥ ०२० ॥

स हि गन्धर्वलोकस्थ उर्वश्या सहितो विराट् ।
आनिनाय क्रियार्थेऽग्नीन्यथावद्विहितांस्त्रिधा ॥ ०२१ ॥

षट्पुत्रा जज्ञिरेऽथैलादायुर्धीमानमावसुः ।
दृढायुश्च वनायुश्च श्रुतायुश्चोर्वशीसुताः ॥ ०२२ ॥

नहुषं वृद्धशर्माणं रजिं रम्भमनेनसम् ।
स्वर्भानवीसुतानेतानायोः पुत्रान्प्रचक्षते ॥ ०२३ ॥

आयुषो नहुषः पुत्रो धीमान्सत्यपराक्रमः ।
राज्यं शशास सुमहद्धर्मेण पृथिवीपतिः ॥ ०२४ ॥

पितॄन्देवानृषीन्विप्रान्गन्धर्वोरगराक्षसान् ।
नहुषः पालयामास ब्रह्मक्षत्रमथो विशः ॥ ०२५ ॥

स हत्वा दस्युसंघातानृषीन्करमदापयत् ।
पशुवच्चैव तान्पृष्ठे वाहयामास वीर्यवान् ॥ ०२६ ॥

कारयामास चेन्द्रत्वमभिभूय दिवौकसः ।

तेजसा तपसा चैव विक्रमेणौजसा तथा ॥ ०२७ ॥

यतिं ययातिं संयातिमायातिं पाञ्चमुद्धवम् ।
नहुषो जनयामास षड्पुत्रान्प्रियवाससि ॥ ०२८ ॥

ययातिर्नाहुषः सम्राडासीत्सत्यपराक्रमः ।
स पालयामास महीमीजे च विविधैः सवैः ॥ ०२९ ॥

अतिशक्त्या पितृनर्चन्देवांश्च प्रयतः सदा ।
अन्वगृह्णात्प्रजाः सर्वा ययातिरपराजितः ॥ ०३० ॥

तस्य पुत्रा महेष्वासाः सर्वैः समुदिता गुणैः ।
देवयान्यां महाराज शर्मिष्ठायां च जज्ञिरे ॥ ०३१ ॥

देवयान्यामजायेतां यदुस्तुर्वसुरेव च ।
द्रुह्युश्चानुश्च पूरुश्च शर्मिष्ठायां प्रजज्ञिरे ॥ ०३२ ॥

स शाश्वतीः समा राजन्प्रजा धर्मेण पालयन् ।
जरामार्छन्महाघोरां नाहुषो रूपनाशिनीम् ॥ ०३३ ॥

जराभिभूतः पुत्रान्स राजा वचनमब्रवीत् ।
यदुं पूरुं तुर्वसुं च द्रुह्युं चानुं च भारत ॥ ०३४ ॥

यौवनेन चरन्कामान्युवा युवतिभिः सह ।
विहर्तुमहमिच्छामि साह्यं कुरुत पुत्रकाः ॥ ०३५ ॥

तं पुत्रो देवयानेयः पूर्वजो यदुरब्रवीत् ।
किं कार्यं भवतः कार्यमस्माभिर्यौवनेन च ॥ ०३६ ॥

ययातिरब्रवीत्तं वै जरा मे प्रतिगृह्यताम् ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥ ०३७ ॥

यजतो दीर्घसत्रैर्मे शापाच्चोशनसो मुनेः ।
कामार्थः परिहीणो मे तप्येऽहं तेन पुत्रकाः ॥ ०३८ ॥

मामकेन शरीरेण राज्यमेकः प्रशास्तु वः ।
अहं तन्वाभिनवया युवा कामानवाप्नुयाम् ॥ ०३९ ॥

न ते तस्य प्रत्यगृह्णन्यदुप्रभृतयो जराम् ।
तमब्रवीत्ततः पूरुः कनीयान्सत्यविक्रमः ॥ ०४० ॥

राजंश्चराभिनवया तन्वा यौवनगोचरः ।
अहं जरां समास्थाय राज्ये स्थास्यामि तेऽऽज्ञया ॥ ०४१ ॥

एवमुक्तः स राजर्षिस्तपोवीर्यसमाश्रयात् ।
सञ्चारयामास जरां तदा पुत्रे महात्मनि ॥ ०४२ ॥

पौरवेणाथ वयसा राजा यौवनमास्थितः ।
यायातेनापि वयसा राज्यं पूरुरकारयत् ॥ ०४३ ॥

ततो वर्षसहस्रान्ते ययातिरपराजितः ।
अतृप्त एव कामानां पूरुं पुत्रमुवाच ह ॥ ०४४ ॥

त्वया दायादवानस्मि त्वं मे वंशकरः सुतः ।
पौरवो वंश इति ते ख्यातिं लोके गमिष्यति ॥ ०४५ ॥

ततः स नृपशार्दूलः पूरुं राज्येऽभिषिच्य च ।
कालेन महता पश्चात्कालधर्ममुपेयिवान् ॥ ०४६ ॥

# अध्याय ०७१

जनमेजय उवाच ॥

ययातिः पूर्वकोऽस्माकं दशमो यः प्रजापतेः ।
कथं स शुक्रतनयां लेभे परमदुर्लभाम् ॥ ००१ ॥

एतदिच्छाम्यहं श्रोतुं विस्तरेण द्विजोत्तम ।
आनुपूर्व्या च मे शंस पूरोर्वंशकरान्पृथक् ॥ ००२ ॥

वैशंपायन उवाच ॥

ययातिरासीद्राजर्षिर्देवराजसमद्युतिः ।
तं शुक्रवृषपर्वाणौ वव्राते वै यथा पुरा ॥ ००३ ॥

तत्तेऽहं संप्रवक्ष्यामि पृच्छतो जनमेजय ।
देवयान्याश्च संयोगं ययातेर्नाहुषस्य च ॥ ००४ ॥

सुराणामसुराणां च समजायत वै मिथः ।
ऐश्वर्यं प्रति संघर्षस्त्रैलोक्ये सचराचरे ॥ ००५ ॥

जिगीषया ततो देवा वव्रिरेऽऽङ्गिरसं मुनिम् ।
पौरोहित्येन याज्यार्थे काव्यं तूशनसं परे ॥ ००६ ॥

ब्राह्मणौ तावुभौ नित्यमन्योन्यस्पर्धिनौ भृशम् ॥ ००६ ॥

तत्र देवा निजघ्नुर्यान्दानवान्युधि सङ्गतान् ।
तान्पुनर्जीवयामास काव्यो विद्याबलाश्रयात् ॥ ००७ ॥

ततस्ते पुनरुत्थाय योधयां चक्रिरे सुरान् ॥ ००७ ॥

असुरास्तु निजघ्नुर्यान्सुरान्समरमूर्धनि ।
न तान्सञ्जीवयामास बृहस्पतिरुदारधीः ॥ ००८ ॥

न हि वेद स तां विद्यां यां काव्यो वेद वीर्यवान् ।
सञ्जीवनीं ततो देवा विषादमगमन्परम् ॥ ००९ ॥

ते तु देवा भयोद्विग्नाः काव्यादुशनसस्तदा ।
ऊचुः कचमुपागम्य ज्येष्ठं पुत्रं बृहस्पतेः ॥ ०१० ॥

भजमानान्भजस्वास्मान्कुरु नः साह्यमुत्तमम् ।
यासौ विद्या निवसति ब्राह्मणेऽमिततेजसि ॥ ०११ ॥

शुक्रे तामाहर क्षिप्रं भागभाङ्नो भविष्यसि ॥ ०११ ॥

वृषपर्वसमीपे स शक्यो द्रष्टुं त्वया द्विजः ।
रक्षते दानवांस्तत्र न स रक्षत्यदानवान् ॥ ०१२ ॥

तमाराधयितुं शक्तो भवान्पूर्ववयाः कविम् ।
देवयानीं च दयितां सुतां तस्य महात्मनः ॥ ०१३ ॥

त्वमाराधयितुं शक्तो नान्यः कश्चन विद्यते ।
शीलदाक्षिण्यमाधुर्यैराचारेण दमेन च ॥ ०१४ ॥

देवयान्यां हि तुष्टायां विद्यां तां प्राप्स्यसि ध्रुवम् ॥ ०१४ ॥

तथेत्युक्त्वा ततः प्रायाद्बृहस्पतिसुतः कचः ।
तदाभिपूजितो देवैः समीपं वृषपर्वणः ॥ ०१५ ॥

स गत्वा त्वरितो राजन्देवैः संप्रेषितः कचः ।
असुरेन्द्रपुरे शुक्रं दृष्ट्वा वाक्यमुवाच ह ॥ ०१६ ॥

ऋषेरङ्गिरसः पौत्रं पुत्रं साक्षाद्बृहस्पतेः ।
नाम्ना कच इति ख्यातं शिष्यं गृह्णातु मां भवान् ॥ ०१७ ॥

ब्रह्मचर्यं चरिष्यामि त्वय्यहं परमं गुरौ ।
अनुमन्यस्व मां ब्रह्मन्सहस्रं परिवत्सरान् ॥ ०१८ ॥

शुक्र उवाच ॥

कच सुस्वागतं तेऽस्तु प्रतिगृह्णामि ते वचः ।
अर्चयिष्येऽहमर्च्यं त्वामर्चितोऽस्तु बृहस्पतिः ॥ ०१९ ॥

वैशंपायन उवाच ॥

कचस्तु तं तथेत्युक्त्वा प्रतिजग्राह तद्व्रतम् ।
आदिष्टं कविपुत्रेण शुक्रेणोशनसा स्वयम् ॥ ०२० ॥

व्रतस्य व्रतकालं स यथोक्तं प्रत्यगृह्णत ।
आराधयन्नुपाध्यायं देवयानीं च भारत ॥ ०२१ ॥

नित्यमाराधयिष्यंस्तां युवा यौवनगोऽऽमुखे ।
गायन्नृत्यन्वादयंश्च देवयानीमतोषयत् ॥ ०२२ ॥

संशीलयन्देवयानीं कन्यां संप्राप्तयौवनाम् ।
पुष्पैः फलैः प्रेषणैश्च तोषयामास भारत ॥ ०२३ ॥

देवयान्यपि तं विप्रं नियमव्रतचारिणम् ।
अनुगायमाना ललना रहः पर्यचरत्तदा ॥ ०२४ ॥

पञ्च वर्षशतान्येवं कचस्य चरतो व्रतम् ।
तत्रातीयुरथो बुद्ध्वा दानवास्तं ततः कचम् ॥ ०२५ ॥

गा रक्षन्तं वने दृष्ट्वा रहस्येकममर्षिताः ।
जघ्नुर्बृहस्पतेर्द्वेषाद्विद्यारक्षार्थमेव च ॥ ०२६ ॥

हत्वा शालावृकेभ्यश्च प्रायच्छंस्तिलशः कृतम् ॥ ०२६ ॥

ततो गावो निवृत्तास्ता अगोपाः स्वं निवेशनम् ।
ता दृष्ट्वा रहिता गास्तु कचेनाभ्यागता वनात् ॥ ०२७ ॥

उवाच वचनं काले देवयान्यथ भारत ॥ ०२७ ॥

अहुतं चाग्निहोत्रं ते सूर्यश्चास्तं गतः प्रभो ।
अगोपाश्चागता गावः कचस्तात न दृश्यते ॥ ०२८ ॥

व्यक्तं हतो मृतो वापि कचस्तात भविष्यति ।
तं विना न च जीवेयं कचं सत्यं ब्रवीमि ते ॥ ०२९ ॥

शुक्र उवाच ॥

अयमेहीति शब्देन मृतं सञ्जीवयाम्यहम् ।
वैशंपायन उवाच ॥

ततः सञ्जीवनीं विद्यां प्रयुज्य कचमाह्वयत् ।
आहूतः प्रादुरभवत्कचोऽरिष्टोऽथ विद्यया ॥ ०३१ ॥

हतोऽहमिति चाचख्यौ पृष्टो ब्राह्मणकन्यया ॥ ०३१ ॥

स पुनर्देवयान्योक्तः पुष्पाहारो यदृच्छया ।
वनं ययौ ततो विप्रो ददृशुर्दानवाश्च तम् ॥ ०३२ ॥

ततो द्वितीयं हत्वा तं दग्ध्वा कृत्वा च चूर्णशः ।
प्रायच्छन्ब्राह्मणायैव सुरायामसुरास्तदा ॥ ०३३ ॥

देवयान्यथ भूयोऽपि वाक्यं पितरमब्रवीत् ।
पुष्पाहारः प्रेषणकृत्कचस्तात न दृश्यते ॥ ०३४ ॥

शुक्र उवाच ॥

बृहस्पतेः सुतः पुत्रि कचः प्रेतगतिं गतः ।
विद्यया जीवितोऽप्येवं हन्यते करवाणि किम् ॥ ०३५ ॥

मैवं शुचो मा रुद देवयानि ; न त्वादृशी मर्त्यमनुप्रशोचेत् ।
सुराश्च विश्वे च जगच्च सर्व ;मुपस्थितां वैकृतिमानमन्ति ॥ ०३६ ॥

देवयान्युवाच ॥

यस्याङ्गिरा वृद्धतमः पितामहो ; बृहस्पतिश्चापि पिता तपोधनः ।
ऋषेः पुत्रं तमथो वापि पौत्रं ; कथं न शोचेयमहं न रुद्याम् ॥ ०३७ ॥

स ब्रह्मचारी च तपोधनश्च ; सदोत्थितः कर्मसु चैव दक्षः ।
कचस्य मार्गं प्रतिपत्स्ये न भोक्ष्ये ; प्रियो हि मे तात कचोऽभिरूपः ॥ ०३८ ॥

शुक्र उवाच ॥

असंशयं मामसुरा द्विषन्ति ; ये मे शिष्यं नागसं सूदयन्ति ।
अब्राह्मणं कर्तुमिच्छन्ति रौद्रा ;स्ते मां यथा प्रस्तुतं दानवैर्हि ॥ ०३९ ॥

अप्यस्य पापस्य भवेदिहान्तः ; कं ब्रह्महत्या न दहेदपीन्द्रम् ॥ ०३९ ॥

वैशंपायन उवाच ॥

सञ्चोदितो देवयान्या महर्षिः पुनराह्वयत् ।
संरम्भेणैव काव्यो हि बृहस्पतिसुतं कचम् ॥ ०४० ॥

गुरोर्भीतो विद्यया चोपहूतः ; शनैर्वाचं जठरे व्याजहार ।
तमब्रवीत्केन पथोपनीतो ; ममोदरे तिष्ठसि ब्रूहि विप्र ॥ ०४१ ॥

कच उवाच ॥

भवत्प्रसादान्न जहाति मां स्मृतिः ; स्मरे च सर्वं यच्च यथा च वृत्तम् ।
न त्वेवं स्यात्तपसो व्ययो मे ; ततः क्लेशं घोरमिमं सहामि ॥ ०४२ ॥

असुरैः सुरायां भवतोऽस्मि दत्तो ; हत्वा दग्ध्वा चूर्णयित्वा च काव्य ।
ब्राह्मीं मायामासुरी चैव माया ; त्वयि स्थिते कथमेवातिवर्तेत् ॥ ०४३ ॥

शुक्र उवाच ॥

किं ते प्रियं करवाण्यद्य वत्से ; वधेन मे जीवितं स्यात्कचस्य ।
नान्यत्र कुक्षेर्मम भेदनेन ; दृश्येत्कचो मद्गतो देवयानि ॥ ०४४ ॥

देवयान्युवाच ॥

द्वौ मां शोकावग्निकल्पौ दहेतां ; कचस्य नाशस्तव चैवोपघातः ।
कचस्य नाशे मम नास्ति शर्म ; तवोपघाते जीवितुं नास्मि शक्ता ॥ ०४५ ॥

शुक्र उवाच ॥

संसिद्धरूपोऽसि बृहस्पतेः सुत ; यत्त्वां भक्तं भजते देवयानी ।
विद्यामिमां प्राप्नुहि जीवनीं त्वं ; न चेदिन्द्रः कचरूपी त्वमद्य ॥ ०४६ ॥

न निवर्तेत्पुनर्जीवन्कश्चिदन्यो ममोदरात् ।
ब्राह्मणं वर्जयित्वैकं तस्माद्विद्यामवाप्नुहि ॥ ०४७ ॥

पुत्रो भूत्वा भावय भावितो मा ;मस्माद्देहादुपनिष्क्रम्य तात ।

समीक्षेथा धर्मवतीमवेक्षां ; गुरोः सकाशात्प्राप्य विद्यां सविद्यः ॥ ०४८ ॥

वैशंपायन उवाच ॥

गुरोः सकाशात्समवाप्य विद्यां ; भित्त्वा कुक्षिं निर्विचक्राम विप्रः ।
कचोऽभिरूपो दक्षिणं ब्राह्मणस्य ; शुक्लात्यये पौर्णमास्यामिवेन्दुः ॥ ०४९ ॥

दृष्ट्वा च तं पतितं ब्रह्मराशि ;मुत्थापयामास मृतं कचोऽपि ।
विद्यां सिद्धां तामवाप्याभिवाद्य ; ततः कचस्तं गुरुमित्युवाच ॥ ०५० ॥

ऋतस्य दातारमनुत्तमस्य ; निधिं निधीनां चतुरन्वयानाम् ।
ये नाद्रियन्ते गुरुमर्चनीयं ; पापा.ण्ल्लोकांस्ते व्रजन्त्यप्रतिष्ठान् ॥ ०५१ ॥

वैशंपायन उवाच ॥

सुरापानाद्वञ्चनां प्रापयित्वा ; सञ्ज्ञानाशं चैव तथातिघोरम् ।
दृष्ट्वा कचं चापि तथाभिरूपं ; पीतं तदा सुरया मोहितेन ॥ ०५२ ॥

समन्युरुत्थाय महानुभाव ;स्तदोशना विप्रहितं चिकीर्षुः ।
काव्यः स्वयं वाक्यमिदं जगाद ; सुरापानं प्रति वै जातशङ्कः ॥ ०५३ ॥

यो ब्राह्मणोऽद्य प्रभृतीह कश्चि ;न्मोहात्सुरां पास्यति मन्दबुद्धिः ।
अपेतधर्मो ब्रह्महा चैव स स्या ;दस्मि.ण्ल्लोके गर्हितः स्यात्परे च ॥ ०५४ ॥

मया चेमां विप्रधर्मोक्तिसीमां ; मर्यादां वै स्थापितां सर्वलोके ।
सन्तो विप्राः शुश्रुवांसो गुरूणां ; देवा लोकाश्चोपशृण्वन्तु सर्वे ॥ ०५५ ॥

इतीदमुक्त्वा स महानुभाव ;स्तपोनिधीनां निधिरप्रमेयः ।
तान्दानवान्दैवविमूढबुद्धी ;निदं समाहूय वचोऽभ्युवाच ॥ ०५६ ॥

आचक्षे वो दानवा बालिशाः स्थ ; सिद्धः कचो वत्स्यति मत्सकाशे ।

सञ्जीवनीं प्राप्य विद्यां महार्थां ; तुल्यप्रभावो ब्रह्मणा ब्रह्मभूतः ॥ ०५७ ॥

गुरोरुष्य सकाशे तु दश वर्षशतानि सः ।
अनुज्ञातः कचो गन्तुमियेष त्रिदशालयम् ॥ ०५८ ॥

---

# अध्याय ०७२

वैशंपायन उवाच ॥

समावृत्तव्रतं तं तु विसृष्टं गुरुणा तदा ।
प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदम् ॥ ००१ ॥

ऋषेरङ्गिरसः पौत्र वृत्तेनाभिजनेन च ।
भ्राजसे विद्यया चैव तपसा च दमेन च ॥ ००२ ॥

ऋषिर्यथाङ्गिरा मान्यः पितुर्मम महायशाः ।
तथा मान्यश्च पूज्यश्च भूयो मम बृहस्पतिः ॥ ००३ ॥

एवं ज्ञात्वा विजानीहि यद्ब्रवीमि तपोधन ।
व्रतस्थे नियमोपेते यथा वर्ताम्यहं त्वयि ॥ ००४ ॥

स समावृत्तविद्यो मां भक्तां भजितुमर्हसि ।
गृहाण पाणिं विधिवन्मम मन्त्रपुरस्कृतम् ॥ ००५ ॥

कच उवाच ॥

पूज्यो मान्यश्च भगवान्यथा तव पिता मम ।
तथा त्वमनवद्याङ्गि पूजनीयतरा मम ॥ ००६ ॥

आत्मप्राणैः प्रियतमा भार्गवस्य महात्मनः ।
त्वं भद्रे धर्मतः पूज्या गुरुपुत्री सदा मम ॥ ००७ ॥

यथा मम गुरुर्नित्यं मान्यः शुक्रः पिता तव ।
देवयानि तथैव त्वं नैवं मां वक्तुमर्हसि ॥ ००८ ॥

देवयान्युवाच ॥

गुरुपुत्रस्य पुत्रो वै न तु त्वमसि मे पितुः ।
तस्मान्मान्यश्च पूज्यश्च ममापि त्वं द्विजोत्तम ॥ ००९ ॥

असुरैर्हन्यमाने च कच त्वयि पुनः पुनः ।
तदा प्रभृति या प्रीतिस्तां त्वमेव स्मरस्व मे ॥ ०१० ॥

सौहार्दे चानुरागे च वेत्थ मे भक्तिमुत्तमाम् ।
न मामर्हसि धर्मज्ञ त्यक्तुं भक्तामनागसम् ॥ ०११ ॥

कच उवाच ॥

अनियोज्ये नियोगे मां नियुनक्षि शुभव्रते ।
प्रसीद सुभ्रु त्वं मह्यं गुरोर्गुरुतरी शुभे ॥ ०१२ ॥

यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने ।
तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भामिनि ॥ ०१३ ॥

भगिनी धर्मतो मे त्वं मैवं वोचः शुभानने ।
सुखमस्म्युषितो भद्रे न मन्युर्विद्यते मम ॥ ०१४ ॥

आपृच्छे त्वां गमिष्यामि शिवमाशंस मे पथि ।
अविरोधेन धर्मस्य स्मर्तव्योऽस्मि कथान्तरे ॥ ०१५ ॥

अप्रमत्तोत्थिता नित्यमाराधय गुरुं मम ॥ ०१५ ॥

देवयान्युवाच ॥

यदि मां धर्मकामार्थे प्रत्याख्यास्यसि चोदितः ।
ततः कच न ते विद्या सिद्धिमेषा गमिष्यति ॥ ०१६ ॥

कच उवाच ॥

गुरुपुत्रीति कृत्वाहं प्रत्याचक्षे न दोषतः ।
गुरुणा चाभ्यनुज्ञातः काममेवं शपस्व माम् ॥ ०१७ ॥

आर्षं धर्मं ब्रुवाणोऽहं देवयानि यथा त्वया ।
शप्तो नार्होऽस्मि शापस्य कामतोऽद्य न धर्मतः ॥ ०१८ ॥

तस्माद्भवत्या यः कामो न तथा स भविष्यति ।
ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति ॥ ०१९ ॥

फलिष्यति न ते विद्या यत्त्वं मामात्थ तत्तथा ।
अध्यापयिष्यामि तु यं तस्य विद्या फलिष्यति ॥ ०२० ॥

वैशंपायन उवाच ॥

एवमुक्त्वा द्विजश्रेष्ठो देवयानीं कचस्तदा ।
त्रिदशेशालयं शीघ्रं जगाम द्विजसत्तमः ॥ ०२१ ॥

तमागतमभिप्रेक्ष्य देवा इन्द्रपुरोगमाः ।
बृहस्पतिं सभाज्येदं कचमाहुर्मुदान्विताः ॥ ०२२ ॥

यत्त्वमस्मद्धितं कर्म चकर्थ परमाद्भुतम् ।

न ते यशः प्रणशिता भागभाङ्गो भविष्यसि ॥ ०२३ ॥

---

# अध्याय ०७३

वैशंपायन उवाच ॥

कृतविद्ये कचे प्राप्ते हृष्टरूपा दिवौकसः ।
कचादधीत्य तां विद्यां कृतार्था भरतर्षभ ॥ ००१ ॥

सर्व एव समागम्य शतक्रतुमथाब्रुवन् ।
कालस्ते विक्रमस्याद्य जहि शत्रून्पुरंदर ॥ ००२ ॥

एवमुक्तस्तु सहितैस्त्रिदशैर्मघवांस्तदा ।
तथेत्युक्त्वोपचक्राम सोऽपश्यत वने स्त्रियः ॥ ००३ ॥

क्रीडन्तीनां तु कन्यानां वने चैत्ररथोपमे ।
वायुभूतः स वस्त्राणि सर्वाण्येव व्यमिश्रयत् ॥ ००४ ॥

ततो जलात्समुत्तीर्य कन्यास्ताः सहितास्तदा ।
वस्त्राणि जगृहुस्तानि यथासन्नान्यनेकशः ॥ ००५ ॥

तत्र वासो देवयान्याः शर्मिष्ठा जगृहे तदा ।
व्यतिमिश्रमजानन्ती दुहिता वृषपर्वणः ॥ ००६ ॥

ततस्तयोर्मिथस्तत्र विरोधः समजायत ।
देवयान्याश्च राजेन्द्र शर्मिष्ठायाश्च तत्कृते ॥ ००७ ॥

देवयान्युवाच ॥

कस्माद्गृह्णासि मे वस्त्रं शिष्या भूत्वा ममासुरि ।
समुदाचारहीनाया न ते श्रेयो भविष्यति ॥ ००८ ॥

शर्मिष्ठोवाच ॥

आसीनं च शयानं च पिता ते पितरं मम ।
स्तौति वन्दति चाभीक्ष्णं नीचैः स्थित्वा विनीतवत् ॥ ००९ ॥

याचतस्त्वं हि दुहिता स्तुवतः प्रतिगृह्णतः ।
सुताहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः ॥ ०१० ॥

अनायुधा सायुधाया रिक्ता क्षुभ्यसि भिक्षुकि ।
लप्स्यसे प्रतियोद्धारं न हि त्वां गणयाम्यहम् ॥ ०११ ॥

वैशंपायन उवाच ॥

समुच्छ्रयं देवयानीं गतां सक्तां च वाससि ।
शर्मिष्ठा प्राक्षिपत्कूपे ततः स्वपुरमाव्रजत् ॥ ०१२ ॥

हतेयमिति विज्ञाय शर्मिष्ठा पापनिश्चया ।
अनवेक्ष्य ययौ वेश्म क्रोधवेगपरायणा ॥ ०१३ ॥

अथ तं देशमभ्यागाद्ययातिर्नहुषात्मजः ।
श्रान्तयुग्यः श्रान्तहयो मृगलिप्सुः पिपासितः ॥ ०१४ ॥

स नाहुषः प्रेक्षमाण उदपानं गतोदकम् ।
ददर्श कन्यां तां तत्र दीप्तामग्निशिखामिव ॥ ०१५ ॥

तामपृच्छत्स दृष्ट्वैव कन्याममरवर्णिनीम् ।
सान्त्वयित्वा नृपश्रेष्ठः साम्ना परमवल्गुना ॥ ०१६ ॥

का त्वं ताम्रनखी श्यामा सुमृष्टमणिकुण्डला ।
दीर्घं ध्यायसि चात्यर्थं कस्माच्छ्वसिषि चातुरा ॥ ०१७ ॥

कथं च पतितास्यस्मिन्कूपे वीरुत्तृणावृते ।
दुहिता चैव कस्य त्वं वद सर्वं सुमध्यमे ॥ ०१८ ॥

देवयान्युवाच ॥

योऽसौ देवैर्हतान्दैत्यानुत्थापयति विद्यया ।
तस्य शुक्रस्य कन्याहं स मां नूनं न बुध्यते ॥ ०१९ ॥

एष मे दक्षिणो राजन्पाणिस्ताम्रनखाङ्गुलिः ।
समुद्धर गृहीत्वा मां कुलीनस्त्वं हि मे मतः ॥ ०२० ॥

जानामि हि त्वां संशान्तं वीर्यवन्तं यशस्विनम् ।
तस्मान्मां पतितामस्मात्कूपादुद्धर्तुमर्हसि ॥ ०२१ ॥

वैशंपायन उवाच ॥

तामथ ब्राह्मणीं स्त्रीं च विज्ञाय नहुषात्मजः ।
गृहीत्वा दक्षिणे पाणावुज्जहार ततोऽवटात् ॥ ०२२ ॥

उद्धृत्य चैनां तरसा तस्मात्कूपान्नराधिपः ।
आमन्त्रयित्वा सुश्रोणीं ययातिः स्वपुरं ययौ ॥ ०२३ ॥

देवयान्युवाच ॥

त्वरितं घूर्णिके गच्छ सर्वमाचक्ष्व मे पितुः ।
नेदानीं हि प्रवेक्ष्यामि नगरं वृषपर्वणः ॥ ०२४ ॥

वैशंपायन उवाच ॥

सा तु वै त्वरितं गत्वा घूर्णिकासुरमन्दिरम् ।
दृष्ट्वा काव्यमुवाचेदं संभ्रमाविष्टचेतना ॥ ०२५ ॥

आचक्षे ते महाप्राज्ञ देवयानी वने हता ।
शर्मिष्ठया महाभाग दुहित्रा वृषपर्वणः ॥ ०२६ ॥

श्रुत्वा दुहितरं काव्यस्तत्र शर्मिष्ठया हताम् ।
त्वरया निर्ययौ दुःखान्मार्गमाणः सुतां वने ॥ ०२७ ॥

दृष्ट्वा दुहितरं काव्यो देवयानीं ततो वने ।
बाहुभ्यां संपरिष्वज्य दुःखितो वाक्यमब्रवीत् ॥ ०२८ ॥

आत्मदोषैर्नियच्छन्ति सर्वे दुःखसुखे जनाः ।
मन्ये दुश्चरितं तेऽस्ति यस्येयं निष्कृतिः कृता ॥ ०२९ ॥

देवयान्युवाच ॥

निष्कृतिर्मेऽस्तु वा मास्तु शृणुष्वावहितो मम ।
शर्मिष्ठया यदुक्तास्मि दुहित्रा वृषपर्वणः ॥ ०३० ॥

सत्यं किलैतत्सा प्राह दैत्यानामसि गायनः ॥ ०३० ॥

एवं हि मे कथयति शर्मिष्ठा वार्षपर्वणी ।
वचनं तीक्ष्णपरुषं क्रोधरक्तेक्षणा भृशम् ॥ ०३१ ॥

स्तुवतो दुहिता हि त्वं याचतः प्रतिगृह्णतः ।
सुताहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः ॥ ०३२ ॥

इति मामाह शर्मिष्ठा दुहिता वृषपर्वणः ।

क्रोधसंरक्तनयना दर्पपूर्णा पुनः पुनः ॥ ०३३ ॥

यद्यहं स्तुवतस्तात दुहिता प्रतिगृह्णतः ।
प्रसादयिष्ये शर्मिष्ठामित्युक्ता हि सखी मया ॥ ०३४ ॥

शुक्र उवाच ॥

स्तुवतो दुहिता न त्वं भद्रे न प्रतिगृह्णतः ।
अस्तोतुः स्तूयमानस्य दुहिता देवयान्यसि ॥ ०३५ ॥

वृषपर्वैव तद्वेद शक्रो राजा च नाहुषः ।
अचिन्त्यं ब्रह्म निर्द्वन्द्वमैश्वरं हि बलं मम ॥ ०३६ ॥

---

# अध्याय ०७४

शुक्र उवाच ॥

यः परेषां नरो नित्यमतिवादांस्तितिक्षति ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ ००१ ॥

यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा ।
स यन्तेत्युच्यते सद्भिर्न यो रश्मिषु लम्बते ॥ ००२ ॥

यः समुत्पतितं क्रोधमक्रोधेन निरस्यति ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ ००३ ॥

यः समुत्पतितं क्रोधं क्षमयेह निरस्यति ।

यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ००४ ॥

यः संधारयते मन्युं योऽतिवादांस्तितिक्षति ।
यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम् ॥ ००५ ॥

यो यजेदपरिश्रान्तो मासि मासि शतं समाः ।
न क्रुध्येद्यश्च सर्वस्य तयोरक्रोधनोऽधिकः ॥ ००६ ॥

यत्कुमाराः कुमार्यश्च वैरं कुर्युरचेतसः ।
न तत्प्राज्ञोऽनुकुर्वीत विदुस्ते न बलाबलम् ॥ ००७ ॥

देवयान्युवाच ॥

वेदाहं तात बालापि धर्माणां यदिहान्तरम् ।
अक्रोधे चातिवादे च वेद चापि बलाबलम् ॥ ००८ ॥

शिष्यस्याशिष्यवृत्तेर्हि न क्षन्तव्यं बुभूषता ।
तस्मात्सङ्कीर्णवृत्तेषु वासो मम न रोचते ॥ ००९ ॥

पुमांसो ये हि निन्दन्ति वृत्तेनाभिजनेन च ।
न तेषु निवसेत्प्राज्ञः श्रेयोर्थी पापबुद्धिषु ॥ ०१० ॥

ये त्वेनमभिजानन्ति वृत्तेनाभिजनेन च ।
तेषु साधुषु वस्तव्यं स वासः श्रेष्ठ उच्यते ॥ ०११ ॥

वाग्दुरुक्तं महाघोरं दुहितुर्वृषपर्वणः ।
न ह्यतो दुष्करतरं मन्ये लोकेष्वपि त्रिषु ॥ ०१२ ॥

यः सपत्नश्रियं दीप्तां हीनश्रीः पर्युपासते ॥ ०१२ ॥

# अध्याय ०७५

वैशंपायन उवाच ॥

ततः काव्यो भृगुश्रेष्ठः समन्युरुपगम्य ह ।
वृषपर्वाणमासीनमित्युवाचाविचारयन् ॥ ००१ ॥

नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ।
पुत्रेषु वा नप्तृषु वा न चेदात्मनि पश्यति ॥ ००२ ॥

फलत्येव ध्रुवं पापं गुरुभुक्तमिवोदरे ॥ ००२ ॥

यदघातयथा विप्रं कचमाङ्गिरसं तदा ।
अपापशीलं धर्मज्ञं शुश्रूषुं मद्गृहे रतम् ॥ ००३ ॥

वधादनर्हतस्तस्य वधाच्च दुहितुर्मम ।
वृषपर्वन्निबोधेदं त्यक्ष्यामि त्वां सबान्धवम् ॥ ००४ ॥

स्थातुं त्वद्विषये राजन्न शक्ष्यामि त्वया सह ॥ ००४ ॥

अहो मामभिजानासि दैत्य मिथ्याप्रलापिनम् ।
यथेममात्मनो दोषं न नियच्छस्युपेक्षसे ॥ ००५ ॥

वृषपर्वोवाच ॥

नाधर्मं न मृषावादं त्वयि जानामि भार्गव ।
त्वयि धर्मश्च सत्यं च तत्प्रसीदतु नो भवान् ॥ ००६ ॥

यद्यस्मानपहाय त्वमितो गच्छसि भार्गव ।

समुद्रं संप्रवेक्ष्यामो नान्यदस्ति परायणम् ॥ ००७ ॥

शुक्र उवाच ॥

समुद्रं प्रविशध्वं वा दिशो वा द्रवतासुराः ।
दुहितुर्नाप्रियं सोढुं शक्तोऽहं दयिता हि मे ॥ ००८ ॥

प्रसाद्यतां देवयानी जीवितं ह्यत्र मे स्थितम् ।
योगक्षेमकरस्तेऽहमिन्द्रस्येव बृहस्पतिः ॥ ००९ ॥

वृषपर्वोवाच ॥

यत्किञ्चिदसुरेन्द्राणां विद्यते वसु भार्गव ।
भुवि हस्तिगवाश्वं वा तस्य त्वं मम चेश्वरः ॥ ०१० ॥

शुक्र उवाच ॥

यत्किञ्चिदस्ति द्रविणं दैत्येन्द्राणां महासुर ।
तस्येश्वरोऽस्मि यदि ते देवयानी प्रसाद्यताम् ॥ ०११ ॥

देवयान्युवाच ॥

यदि त्वमीश्वरस्तात राज्ञो वित्तस्य भार्गव ।
नाभिजानामि तत्तेऽहं राजा तु वदतु स्वयम् ॥ ०१२ ॥

वृषपर्वोवाच ॥

यं काममभिकामासि देवयानि शुचिस्मिते ।
तत्तेऽहं संप्रदास्यामि यदि चेदपि दुर्लभम् ॥ ०१३ ॥

देवयान्युवाच ॥

दासीं कन्यासहस्रेण शर्मिष्ठामभिकामये ।
अनु मां तत्र गच्छेत्सा यत्र दास्यति मे पिता ॥ ०१४ ॥

वृषपर्वोवाच ॥

उत्तिष्ठ हे सङ्ग्रहीत्रि शर्मिष्ठां शीघ्रमानय ।
यं च कामयते कामं देवयानी करोतु तम् ॥ ०१५ ॥

वैशंपायन उवाच ॥

ततो धात्री तत्र गत्वा शर्मिष्ठां वाक्यमब्रवीत् ।
उत्तिष्ठ भद्रे शर्मिष्ठे ज्ञातीनां सुखमावह ॥ ०१६ ॥

त्यजति ब्राह्मणः शिष्यान्देवयान्या प्रचोदितः ।
सा यं कामयते कामं स कार्योऽद्य त्वयानघे ॥ ०१७ ॥

शर्मिष्ठोवाच ॥

सा यं कामयते कामं करवाण्यहमद्य तम् ।
मा त्वेवापगमच्छुक्रो देवयानी च मत्कृते ॥ ०१८ ॥

वैशंपायन उवाच ॥

ततः कन्यासहस्रेण वृता शिबिकया तदा ।
पितुर्नियोगात्त्वरिता निश्चक्राम पुरोत्तमात् ॥ ०१९ ॥

शर्मिष्ठोवाच ॥

अहं कन्यासहस्रेण दासी ते परिचारिका ।
अनु त्वां तत्र यास्यामि यत्र दास्यति ते पिता ॥ ०२० ॥

देवयान्युवाच ॥

स्तुवतो दुहिता तेऽहं बन्दिनः प्रतिगृह्णतः ।
स्तूयमानस्य दुहिता कथं दासी भविष्यसि ॥ ०२१ ॥

शर्मिष्ठोवाच ॥

येन केनचिदार्तानां ज्ञातीनां सुखमावहेत् ।
अतस्त्वामनुयास्यामि यत्र दास्यति ते पिता ॥ ०२२ ॥

वैशंपायन उवाच ॥

प्रतिश्रुते दासभावे दुहित्रा वृषपर्वणः ।
देवयानी नृपश्रेष्ठ पितरं वाक्यमब्रवीत् ॥ ०२३ ॥

प्रविशामि पुरं तात तुष्टास्मि द्विजसत्तम ।
अमोघं तव विज्ञानमस्ति विद्याबलं च ते ॥ ०२४ ॥

एवमुक्तो दुहित्रा स द्विजश्रेष्ठो महायशाः ।
प्रविवेश पुरं हृष्टः पूजितः सर्वदानवैः ॥ ०२५ ॥

---

# अध्याय ०७६

वैशंपायन उवाच ॥

अथ दीर्घस्य कालस्य देवयानी नृपोत्तम ।
वनं तदेव निर्याता क्रीडार्थं वरवर्णिनी ॥ ००१ ॥

तेन दासीसहस्रेण सार्धं शर्मिष्ठया तदा ।
तमेव देशं संप्राप्ता यथाकामं चचार सा ॥ ००२ ॥

ताभिः सखीभिः सहिता सर्वाभिर्मुदिता भृशम् ॥ ००२ ॥

क्रीडन्त्योऽभिरताः सर्वाः पिबन्त्यो मधुमाधवीम् ।
खादन्त्यो विविधान्भक्ष्यान्विदशन्त्यः फलानि च ॥ ००३ ॥

पुनश्च नाहुषो राजा मृगलिप्सुर्यदृच्छया ।
तमेव देशं संप्राप्तो जलार्थी श्रमकर्शितः ॥ ००४ ॥

ददृशे देवयानीं च शर्मिष्ठां ताश्च योषितः ।
पिबन्तीर्ललमानाश्च दिव्याभरणभूषिताः ॥ ००५ ॥

उपविष्टां च ददृशे देवयानीं शुचिस्मिताम् ।
रूपेणाप्रतिमां तासां स्त्रीणां मध्ये वराङ्गनाम् ॥ ००६ ॥

शर्मिष्ठया सेव्यमानां पादसंवाहनादिभिः ॥ ००६ ॥

ययातिरुवाच ॥

द्वाभ्यां कन्यासहस्राभ्यां द्वे कन्ये परिवारिते ।
गोत्रे च नामनी चैव द्वयोः पृच्छामि वामहम् ॥ ००७ ॥

देवयान्युवाच ॥

आख्यास्याम्यहमादत्स्व वचनं मे नराधिप ।
शुक्रो नामासुरगुरुः सुतां जानीहि तस्य माम् ॥ ००८ ॥

इयं च मे सखी दासी यत्राहं तत्र गामिनी ।

दुहिता दानवेन्द्रस्य शर्मिष्ठा वृषपर्वणः ॥ ००९ ॥

ययातिरुवाच ॥

कथं नु ते सखी दासी कन्येयं वरवर्णिनी ।
असुरेन्द्रसुता सुभ्रु परं कौतूहलं हि मे ॥ ०१० ॥

देवयान्युवाच ॥

सर्व एव नरव्याघ्र विधानमनुवर्तते ।
विधानविहितं मत्वा मा विचित्राः कथाः कृथाः ॥ ०११ ॥

राजवद्रूपवेषौ ते ब्राह्मीं वाचं बिभर्षि च ।
किंनामा त्वं कुतश्चासि कस्य पुत्रश्च शंस मे ॥ ०१२ ॥

ययातिरुवाच ॥

ब्रह्मचर्येण कृत्स्नो मे वेदः श्रुतिपथं गतः ।
राजाहं राजपुत्रश्च ययातिरिति विश्रुतः ॥ ०१३ ॥

देवयान्युवाच ॥

केनास्यर्थेन नृपते इमं देशमुपागतः ।
जिघृक्षुर्वारिजं किञ्चिदथ वा मृगलिप्सया ॥ ०१४ ॥

ययातिरुवाच ॥

मृगलिप्सुरहं भद्रे पानीयार्थमुपागतः ।
बहु चाप्यनुयुक्तोऽस्मि तन्मानुज्ञातुमर्हसि ॥ ०१५ ॥

देवयान्युवाच ॥

द्वाभ्यां कन्यासहस्राभ्यां दास्या शर्मिष्ठया सह ।
त्वदधीनास्मि भद्रं ते सखा भर्ता च मे भव ॥ ०१६ ॥

ययातिरुवाच ॥

विद्ध्यौशनसि भद्रं ते न त्वामर्होऽस्मि भामिनि ।
अविवाह्या हि राजानो देवयानि पितुस्तव ॥ ०१७ ॥

देवयान्युवाच ॥

संसृष्टं ब्रह्मणा क्षत्रं क्षत्रं च ब्रह्मसंहितम् ।
ऋषिश्च ऋषिपुत्रश्च नाहुषाङ्ग वहस्व माम् ॥ ०१८ ॥

ययातिरुवाच ॥

एकदेहोद्भवा वर्णाश्चत्वारोऽपि वराङ्गने ।
पृथग्धर्माः पृथक्शौचास्तेषां तु ब्राह्मणो वरः ॥ ०१९ ॥

देवयान्युवाच ॥

पाणिधर्मो नाहुषायं न पुम्भिः सेवितः पुरा ।
तं मे त्वमग्रहीरग्रे वृणोमि त्वामहं ततः ॥ ०२० ॥

कथं नु मे मनस्विन्याः पाणिमन्यः पुमान्स्पृशेत् ।
गृहीतमृषिपुत्रेण स्वयं वाप्यृषिणा त्वया ॥ ०२१ ॥

ययातिरुवाच ॥

क्रुद्धादाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात् ।
दुराधर्षतरो विप्रः पुरुषेण विजानता ॥ ०२२ ॥

देवयान्युवाच ॥

कथमाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात् ।
दुराधर्षतरो विप्र इत्यात्थ पुरुषर्षभ ॥ ०२३ ॥

ययातिरुवाच ॥

एकमाशीविषो हन्ति शस्त्रेणैकश्च वध्यते ।
हन्ति विप्रः सराष्ट्राणि पुराण्यपि हि कोपितः ॥ ०२४ ॥

दुराधर्षतरो विप्रस्तस्माद्भीरु मतो मम ।
अतोऽदत्तां च पित्रा त्वां भद्रे न विवहाम्यहम् ॥ ०२५ ॥

देवयान्युवाच ॥

दत्तां वहस्व पित्रा मां त्वं हि राजन्वृतो मया ।
अयाचतो भयं नास्ति दत्तां च प्रतिगृह्णतः ॥ ०२६ ॥

वैशंपायन उवाच ॥

त्वरितं देवयान्याथ प्रेषितं पितुरात्मनः ।
श्रुत्वैव च स राजानं दर्शयामास भार्गवः ॥ ०२७ ॥

दृष्ट्वैव चागतं शुक्रं ययातिः पृथिवीपतिः ।
ववन्दे ब्राह्मणं काव्यं प्राञ्जलिः प्रणतः स्थितः ॥ ०२८ ॥

देवयान्युवाच ॥

राजायं नाहुषस्तात दुर्गे मे पाणिमग्रहीत् ।
नमस्ते देहि मामस्मै नान्यं लोके पतिं वृणे ॥ ०२९ ॥

शुक्र उवाच ॥

वृतोऽनया पतिर्वीर सुतया त्वं ममेष्टया ।
गृहाणेमां मया दत्तां महिषीं नहुषात्मज ॥ ०३० ॥

ययातिरुवाच ॥

अधर्मो न स्पृशेदेवं महान्मामिह भार्गव ।
वर्णसङ्करजो ब्रह्मन्निति त्वां प्रवृणोम्यहम् ॥ ०३१ ॥

शुक्र उवाच ॥

अधर्मात्त्वां विमुञ्चामि वरयस्व यथेप्सितम् ।
अस्मिन्विवाहे मा ग्लासीरहं पापं नुदामि ते ॥ ०३२ ॥

वहस्व भार्यां धर्मेण देवयानीं सुमध्यमाम् ।
अनया सह संप्रीतिमतुलां समवाप्स्यसि ॥ ०३३ ॥

इयं चापि कुमारी ते शर्मिष्ठा वार्षपर्वणी ।
संपूज्या सततं राजन्मा चैनां शयने ह्वयेः ॥ ०३४ ॥

वैशंपायन उवाच ॥

एवमुक्तो ययातिस्तु शुक्रं कृत्वा प्रदक्षिणम् ।
जगाम स्वपुरं हृष्टो अनुज्ञातो महात्मना ॥ ०३५ ॥

---

# अध्याय ०७७

वैशंपायन उवाच ॥

ययातिः स्वपुरं प्राप्य महेन्द्रपुरसंनिभम् ।
प्रविश्यान्तःपुरं तत्र देवयानीं न्यवेशयत् ॥ ००१ ॥

देवयान्याश्चानुमते तां सुतां वृषपर्वणः ।
अशोकवनिकाभ्याशे गृहं कृत्वा न्यवेशयत् ॥ ००२ ॥

वृतां दासीसहस्रेण शर्मिष्ठामासुरायणीम् ।
वासोभिरन्नपानैश्च संविभज्य सुसत्कृताम् ॥ ००३ ॥

देवयान्या तु सहितः स नृपो नहुषात्मजः ।
विजहार बहूनब्दान्देववन्मुदितो भृशम् ॥ ००४ ॥

ऋतुकाले तु संप्राप्ते देवयानी वराङ्गना ।
लेभे गर्भं प्रथमतः कुमारं च व्यजायत ॥ ००५ ॥

गते वर्षसहस्रे तु शर्मिष्ठा वार्षपर्वणी ।
ददर्श यौवनं प्राप्ता ऋतुं सा चान्वचिन्तयत् ॥ ००६ ॥

ऋतुकालश्च संप्राप्तो न च मेऽस्ति पतिर्वृतः ।
किं प्राप्तं किं नु कर्तव्यं किं वा कृत्वा कृतं भवेत् ॥ ००७ ॥

देवयानी प्रजातासौ वृथाहं प्राप्तयौवना ।
यथा तया वृतो भर्ता तथैवाहं वृणोमि तम् ॥ ००८ ॥

राज्ञा पुत्रफलं देयमिति मे निश्चिता मतिः ।
अपीदानीं स धर्मात्मा इयान्मे दर्शनं रहः ॥ ००९ ॥

अथ निष्क्रम्य राजासौ तस्मिन्काले यदृच्छया ।
अशोकवनिकाभ्याशे शर्मिष्ठां प्राप्य विष्ठितः ॥ ०१० ॥

तमेकं रहिते दृष्ट्वा शर्मिष्ठा चारुहासिनी ।
प्रत्युद्गम्याञ्जलिं कृत्वा राजानं वाक्यमब्रवीत् ॥ ०११ ॥

सोमस्येन्द्रस्य विष्णोर्वा यमस्य वरुणस्य वा ।
तव वा नाहुष कुले कः स्त्रियं स्प्रष्टुमर्हति ॥ ०१२ ॥

रूपाभिजनशीलैर्हि त्वं राजन्वेत्थ मां सदा ।
सा त्वां याचे प्रसाद्याहमृतुं देहि नराधिप ॥ ०१३ ॥

ययातिरुवाच ॥

वेद्मि त्वां शीलसंपन्नां दैत्यकन्यामनिन्दिताम् ।
रूपे च ते न पश्यामि सूच्यग्रमपि निन्दितम् ॥ ०१४ ॥

अब्रवीदुशना काव्यो देवयानीं यदावहम् ।
नेयमाह्वयितव्या ते शयने वार्षपर्वणी ॥ ०१५ ॥

शर्मिष्ठोवाच ॥

न नर्मयुक्तं वचनं हिनस्ति ; न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे ; पञ्चानृतान्याहुरपातकानि ॥ ०१६ ॥

पृष्टं तु साक्ष्ये प्रवदन्तमन्यथा ; वदन्ति मिथ्योपहितं नरेन्द्र ।
एकार्थतायां तु समाहितायां ; मिथ्या वदन्तमनृतं हिनस्ति ॥ ०१७ ॥

ययातिरुवाच ॥

राजा प्रमाणं भूतानां स नश्येत मृषा वदन् ।

अर्थकृच्छ्रमपि प्राप्य न मिथ्या कर्तुमुत्सहे ॥ ०१८ ॥

शर्मिष्ठोवाच ॥

समावेतौ मतौ राजन्पतिः सख्याश्च यः पतिः ।
समं विवाहमित्याहुः सख्या मेऽसि पतिर्वृतः ॥ ०१९ ॥

ययातिरुवाच ॥

दातव्यं याचमानेभ्य इति मे व्रतमाहितम् ।
त्वं च याचसि मां कामं ब्रूहि किं करवाणि ते ॥ ०२० ॥

शर्मिष्ठोवाच ॥

अधर्मात्त्राहि मां राजन्धर्मं च प्रतिपादय ।
त्वत्तोऽपत्यवती लोके चरेयं धर्ममुत्तमम् ॥ ०२१ ॥

त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ०२२ ॥

देवयान्या भुजिष्यास्मि वश्या च तव भार्गवी ।
सा चाहं च त्वया राजन्भरणीये भजस्व माम् ॥ ०२३ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु राजा स तथ्यमित्येव जज्ञिवान् ।
पूजयामास शर्मिष्ठां धर्मं च प्रत्यपादयत् ॥ ०२४ ॥

समागम्य च शर्मिष्ठां यथाकाममवाप्य च ।
अन्योन्यमभिसंपूज्य जग्मतुस्तौ यथागतम् ॥ ०२५ ॥

तस्मिन्समागमे सुभ्रूः शर्मिष्ठा चारुहासिनी ।
लेभे गर्भं प्रथमतस्तस्मान्नृपतिसत्तमात् ॥ ०२६ ॥

प्रजज्ञे च ततः काले राजन्राजीवलोचना ।
कुमारं देवगर्भाभं राजीवनिभलोचनम् ॥ ०२७ ॥

---

# अध्याय ०७८

वैशंपायन उवाच ॥

श्रुत्वा कुमारं जातं तु देवयानी शुचिस्मिता ।
चिन्तयामास दुःखार्ता शर्मिष्ठां प्रति भारत ॥ ००१ ॥

अभिगम्य च शर्मिष्ठां देवयान्यब्रवीदिदम् ।
किमिदं वृजिनं सुभ्रु कृतं ते कामलुब्धया ॥ ००२ ॥

शर्मिष्ठोवाच ॥

ऋषिरभ्यागतः कश्चिद्धर्मात्मा वेदपारगः ।
स मया वरदः कामं याचितो धर्मसंहितम् ॥ ००३ ॥

नाहमन्यायतः काममाचरामि शुचिस्मिते ।
तस्मादृषेर्ममापत्यमिति सत्यं ब्रवीमि ते ॥ ००४ ॥

देवयान्युवाच ॥

शोभनं भीरु सत्यं चेदथ स ज्ञायते द्विजः ।
गोत्रनामाभिजनतो वेत्तुमिच्छामि तं द्विजम् ॥ ००५ ॥

शर्मिष्ठोवाच ॥

ओजसा तेजसा चैव दीप्यमानं रविं यथा ।
तं दृष्ट्वा मम संप्रष्टुं शक्तिर्नासीच्छुचिस्मिते ॥ ००६ ॥

देवयान्युवाच ॥

यद्येतदेवं शर्मिष्ठे न मन्युर्विद्यते मम ।
अपत्यं यदि ते लब्धं ज्येष्ठाच्छ्रेष्ठाच्च वै द्विजात् ॥ ००७ ॥

वैशंपायन उवाच ॥

अन्योन्यमेवमुक्त्वा च संप्रहस्य च ते मिथः ।
जगाम भार्गवी वेश्म तथ्यमित्येव जज्ञुषी ॥ ००८ ॥

ययातिर्देवयान्यां तु पुत्रावजनयन्नृपः ।
यदुं च तुर्वसुं चैव शक्रविष्णू इवापरौ ॥ ००९ ॥

तस्मादेव तु राजर्षेः शर्मिष्ठा वार्षपर्वणी ।
द्रुह्युं चानुं च पूरुं च त्रीन्कुमारानजीजनत् ॥ ०१० ॥

ततः काले तु कस्मिंश्चिद्देवयानी शुचिस्मिता ।
ययातिसहिता राजन्निर्जगाम महावनम् ॥ ०११ ॥

ददर्श च तदा तत्र कुमारान्देवरूपिणः ।
क्रीडमानान्सुविश्रब्धान्विस्मिता चेदमब्रवीत् ॥ ०१२ ॥

कस्यैते दारका राजन्देवपुत्रोपमाः शुभाः ।
वर्चसा रूपतश्चैव सदृशा मे मतास्तव ॥ ०१३ ॥

एवं पृष्ट्वा तु राजानं कुमारान्पर्यपृच्छत ।
किंनामधेयगोत्रो वः पुत्रका ब्राह्मणः पिता ॥ ०१४ ॥

विब्रूत मे यथातथ्यं श्रोतुमिच्छामि तं ह्यहम् ॥ ०१४ ॥

तेऽदर्शयन्प्रदेशिन्या तमेव नृपसत्तमम् ।
शर्मिष्ठां मातरं चैव तस्याचख्युश्च दारकाः ॥ ०१५ ॥

इत्युक्त्वा सहितास्ते तु राजानमुपचक्रमुः ।
नाभ्यनन्दत तान्राजा देवयान्यास्तदान्तिके ॥ ०१६ ॥

रुदन्तस्तेऽथ शर्मिष्ठामभ्ययुर्बालकास्ततः ॥ ०१६ ॥

दृष्ट्वा तु तेषां बालानां प्रणयं पार्थिवं प्रति ।
बुद्ध्वा च तत्त्वतो देवी शर्मिष्ठामिदमब्रवीत् ॥ ०१७ ॥

मद्धीना सती कस्मादकार्षीर्विप्रियं मम ।
तमेवासुरधर्मं त्वमास्थिता न बिभेषि किम् ॥ ०१८ ॥

शर्मिष्ठोवाच ॥

यदुक्तमृषिरित्येव तत्सत्यं चारुहासिनि ।
न्यायतो धर्मतश्चैव चरन्ती न बिभेमि ते ॥ ०१९ ॥

यदा त्वया वृतो राजा वृत एव तदा मया ।
सखीभर्ता हि धर्मेण भर्ता भवति शोभने ॥ ०२० ॥

पूज्यासि मम मान्या च ज्येष्ठा श्रेष्ठा च ब्राह्मणी ।
त्वत्तोऽपि मे पूज्यतमो राजर्षिः किं न वेत्थ तत् ॥ ०२१ ॥

वैशंपायन उवाच ॥

श्रुत्वा तस्यास्ततो वाक्यं देवयान्यब्रवीदिदम् ।
राजन्नाद्येह वत्स्यामि विप्रियं मे कृतं त्वया ॥ ०२२ ॥

सहसोत्पतितां श्यामां दृष्ट्वा तां साश्रुलोचनाम् ।
त्वरितं सकाशं काव्यस्य प्रस्थितां व्यथितस्तदा ॥ ०२३ ॥

अनुवव्राज संभ्रान्तः पृष्ठतः सान्त्वयन्नृपः ।
न्यवर्तत न चैव स्म क्रोधसंरक्तलोचना ॥ ०२४ ॥

अविब्रुवन्ती किञ्चित्तु राजानं चारुलोचना ।
अचिरादिव संप्राप्ता काव्यस्योशनसोऽन्तिकम् ॥ ०२५ ॥

सा तु दृष्ट्वैव पितरमभिवाद्याग्रतः स्थिता ।
अनन्तरं ययातिस्तु पूजयामास भार्गवम् ॥ ०२६ ॥

देवयान्युवाच ॥

अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम् ।
शर्मिष्ठयातिवृत्तास्मि दुहित्रा वृषपर्वणः ॥ ०२७ ॥

त्रयोऽस्यां जनिताः पुत्रा राज्ञानेन ययातिना ।
दुर्भगाया मम द्वौ तु पुत्रौ तात ब्रवीमि ते ॥ ०२८ ॥

धर्मज्ञ इति विख्यात एष राजा भृगूद्वह ।
अतिक्रान्तश्च मर्यादां काव्यैतत्कथयामि ते ॥ ०२९ ॥

शुक्र उवाच ॥

धर्मज्ञः सन्महाराज योऽधर्ममकृथाः प्रियम् ।
तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्जया ॥ ०३० ॥

ययातिरुवाच ॥

ऋतुं वै याचमानाया भगवन्नान्यचेतसा ।
दुहितुर्दानवेन्द्रस्य धर्म्यमेतत्कृतं मया ॥ ०३१ ॥

ऋतुं वै याचमानाया न ददाति पुमान्वृतः ।
भ्रूणहेत्युच्यते ब्रह्मन्स इह ब्रह्मवादिभिः ॥ ०३२ ॥

अभिकामां स्त्रियं यस्तु गम्यां रहसि याचितः ।
नोपैति स च धर्मेषु भ्रूणहेत्युच्यते बुधैः ॥ ०३३ ॥

इत्येतानि समीक्ष्याहं कारणानि भृगूद्वह ।
अधर्मभयसंविग्नः शर्मिष्ठामुपजग्मिवान् ॥ ०३४ ॥

शुक्र उवाच ॥

नन्वहं प्रत्यवेक्ष्यस्ते मदधीनोऽसि पार्थिव ।
मिथ्याचारस्य धर्मेषु चौर्यं भवति नाहुष ॥ ०३५ ॥

वैशंपायन उवाच ॥

क्रुद्धेनोशनसा शप्तो ययातिर्नाहुषस्तदा ।
पूर्वं वयः परित्यज्य जरां सद्योऽन्वपद्यत ॥ ०३६ ॥

ययातिरुवाच ॥

अतृप्तो यौवनस्याहं देवयान्यां भृगूद्वह ।
प्रसादं कुरु मे ब्रह्मञ्जरेयं मा विशेत माम् ॥ ०३७ ॥

शुक्र उवाच ॥

नाहं मृषा ब्रवीम्येतज्जरां प्राप्तोऽसि भूमिप ।
जरां त्वेतां त्वमन्यस्मै सङ्क्रामय यदीच्छसि ॥ ०३८ ॥

ययातिरुवाच ॥

राज्यभाक्स भवेद्ब्रह्मन्पुण्यभाक्कीर्तिभाक्तथा ।
यो मे दद्याद्वयः पुत्रस्तद्भवाननुमन्यताम् ॥ ०३९ ॥

शुक्र उवाच ॥

सङ्क्रामयिष्यसि जरां यथेष्टं नहुषात्मज ।
मामनुध्याय भावेन न च पापमवाप्स्यसि ॥ ०४० ॥

वयो दास्यति ते पुत्रो यः स राजा भविष्यति ।
आयुष्मान्कीर्तिमांश्चैव बह्वपत्यस्तथैव च ॥ ०४१ ॥

---

## अध्याय ०७९

वैशंपायन उवाच ॥

जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव ह ।
पुत्रं ज्येष्ठं वरिष्ठं च यदुमित्यब्रवीद्वचः ॥ ००१ ॥

जरा वली च मां तात पलितानि च पर्यगुः ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ॥ ००२ ॥

त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह ।

यौवनेन त्वदीयेन चरेयं विषयानहम् ॥ ००३ ॥

पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा स्वं प्रतिपत्स्यामि पाप्मानं जरया सह ॥ ००४ ॥

यदुरुवाच ॥

सितश्मश्रुशिरा दीनो जरया शिथिलीकृतः ।
वलीसंततगात्रश्च दुर्दर्शो दुर्बलः कृशः ॥ ००५ ॥

अशक्तः कार्यकरणे परिभूतः स यौवनैः ।
सहोपजीविभिश्चैव तां जरां नाभिकामये ॥ ००६ ॥

ययातिरुवाच ॥

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मादराज्यभाक्तात प्रजा ते वै भविष्यति ॥ ००७ ॥

तुर्वसो प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन चरेयं वै विषयांस्तव पुत्रक ॥ ००८ ॥

पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥ ००९ ॥

तुर्वसुरुवाच ॥

न कामये जरां तात कामभोगप्रणाशिनीम् ।
बलरूपान्तकरणीं बुद्धिप्राणविनाशिनीम् ॥ ०१० ॥

ययातिरुवाच ॥

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मात्प्रजा समुच्छेदं तुर्वसो तव यास्यति ॥ ०११ ॥

सङ्कीर्णाचारधर्मेषु प्रतिलोमचरेषु च ।
पिशिताशिषु चान्त्येषु मूढ राजा भविष्यसि ॥ ०१२ ॥

गुरुदारप्रसक्तेषु तिर्यग्योनिगतेषु च ।
पशुधर्मिषु पापेषु म्लेच्छेषु प्रभविष्यसि ॥ ०१३ ॥

वैशंपायन उवाच ॥

एवं स तुर्वसुं शप्त्वा ययातिः सुतमात्मनः ।
शर्मिष्ठायाः सुतं द्रुह्युमिदं वचनमब्रवीत् ॥ ०१४ ॥

द्रुह्यो त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम् ।
जरां वर्षसहस्रं मे यौवनं स्वं ददस्व च ॥ ०१५ ॥

पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम् ।
स्वं चादास्यामि भूयोऽहं पाप्मानं जरया सह ॥ ०१६ ॥

द्रुह्युरुवाच ॥

न गजं न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियम् ।
वाग्भङ्गश्चास्य भवति तज्जरां नाभिकामये ॥ ०१७ ॥

ययातिरुवाच ॥

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्माद्द्रुह्यो प्रियः कामो न ते संपत्स्यते क्वचित् ॥ ०१८ ॥

उडुपप्लवसंतारो यत्र नित्यं भविष्यति ।

अराजा भोजशब्दं त्वं तत्रावाप्स्यसि सान्वयः ॥ ०१९ ॥

अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
एकं वर्षसहस्रं तु चरेयं यौवनेन ते ॥ ०२० ॥

अनुरुवाच ॥

जीर्णः शिशुवदादत्तेऽकालेऽन्नमशुचिर्यथा ।
न जुहोति च कालेऽग्निं तां जरां नाभिकामये ॥ ०२१ ॥

ययातिरुवाच ॥

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
जरादोषस्त्वयोक्तोऽयं तस्मात्त्वं प्रतिपत्स्यसे ॥ ०२२ ॥

प्रजाश्च यौवनप्राप्ता विनशिष्यन्त्यनो तव ।
अग्निप्रस्कन्दनपरस्त्वं चाप्येवं भविष्यसि ॥ ०२३ ॥

पूरो त्वं मे प्रियः पुत्रस्त्वं वरीयान्भविष्यसि ।
जरा वली च मे तात पलितानि च पर्यगुः ॥ ०२४ ॥

काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ॥ ०२४ ॥

पूरो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
कञ्चित्कालं चरेयं वै विषयान्वयसा तव ॥ ०२५ ॥

पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥ ०२६ ॥

वैशंपायन उवाच ॥

एवमुक्तः प्रत्युवाच पूरुः पितरमञ्जसा ।
यथात्थ मां महाराज तत्करिष्यामि ते वचः ॥ ०२७ ॥

प्रतिपत्स्यामि ते राजन्पाप्मानं जरया सह ।
गृहाण यौवनं मत्तश्चर कामान्यथेप्सितान् ॥ ०२८ ॥

जरयाहं प्रतिच्छन्नो वयोरूपधरस्तव ।
यौवनं भवते दत्त्वा चरिष्यामि यथात्थ माम् ॥ ०२९ ॥

ययातिरुवाच ॥

पूरो प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते ।
सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥ ०३० ॥

---

# अध्याय ०८०

वैशंपायन उवाच ॥

पौरवेणाथ वयसा ययातिर्नहुषात्मजः ।
प्रीतियुक्तो नृपश्रेष्ठश्चचार विषयान्प्रियान् ॥ ००१ ॥

यथाकामं यथोत्साहं यथाकालं यथासुखम् ।
धर्माविरुद्धान्राजेन्द्रो यथार्हति स एव हि ॥ ००२ ॥

देवानतर्पयद्यज्ञैः श्राद्धैस्तद्वत्पितॄनपि ।
दीनाननुग्रहैरिष्टैः कामैश्च द्विजसत्तमान् ॥ ००३ ॥

अतिथीनन्नपानैश्च विशश्च परिपालनैः ।

आनृशंस्येन शूद्रांश्च दस्यून्संनिग्रहेण च ॥ ००४ ॥

धर्मेण च प्रजाः सर्वा यथावदनुरञ्जयन् ।
ययातिः पालयामास साक्षादिन्द्र इवापरः ॥ ००५ ॥

स राजा सिंहविक्रान्तो युवा विषयगोचरः ।
अविरोधेन धर्मस्य चचार सुखमुत्तमम् ॥ ००६ ॥

स संप्राप्य शुभान्कामांस्तृप्तः खिन्नश्च पार्थिवः ।
कालं वर्षसहस्रान्तं सस्मार मनुजाधिपः ॥ ००७ ॥

परिसंख्याय कालज्ञः कलाः काष्ठाश्च वीर्यवान् ।
पूर्णं मत्वा ततः कालं पूरुं पुत्रमुवाच ह ॥ ००८ ॥

यथाकामं यथोत्साहं यथाकालमरिंदम ।
सेविता विषयाः पुत्र यौवनेन मया तव ॥ ००९ ॥

पूरो प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौवनम् ।
राज्यं चैव गृहाणेदं त्वं हि मे प्रियकृत्सुतः ॥ ०१० ॥

प्रतिपेदे जरां राजा ययातिर्नाहुषस्तदा ।
यौवनं प्रतिपेदे च पूरुः स्वं पुनरात्मनः ॥ ०११ ॥

अभिषेक्तुकामं नृपतिं पूरुं पुत्रं कनीयसम् ।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ॥ ०१२ ॥

कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो ।
ज्येष्ठं यदुमतिक्रम्य राज्यं पूरोः प्रदास्यसि ॥ ०१३ ॥

यदुर्ज्येष्ठस्तव सुतो जातस्तमनु तुर्वसुः ।
शर्मिष्ठायाः सुतो द्रुह्युस्ततोऽनुः पूरुरेव च ॥ ०१४ ॥

कथं ज्येष्ठानतिक्रम्य कनीयान्राज्यमर्हति ।
एतत्संबोधयामस्त्वां धर्मं त्वमनुपालय ॥ ०१५ ॥

ययातिरुवाच ॥

ब्राह्मणप्रमुखा वर्णाः सर्वे शृण्वन्तु मे वचः ।
ज्येष्ठं प्रति यथा राज्यं न देयं मे कथञ्चन ॥ ०१६ ॥

मम ज्येष्ठेन यदुना नियोगो नानुपालितः ।
प्रतिकूलः पितुर्यश्च न स पुत्रः सतां मतः ॥ ०१७ ॥

मातापित्रोर्वचनकृद्धितः पथ्यश्च यः सुतः ।
स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु ॥ ०१८ ॥

यदुनाहमवज्ञातस्तथा तुर्वसुनापि च ।
द्रुह्युना चानुना चैव मय्यवज्ञा कृता भृशम् ॥ ०१९ ॥

पूरुणा मे कृतं वाक्यं मानितश्च विशेषतः ।
कनीयान्मम दायादो जरा येन धृता मम ॥ ०२० ॥

मम कामः स च कृतः पूरुणा पुत्ररूपिणा ॥ ०२० ॥

शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयम् ।
पुत्रो यस्त्वानुवर्तेत स राजा पृथिवीपतिः ॥ ०२१ ॥

भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम् ॥ ०२१ ॥

प्रकृतय ऊचुः ॥

यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः सदा ।

सर्वमर्हति कल्याणं कनीयानपि स प्रभो ॥ ०२२ ॥

अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तव ।
वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरम् ॥ ०२३ ॥

वैशंपायन उवाच ॥

पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा ।
अभ्यषिञ्चत्ततः पूरुं राज्ये स्वे सुतमात्मजम् ॥ ०२४ ॥

दत्त्वा च पूरवे राज्यं वनवासाय दीक्षितः ।
पुरात्स निर्ययौ राजा ब्राह्मणैस्तापसैः सह ॥ ०२५ ॥

यदोस्तु यादवा जातास्तुर्वसोर्यवनाः सुताः ।
द्रुह्योरपि सुता भोजा अनोस्तु म्लेच्छजातयः ॥ ०२६ ॥

पूरोस्तु पौरवो वंशो यत्र जातोऽसि पार्थिव ।
इदं वर्षसहस्राय राज्यं कारयितुं वशी ॥ ०२७ ॥

---

# उत्तरयायातम्

## अध्याय ०८१

वैशंपायन उवाच ॥

एवं स नाहुषो राजा ययातिः पुत्रमीप्सितम् ।
राज्येऽभिषिच्य मुदितो वानप्रस्थोऽभवन्मुनिः ॥ ००१ ॥

उषित्वा च वने वासं ब्राह्मणैः सह संश्रितः ।
फलमूलाशनो दान्तो यथा स्वर्गमितो गतः ॥ ००२ ॥

स गतः सुरवासं तं निवसन्मुदितः सुखम् ।
कालस्य नातिमहतः पुनः शक्रेण पातितः ॥ ००३ ॥

निपतन्प्रच्युतः स्वर्गादप्राप्तो मेदिनीतलम् ।
स्थित आसीदन्तरिक्षे स तदेति श्रुतं मया ॥ ००४ ॥

तत एव पुनश्चापि गतः स्वर्गमिति श्रुतिः ।
राज्ञा वसुमता सार्धमष्टकेन च वीर्यवान् ॥ ००५ ॥

प्रतर्दनेन शिबिना समेत्य किल संसदि ॥ ००५ ॥

जनमेजय उवाच ॥

कर्मणा केन स दिवं पुनः प्राप्तो महीपतिः ।
सर्वमेतदशेषेण श्रोतुमिच्छामि तत्त्वतः ॥ ००६ ॥

कथ्यमानं त्वया विप्र विप्रर्षिगणसंनिधौ ॥ ००६ ॥

देवराजसमो ह्यासीद्ययातिः पृथिवीपतिः ।
वर्धनः कुरुवंशस्य विभावसुसमद्युतिः ॥ ००७ ॥

तस्य विस्तीर्णयशसः सत्यकीर्तेर्महात्मनः ।
चरितं श्रोतुमिच्छामि दिवि चेह च सर्वशः ॥ ००८ ॥

वैशंपायन उवाच ॥

हन्त ते कथयिष्यामि ययातेरुत्तरां कथाम् ।

दिवि चेह च पुण्यार्थां सर्वपापप्रणाशिनीम् ॥ ००९ ॥

ययातिर्नाहुषो राजा पूरुं पुत्रं कनीयसम् ।
राज्येऽभिषिच्य मुदितः प्रवव्राज वनं तदा ॥ ०१० ॥

अन्तेषु स विनिक्षिप्य पुत्रान्यदुपुरोगमान् ।
फलमूलाशनो राजा वने संन्यवसच्चिरम् ॥ ०११ ॥

संशितात्मा जितक्रोधस्तर्पयन्पितृदेवताः ।
अग्नींश्च विधिवज्जुह्वन्वानप्रस्थविधानतः ॥ ०१२ ॥

अतिथीन्पूजयामास वन्येन हविषा विभुः ।
शिलोञ्छवृत्तिमास्थाय शेषान्नकृतभोजनः ॥ ०१३ ॥

पूर्णं वर्षसहस्रं स एवंवृत्तिरभून्नृपः ।
अब्भक्षः शरदस्त्रिंशदासीन्नियतवाङ्मनाः ॥ ०१४ ॥

ततश्च वायुभक्षोऽभूत्संवत्सरमतन्द्रितः ।
पञ्चाग्निमध्ये च तपस्तेपे संवत्सरं नृपः ॥ ०१५ ॥

एकपादस्थितश्चासीत्षण्मासाननिलाशनः ।
पुण्यकीर्तिस्ततः स्वर्गं जगामावृत्य रोदसी ॥ ०१६ ॥

---

# अध्याय ०८२

वैशंपायन उवाच ॥

स्वर्गतः स तु राजेन्द्रो निवसन्देवसद्मनि ।

पूजितस्त्रिदशैः साध्यैर्मरुद्भिर्वसुभिस्तथा ॥ ००१ ॥

देवलोकाद्ब्रह्मलोकं सञ्चरन्पुण्यकृद्वशी ।
अवसत्पृथिवीपालो दीर्घकालमिति श्रुतिः ॥ ००२ ॥

स कदाचिन्नृपश्रेष्ठो ययातिः शक्रमागमत् ।
कथान्ते तत्र शक्रेण पृष्टः स पृथिवीपतिः ॥ ००३ ॥

शक्र उवाच ॥

यदा स पूरुस्तव रूपेण राज ;ञ्जरां गृहीत्वा प्रचचार भूमौ ।
तदा राज्यं संप्रदायैव तस्मै ; त्वया किमुक्तः कथयेह सत्यम् ॥ ००४ ॥

ययातिरुवाच ॥

गङ्गायमुनयोर्मध्ये कृत्स्नोऽयं विषयस्तव ।
मध्ये पृथिव्यास्त्वं राजा भ्रातरोऽन्त्याधिपास्तव ॥ ००५ ॥

अक्रोधनः क्रोधनेभ्यो विशिष्ट ;स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषेभ्यो मानुषाश्च प्रधाना ; विद्वांस्तथैवाविदुषः प्रधानः ॥ ००६ ॥

आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ ००७ ॥

नारुंतुदः स्यान्न नृशंसवादी ; न हीनतः परमभ्याददीत ।
ययास्य वाचा पर उद्विजेत ; न तां वदेद्रुशतीं पापलोक्याम् ॥ ००८ ॥

अरुंतुदं पुरुषं रूक्षवाचं ; वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।
विद्यादलक्ष्मीकतमं जनानां ; मुखे निबद्धां निर्ऋतिं वहन्तम् ॥ ००९ ॥

सद्भिः पुरस्तादभिपूजितः स्या ;त्सद्भिस्तथा पृष्ठतो रक्षितः स्यात् ।

सदासतामतिवादांस्तितिक्षे ;त्सतां वृत्तं चाददीतार्यवृत्तः ॥ ०१० ॥

वाक्सायका वदनान्निष्पतन्ति ; यैराहतः शोचति रात्र्यहानि ।
परस्य वा मर्मसु ये पतन्ति ; तान्पण्डितो नावसृजेत्परेषु ॥ ०११ ॥

न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
यथा मैत्री च भूतेषु दानं च मधुरा च वाक् ॥ ०१२ ॥

तस्मात्सान्त्वं सदा वाच्यं न वाच्यं परुषं क्वचित् ।
पूज्यान्संपूजयेद्दद्यान्न च याचेत्कदाचन ॥ ०१३ ॥

---

# अध्याय ०८३

इन्द्र उवाच ॥

सर्वाणि कर्माणि समाप्य राज ;न्गृहान्परित्यज्य वनं गतोऽसि ।
तत्त्वां पृच्छामि नहुषस्य पुत्र ; केनासि तुल्यस्तपसा ययाते ॥ ००१ ॥

ययातिरुवाच ॥

नाहं देवमनुष्येषु न गन्धर्वमहर्षिषु ।
आत्मनस्तपसा तुल्यं कञ्चित्पश्यामि वासव ॥ ००२ ॥

इन्द्र उवाच ॥

यदावमंस्थाः सदृशः श्रेयसश्च ; पापीयसश्चाविदितप्रभावः ।
तस्माल्लोका अन्तवन्तस्तवेमे ; क्षीणे पुण्ये पतितास्यद्य राजन् ॥ ००३ ॥

ययातिरुवाच ॥

सुरर्षिगन्धर्वनरावमाना ;त्क्षयं गता मे यदि शक्र लोकाः ।
इच्छेयं वै सुरलोकाद्विहीनः ; सतां मध्ये पतितुं देवराज ॥ ००४ ॥

इन्द्र उवाच ॥

सतां सकाशे पतितासि राजं ;श्च्युतः प्रतिष्ठां यत्र लब्धासि भूयः ।
एवं विदित्वा तु पुनर्ययाते ; न तेऽवमान्याः सद‍ृशः श्रेयसश्च ॥ ००५ ॥

वैशंपायन उवाच ॥

ततः प्रहायामरराजजुष्टा ;न्पुण्या.ण्ल्लोकान्पतमानं ययातिम् ।
संप्रेक्ष्य राजर्षिवरोऽष्टकस्त ;मुवाच सद्धर्मविधानगोप्ता ॥ ००६ ॥

कस्त्वं युवा वासवतुल्यरूपः ; स्वतेजसा दीप्यमानो यथाग्निः ।
पतस्युदीर्णाम्बुधरान्धकारा ;त्खात्खेचराणां प्रवरो यथार्कः ॥ ००७ ॥

द‍ृष्ट्वा च त्वां सूर्यपथात्पतन्तं ; वैश्वानरार्कद्युतिमप्रमेयम् ।
किं नु स्विदेतत्पततीति सर्वे ; वितर्कयन्तः परिमोहिताः स्मः ॥ ००८ ॥

द‍ृष्ट्वा च त्वां विष्ठितं देवमार्गे ; शक्रार्कविष्णुप्रतिमप्रभावम् ।
अभ्युद्गतास्त्वां वयमद्य सर्वे ; तत्त्वं पाते तव जिज्ञासमानाः ॥ ००९ ॥

न चापि त्वां धृष्णुमः प्रष्टुमग्रे ; न च त्वमस्मान्पृच्छसि ये वयं स्मः ।
तत्त्वां पृच्छामः स्पृहणीयरूपं ; कस्य त्वं वा किंनिमित्तं त्वमागाः ॥ ०१० ॥

भयं तु ते व्येतु विषादमोहौ ; त्यजाशु देवेन्द्रसमानरूप ।
त्वां वर्तमानं हि सतां सकाशे ; नालं प्रसोढुं बलहापि शक्रः ॥ ०११ ॥

सन्तः प्रतिष्ठा हि सुखच्युतानां ; सतां सदैवामरराजकल्प ।

ते सङ्गताः स्थावरजङ्गमेशाः ; प्रतिष्ठितस्त्वं सदृशेषु सत्सु ॥ ०१२ ॥

प्रभुरग्निः प्रतपने भूमिरावपने प्रभुः ।
प्रभुः सूर्यः प्रकाशित्वे सतां चाभ्यागतः प्रभुः ॥ ०१३ ॥

---

# अध्याय ०८४

ययातिरुवाच ॥

अहं ययातिर्नहुषस्य पुत्रः ; पूरोः पिता सर्वभूतावमानात् ।
प्रभ्रंशितः सुरसिद्धर्षिलोका ;त्परिच्युतः प्रपताम्यल्पपुण्यः ॥ ००१ ॥

अहं हि पूर्वो वयसा भवद्भ्य ;स्तेनाभिवादं भवतां न प्रयुञ्जे ।
यो विद्यया तपसा जन्मना वा ; वृद्धः स पूज्यो भवति द्विजानाम् ॥ ००२ ॥

अष्टक उवाच ॥

अवादीश्चेद्वयसा यः स वृद्ध ; इति राजन्नाभ्यवदः कथञ्चित् ।
यो वै विद्वान्वयसा सन्स्म वृद्धः ; स एव पूज्यो भवति द्विजानाम् ॥ ००३ ॥

ययातिरुवाच ॥

प्रतिकूलं कर्मणां पापमाहु ;स्तद्वर्ततेऽप्रवणे पापलोक्यम् ।
सन्तोऽसतां नानुवर्तन्ति चैत ;द्यथा आत्मैषामनुकूलवादी ॥ ००४ ॥

अभूद्धनं मे विपुलं महद्वै ; विचेष्टमानो नाधिगन्ता तदस्मि ।
एवं प्रधार्यात्महिते निविष्टो ; यो वर्तते स विजानाति जीवन् ॥ ००५ ॥

नानाभावा बहवो जीवलोके ; दैवाधीना नष्टचेष्टाधिकाराः ।
तत्तत्प्राप्य न विहन्येत धीरो ; दिष्टं बलीय इति मत्वात्मबुद्ध्या ॥ ००६ ॥

सुखं हि जन्तुर्यदि वापि दुःखं ; दैवाधीनं विन्दति नात्मशक्त्या ।
तस्माद्दिष्टं बलवन्मन्यमानो ; न सञ्ज्वरेन्नापि हृष्येत्कदाचित् ॥ ००७ ॥

दुःखे न तप्येन्न सुखेन हृष्ये ;त्समेन वर्तेत सदैव धीरः ।
दिष्टं बलीय इति मन्यमानो ; न सञ्ज्वरेन्नापि हृष्येत्कदाचित् ॥ ००८ ॥

भये न मुह्याम्यष्टकाहं कदा चि ;त्संतापो मे मानसो नास्ति कश्चित् ।
धाता यथा मां विदधाति लोके ; ध्रुवं तथाहं भवितेति मत्वा ॥ ००९ ॥

संस्वेदजा अण्डजा उद्भिदाश्च ; सरीसृपाः कृमयोऽथाप्सु मत्स्याः ।
तथाश्मानस्तृणकाष्ठं च सर्वं ; दिष्टक्षये स्वां प्रकृतिं भजन्ते ॥ ०१० ॥

अनित्यतां सुखदुःखस्य बुद्ध्वा ; कस्मात्संतापमष्टकाहं भजेयम् ।
किं कुर्यां वै किं च कृत्वा न तप्ये ; तस्मात्संतापं वर्जयाम्यप्रमत्तः ॥ ०११ ॥

अष्टक उवाच ॥

ये ये लोकाः पार्थिवेन्द्र प्रधाना ;स्त्वया भुक्ता यं च कालं यथा च ।
तन्मे राजन्ब्रूहि सर्वं यथाव ;त्क्षेत्रज्ञवद्भाषसे त्वं हि धर्मान् ॥ ०१२ ॥

ययातिरुवाच ॥

राजाहमासमिह सार्वभौम ;स्ततो लोकान्महतो अजयं वै ।
तत्रावसं वर्षसहस्रमात्रं ; ततो लोकं परमस्म्यभ्युपेतः ॥ ०१३ ॥

ततः पुरीं पुरुहूतस्य रम्यां ; सहस्रद्वारां शतयोजनायताम् ।
अध्यावसं वर्षसहस्रमात्रं ; ततो लोकं परमस्म्यभ्युपेतः ॥ ०१४ ॥

ततो दिव्यमजरं प्राप्य लोकं ; प्रजापतेर्लोकपतेर्दुरापम् ।
तत्रावसं वर्षसहस्रमात्रं ; ततो लोकं परमस्म्यभ्युपेतः ॥ ०१५ ॥

देवस्य देवस्य निवेशने च ; विजित्य लोकानवसं यथेष्टम् ।
संपूज्यमानस्त्रिदशैः समस्तैः ;स्तुल्यप्रभावद्युतिरीश्वराणाम् ॥ ०१६ ॥

तथावसं नन्दने कामरूपी ; संवत्सराणामयुतं शतानाम् ।
सहाप्सरोभिर्विहरन्पुण्यगन्धा ;न्पश्यन्नगान्पुष्पितांश्चारुरूपान् ॥ ०१७ ॥

तत्रस्थं मां देवसुखेषु सक्तं ; कालेऽतीते महति ततोऽतिमात्रम् ।
दूतो देवानामब्रवीदुग्ररूपो ; ध्वंसेत्युच्चैस्त्रिः प्लुतेन स्वरेण ॥ ०१८ ॥

एतावन्मे विदितं राजसिंह ; ततो भ्रष्टोऽहं नन्दनात्क्षीणपुण्यः ।
वाचोऽश्रौषं चान्तरिक्षे सुराणा ;मनुक्रोशाच्छोचतां मानवेन्द्र ॥ ०१९ ॥

अहो कष्टं क्षीणपुण्यो ययातिः ; पतत्यसौ पुण्यकृत्पुण्यकीर्तिः ।
तानब्रुवं पतमानस्ततोऽहं ; सतां मध्ये निपतेयं कथं नु ॥ ०२० ॥

तैराख्याता भवतां यज्ञभूमिः ; समीक्ष्य चैनां त्वरितमुपागतोऽस्मि ।
हविर्गन्धं देशिकं यज्ञभूमे ;र्धूमापाङ्गं प्रतिगृह्य प्रतीतः ॥ ०२१ ॥

---

# अध्याय ०८५

अष्टक उवाच ॥

यदावसो नन्दने कामरूपी ; संवत्सराणामयुतं शतानाम् ।

किं कारणं कार्तयुगप्रधान; हित्वा तत्त्वं वसुधामन्वपद्यः ॥ ००१ ॥

ययातिरुवाच ॥

ज्ञातिः सुहृत्स्वजनो यो यथेह; क्षीणे वित्ते त्यज्यते मानवैर्हि ।
तथा तत्र क्षीणपुण्यं मनुष्यं; त्यजन्ति सद्यः सेश्वरा देवसंघाः ॥ ००२ ॥

अष्टक उवाच ॥

कथं तस्मिन्क्षीणपुण्या भवन्ति; संमुह्यते मेऽत्र मनोऽतिमात्रम् ।
किंविशिष्टाः कस्य धामोपयान्ति; तद्वै ब्रूहि क्षेत्रवित्त्वं मतो मे ॥ ००३ ॥

ययातिरुवाच ॥

इमं भौमं नरकं ते पतन्ति; लालप्यमाना नरदेव सर्वे ।
ते कङ्कगोमायुबलाशनार्थं; क्षीणा विवृद्धिं बहुधा व्रजन्ति ॥ ००४ ॥

तस्मादेतद्वर्जनीयं नरेण; दुष्टं लोके गर्हणीयं च कर्म ।
आख्यातं ते पार्थिव सर्वमेत;द्भूयश्चेदानीं वद किं ते वदामि ॥ ००५ ॥

अष्टक उवाच ॥

यदा तु तान्वितुदन्ते वयांसि; तथा गृध्राः शितिकण्ठाः पतङ्गाः ।
कथं भवन्ति कथमाभवन्ति; न भौममन्यं नरकं शृणोमि ॥ ००६ ॥

ययातिरुवाच ॥

ऊर्ध्वं देहात्कर्मणो जृम्भमाणा;द्व्यक्तं पृथिव्यामनुसञ्चरन्ति ।
इमं भौमं नरकं ते पतन्ति; नावेक्षन्ते वर्षपूगाननेकान् ॥ ००७ ॥

षष्टिं सहस्राणि पतन्ति व्योम्नि; तथा अशीतिं परिवत्सराणि ।

तान्वै तुदन्ति प्रपततः प्रपातं ; भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ॥ ००८ ॥

अष्टक उवाच ॥

यदेनसस्ते पततस्तुदन्ति ; भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ।
कथं भवन्ति कथमाभवन्ति ; कथंभूता गर्भभूता भवन्ति ॥ ००९ ॥

ययातिरुवाच ॥

अस्त्रं रेतः पुष्पफलानुपृक्त ;मन्वेति तद्वै पुरुषेण सृष्टम् ।
स वै तस्या रज आपद्यते वै ; स गर्भभूतः समुपैति तत्र ॥ ०१० ॥

वनस्पतींश्चौषधीश्चाविशन्ति ; अपो वायुं पृथिवीं चान्तरिक्षम् ।
चतुष्पदं द्विपदं चापि सर्व ;मेवंभूता गर्भभूता भवन्ति ॥ ०११ ॥

अष्टक उवाच ॥

अन्यद्वपुर्विदधातीह गर्भं ; उताहो स्वित्स्वेन कामेन याति ।
आपद्यमानो नरयोनिमेता ;माचक्ष्व मे संशयात्प्रब्रवीमि ॥ ०१२ ॥

शरीरदेहादिसमुच्छ्रयं च ; चक्षुःश्रोत्रे लभते केन सञ्ज्ञाम् ।
एतत्तत्त्वं सर्वमाचक्ष्व पृष्टः ; क्षेत्रज्ञं त्वां तात मन्याम सर्वे ॥ ०१३ ॥

ययातिरुवाच ॥

वायुः समुत्कर्षति गर्भयोनि ;मृतौ रेतः पुष्परसानुपृक्तम् ।
स तत्र तन्मात्रकृताधिकारः ; क्रमेण संवर्धयतीह गर्भम् ॥ ०१४ ॥

स जायमानो विगृहीतगात्रः ; षड्ज्ञाननिष्ठायतनो मनुष्यः ।
स श्रोत्राभ्यां वेदयतीह शब्दं ; सर्वं रूपं पश्यति चक्षुषा च ॥ ०१५ ॥

घ्राणेन गन्धं जिह्वयाथो रसं च ; त्वचा स्पर्शं मनसा वेद भावम् ।
इत्यष्टकेहोपचितिं च विद्धि ; महात्मनः प्राणभृतः शरीरे ॥ ०१६ ॥

अष्टक उवाच ॥

यः संस्थितः पुरुषो दह्यते वा ; निखन्यते वापि निघृष्यते वा ।
अभावभूतः स विनाशमेत्य ; केनात्मानं चेतयते पुरस्तात् ॥ ०१७ ॥

ययातिरुवाच ॥

हित्वा सोऽसून्सुप्तवन्निष्टनित्वा ; पुरोधाय सुकृतं दुष्कृतं च ।
अन्यां योनिं पवनाग्रानुसारी ; हित्वा देहं भजते राजसिंह ॥ ०१८ ॥

पुण्यां योनिं पुण्यकृतो व्रजन्ति ; पापां योनिं पापकृतो व्रजन्ति ।
कीटाः पतङ्गाश्च भवन्ति पापा ; न मे विवक्षास्ति महानुभाव ॥ ०१९ ॥

चतुष्पदा द्विपदाः षट्पदाश्च ; तथाभूता गर्भभूता भवन्ति ।
आख्यातमेतन्निखिलेन सर्वं ; भूयस्तु किं पृच्छसि राजसिंह ॥ ०२० ॥

अष्टक उवाच ॥

किं स्वित्कृत्वा लभते तात लोका ;न्मर्त्यः श्रेष्ठांस्तपसा विद्यया वा ।
तन्मे पृष्टः शंस सर्वं यथाव ;च्छुभा.ण्ल्लोकान्येन गच्छेत्क्रमेण ॥ ०२१ ॥

ययातिरुवाच ॥

तपश्च दानं च शमो दमश्च ; ह्रीरार्जवं सर्वभूतानुकम्पा ।
नश्यन्ति मानेन तमोऽभिभूताः ; पुंसः सदैवेति वदन्ति सन्तः ॥ ०२२ ॥

अधीयानः पण्डितं मन्यमानो ; यो विद्यया हन्ति यशः परेषाम् ।
तस्यान्तवन्तश्च भवन्ति लोका ; न चास्य तद्ब्रह्म फलं ददाति ॥ ०२३ ॥

चत्वारि कर्माण्यभयङ्कराणि ; भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं ; मानेनाधीतमुत मानयज्ञः ॥ ०२४ ॥

न मान्यमानो मुदमाददीत ; न संतापं प्राप्नुयाच्चावमानात् ।
सन्तः सतः पूजयन्तीह लोके ; नासाधवः साधुबुद्धिं लभन्ते ॥ ०२५ ॥

इति दद्यादिति यजेदित्यधीयीत मे व्रतम् ।
इत्यस्मिन्नभयान्याहुस्तानि वर्ज्यानि नित्यशः ॥ ०२६ ॥

येनाश्रयं वेदयन्ते पुराणं ; मनीषिणो मानसमानभक्तम् ।
तन्निःश्रेयस्तैजसं रूपमेत्य ; परां शान्तिं प्राप्नुयुः प्रेत्य चेह ॥ ०२७ ॥

---

# अध्याय ०८६

अष्टक उवाच ॥

चरन्गृहस्थः कथमेति देवा ;न्कथं भिक्षुः कथमाचार्यकर्मा ।
वानप्रस्थः सत्पथे संनिविष्टो ; बहून्यस्मिन्संप्रति वेदयन्ति ॥ ००१ ॥

ययातिरुवाच ॥

आहूताध्यायी गुरुकर्मस्वचोद्यः ; पूर्वोत्थायी चरमं चोपशायी ।
मृदुर्दान्तो धृतिमानप्रमत्तः ; स्वाध्यायशीलः सिध्यति ब्रह्मचारी ॥ ००२ ॥

धर्मागतं प्राप्य धनं यजेत ; दद्यात्सदैवातिथीन्भोजयेच्च ।
अनाददानश्च परैरदत्तं ; सैषा गृहस्थोपनिषत्पुराणी ॥ ००३ ॥

स्ववीर्यजीवी वृजिनान्निवृत्तो ; दाता परेभ्यो न परोपतापी ।
तादृङ्मुनिः सिद्धिमुपैति मुख्यां ; वसन्नरण्ये नियताहारचेष्टः ॥ ००४ ॥

अशिल्पजीवी नगृहश्च नित्यं ; जितेन्द्रियः सर्वतो विप्रमुक्तः ।
अनोकसारी लघुरल्पचार ;श्चरन्देशानेकचरः स भिक्षुः ॥ ००५ ॥

रात्र्या यया चाभिजिताश्च लोका ; भवन्ति कामा विजिताः सुखाश्च ।
तामेव रात्रिं प्रयतेत विद्वा ;नरण्यसंस्थो भवितुं यतात्मा ॥ ००६ ॥

दशैव पूर्वान्दश चापरांस्तु ; ज्ञातीन्सहात्मानमथैकविंशम् ।
अरण्यवासी सुकृते दधाति ; विमुच्यारण्ये स्वशरीरधातून् ॥ ००७ ॥

अष्टक उवाच ॥

कति स्विदेव मुनयो मौनानि कति चाप्युत ।
भवन्तीति तदाचक्ष्व श्रोतुमिच्छामहे वयम् ॥ ००८ ॥

ययातिरुवाच ॥

अरण्ये वसतो यस्य ग्रामो भवति पृष्ठतः ।
ग्रामे वा वसतोऽरण्यं स मुनिः स्याज्जनाधिप ॥ ००९ ॥

अष्टक उवाच ॥

कथं स्विद्वसतोऽरण्ये ग्रामो भवति पृष्ठतः ।
ग्रामे वा वसतोऽरण्यं कथं भवति पृष्ठतः ॥ ०१० ॥

ययातिरुवाच ॥

न ग्राम्यमुपयुञ्जीत य आरण्यो मुनिर्भवेत् ।
तथास्य वसतोऽरण्ये ग्रामो भवति पृष्ठतः ॥ ०११ ॥

अनग्निरनिकेतश्च अगोत्रचरणो मुनिः ।
कौपीनाच्छादनं यावत्तावदिच्छेच्च चीवरम् ॥ ०१२ ॥

यावत्प्राणाभिसंधानं तावदिच्छेच्च भोजनम् ।
तथास्य वसतो ग्रामेऽरण्यं भवति पृष्ठतः ॥ ०१३ ॥

यस्तु कामान्परित्यज्य त्यक्तकर्मा जितेन्द्रियः ।
आतिष्ठेत मुनिर्मौनं स लोके सिद्धिमाप्नुयात् ॥ ०१४ ॥

धौतदन्तं कृत्तनखं सदा स्नातमलङ्कृतम् ।
असितं सितकर्मस्थं कस्तं नार्चितुमर्हति ॥ ०१५ ॥

तपसा कर्शितः क्षामः क्षीणमांसास्थिशोणितः ।
यदा भवति निर्द्वन्द्वो मुनिर्मौनं समास्थितः ॥ ०१६ ॥

अथ लोकमिमं जित्वा लोकं विजयते परम् ॥ ०१६ ॥

आस्येन तु यदाहारं गोवन्मृगयते मुनिः ।
अथास्य लोकः पूर्वो यः सोऽमृतत्वाय कल्पते ॥ ०१७ ॥

---

# अध्याय ०८७

अष्टक उवाच ॥

कतरस्त्वेतयोः पूर्वं देवानामेति सात्म्यताम् ।
उभयोर्धावतो राजन्सूर्याचन्द्रमसोरिव ॥ ००१ ॥

ययातिरुवाच ॥

अनिकेतो गृहस्थेषु कामवृत्तेषु संयतः ।
ग्राम एव वसन्भिक्षुस्तयोः पूर्वतरं गतः ॥ ००२ ॥

अप्राप्य दीर्घमायुस्तु यः प्राप्तो विकृतिं चरेत् ।
तप्येत यदि तत्कृत्वा चरेत्सोऽन्यत्ततस्तपः ॥ ००३ ॥

यद्वै नृशंसं तदपथ्यमाहु ;र्यः सेवते धर्ममनर्थबुद्धिः ।
अस्वोऽप्यनीशश्च तथैव राजं ;स्तदार्जवं स समाधिस्तदार्यम् ॥ ००४ ॥

अष्टक उवाच ॥

केनासि दूतः प्रहितोऽद्य राज ;न्युवा स्रग्वी दर्शनीयः सुवर्चाः ।
कुत आगतः कतरस्यां दिशि त्व ;मुताहो स्वित्पार्थिवं स्थानमस्ति ॥ ००५ ॥

ययातिरुवाच ॥

इमं भौमं नरकं क्षीणपुण्यः ; प्रवेष्टुमुर्वीं गगनाद्विप्रकीर्णः ।
उक्त्वाहं वः प्रपतिष्याम्यनन्तरं ; त्वरन्ति मां ब्राह्मणा लोकपालाः ॥ ००६ ॥

सतां सकाशे तु वृतः प्रपात ;स्ते सङ्गता गुणवन्तश्च सर्वे ।
शक्राच्च लब्धो हि वरो मयैष ; पतिष्यता भूमितले नरेन्द्र ॥ ००७ ॥

अष्टक उवाच ॥

पृच्छामि त्वां मा प्रपत प्रपातं ; यदि लोकाः पार्थिव सन्ति मेऽत्र ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः ; क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ ००८ ॥

ययातिरुवाच ॥

यावत्पृथिव्यां विहितं गवाश्वं ; सहारण्यैः पशुभिः पर्वतैश्च ।
तावल्लोका दिवि ते संस्थिता वै ; तथा विजानीहि नरेन्द्रसिंह ॥ ००९ ॥

अष्टक उवाच ॥

तांस्ते ददामि मा प्रपत प्रपातं ; ये मे लोका दिवि राजेन्द्र सन्ति ।
यद्यन्तरिक्षे यदि वा दिवि श्रिता ;स्तानाक्रम क्षिप्रममित्रसाह ॥ ०१० ॥

ययातिरुवाच ॥

नास्मद्विधोऽब्राह्मणो ब्रह्मविच्च ; प्रतिग्रहे वर्तते राजमुख्य ।
यथा प्रदेयं सततं द्विजेभ्य ;स्तथाददं पूर्वमहं नरेन्द्र ॥ ०११ ॥

नाब्राह्मणः कृपणो जातु जीवे ;द्या चापि स्याद्ब्राह्मणी वीरपत्नी ।
सोऽहं यदैवाकृतपूर्वं चरेयं ; विवित्समानः किमु तत्र साधु ॥ ०१२ ॥

प्रतर्दन उवाच ॥

पृच्छामि त्वां स्पृहणीयरूप ; प्रतर्दनोऽहं यदि मे सन्ति लोकाः ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः ; क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ ०१३ ॥

ययातिरुवाच ॥

सन्ति लोका बहवस्ते नरेन्द्र ; अप्येकैकः सप्त सप्ताप्यहानि ।
मधुच्युतो घृतपृक्ता विशोका ;स्ते नान्तवन्तः प्रतिपालयन्ति ॥ ०१४ ॥

प्रतर्दन उवाच ॥

तांस्ते ददामि मा प्रपत प्रपातं ; ये मे लोकास्तव ते वै भवन्तु ।
यद्यन्तरिक्षे यदि वा दिवि श्रिता ;स्तानाक्रम क्षिप्रमपेतमोहः ॥ ०१५ ॥

ययातिरुवाच ॥

न तुल्यतेजाः सुकृतं कामयेत ; योगक्षेमं पार्थिव पार्थिवः सन् ।
दैवादेशादापदं प्राप्य विद्वां ;श्चरेन्नृशंसं न हि जातु राजा ॥ ०१६ ॥

धर्म्यं मार्गं चेतयानो यशस्यं ; कुर्यान्नृपो धर्ममवेक्षमाणः ।
न मद्विधो धर्मबुद्धिः प्रजान ;न्कुर्यादेवं कृपणं मां यथात्थ ॥ ०१७ ॥

कुर्यामपूर्वं न कृतं यदन्यै ;र्विवित्समानः किमु तत्र साधु ।
ब्रुवाणमेवं नृपतिं ययातिं ; नृपोत्तमो वसुमनाब्रवीत्तम् ॥ ०१८ ॥

---

# अध्याय ०८८

वसुमना उवाच ॥

पृच्छामि त्वां वसुमना रौशदश्वि ;र्यद्यस्ति लोको दिवि मह्यं नरेन्द्र ।
यद्यन्तरिक्षे प्रथितो महात्म ;न्क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ ००१ ॥

ययातिरुवाच ॥

यदन्तरिक्षं पृथिवी दिशश्च ; यत्तेजसा तपते भानुमांश्च ।
लोकास्तावन्तो दिवि संस्थिता वै ; ते नान्तवन्तः प्रतिपालयन्ति ॥ ००२ ॥

वसुमना उवाच ॥

तांस्ते ददामि पत मा प्रपातं ; ये मे लोकास्तव ते वै भवन्तु ।

क्रीणीष्वैनांस्तृणकेनापि राज ;न्प्रतिग्रहस्ते यदि सम्यक्प्रदुष्टः ॥ ००३ ॥

ययातिरुवाच ॥

न मिथ्याहं विक्रयं वै स्मरामि ; वृथा गृहीतं शिशुकाच्छङ्कमानः ।
कुर्यां न चैवाकृतपूर्वमन्यै ;र्विवित्समानः किमु तत्र साधु ॥ ००४ ॥

वसुमना उवाच ॥

तांस्त्वं लोकान्प्रतिपद्यस्व राज ;न्मया दत्तान्यदि नेष्टः क्रयस्ते ।
अहं न तान्वै प्रतिगन्ता नरेन्द्र ; सर्वे लोकास्तव ते वै भवन्तु ॥ ००५ ॥

शिबिरुवाच ॥

पृच्छामि त्वां शिबिरौशीनरोऽहं ; ममापि लोका यदि सन्तीह तात ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः ; क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ ००६ ॥

ययातिरुवाच ॥

न त्वं वाचा हृदयेनापि विद्व ;न्परीप्समानान्नावमंस्था नरेन्द्र ।
तेनानन्ता दिवि लोकाः श्रितास्ते ; विद्युद्रूपाः स्वनवन्तो महान्तः ॥ ००७ ॥

शिबिरुवाच ॥

तांस्त्वं लोकान्प्रतिपद्यस्व राज ;न्मया दत्तान्यदि नेष्टः क्रयस्ते ।
न चाहं तान्प्रतिपत्स्येह दत्त्वा ; यत्र गत्वा त्वमुपास्से ह लोकान् ॥ ००८ ॥

ययातिरुवाच ॥

यथा त्वमिन्द्रप्रतिमप्रभाव ;स्ते चाप्यनन्ता नरदेव लोकाः ।
तथाद्य लोके न रमेऽन्यदत्ते ; तस्माच्छिबे नाभिनन्दामि दायम् ॥ ००९ ॥

अष्टक उवाच ॥

न चेदेकैकशो राज.ण्ल्लोकान्नः प्रतिनन्दसि ।
सर्वे प्रदाय भवते गन्तारो नरकं वयम् ॥ ०१० ॥

ययातिरुवाच ॥

यदर्हाय ददध्वं तत्सन्तः सत्यानृशंस्यतः ।
अहं तु नाभिधृष्णोमि यत्कृतं न मया पुरा ॥ ०११ ॥

अष्टक उवाच ॥

कस्यैते प्रतिदृश्यन्ते रथाः पञ्च हिरण्मयाः ।
उच्चैः सन्तः प्रकाशन्ते ज्वलन्तोऽग्निशिखा इव ॥ ०१२ ॥

ययातिरुवाच ॥

युष्मानेते हि वक्ष्यन्ति रथाः पञ्च हिरण्मयाः ।
उच्चैः सन्तः प्रकाशन्ते ज्वलन्तोऽग्निशिखा इव ॥ ०१३ ॥

अष्टक उवाच ॥

आतिष्ठस्व रथं राजन्विक्रमस्व विहायसा ।
वयमप्यनुयास्यामो यदा कालो भविष्यति ॥ ०१४ ॥

ययातिरुवाच ॥

सर्वैरिदानीं गन्तव्यं सहस्वर्गजितो वयम् ।
एष नो विरजाः पन्था दृश्यते देवसद्मनः ॥ ०१५ ॥

वैशंपायन उवाच ॥

तेऽधिरुह्य रथान्सर्वे प्रयाता नृपसत्तमाः ।
आक्रमन्तो दिवं भाभिर्धर्मेणावृत्य रोदसी ॥ ०१६ ॥

अष्टक उवाच ॥

अहं मन्ये पूर्वमेकोऽस्मि गन्ता ; सखा चेन्द्रः सर्वथा मे महात्मा ।
कस्मादेवं शिबिरौशीनरोऽय ;मेकोऽत्यगात्सर्ववेगेन वाहान् ॥ ०१७ ॥

ययातिरुवाच ॥

अददाद्देवयानाय यावद्वित्तमविन्दत ।
उशीनरस्य पुत्रोऽयं तस्माच्छ्रेष्ठो हि नः शिबिः ॥ ०१८ ॥

दानं तपः सत्यमथापि धर्मो ; ह्रीः श्रीः क्षमा सौम्य तथा तितिक्षा ।
राजन्नेतान्यप्रतिमस्य राज्ञः ; शिबेः स्थितान्यनृशंसस्य बुद्ध्या ॥ ०१९ ॥

एवंवृत्तो ह्रीनिषेधश्च यस्मा ;त्तस्माच्छिबिरत्यगाद्वै रथेन ॥ ०१९ ॥

वैशंपायन उवाच ॥

अथाष्टकः पुनरेवान्वपृच्छ ;न्मातामहं कौतुकादिन्द्रकल्पम् ।
पृच्छामि त्वां नृपते ब्रूहि सत्यं ; कुतश्च कस्यासि सुतश्च कस्य ॥ ०२० ॥

कृतं त्वया यद्धि न तस्य कर्ता ; लोके त्वदन्यः क्षत्रियो ब्राह्मणो वा ॥ ०२० ॥

ययातिरुवाच ॥

ययातिरस्मि नहुषस्य पुत्रः ; पूरोः पिता सार्वभौमस्त्विहासम् ।
गुह्यमर्थं मामकेभ्यो ब्रवीमि ; मातामहोऽहं भवतां प्रकाशः ॥ ०२१ ॥

सर्वामिमां पृथिवीं निर्जिगाय ; प्रस्थे बद्ध्वा ह्यददं ब्राह्मणेभ्यः ।
मेध्यानश्वानेकशफान्सुरूपां ;स्तदा देवाः पुण्यभाजो भवन्ति ॥ ०२२ ॥

अदामहं पृथिवीं ब्राह्मणेभ्यः ; पूर्णामिमामखिलां वाहनस्य ।
गोभिः सुवर्णेन धनैश्च मुख्यै ;स्तत्रासन्गाः शतमर्बुदानि ॥ ०२३ ॥

सत्येन मे द्यौश्च वसुंधरा च ; तथैवाग्निर्ज्वलते मानुषेषु ।
न मे वृथा व्याहृतमेव वाक्यं ; सत्यं हि सन्तः प्रतिपूजयन्ति ॥ ०२४ ॥

सर्वे च देवा मुनयश्च लोकाः ; सत्येन पूज्या इति मे मनोगतम् ॥ ०२४ ॥

यो नः स्वर्गजितः सर्वान्यथावृत्तं निवेदयेत् ।
अनसूयुर्द्विजाग्रेभ्यः स लभेन्नः सलोकताम् ॥ ०२५ ॥

वैशंपायन उवाच ॥

एवं राजा स महात्मा ह्यतीव ; स्वैर्दौहित्रैस्तारितोऽमित्रसाहः ।
त्यक्त्वा महीं परमोदारकर्मा ; स्वर्गं गतः कर्मभिर्व्याप्य पृथ्वीम् ॥ ०२६ ॥

---

# संभवपर्व

## अध्याय ०८९

जनमेजय उवाच ॥

भगवञ्श्रोतुमिच्छामि पूरोर्वंशकरान्नृपान् ।

यद्वीर्या यादृशाश्चैव यावन्तो यत्पराक्रमाः ॥ ००१ ॥

न ह्यस्मिञ्शीलहीनो वा निर्वीर्यो वा नराधिपः ।
प्रजाविरहितो वापि भूतपूर्वः कदाचन ॥ ००२ ॥

तेषां प्रथितवृत्तानां राज्ञां विज्ञानशालिनाम् ।
चरितं श्रोतुमिच्छामि विस्तरेण तपोधन ॥ ००३ ॥

वैशंपायन उवाच ॥

हन्त ते कथयिष्यामि यन्मां त्वं परिपृच्छसि ।
पूरोर्वंशधरान्वीराञ्शक्रप्रतिमतेजसः ॥ ००४ ॥

प्रवीरेश्वररौद्राश्वास्त्रयः पुत्रा महारथाः ।
पूरोः पौष्यामजायन्त प्रवीरस्तत्र वंशकृत् ॥ ००५ ॥

मनस्युरभवत्तस्माच्छूरः श्येनीसुतः प्रभुः ।
पृथिव्याश्चतुरन्ताया गोप्ता राजीवलोचनः ॥ ००६ ॥

सुभ्रूः संहननो वाग्मी सौवीरीतनयास्त्रयः ।
मनस्योरभवन्पुत्राः शूराः सर्वे महारथाः ॥ ००७ ॥

रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः ।
यज्वानो जज्ञिरे शूराः प्रजावन्तो बहुश्रुताः ॥ ००८ ॥

सर्वे सर्वास्त्रविद्वांसः सर्वे धर्मपरायणाः ॥ ००८ ॥

ऋचेपुरथ कक्षेपुः कृकणेपुश्च वीर्यवान् ।
स्थण्डिलेपुर्वनेपुश्च स्थलेपुश्च महारथः ॥ ००९ ॥

तेजेपुर्बलवान्धीमान्सत्येपुश्चेन्द्रविक्रमः ।

धर्मेपुः संनतेपुश्च दशमो देवविक्रमः ॥ ०१० ॥

अनाधृष्टिसुतास्तात राजसूयाश्वमेधिनः ॥ ०१० ॥

मतिनारस्ततो राजा विद्वांश्चर्चेपुतोऽभवत् ।
मतिनारसुता राजंश्चत्वारोऽमितविक्रमाः ॥ ०११ ॥

तंसुर्महानतिरथो द्रुह्युश्चाप्रतिमद्युतिः ॥ ०११ ॥

तेषां तंसुर्महावीर्यः पौरवं वंशमुद्वहन् ।
आजहार यशो दीप्तं जिगाय च वसुंधराम् ॥ ०१२ ॥

इलिनं तु सुतं तंसुर्जनयामास वीर्यवान् ।
सोऽपि कृत्स्नामिमां भूमिं विजिग्ये जयतां वरः ॥ ०१३ ॥

रथंतर्यां सुतान्पञ्च पञ्चभूतोपमांस्ततः ।
इलिनो जनयामास दुःषन्तप्रभृतीन्नृप ॥ ०१४ ॥

दुःषन्तं शूरभीमौ च प्रपूर्वं वसुमेव च ।
तेषां ज्येष्ठोऽभवद्राजा दुःषन्तो जनमेजय ॥ ०१५ ॥

दुःषन्ताद्भरतो जज्ञे विद्वाञ्शाकुन्तलो नृपः ।
तस्माद्भरतवंशस्य विप्रतस्थे महद्यशः ॥ ०१६ ॥

भरतस्तिसृषु स्त्रीषु नव पुत्रानजीजनत् ।
नाभ्यनन्दन्त तान्राजा नानुरूपा ममेत्युत ॥ ०१७ ॥

ततो महद्भिः क्रतुभिरीजानो भरतस्तदा ।
लेभे पुत्रं भरद्वाजाद्भुमन्युं नाम भारत ॥ ०१८ ॥

ततः पुत्रिणमात्मानं ज्ञात्वा पौरवनन्दनः ।

भुमन्युं भरतश्रेष्ठ यौवराज्येऽभ्यषेचयत् ॥ ०१९ ॥

ततस्तस्य महीन्द्रस्य वितथः पुत्रकोऽभवत् ।
ततः स वितथो नाम भुमन्योरभवत्सुतः ॥ ०२० ॥

सुहोत्रश्च सुहोता च सुहविः सुयजुस्तथा ।
पुष्करिण्यामृचीकस्य भुमन्योरभवन्सुताः ॥ ०२१ ॥

तेषां ज्येष्ठः सुहोत्रस्तु राज्यमाप महीक्षिताम् ।
राजसूयाश्वमेधाद्यैः सोऽयजद्बहुभिः सवैः ॥ ०२२ ॥

सुहोत्रः पृथिवीं सर्वां बुभुजे सागराम्बराम् ।
पूर्णां हस्तिगवाश्वस्य बहुरत्नसमाकुलाम् ॥ ०२३ ॥

ममज्जेव मही तस्य भूरिभारावपीडिता ।
हस्त्यश्वरथसंपूर्णा मनुष्यकलिला भृशम् ॥ ०२४ ॥

सुहोत्रे राजनि तदा धर्मतः शासति प्रजाः ।
चैत्ययूपाङ्किता चासीद्भूमिः शतसहस्रशः ॥ ०२५ ॥

प्रवृद्धजनसस्या च सहदेवा व्यरोचत ॥ ०२५ ॥

ऐक्ष्वाकी जनयामास सुहोत्रात्पृथिवीपतेः ।
अजमीढं सुमीढं च पुरुमीढं च भारत ॥ ०२६ ॥

अजमीढो वरस्तेषां तस्मिन्वंशः प्रतिष्ठितः ।
षट्पुत्रान्सोऽप्यजनयत्तिसृषु स्त्रीषु भारत ॥ ०२७ ॥

ऋक्षं धूमिन्यथो नीली दुःषन्तपरमेष्ठिनौ ।
केशिन्यजनयज्जह्नुमुभौ च जनरूपिणौ ॥ ०२८ ॥

तथेमे सर्वपाञ्चाला दुःषन्तपरमेष्ठिनोः ।
अन्वयाः कुशिका राजञ्जह्नोरमिततेजसः ॥ ०२९ ॥

जनरूपिणयोर्ज्येष्ठमृक्षमाहुर्जनाधिपम् ।
ऋक्षात्संवरणो जज्ञे राजन्वंशकरस्तव ॥ ०३० ॥

आर्क्षे संवरणे राजन्प्रशासति वसुंधराम् ।
सङ्क्षयः सुमहानासीत्प्रजानामिति शुश्रुमः ॥ ०३१ ॥

व्यशीर्यत ततो राष्ट्रं क्षयैर्नानाविधैस्तथा ।
क्षुन्मृत्युभ्यामनावृष्ट्या व्याधिभिश्च समाहतम् ॥ ०३२ ॥

अभ्यघ्नन्भारतांश्चैव सपत्नानां बलानि च ॥ ०३२ ॥

चालयन्वसुधां चैव बलेन चतुरङ्गिणा ।
अभ्ययात्तं च पाञ्चाल्यो विजित्य तरसा महीम् ॥ ०३३ ॥

अक्षौहिणीभिर्दशभिः स एनं समरेऽजयत् ॥ ०३३ ॥

ततः सदारः सामात्यः सपुत्रः ससुहृज्जनः ।
राजा संवरणस्तस्मात्पलायत महाभयात् ॥ ०३४ ॥

सिन्धोर्नदस्य महतो निकुञ्जे न्यवसत्तदा ।
नदीविषयपर्यन्ते पर्वतस्य समीपतः ॥ ०३५ ॥

तत्रावसन्बहून्कालान्भारता दुर्गमाश्रिताः ॥ ०३५ ॥

तेषां निवसतां तत्र सहस्रं परिवत्सरान् ।
अथाभ्यगच्छद्भरतान्वसिष्ठो भगवानृषिः ॥ ०३६ ॥

तमागतं प्रयत्नेन प्रत्युद्गम्याभिवाद्य च ।

अर्घ्यमभ्याहरंस्तस्मै ते सर्वे भारतास्तदा ॥ ०३७ ॥

निवेद्य सर्वमृषये सत्कारेण सुवर्चसे ॥ ०३७ ॥

तं समामष्टमीमुष्टं राजा वव्रे स्वयं तदा ।
पुरोहितो भवान्नोऽस्तु राज्याय प्रयतामहे ॥ ०३८ ॥

ओमित्येवं वसिष्ठोऽपि भारतान्प्रत्यपद्यत ॥ ०३८ ॥

अथाभ्यषिञ्चत्साम्राज्ये सर्वक्षत्रस्य पौरवम् ।
विषाणभूतं सर्वस्यां पृथिव्यामिति नः श्रुतम् ॥ ०३९ ॥

भरताध्युषितं पूर्वं सोऽध्यतिष्ठत्पुरोत्तमम् ।
पुनर्बलिभृतश्चैव चक्रे सर्वमहीक्षितः ॥ ०४० ॥

ततः स पृथिवीं प्राप्य पुनरीजे महाबलः ।
आजमीढो महायज्ञैर्बहुभिर्भूरिदक्षिणैः ॥ ०४१ ॥

ततः संवरणात्सौरी सुषुवे तपती कुरुम् ।
राजत्वे तं प्रजाः सर्वा धर्मज्ञ इति वव्रिरे ॥ ०४२ ॥

तस्य नाम्नाभिविख्यातं पृथिव्यां कुरुजाङ्गलम् ।
कुरुक्षेत्रं स तपसा पुण्यं चक्रे महातपाः ॥ ०४३ ॥

अश्ववन्तमभिष्वन्तं तथा चित्ररथं मुनिम् ।
जनमेजयं च विख्यातं पुत्रांश्चास्यानुशुश्रुमः ॥ ०४४ ॥

पञ्चैतान्वाहिनी पुत्रान्व्यजायत मनस्विनी ॥ ०४४ ॥

अभिष्वतः परिक्षित्तु शबलाश्वश्च वीर्यवान् ।
अभिराजो विराजश्च शल्मलश्च महाबलः ॥ ०४५ ॥

उच्चैःश्रवा भद्रकारो जितारिश्चाष्टमः स्मृतः ।
एतेषामन्ववाये तु ख्यातास्ते कर्मजैर्गुणैः ॥ ०४६ ॥

जनमेजयादयः सप्त तथैवान्ये महाबलाः ।
परिक्षितोऽभवन्पुत्राः सर्वे धर्मार्थकोविदाः ॥ ०४७ ॥

कक्षसेनोग्रसेनौ च चित्रसेनश्च वीर्यवान् ।
इन्द्रसेनः सुषेणश्च भीमसेनश्च नामतः ॥ ०४८ ॥

जनमेजयस्य तनया भुवि ख्याता महाबलाः ।
धृतराष्ट्रः प्रथमजः पाण्डुर्बाह्लीक एव च ॥ ०४९ ॥

निषधश्च महातेजास्तथा जाम्बूनदो बली ।
कुण्डोदरः पदातिश्च वसातिश्चाष्टमः स्मृतः ॥ ०५० ॥

सर्वे धर्मार्थकुशलाः सर्वे भूतहिते रताः ॥ ०५० ॥

धृतराष्ट्रोऽथ राजासीत्तस्य पुत्रोऽथ कुण्डिकः ।
हस्ती वितर्कः क्राथश्च कुण्डलश्चापि पञ्चमः ॥ ०५१ ॥

हविःश्रवास्तथेन्द्राभः सुमन्युश्चापराजितः ॥ ०५१ ॥

प्रतीपस्य त्रयः पुत्रा जज्ञिरे भरतर्षभ ।
देवापिः शंतनुश्चैव बाह्लीकश्च महारथः ॥ ०५२ ॥

देवापिस्तु प्रवव्राज तेषां धर्मपरीप्सया ।
शंतनुश्च महीं लेभे बाह्लीकश्च महारथः ॥ ०५३ ॥

भरतस्यान्वये जाताः सत्त्ववन्तो महारथाः ।
देवर्षिकल्पा नृपते बहवो राजसत्तमाः ॥ ०५४ ॥

एवंविधाश्चाप्यपरे देवकल्पा महारथाः ।
जाता मनोरन्ववाये ऐलवंशविवर्धनाः ॥ ०५५ ॥

---

# अध्याय ०९०

जनमेजय उवाच ॥

श्रुतस्त्वत्तो मया विप्र पूर्वेषां संभवो महान् ।
उदाराश्चापि वंशेऽस्मिन्राजानो मे परिश्रुताः ॥ ००१ ॥

किं तु लघ्वर्थसंयुक्तं प्रियाख्यानं न मामति ।
प्रीणात्यतो भवान्भूयो विस्तरेण ब्रवीतु मे ॥ ००२ ॥

एतामेव कथां दिव्यामा प्रजापतितो मनोः ।
तेषामाजननं पुण्यं कस्य न प्रीतिमावहेत् ॥ ००३ ॥

सद्धर्मगुणमाहात्म्यैरभिवर्धितमुत्तमम् ।
विष्टभ्य लोकांस्त्रीनेषां यशः स्फीतमवस्थितम् ॥ ००४ ॥

गुणप्रभाववीर्यौजःसत्त्वोत्साहवतामहम् ।
न तृप्यामि कथां शृण्वन्नमृतास्वादसंमिताम् ॥ ००५ ॥

वैशंपायन उवाच ॥

शृणु राजन्पुरा सम्यङ्मया द्वैपायनाच्छ्रुतम् ।
प्रोच्यमानमिदं कृत्स्नं स्ववंशजननं शुभम् ॥ ००६ ॥

दक्षस्यादितिः ।
अदितेर्विवस्वान् ।
विवस्वतो मनुः ।
मनोरिला ।
इलायाः पुरूरवाः ।
पुरूरवस आयुः ।
आयुषो नहुषः ।
नहुषस्य ययातिः । ००७ ।
ययातेर्द्वे भार्ये बभूवतुः ।
उशनसो दुहिता देवयानी वृषपर्वणश्च दुहिता शर्मिष्ठा नाम ।
अत्रानुवंशो भवति । ००८ ।

यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ००९ ॥

तत्र यदोर्यादवाः ।
पूरोः पौरवाः । ०१० ।
पूरोर्भार्या कौसल्या नाम ।
तस्यामस्य जज्ञे जनमेजयो नाम ।
यस्त्रीनश्वमेधानाजहार ।
विश्वजिता चेष्ट्वा वनं प्रविवेश । ०११ ।
जनमेजयः खल्वनन्तां नामोपयेमे माधवीम् ।
तस्यामस्य जज्ञे प्राचिन्वान् ।
यः प्राचीं दिशं जिगाय यावत्सूर्योदयात् ।
ततस्तस्य प्राचिन्वत्वम् । ०१२ ।
प्राचिन्वान्खल्वश्मकीमुपयेमे ।
तस्यामस्य जज्ञे संयातिः । ०१३ ।
संयातिः खलु दृषद्वतो दुहितरं वराङ्गीं नामोपयेमे ।
तस्यामस्य जज्ञे अहंपातिः । ०१४ ।
अहंपातिस्तु खलु कृतवीर्यदुहितरमुपयेमे भानुमतीं नाम ।
तस्यामस्य जज्ञे सार्वभौमः । ०१५ ।

सार्वभौमः खलु जित्वाजहार कैकेयीं सुनन्दां नाम ।
तस्यामस्य जज्ञे जयत्सेनः । ०१६ ।
जयत्सेनः खलु वैदर्भीमुपयेमे सुषुवां नाम ।
तस्यामस्य जज्ञे अराचीनः । ०१७ ।
अराचीनोऽपि वैदर्भीमेवापरामुपयेमे मर्यादां नाम ।
तस्यामस्य जज्ञे महाभौमः । ०१८ ।
महाभौमः खलु प्रासेनजितीमुपयेमे सुयज्ञां नाम ।
तस्यामस्य जज्ञे अयुतनायी ।
यः पुरुषमेधानामयुतमानयत् ।
तदस्यायुतनायित्वम् । ०१९ ।
अयुतनायी खलु पृथुश्रवसो दुहितरमुपयेमे भासां नाम ।
तस्यामस्य जज्ञे अक्रोधनः । ०२० ।
अक्रोधनः खलु कालिङ्गीं करण्डुं नामोपयेमे ।
तस्यामस्य जज्ञे देवातिथिः । ०२१ ।
देवातिथिः खलु वैदेहीमुपयेमे मर्यादां नाम ।
तस्यामस्य जज्ञे ऋचः । ०२२ ।
ऋचः खल्वाङ्गेयीमुपयेमे सुदेवां नाम ।
तस्यां पुत्रमजनयदृक्षम् । ०२३ ।
ऋक्षः खलु तक्षकदुहितरमुपयेमे ज्वालां नाम ।
तस्यां पुत्रं मतिनारं नामोत्पादयामास । ०२४ ।
मतिनारः खलु सरस्वत्यां द्वादशवार्षिकं सत्रमाजहार । ०२५ ।
निवृत्ते च सत्रे सरस्वत्यभिगम्य तं भर्तारं वरयामास ।
तस्यां पुत्रमजनयत्तंसुं नाम । ०२६ ।
अत्रानुवंशो भवति । ०२७ ।

तंसुं सरस्वती पुत्रं मतिनारादजीजनत् ।
इलिनं जनयामास कालिन्द्यां तंसुरात्मजम् ॥ ०२८ ॥

इलिनस्तु रथंतर्यां दुःषन्ताद्यान्पञ्च पुत्रानजनयत् । ०२९ ।
दुःषन्तः खलु विश्वामित्रदुहितरं शकुन्तलां नामोपयेमे ।
तस्यामस्य जज्ञे भरतः ।

तत्र श्लोकौ भवतः । ०३० ।

माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुःषन्त मावमंस्थाः शकुन्तलाम् ॥ ०३१ ॥

रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ ०३२ ॥

ततोऽस्य भरतत्वम् । ०३३ ।
भरतः खलु काशेयीमुपयेमे सार्वसेनीं सुनन्दां नाम ।
तस्यामस्य जज्ञे भुमन्युः । ०३४ ।
भुमन्युः खलु दाशार्हीमुपयेमे जयां नाम ।
तस्यामस्य जज्ञे सुहोत्रः । ०३५ ।
सुहोत्रः खल्विक्ष्वाकुकन्यामुपयेमे सुवर्णां नाम ।
तस्यामस्य जज्ञे हस्ती ।
य इदं हास्तिनपुरं मापयामास ।
एतदस्य हास्तिनपुरत्वम् । ०३६ ।
हस्ती खलु त्रैगर्तीमुपयेमे यशोधरां नाम ।
तस्यामस्य जज्ञे विकुण्ठनः । ०३७ ।
विकुण्ठनः खलु दाशार्हीमुपयेमे सुदेवां नाम ।
तस्यामस्य जज्ञेऽजमीढः । ०३८ ।
अजमीढस्य चतुर्विंशं पुत्रशतं बभूव कैकेय्यां नागायां गान्धार्यां विमलायामृक्षायां चेति ।
पृथक्पृथग्वंशकरा नृपतयः ।
तत्र वंशकरः संवरणः । ०३९ ।
संवरणः खलु वैवस्वतीं तपतीं नामोपयेमे ।
तस्यामस्य जज्ञे कुरुः । ०४० ।
कुरुः खलु दाशार्हीमुपयेमे शुभाङ्गीं नाम ।
तस्यामस्य जज्ञे विडूरथः । ०४१ ।
विडूरथस्तु मागधीमुपयेमे संप्रियां नाम ।
तस्यामस्य जज्ञेऽरुग्वान्नाम । ०४२ ।

अरुग्वान्खलु मागधीमुपयेमेऽमृतां नाम ।
तस्यामस्य जज्ञे परिक्षित् । ०४३ ।
परिक्षित्खलु बाहुदामुपयेमे सुयशां नाम ।
तस्यामस्य जज्ञे भीमसेनः । ०४४ ।
भीमसेनः खलु कैकेयीमुपयेमे सुकुमारीं नाम ।
तस्यामस्य जज्ञे पर्यश्रवाः ।
यमाहुः प्रतीपं नाम । ०४५ ।
प्रतीपः खलु शैब्यामुपयेमे सुनन्दां नाम ।
तस्यां पुत्रानुत्पादयामास देवापिं शंतनुं बाह्लीकं चेति । ०४६ ।
देवापिः खलु बाल एवारण्यं प्रविवेश ।
शंतनुस्तु महीपालोऽभवत् ।
अत्रानुवंशो भवति । ०४७ ।

यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते ।
पुनर्युवा च भवति तस्मात्तं शंतनुं विदुः ॥ ०४८ ॥

तदस्य शंतनुत्वम् । ०४९ ।
शंतनुः खलु गङ्गां भागीरथीमुपयेमे ।
तस्यामस्य जज्ञे देवव्रतः ।
यमाहुर्भीष्म इति । ०५० ।
भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीमुदवहन्मातरम् ।
यामाहुर्गन्धकालीति । ०५१ ।
तस्यां कानीनो गर्भः पराशराद्द्वैपायनः ।
तस्यामेव शंतनोर्द्वौ पुत्रौ बभूवतुः ।
चित्राङ्गदो विचित्रवीर्यश्च । ०५२ ।
तयोरप्राप्तयौवन एव चित्राङ्गदो गन्धर्वेण हतः ।
विचित्रवीर्यस्तु राजा समभवत् । ०५३ ।
विचित्रवीर्यः खलु कौसल्यात्मजेऽम्बिकाम्बालिके काशिराजदुहितरावुपयेमे । ०५४ ।
विचित्रवीर्यस्त्वनपत्य एव विदेहत्वं प्राप्तः । ०५५ ।
ततः सत्यवती चिन्तयामास ।

दौःषन्तो वंश उच्छिद्यते इति । ०५६ ।
सा द्वैपायनमृषिं चिन्तयामास । ०५७ ।
स तस्याः पुरतः स्थितः किं करवाणीति । ०५८ ।
सा तमुवाच ।
भ्राता तवानपत्य एव स्वर्यातो विचित्रवीर्यः ।
साध्वपत्यं तस्योत्पादयेति । ०५९ ।
स परमित्युक्त्वा त्रीन्पुत्रानुत्पादयामास धृतराष्ट्रं पाण्डुं विदुरं चेति । ०६० ।
तत्र धृतराष्ट्रस्य राज्ञः पुत्रशतं बभूव गान्धार्यां वरदानाद्द्वैपायनस्य । ०६१ ।
तेषां धृतराष्ट्रस्य पुत्राणां चत्वारः प्रधाना बभूवुर्दुर्योधनो दुःशासनो विकर्णश्चित्रसेन इति । ०६२ ।
पाण्डोस्तु द्वे भार्ये बभूवतुः कुन्ती माद्री चेत्युभे स्त्रीरत्ने । ०६३ ।
अथ पाण्डुर्मृगयां चरन्मैथुनगतमृषिमपश्यन्मृग्यां वर्तमानम् ।
तथैवाप्लुतमनासादितकामरसमतृप्तं बाणेनाभिजघान । ०६४ ।
स बाणविद्ध उवाच पाण्डुम् ।
चरता धर्ममिमं येन त्वयाभिज्ञेन कामरसस्याहमनवाप्तकामरसोऽभिहतस्तस्मात्त्वमप्येतामवस्थाम
पञ्चत्वमाप्स्यसि क्षिप्रमेवेति । ०६५ ।
स विवर्णरूपः पाण्डुः शापं परिहरमाणो नोपासर्पत भार्ये । ०६६ ।
वाक्यं चोवाच ।
स्वचापल्यादिदं प्राप्तवानहम् ।
शृणोमि च नानपत्यस्य लोका सन्तीति । ०६७ ।
सा त्वं मदर्थे पुत्रानुत्पादयेति कुन्तीमुवाच । ०६८ ।
सा तत्र पुत्रानुत्पादयामास धर्माद्युधिष्ठिरं मारुताद्भीमसेनं शक्रादर्जुनमिति । ०६९ ।
स तां हृष्टरूपः पाण्डुरुवाच ।
इयं ते सपत्न्यनपत्या ।
साध्वस्यामपत्यमुत्पाद्यतामिति । ०७० ।
स एवमस्त्वित्युक्तः कुन्त्या । ०७१ ।
ततो माद्र्यामश्विभ्यां नकुलसहदेवावुत्पादितौ । ०७२ ।
माद्रीं खल्वलङ्कृतां दृष्ट्वा पाण्डुर्भावं चक्रे । ०७३ ।
स तां स्पृष्ट्वैव विदेहत्वं प्राप्तः । ०७४ ।

तत्रैनं चितास्थं माद्री समन्वारुरोह । ०७५ ।
उवाच कुन्तीम् ।
यमयोरार्ययाप्रमत्तया भवितव्यमिति । ०७६ ।
ततस्ते पञ्च पाण्डवाः कुन्त्या सहिता हास्तिनपुरमानीय तापसैर्भीष्मस्य विदुरस्य च निवेदिताः । ०७७ ।
तत्रापि जतुगृहे दग्धुं समारब्धा न शकिता विदुरमन्त्रितेन । ०७८ ।
ततश्च हिडिम्बमन्तरा हत्वा एकचक्रां गताः । ०७९ ।
तस्यामप्येकचक्रायां बकं नाम राक्षसं हत्वा पाञ्चालनगरमभिगताः । ०८० ।
तस्माद्द्रौपदीं भार्यामविन्दन्स्वविषयं चाजग्मुः कुशलिनः । ०८१ ।
पुत्रांश्चोत्पादयामासुः ।
प्रतिविन्ध्यं युधिष्ठिरः ।
सुतसोमं वृकोदरः ।
श्रुतकीर्तिमर्जुनः ।
शतानीकं नकुलः ।
श्रुतकर्माणं सहदेव इति । ०८२ ।
युधिष्ठिरस्तु गोवासनस्य शैब्यस्य देविकां नाम कन्यां स्वयंवरे लेभे ।
तस्यां पुत्रं जनयामास यौधेयं नाम । ०८३ ।
भीमसेनोऽपि काश्यां बलधरां नामोपयेमे वीर्यशुल्काम् ।
तस्यां पुत्रं सर्वगं नामोत्पादयामास । ०८४ ।
अर्जुनः खलु द्वारवतीं गत्वा भगिनीं वासुदेवस्य सुभद्रां नाम भार्यामुदवहत् ।
तस्यां पुत्रमभिमन्युं नाम जनयामास । ०८५ ।
नकुलस्तु चैद्यां करेणुवतीं नाम भार्यामुदवहत् ।
तस्यां पुत्रं निरमित्रं नामाजनयत् । ०८६ ।
सहदेवोऽपि माद्रीमेव स्वयंवरे विजयां नामोपयेमे ।
तस्यां पुत्रमजनयत्सुहोत्रं नाम । ०८७ ।
भीमसेनस्तु पूर्वमेव हिडिम्बायां राक्षस्यां घटोत्कचं नाम पुत्रं जनयामास । ०८८ ।
इत्येते एकादश पाण्डवानां पुत्राः । ०८९ ।
विराटस्य दुहितरमुत्तरां नामाभिमन्युरुपयेमे ।
तस्यामस्य परासुर्गर्भोऽजायत । ०९० ।

तमुत्सङ्गेन प्रतिजग्राह पृथा नियोगात्पुरुषोत्तमस्य वासुदेवस्य ।
षाण्मासिकं गर्भमहमेनं जीवयिष्यामीति । ०९१ ।
सञ्जीवयित्वा चैनमुवाच ।
परिक्षीणे कुले जातो भवत्वयं परिक्षिन्नामेति । ०९२ ।
परिक्षित्तु खलु माद्रवतीं नामोपयेमे ।
तस्यामस्य जनमेजयः । ०९३ ।
जनमेजयात्तु वपुष्टमायां द्वौ पुत्रौ शतानीकः शङ्कुश्च । ०९४ ।
शतानीकस्तु खलु वैदेहीमुपयेमे ।
तस्यामस्य जज्ञे पुत्रोऽश्वमेधदत्तः । ०९५ ।

इत्येष पूरोर्वंशस्तु पाण्डवानां च कीर्तितः ।
पूरोर्वंशमिमं श्रुत्वा सर्वपापैः प्रमुच्यते ॥ ०९६ ॥

---

# अध्याय ०९१

वैशंपायन उवाच ॥

इक्ष्वाकुवंशप्रभवो राजासीत्पृथिवीपतिः ।
महाभिष इति ख्यातः सत्यवाक्सत्यविक्रमः ॥ ००१ ॥

सोऽश्वमेधसहस्रेण वाजपेयशतेन च ।
तोषयामास देवेन्द्रं स्वर्गं लेभे ततः प्रभुः ॥ ००२ ॥

ततः कदाचिद्ब्रह्माणमुपासां चक्रिरे सुराः ।
तत्र राजर्षयो आसन्स च राजा महाभिषः ॥ ००३ ॥

अथ गङ्गा सरिच्छ्रेष्ठा समुपायात्पितामहम् ।

तस्या वासः समुद्धूतं मारुतेन शशिप्रभम् ॥ ००४ ॥

ततोऽभवन्सुरगणाः सहसावाङ्मुखास्तदा ।
महाभिषस्तु राजर्षिरशङ्को दृष्टवान्नदीम् ॥ ००५ ॥

अपध्यातो भगवता ब्रह्मणा स महाभिषः ।
उक्तश्च जातो मर्त्येषु पुनर्लोकानवाप्स्यसि ॥ ००६ ॥

स चिन्तयित्वा नृपतिर्नृपान्सर्वांस्तपोधनान् ।
प्रतीपं रोचयामास पितरं भूरिवर्चसम् ॥ ००७ ॥

महाभिषं तु तं दृष्ट्वा नदी धैर्याच्च्युतं नृपम् ।
तमेव मनसाध्यायमुपावर्तत्सरिद्वरा ॥ ००८ ॥

सा तु विध्वस्तवपुषः कश्मलाभिहतौजसः ।
ददर्श पथि गच्छन्ती वसून्देवान्दिवौकसः ॥ ००९ ॥

तथारूपांश्च तान्दृष्ट्वा पप्रच्छ सरितां वरा ।
किमिदं नष्टरूपाः स्थ कच्चित्क्षेमं दिवौकसाम् ॥ ०१० ॥

तामूचुर्वसवो देवाः शप्ताः स्मो वै महानदि ।
अल्पेऽपराधे संरम्भाद्वसिष्ठेन महात्मना ॥ ०११ ॥

विमूढा हि वयं सर्वे प्रच्छन्नमृषिसत्तमम् ।
संध्यां वसिष्ठमासीनं तमत्यभिसृताः पुरा ॥ ०१२ ॥

तेन कोपाद्वयं शप्ता योनौ संभवतेति ह ।
न शक्यमन्यथा कर्तुं यदुक्तं ब्रह्मवादिना ॥ ०१३ ॥

त्वं तस्मान्मानुषी भूत्वा सूष्व पुत्रान्वसून्भुवि ।
न मानुषीणां जठरं प्रविशेमाशुभं वयम् ॥ ०१४ ॥

इत्युक्ता तान्वसून्गङ्गा तथेत्युक्त्वाब्रवीदिदम् ।
मर्त्येषु पुरुषश्रेष्ठः को वः कर्ता भविष्यति ॥ ०१५ ॥

वसव ऊचुः ॥

प्रतीपस्य सुतो राजा शंतनुर्नाम धार्मिकः ।
भविता मानुषे लोके स नः कर्ता भविष्यति ॥ ०१६ ॥

गङ्गोवाच ॥

ममाप्येवं मतं देवा यथावदत मानघाः ।
प्रियं तस्य करिष्यामि युष्माकं चैतदीप्शितम् ॥ ०१७ ॥

वसव ऊचुः ॥

जातान्कुमारान्स्वानप्सु प्रक्षेप्तुं वै त्वमर्हसि ।
यथा नचिरकालं नो निष्कृतिः स्यात्त्रिलोकगे ॥ ०१८ ॥

गङ्गोवाच ॥

एवमेतत्करिष्यामि पुत्रस्तस्य विधीयताम् ।
नास्य मोघः सङ्गमः स्यात्पुत्रहेतोर्मया सह ॥ ०१९ ॥

वसव ऊचुः ॥

तुरीयार्धं प्रदास्यामो वीर्यस्यैकैकशो वयम् ।
तेन वीर्येण पुत्रस्ते भविता तस्य चेप्सितः ॥ ०२० ॥

न संपत्स्यति मर्त्येषु पुनस्तस्य तु संततिः ।
तस्मादपुत्रः पुत्रस्ते भविष्यति स वीर्यवान् ॥ ०२१ ॥

वैशंपायन उवाच ॥

एवं ते समयं कृत्वा गङ्गया वसवः सह ।
जग्मुः प्रहृष्टमनसो यथासङ्कल्पमञ्जसा ॥ ०२२ ॥

---

# अध्याय ०९२

वैशंपायन उवाच ॥

ततः प्रतीपो राजा स सर्वभूतहिते रतः ।
निषसाद समा बह्वीर्गङ्गातीरगतो जपन् ॥ ००१ ॥

तस्य रूपगुणोपेता गङ्गा श्रीरिव रूपिणी ।
उत्तीर्य सलिलात्तस्माल्लोभनीयतमाकृतिः ॥ ००२ ॥

अधीयानस्य राजर्षेर्दिव्यरूपा मनस्विनी ।
दक्षिणं शालसङ्काशमूरुं भेजे शुभानना ॥ ००३ ॥

प्रतीपस्तु महीपालस्तामुवाच मनस्विनीम् ।
करवाणि किं ते कल्याणि प्रियं यत्तेऽभिकाङ्क्षितम् ॥ ००४ ॥

स्त्र्युवाच ॥

त्वामहं कामये राजन्कुरुश्रेष्ठ भजस्व माम् ।
त्यागः कामवतीनां हि स्त्रीणां सद्भिर्विगर्हितः ॥ ००५ ॥

प्रतीप उवाच ॥

नाहं परस्त्रियं कामाद्गच्छेयं वरवर्णिनि ।
न चासवर्णां कल्याणि धर्म्यं तद्विद्धि मे व्रतम् ॥ ००६ ॥

स्त्र्युवाच ॥

नाश्रेयस्यस्मि नागम्या न वक्तव्या च कर्हिचित् ।
भज मां भजमानां त्वं राजन्कन्यां वरस्त्रियम् ॥ ००७ ॥

प्रतीप उवाच ॥

मयातिवृत्तमेतत्ते यन्मां चोदयसि प्रियम् ।
अन्यथा प्रतिपन्नं मां नाशयेद्धर्मविप्लवः ॥ ००८ ॥

प्राप्य दक्षिणमूरुं मे त्वमाश्लिष्टा वराङ्गने ।
अपत्यानां स्नुषाणां च भीरु विद्ध्येतदासनम् ॥ ००९ ॥

सव्यतः कामिनीभागस्त्वया स च विवर्जितः ।
तस्मादहं नाचरिष्ये त्वयि कामं वराङ्गने ॥ ०१० ॥

स्नुषा मे भव कल्याणि पुत्रार्थे त्वां वृणोम्यहम् ।
स्नुषापक्षं हि वामोरु त्वमागम्य समाश्रिता ॥ ०११ ॥

स्त्र्युवाच ॥

एवमप्यस्तु धर्मज्ञ संयुज्येयं सुतेन ते ।
त्वद्भक्त्यैव भजिष्यामि प्रख्यातं भारतं कुलम् ॥ ०१२ ॥

पृथिव्यां पार्थिवा ये च तेषां यूयं परायणम् ।
गुणा न हि मया शक्या वक्तुं वर्षशतैरपि ॥ ०१३ ॥

कुलस्य ये वः प्रस्थितास्तत्साधुत्वमनुत्तमम् ॥ ०१३ ॥

स मे नाभिजनज्ञः स्यादाचरेयं च यद्विभो ।
तत्सर्वमेव पुत्रस्ते न मीमांसेत कर्हिचित् ॥ ०१४ ॥

एवं वसन्ती पुत्रे ते वर्धयिष्याम्यहं प्रियम् ।
पुत्रैः पुण्यैः प्रियैश्चापि स्वर्गं प्राप्स्यति ते सुतः ॥ ०१५ ॥

वैशंपायन उवाच ॥

तथेत्युक्त्वा तु सा राजंस्तत्रैवान्तरधीयत ।
पुत्रजन्म प्रतीक्षंस्तु स राजा तदधारयत् ॥ ०१६ ॥

एतस्मिन्नेव काले तु प्रतीपः क्षत्रियर्षभः ।
तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दन ॥ ०१७ ॥

तयोः समभवत्पुत्रो वृद्धयोः स महाभिषः ।
शान्तस्य जज्ञे संतानस्तस्मादासीत्स शंतनुः ॥ ०१८ ॥

संस्मरंश्चाक्षया.ण्ल्लोकान्विजितान्स्वेन कर्मणा ।
पुण्यकर्मकृदेवासीच्छंतनुः कुरुसत्तम ॥ ०१९ ॥

प्रतीपः शंतनुं पुत्रं यौवनस्थं ततोऽन्वशात् ।
पुरा मां स्त्री समभ्यागाच्छंतनो भूतये तव ॥ ०२० ॥

त्वामाव्रजेद्यदि रहः सा पुत्र वरवर्णिनी ।
कामयानाभिरूपाढ्या दिव्या स्त्री पुत्रकाम्यया ॥ ०२१ ॥

सा त्वया नानुयोक्तव्या कासि कस्यासि वाङ्गने ॥ ०२१ ॥

यच्च कुर्यान्न तत्कार्यं प्रष्टव्या सा त्वयानघ ।

मन्नियोगाद्भजन्तीं तां भजेथा इत्युवाच तम् ॥ ०२२ ॥

एवं संदिश्य तनयं प्रतीपः शंतनुं तदा ।
स्वे च राज्येऽभिषिच्यैनं वनं राजा विवेश ह ॥ ०२३ ॥

स राजा शंतनुर्धीमान्ख्यातः पृथ्व्यां धनुर्धरः ।
बभूव मृगयाशीलः सततं वनगोचरः ॥ ०२४ ॥

स मृगान्महिषांश्चैव विनिघ्नन्राजसत्तमः ।
गङ्गामनुचचारैकः सिद्धचारणसेविताम् ॥ ०२५ ॥

स कदाचिन्महाराज ददर्श परमस्त्रियम् ।
जाज्वल्यमानां वपुषा साक्षात्पद्मामिव श्रियम् ॥ ०२६ ॥

सर्वानवद्यां सुदतीं दिव्याभरणभूषिताम् ।
सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभाम् ॥ ०२७ ॥

तां दृष्ट्वा हृष्टरोमाभूद्विस्मितो रूपसंपदा ।
पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः ॥ ०२८ ॥

सा च दृष्ट्वैव राजानं विचरन्तं महाद्युतिम् ।
स्नेहादागतसौहार्दा नातृप्यत विलासिनी ॥ ०२९ ॥

तामुवाच ततो राजा सान्त्वयञ्श्लक्ष्णया गिरा ।
देवी वा दानवी वा त्वं गन्धर्वी यदि वाप्सराः ॥ ०३० ॥

यक्षी वा पन्नगी वापि मानुषी वा सुमध्यमे ।
या वा त्वं सुरगर्भाभे भार्या मे भव शोभने ॥ ०३१ ॥

एतच्छ्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च ।
वसूनां समयं स्मृत्वा अभ्यगच्छदनिन्दिता ॥ ०३२ ॥

उवाच चैव राज्ञः सा ह्लादयन्ती मनो गिरा ।
भविष्यामि महीपाल महिषी ते वशानुगा ॥ ०३३ ॥

यत्तु कुर्यामहं राजञ्शुभं वा यदि वाशुभम् ।
न तद्वारयितव्यास्मि न वक्तव्या तथाप्रियम् ॥ ०३४ ॥

एवं हि वर्तमानेऽहं त्वयि वत्स्यामि पार्थिव ।
वारिता विप्रियं चोक्ता त्यजेयं त्वामसंशयम् ॥ ०३५ ॥

तथेति राज्ञा सा तूक्ता तदा भरतसत्तम ।
प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमम् ॥ ०३६ ॥

आसाद्य शंतनुस्तां च बुभुजे कामतो वशी ।
न प्रष्टव्येति मन्वानो न स तां किञ्चिदूचिवान् ॥ ०३७ ॥

स तस्याः शीलवृत्तेन रूपौदार्यगुणेन च ।
उपचारेण च रहस्तुतोष जगतीपतिः ॥ ०३८ ॥

दिव्यरूपा हि सा देवी गङ्गा त्रिपथगा नदी ।
मानुषं विग्रहं श्रीमत्कृत्वा सा वरवर्णिनी ॥ ०३९ ॥

भाग्योपनतकामस्य भार्येवोपस्थिताभवत् ।
शंतनो राजसिंहस्य देवराजसमद्युतेः ॥ ०४० ॥

संभोगस्नेहचातुर्यैर्हावलास्यैर्मनोहरैः ।
राजानं रमयामास यथा रेमे तथैव सः ॥ ०४१ ॥

स राजा रतिसक्तत्वादुत्तमस्त्रीगुणैर्हृतः ।
संवत्सरानृतून्मासान्न बुबोध बहून्गतान् ॥ ०४२ ॥

रममाणस्तया सार्धं यथाकामं जनेश्वरः ।
अष्टावजनयत्पुत्रांस्तस्याममरवर्णिनः ॥ ०४३ ॥

जातं जातं च सा पुत्रं क्षिपत्यम्भसि भारत ।
प्रीणामि त्वाहमित्युक्त्वा गङ्गास्रोतस्यमज्जयत् ॥ ०४४ ॥

तस्य तन्न प्रियं राज्ञः शंतनोरभवत्तदा ।
न च तां किञ्चनोवाच त्यागाद्भीतो महीपतिः ॥ ०४५ ॥

अथ तामष्टमे पुत्रे जाते प्रहसितामिव ।
उवाच राजा दुःखार्तः परीप्सन्पुत्रमात्मनः ॥ ०४६ ॥

मा वधीः कासि कस्यासि किं हिंससि सुतानिति ।
पुत्रघ्नि सुमहत्पापं मा प्रापस्तिष्ठ गर्हिते ॥ ०४७ ॥

स्त्र्युवाच ॥

पुत्रकाम न ते हन्मि पुत्रं पुत्रवतां वर ।
जीर्णस्तु मम वासोऽयं यथा स समयः कृतः ॥ ०४८ ॥

अहं गङ्गा जह्नुसुता महर्षिगणसेविता ।
देवकार्यार्थसिद्ध्यर्थमुषिटाहं त्वया सह ॥ ०४९ ॥

अष्टेमे वसवो देवा महाभागा महौजसः ।
वसिष्ठशापदोषेण मानुषत्वमुपागताः ॥ ०५० ॥

तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते ।
मद्विधा मानुषी धात्री न चैवास्तीह काचन ॥ ०५१ ॥

तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता ।
जनयित्वा वसूनष्टौ जिता लोकास्त्वयाक्षयाः ॥ ०५२ ॥

देवानां समयस्त्वेष वसूनां संश्रुतो मया ।
जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति ॥ ०५३ ॥

तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः ।
स्वस्ति तेऽस्तु गमिष्यामि पुत्रं पाहि महाव्रतम् ॥ ०५४ ॥

एष पर्यायवासो मे वसूनां संनिधौ कृतः ।
मत्प्रसूतं विजानीहि गङ्गादत्तमिमं सुतम् ॥ ०५५ ॥

---

# अध्याय ०९३

शंतनुरुवाच ॥

आपवो नाम को न्वेष वसूनां किं च दुष्कृतम् ।
यस्याभिशापात्ते सर्वे मानुषीं तनुमागताः ॥ ००१ ॥

अनेन च कुमारेण गङ्गादत्तेन किं कृतम् ।
यस्य चैव कृतेनायं मानुषेषु निवत्स्यति ॥ ००२ ॥

ईशानाः सर्वलोकस्य वसवस्ते च वै कथम् ।
मानुषेषूदपद्यन्त तन्ममाचक्ष्व जाह्नवि ॥ ००३ ॥

वैशंपायन उवाच ॥

सैवमुक्ता ततो गङ्गा राजानमिदमब्रवीत् ।
भर्तारं जाह्नवी देवी शंतनुं पुरुषर्षभम् ॥ ००४ ॥

यं लेभे वरुणः पुत्रं पुरा भरतसत्तम ।
वसिष्ठो नाम स मुनिः ख्यात आपव इत्युत ॥ ००५ ॥

तस्याश्रमपदं पुण्यं मृगपक्षिगणान्वितम् ।
मेरोः पार्श्वे नगेन्द्रस्य सर्वर्तुकुसुमावृतम् ॥ ००६ ॥

स वारुणिस्तपस्तेपे तस्मिन्भरतसत्तम ।
वने पुण्यकृतां श्रेष्ठः स्वादुमूलफलोदके ॥ ००७ ॥

दक्षस्य दुहिता या तु सुरभीत्यतिगर्विता ।
गां प्रजाता तु सा देवी कश्यपाद्भरतर्षभ ॥ ००८ ॥

अनुग्रहार्थं जगतः सर्वकामदुघां वराम् ।
तां लेभे गां तु धर्मात्मा होमधेनुं स वारुणिः ॥ ००९ ॥

सा तस्मिंस्तापसारण्ये वसन्ती मुनिसेविते ।
चचार रम्ये धर्म्ये च गौरपेतभया तदा ॥ ०१० ॥

अथ तद्वनमाजग्मुः कदाचिद्भरतर्षभ ।
पृथ्वाद्या वसवः सर्वे देवदेवर्षिसेवितम् ॥ ०११ ॥

ते सदारा वनं तच्च व्यचरन्त समन्ततः ।
रेमिरे रमणीयेषु पर्वतेषु वनेषु च ॥ ०१२ ॥

तत्रैकस्य तु भार्या वै वसोर्वासवविक्रम ।
सा चरन्ती वने तस्मिन्गां ददर्श सुमध्यमा ॥ ०१३ ॥

या सा वसिष्ठस्य मुनेः सर्वकामधुगुत्तमा ॥ ०१३ ॥

सा विस्मयसमाविष्टा शीलद्रविणसंपदा ।
दिवे वै दर्शयामास तां गां गोवृषभेक्षण ॥ ०१४ ॥

स्वापीनां च सुदोग्ध्रीं च सुवालधिमुखां शुभाम् ।
उपपन्नां गुणैः सर्वैः शीलेनानुत्तमेन च ॥ ०१५ ॥

एवङ्गुणसमायुक्तां वसवे वसुनन्दिनी ।
दर्शयामास राजेन्द्र पुरा पौरवनन्दन ॥ ०१६ ॥

द्यौस्तदा तां तु दृष्ट्वैव गां गजेन्द्रेन्द्रविक्रम ।
उवाच राजंस्तां देवीं तस्या रूपगुणान्वदन् ॥ ०१७ ॥

एषा गौरुत्तमा देवि वारुणेरसितेक्षणे ।
ऋषेस्तस्य वरारोहे यस्येदं वनमुत्तमम् ॥ ०१८ ॥

अस्याः क्षीरं पिबेन्मर्त्यः स्वादु यो वै सुमध्यमे ।
दश वर्षसहस्राणि स जीवेत्स्थिरयौवनः ॥ ०१९ ॥

एतच्छ्रुत्वा तु सा देवी नृपोत्तम सुमध्यमा ।
तमुवाचानवद्याङ्गी भर्तारं दीप्ततेजसम् ॥ ०२० ॥

अस्ति मे मानुषे लोके नरदेवात्मजा सखी ।
नाम्ना जिनवती नाम रूपयौवनशालिनी ॥ ०२१ ॥

उशीनरस्य राजर्षेः सत्यसंधस्य धीमतः ।
दुहिता प्रथिता लोके मानुषे रूपसंपदा ॥ ०२२ ॥

तस्या हेतोर्महाभाग सवत्सां गां ममेप्सिताम् ।
आनयस्वामरश्रेष्ठ त्वरितं पुण्यवर्धन ॥ ०२३ ॥

यावदस्याः पयः पीत्वा सा सखी मम मानद ।
मानुषेषु भवत्वेका जरारोगविवर्जिता ॥ ०२४ ॥

एतन्मम महाभाग कर्तुमर्हस्यनिन्दित ।
प्रियं प्रियतरं ह्यस्मान्नास्ति मेऽन्यत्कथञ्चन ॥ ०२५ ॥

एतच्छ्रुत्वा वचस्तस्या देव्याः प्रियचिकीर्षया ।
पृथ्वाद्यैर्भ्रातृभिः सार्धं द्यौस्तदा तां जहार गाम् ॥ ०२६ ॥

तया कमलपत्राक्ष्या नियुक्तो द्यौस्तदा नृप ।
ऋषेस्तस्य तपस्तीव्रं न शशाक निरीक्षितुम् ॥ ०२७ ॥

हृता गौः सा तदा तेन प्रपातस्तु न तर्कितः ॥ ०२७ ॥

अथाश्रमपदं प्राप्तः फलान्यादाय वारुणिः ।
न चापश्यत गां तत्र सवत्सां काननोत्तमे ॥ ०२८ ॥

ततः स मृगयामास वने तस्मिंस्तपोधनः ।
नाध्यगच्छच्च मृगयंस्तां गां मुनिरुदारधीः ॥ ०२९ ॥

ज्ञात्वा तथापनीतां तां वसुभिर्दिव्यदर्शनः ।
ययौ क्रोधवशं सद्यः शशाप च वसूंस्तदा ॥ ०३० ॥

यस्मान्मे वसवो जह्रुर्गां वै दोग्ध्रीं सुवालधिम् ।
तस्मात्सर्वे जनिष्यन्ति मानुषेषु न संशयः ॥ ०३१ ॥

एवं शशाप भगवान्वसूंस्तान्मुनिसत्तमः ।
वशं कोपस्य संप्राप्त आपवो भरतर्षभ ॥ ०३२ ॥

शप्त्वा च तान्महाभागस्तपस्येव मनो दधे ।
एवं स शप्तवान्राजन्वसूनष्टौ तपोधनः ॥ ०३३ ॥

महाप्रभावो ब्रह्मर्षिर्देवान्रोषसमन्वितः ॥ ०३३ ॥

अथाश्रमपदं प्राप्य तं स्म भूयो महात्मनः ।
शप्ताः स्म इति जानन्त ऋषिं तमुपचक्रमुः ॥ ०३४ ॥

प्रसादयन्तस्तमृषिं वसवः पार्थिवर्षभ ।
न लेभिरे च तस्मात्ते प्रसादमृषिसत्तमात् ॥ ०३५ ॥

आपवात्पुरुषव्याघ्र सर्वधर्मविशारदात् ॥ ०३५ ॥

उवाच च स धर्मात्मा सप्त यूयं धरादयः ।
अनु संवत्सराच्छापमोक्षं वै समवाप्स्यथ ॥ ०३६ ॥

अयं तु यत्कृते यूयं मया शप्ताः स वत्स्यति ।
द्यौस्तदा मानुषे लोके दीर्घकालं स्वकर्मणा ॥ ०३७ ॥

नानृतं तच्चिकीर्षामि युष्मान्क्रुद्धो यदब्रुवम् ।
न प्रजास्यति चाप्येष मानुषेषु महामनाः ॥ ०३८ ॥

भविष्यति च धर्मात्मा सर्वशास्त्रविशारदः ।
पितुः प्रियहिते युक्तः स्त्रीभोगान्वर्जयिष्यति ॥ ०३९ ॥

एवमुक्त्वा वसून्सर्वाञ्जगाम भगवानृषिः ॥ ०३९ ॥

ततो मामुपजग्मुस्ते समस्ता वसवस्तदा ।
अयाचन्त च मां राजन्वरं स च मया कृतः ॥ ०४० ॥

जाताञ्जातान्प्रक्षिपास्मान्स्वयं गङ्गे त्वमम्भसि ॥ ०४० ॥

एवं तेषामहं सम्यक्शप्तानां राजसत्तम ।
मोक्षार्थं मानुषाल्लोकाद्यथावत्कृतवत्यहम् ॥ ०४१ ॥

अयं शापादृषेस्तस्य एक एव नृपोत्तम ।

द्यौ राजन्मानुषे लोके चिरं वत्स्यति भारत ॥ ०४२ ॥

एतदाख्याय सा देवी तत्रैवान्तरधीयत ।
आदाय च कुमारं तं जगामाथ यथेप्सितम् ॥ ०४३ ॥

स तु देवव्रतो नाम गाङ्गेय इति चाभवत् ।
द्विनामा शंतनोः पुत्रः शंतनोरधिको गुणैः ॥ ०४४ ॥

शंतनुश्चापि शोकार्तो जगाम स्वपुरं ततः ।
तस्याहं कीर्तयिष्यामि शंतनोरमितान्गुणान् ॥ ०४५ ॥

महाभाग्यं च नृपतेर्भारतस्य यशस्विनः ।
यस्येतिहासो द्युतिमान्महाभारतमुच्यते ॥ ०४६ ॥

---

# अध्याय ०९४

वैशंपायन उवाच ॥

स एवं शंतनुर्धीमान्देवराजर्षिसत्कृतः ।
धर्मात्मा सर्वलोकेषु सत्यवागिति विश्रुतः ॥ ००१ ॥

दमो दानं क्षमा बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम् ।
नित्यान्यासन्महासत्त्वे शंतनौ पुरुषर्षभे ॥ ००२ ॥

एवं स गुणसंपन्नो धर्मार्थकुशलो नृपः ।
आसीद्भरतवंशस्य गोप्ता साधुजनस्य च ॥ ००३ ॥

कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः ।

धर्म एव परः कामादर्थाच्चेति व्यवस्थितः ॥ ००४ ॥

एतान्यासन्महासत्त्वे शंतनौ भरतर्षभ ।
न चास्य सदृशः कश्चित्क्षत्रियो धर्मतोऽभवत् ॥ ००५ ॥

वर्तमानं हि धर्मे स्वे सर्वधर्मविदां वरम् ।
तं महीपा महीपालं राजराज्येऽभ्यषेचयन् ॥ ००६ ॥

वीतशोकभयाबाधाः सुखस्वप्नविबोधनाः ।
प्रति भारतगोप्तारं समपद्यन्त भूमिपाः ॥ ००७ ॥

शंतनुप्रमुखैर्गुप्ते लोके नृपतिभिस्तदा ।
नियमात्सर्ववर्णानां ब्रह्मोत्तरमवर्तत ॥ ००८ ॥

ब्रह्म पर्यचरत्क्षत्रं विशः क्षत्रमनुव्रताः ।
ब्रह्मक्षत्रानुरक्ताश्च शूद्राः पर्यचरन्विशः ॥ ००९ ॥

स हास्तिनपुरे रम्ये कुरूणां पुटभेदने ।
वसन्सागरपर्यन्तामन्वशाद्वै वसुंधराम् ॥ ०१० ॥

स देवराजसदृशो धर्मज्ञः सत्यवागृजुः ।
दानधर्मतपोयोगाच्छ्रिया परमया युतः ॥ ०११ ॥

अरागद्वेषसंयुक्तः सोमवत्प्रियदर्शनः ।
तेजसा सूर्यसङ्काशो वायुवेगसमो जवे ॥ ०१२ ॥

अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः ॥ ०१२ ॥

वधः पशुवराहाणां तथैव मृगपक्षिणाम् ।
शंतनौ पृथिवीपाले नावर्तत वृथा नृप ॥ ०१३ ॥

धर्मब्रह्मोत्तरे राज्ये शंतनुर्विनयात्मवान् ।
समं शशास भूतानि कामरागविवर्जितः ॥ ०१४ ॥

देवर्षिपितृयज्ञार्थमारभ्यन्त तदा क्रियाः ।
न चाधर्मेण केषांश्चित्प्राणिनामभवद्वधः ॥ ०१५ ॥

असुखानामनाथानां तिर्यग्योनिषु वर्तताम् ।
स एव राजा भूतानां सर्वेषामभवत्पिता ॥ ०१६ ॥

तस्मिन्कुरुपतिश्रेष्ठे राजराजेश्वरे सति ।
श्रिता वागभवत्सत्यं दानधर्माश्रितं मनः ॥ ०१७ ॥

स समाः षोडशाष्टौ च चतस्रोऽष्टौ तथापराः ।
रतिमप्राप्नुवन्स्त्रीषु बभूव वनगोचरः ॥ ०१८ ॥

तथारूपस्तथाचारस्तथावृत्तस्तथाश्रुतः ।
गाङ्गेयस्तस्य पुत्रोऽभून्नाम्ना देवव्रतो वसुः ॥ ०१९ ॥

सर्वास्त्रेषु स निष्णातः पार्थिवेष्वितरेषु च ।
महाबलो महासत्त्वो महावीर्यो महारथः ॥ ०२० ॥

स कदाचिन्मृगं विद्ध्वा गङ्गामनुसरन्नदीम् ।
भागीरथीमल्पजलां शंतनुर्दृष्टवान्नृपः ॥ ०२१ ॥

तां दृष्ट्वा चिन्तयामास शंतनुः पुरुषर्षभः ।
स्यन्दते किं न्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा ॥ ०२२ ॥

ततो निमित्तमन्विच्छन्ददर्श स महामनाः ।
कुमारं रूपसंपन्नं बृहन्तं चारुदर्शनम् ॥ ०२३ ॥

दिव्यमस्त्रं विकुर्वाणं यथा देवं पुरंदरम् ।

कृत्स्नां गङ्गां समावृत्य शरैस्तीक्ष्णैरवस्थितम् ॥ ०२४ ॥

तां शरैरावृतां दृष्ट्वा नदीं गङ्गां तदन्तिके ।
अभवद्विस्मितो राजा कर्म दृष्ट्वातिमानुषम् ॥ ०२५ ॥

जातमात्रं पुरा दृष्टं तं पुत्रं शंतनुस्तदा ।
नोपलेभे स्मृतिं धीमानभिज्ञातुं तमात्मजम् ॥ ०२६ ॥

स तु तं पितरं दृष्ट्वा मोहयामास मायया ।
संमोह्य तु ततः क्षिप्रं तत्रैवान्तरधीयत ॥ ०२७ ॥

तदद्भुतं तदा दृष्ट्वा तत्र राजा स शंतनुः ।
शङ्कमानः सुतं गङ्गामब्रवीद्दर्शयेति ह ॥ ०२८ ॥

दर्शयामास तं गङ्गा बिभ्रती रूपमुत्तमम् ।
गृहीत्वा दक्षिणे पाणौ तं कुमारमलङ्कृतम् ॥ ०२९ ॥

अलङ्कृतामाभरणैररजोम्बरधारिणीम् ।
दृष्टपूर्वामपि सतीं नाभ्यजानात्स शंतनुः ॥ ०३० ॥

गङ्गोवाच ॥

यं पुत्रमष्टमं राजंस्त्वं पुरा मय्यजायिथाः ।
स तेऽयं पुरुषव्याघ्र नयस्वैनं गृहान्तिकम् ॥ ०३१ ॥

वेदानधिजगे साङ्गान्वसिष्ठादेव वीर्यवान् ।
कृतास्त्रः परमेष्वासो देवराजसमो युधि ॥ ०३२ ॥

सुराणां संमतो नित्यमसुराणां च भारत ।
उशना वेद यच्छास्त्रमयं तद्वेद सर्वशः ॥ ०३३ ॥

तथैवाङ्गिरसः पुत्रः सुरासुरनमस्कृतः ।
यद्वेद शास्त्रं तच्चापि कृत्स्नमस्मिन्प्रतिष्ठितम् ॥ ०३४ ॥

तव पुत्रे महाबाहौ साङ्गोपाङ्गं महात्मनि ॥ ०३४ ॥

ऋषिः परैरनाधृष्यो जामदग्न्यः प्रतापवान् ।
यदस्त्रं वेद रामश्च तदप्यस्मिन्प्रतिष्ठितम् ॥ ०३५ ॥

महेष्वासमिमं राजन्राजधर्मार्थकोविदम् ।
मया दत्तं निजं पुत्रं वीरं वीर गृहान्नय ॥ ०३६ ॥

वैशंपायन उवाच ॥

तयैवं समनुज्ञातः पुत्रमादाय शंतनुः ।
भ्राजमानं यथादित्यमाययौ स्वपुरं प्रति ॥ ०३७ ॥

पौरवः स्वपुरं गत्वा पुरंदरपुरोपमम् ।
सर्वकामसमृद्धार्थं मेने आत्मानमात्मना ॥ ०३८ ॥

पौरवेषु ततः पुत्रं यौवराज्येऽभ्यषेचयत् ॥ ०३८ ॥

पौरवाञ्शंतनोः पुत्रः पितरं च महायशाः ।
राष्ट्रं च रञ्जयामास वृत्तेन भरतर्षभ ॥ ०३९ ॥

स तथा सह पुत्रेण रममाणो महीपतिः ।
वर्तयामास वर्षाणि चत्वार्यमितविक्रमः ॥ ०४० ॥

स कदाचिद्वनं यातो यमुनामभितो नदीम् ।
महीपतिरनिर्देश्यमाजिघ्रद्गन्धमुत्तमम् ॥ ०४१ ॥

तस्य प्रभवमन्विच्छन्विचचार समन्ततः ।

स ददर्श तदा कन्यां दाशानां देवरूपिणीम् ॥ ०४२ ॥

तामपृच्छत्स दृष्ट्वैव कन्यामसितलोचनाम् ।
कस्य त्वमसि का चासि किं च भीरु चिकीर्षसि ॥ ०४३ ॥

साब्रवीद्दाशकन्यास्मि धर्मार्थं वाहये तरीम् ।
पितुर्नियोगाद्भद्रं ते दाशराज्ञो महात्मनः ॥ ०४४ ॥

रूपमाधुर्यगन्धैस्तां संयुक्तां देवरूपिणीम् ।
समीक्ष्य राजा दाशेयीं कामयामास शंतनुः ॥ ०४५ ॥

स गत्वा पितरं तस्या वरयामास तां तदा ।
पर्यपृच्छत्ततस्तस्याः पितरं चात्मकारणात् ॥ ०४६ ॥

स च तं प्रत्युवाचेदं दाशराजो महीपतिम् ।
जातमात्रैव मे देया वराय वरवर्णिनी ॥ ०४७ ॥

हृदि कामस्तु मे कश्चित्तं निबोध जनेश्वर ॥ ०४७ ॥

यदीमां धर्मपत्नीं त्वं मत्तः प्रार्थयसेऽनघ ।
सत्यवागसि सत्येन समयं कुरु मे ततः ॥ ०४८ ॥

समयेन प्रदद्यां ते कन्यामहमिमां नृप ।
न हि मे त्वत्समः कश्चिद्वरो जातु भविष्यति ॥ ०४९ ॥

शंतनुरुवाच ॥

श्रुत्वा तव वरं दाश व्यवस्येयमहं न वा ।
दातव्यं चेत्प्रदास्यामि न त्वदेयं कथञ्चन ॥ ०५० ॥

दाश उवाच ॥

अस्यां जायेत यः पुत्रः स राजा पृथिवीपतिः ।
त्वदूर्ध्वमभिषेक्तव्यो नान्यः कश्चन पार्थिव ॥ ०५१ ॥

वैशंपायन उवाच ॥

नाकामयत तं दातुं वरं दाशाय शंतनुः ।
शरीरजेन तीव्रेण दह्यमानोऽपि भारत ॥ ०५२ ॥

स चिन्तयन्नेव तदा दाशकन्यां महीपतिः ।
प्रत्ययाद्धास्तिनपुरं शोकोपहतचेतनः ॥ ०५३ ॥

ततः कदाचिच्छोचन्तं शंतनुं ध्यानमास्थितम् ।
पुत्रो देवव्रतोऽभ्येत्य पितरं वाक्यमब्रवीत् ॥ ०५४ ॥

सर्वतो भवतः क्षेमं विधेयाः सर्वपार्थिवाः ।
तत्किमर्थमिहाभीक्ष्णं परिशोचसि दुःखितः ॥ ०५५ ॥

ध्यायन्निव च किं राजन्नाभिभाषसि किञ्चन ॥ ०५५ ॥

एवमुक्तः स पुत्रेण शंतनुः प्रत्यभाषत ।
असंशयं ध्यानपरं यथा मात्थ तथास्म्युत ॥ ०५६ ॥

अपत्यं नस्त्वमेवैकः कुले महति भारत ।
अनित्यता च मर्त्यानामतः शोचामि पुत्रक ॥ ०५७ ॥

कथञ्चित्तव गाङ्गेय विपत्तौ नास्ति नः कुलम् ।
असंशयं त्वमेवैकः शतादपि वरः सुतः ॥ ०५८ ॥

न चाप्यहं वृथा भूयो दारान्कर्तुमिहोत्सहे ।
संतानस्याविनाशाय कामये भद्रमस्तु ते ॥ ०५९ ॥

अनपत्यतैकपुत्रत्वमित्याहुर्धर्मवादिनः ॥ ०५९ ॥

अग्निहोत्रं त्रयो वेदा यज्ञाश्च सहदक्षिणाः ।
सर्वाण्येतान्यपत्यस्य कलां नार्हन्ति षोडशीम् ॥ ०६० ॥

एवमेव मनुष्येषु स्याच्च सर्वप्रजास्वपि ।
यदपत्यं महाप्राज्ञ तत्र मे नास्ति संशयः ॥ ०६१ ॥

एषा त्रयी पुराणानामुत्तमानां च शाश्वती ॥ ०६१ ॥

त्वं च शूरः सदामर्षी शस्त्रनित्यश्च भारत ।
नान्यत्र शस्त्रात्तस्मात्ते निधनं विद्यतेऽनघ ॥ ०६२ ॥

सोऽस्मि संशयमापन्नस्त्वयि शान्ते कथं भवेत् ।
इति ते कारणं तात दुःखस्योक्तमशेषतः ॥ ०६३ ॥

ततस्तत्कारणं ज्ञात्वा कृत्स्नं चैवमशेषतः ।
देवव्रतो महाबुद्धिः प्रययावनुचिन्तयन् ॥ ०६४ ॥

अभ्यगच्छत्तदैवाशु वृद्धामात्यं पितुर्हितम् ।
तमपृच्छत्तदाभ्येत्य पितुस्तच्छोककारणम् ॥ ०६५ ॥

तस्मै स कुरुमुख्याय यथावत्परिपृच्छते ।
वरं शशंस कन्यां तामुद्दिश्य भरतर्षभ ॥ ०६६ ॥

ततो देवव्रतो वृद्धैः क्षत्रियैः सहितस्तदा ।
अभिगम्य दाशराजानं कन्यां वव्रे पितुः स्वयम् ॥ ०६७ ॥

तं दाशः प्रतिजग्राह विधिवत्प्रतिपूज्य च ।
अब्रवीच्चैनमासीनं राजसंसदि भारत ॥ ०६८ ॥

त्वमेव नाथः पर्याप्तः शंतनोः पुरुषर्षभ ।
पुत्रः पुत्रवतां श्रेष्ठः किं नु वक्ष्यामि ते वचः ॥ ०६९ ॥

को हि संबन्धकं श्लाघ्यमीप्सितं यौनमीदृशम् ।
अतिक्रामन्न तप्येत साक्षादपि शतक्रतुः ॥ ०७० ॥

अपत्यं चैतदार्यस्य यो युष्माकं समो गुणैः ।
यस्य शुक्रात्सत्यवती प्रादुर्भूता यशस्विनी ॥ ०७१ ॥

तेन मे बहुशस्तात पिता ते परिकीर्तितः ।
अर्हः सत्यवतीं वोढुं सर्वराजसु भारत ॥ ०७२ ॥

असितो ह्यपि देवर्षिः प्रत्याख्यातः पुरा मया ।
सत्यवत्या भृशं ह्यर्थी स आसीदृषिसत्तमः ॥ ०७३ ॥

कन्यापितृत्वात्किञ्चित्तु वक्ष्यामि भरतर्षभ ।
बलवत्सपत्नतामत्र दोषं पश्यामि केवलम् ॥ ०७४ ॥

यस्य हि त्वं सपत्नः स्या गन्धर्वस्यासुरस्य वा ।
न स जातु सुखं जीवेत्त्वयि क्रुद्धे परंतप ॥ ०७५ ॥

एतावानत्र दोषो हि नान्यः कश्चन पार्थिव ।
एतज्जानीहि भद्रं ते दानादाने परंतप ॥ ०७६ ॥

एवमुक्तस्तु गाङ्गेयस्तद्युक्तं प्रत्यभाषत ।
शृण्वतां भूमिपालानां पितुरर्थाय भारत ॥ ०७७ ॥

इदं मे मतमादत्स्व सत्यं सत्यवतां वर ।
नैव जातो न वाजात ईदृशं वक्तुमुत्सहेत् ॥ ०७८ ॥

एवमेतत्करिष्यामि यथा त्वमनुभाषसे ।
योऽस्यां जनिष्यते पुत्रः स नो राजा भविष्यति ॥ ०७९ ॥

इत्युक्तः पुनरेवाथ तं दाशः प्रत्यभाषत ।
चिकीर्षुर्दुष्करं कर्म राज्यार्थे भरतर्षभ ॥ ०८० ॥

त्वमेव नाथः पर्याप्तः शंतनोरमितद्युतेः ।
कन्यायाश्चैव धर्मात्मन्प्रभुर्दानाय चेश्वरः ॥ ०८१ ॥

इदं तु वचनं सौम्य कार्यं चैव निबोध मे ।
कौमारिकाणां शीलेन वक्ष्याम्यहमरिंदम ॥ ०८२ ॥

यत्त्वया सत्यवत्यर्थे सत्यधर्मपरायण ।
राजमध्ये प्रतिज्ञातमनुरूपं तवैव तत् ॥ ०८३ ॥

नान्यथा तन्महाबाहो संशयोऽत्र न कश्चन ।
तवापत्यं भवेद्यत्तु तत्र नः संशयो महान् ॥ ०८४ ॥

तस्य तन्मतमाज्ञाय सत्यधर्मपरायणः ।
प्रत्यजानात्तदा राजन्पितुः प्रियचिकीर्षया ॥ ०८५ ॥

देवव्रत उवाच ॥

दाशराज निबोधेदं वचनं मे नृपोत्तम ।
शृण्वतां भूमिपालानां यद्ब्रवीमि पितुः कृते ॥ ०८६ ॥

राज्यं तावत्पूर्वमेव मया त्यक्तं नराधिप ।
अपत्यहेतोरपि च करोम्येष विनिश्चयम् ॥ ०८७ ॥

अद्य प्रभृति मे दाश ब्रह्मचर्यं भविष्यति ।
अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि ॥ ०८८ ॥

वैशंपायन उवाच ॥

तस्य तद्वचनं श्रुत्वा संप्रहृष्टतनूरुहः ।
ददानीत्येव तं दाशो धर्मात्मा प्रत्यभाषत ॥ ०८९ ॥

ततोऽन्तरिक्षेऽप्सरसो देवाः सर्षिगणास्तथा ।
अभ्यवर्षन्त कुसुमैर्भीष्मोऽयमिति चाब्रुवन् ॥ ०९० ॥

ततः स पितुरर्थाय तामुवाच यशस्विनीम् ।
अधिरोह रथं मातर्गच्छावः स्वगृहानिति ॥ ०९१ ॥

एवमुक्त्वा तु भीष्मस्तां रथमारोप्य भामिनीम् ।
आगम्य हास्तिनपुरं शंतनोः संन्यवेदयत् ॥ ०९२ ॥

तस्य तद्दुष्करं कर्म प्रशशंसुर्नराधिपाः ।
समेताश्च पृथक्चैव भीष्मोऽयमिति चाब्रुवन् ॥ ०९३ ॥

तद्दृष्ट्वा दुष्करं कर्म कृतं भीष्मेण शंतनुः ।
स्वच्छन्दमरणं तस्मै ददौ तुष्टः पिता स्वयम् ॥ ०९४ ॥

---

# अध्याय ०९५

वैशंपायन उवाच ॥

ततो विवाहे निर्वृत्ते स राजा शंतनुर्नृपः ।
तां कन्यां रूपसंपन्नां स्वगृहे संन्यवेशयत् ॥ ००१ ॥

ततः शांतनवो धीमान्सत्यवत्यामजायत ।
वीरश्चित्राङ्गदो नाम वीर्येण मनुजानति ॥ ००२ ॥

अथापरं महेष्वासं सत्यवत्यां पुनः प्रभुः ।
विचित्रवीर्यं राजानं जनयामास वीर्यवान् ॥ ००३ ॥

अप्राप्तवति तस्मिंश्च यौवनं भरतर्षभ ।
स राजा शंतनुर्धीमान्कालधर्ममुपेयिवान् ॥ ००४ ॥

स्वर्गते शंतनौ भीष्मश्चित्राङ्गदमरिंदमम् ।
स्थापयामास वै राज्ये सत्यवत्या मते स्थितः ॥ ००५ ॥

स तु चित्राङ्गदः शौर्यात्सर्वांश्चिक्षेप पार्थिवान् ।
मनुष्यं न हि मेने स कञ्चित्सदृशमात्मनः ॥ ००६ ॥

तं क्षिपन्तं सुरांश्चैव मनुष्यानसुरांस्तथा ।
गन्धर्वराजो बलवांस्तुल्यनामाभ्ययात्तदा ॥ ००७ ॥

तेनास्य सुमहद्युद्धं कुरुक्षेत्रे बभूव ह ॥ ००७ ॥

तयोर्बलवतोस्तत्र गन्धर्वकुरुमुख्ययोः ।
नद्यास्तीरे हिरण्वत्याः समास्तिस्रोऽभवद्रणः ॥ ००८ ॥

तस्मिन्विमर्दे तुमुले शस्त्रवृष्टिसमाकुले ।
मायाधिकोऽवधीद्वीरं गन्धर्वः कुरुसत्तमम् ॥ ००९ ॥

चित्राङ्गदं कुरुश्रेष्ठं विचित्रशरकार्मुकम् ।
अन्ताय कृत्वा गन्धर्वो दिवमाचक्रमे ततः ॥ ०१० ॥

तस्मिन्नृपतिशार्दूले निहते भूरिवर्चसि ।

भीष्मः शांतनवो राजन्प्रेतकार्याण्यकारयत् ॥ ०११ ॥

विचित्रवीर्यं च तदा बालमप्राप्तयौवनम् ।
कुरुराज्ये महाबाहुरभ्यषिञ्चदनन्तरम् ॥ ०१२ ॥

विचित्रवीर्यस्तु तदा भीष्मस्य वचने स्थितः ।
अन्वशासन्महाराज पितृपैतामहं पदम् ॥ ०१३ ॥

स धर्मशास्त्रकुशलो भीष्मं शांतनवं नृपः ।
पूजयामास धर्मेण स चैनं प्रत्यपालयत् ॥ ०१४ ॥

---

# अध्याय ०९६

वैशंपायन उवाच ॥

हते चित्राङ्गदे भीष्मो बाले भ्रातरि चानघ ।
पालयामास तद्राज्यं सत्यवत्या मते स्थितः ॥ ००१ ॥

संप्राप्तयौवनं पश्यन्भ्रातरं धीमतां वरम् ।
भीष्मो विचित्रवीर्यस्य विवाहायाकरोन्मतिम् ॥ ००२ ॥

अथ काशिपतेर्भीष्मः कन्यास्तिस्रोऽप्सरःसमाः ।
शुश्राव सहिता राजन्वृण्वतीर्वै स्वयं वरम् ॥ ००३ ॥

ततः स रथिनां श्रेष्ठो रथेनैकेन वर्मभृत् ।
जगामानुमते मातुः पुरीं वाराणसीं प्रति ॥ ००४ ॥

तत्र राज्ञः समुदितान्सर्वतः समुपागतान् ।

ददर्श कन्यास्ताश्चैव भीष्मः शंतनुनन्दनः ॥ ००५ ॥

कीर्त्यमानेषु राज्ञां तु नामस्वथ सहस्रशः ।
भीष्मः स्वयं तदा राजन्वरयामास ताः प्रभुः ॥ ००६ ॥

उवाच च महीपालान्राजञ्जलदनिःस्वनः ।
रथमारोप्य ताः कन्या भीष्मः प्रहरतां वरः ॥ ००७ ॥

आहूय दानं कन्यानां गुणवद्भ्यः स्मृतं बुधैः ।
अलङ्कृत्य यथाशक्ति प्रदाय च धनान्यपि ॥ ००८ ॥

प्रयच्छन्त्यपरे कन्यां मिथुनेन गवामपि ।
वित्तेन कथितेनान्ये बलेनान्येऽनुमान्य च ॥ ००९ ॥

प्रमत्तामुपयान्त्यन्ये स्वयमन्ये च विन्दते ।
अष्टमं तमथो वित्त विवाहं कविभिः स्मृतम् ॥ ०१० ॥

स्वयंवरं तु राजन्याः प्रशंसन्त्युपयान्ति च ।
प्रमथ्य तु हृतामाहुर्ज्यायसीं धर्मवादिनः ॥ ०११ ॥

ता इमाः पृथिवीपाला जिहीर्षामि बलादितः ।
ते यतध्वं परं शक्त्या विजयायेतराय वा ॥ ०१२ ॥

स्थितोऽहं पृथिवीपाला युद्धाय कृतनिश्चयः ॥ ०१२ ॥

एवमुक्त्वा महीपालान्काशिराजं च वीर्यवान् ।
सर्वाः कन्याः स कौरव्यो रथमारोपयत्स्वकम् ॥ ०१३ ॥

आमन्त्र्य च स तान्प्रायाच्छीघ्रं कन्याः प्रगृह्य ताः ॥ ०१३ ॥

ततस्ते पार्थिवाः सर्वे समुत्पेतुरमर्षिताः ।

संस्पृशन्तः स्वकान्बाहून्दशन्तो दशनच्छदान् ॥ ०१४ ॥

तेषामाभरणान्याशु त्वरितानां विमुञ्चताम् ।
आमुञ्चतां च वर्माणि संभ्रमः सुमहानभूत् ॥ ०१५ ॥

ताराणामिव संपातो बभूव जनमेजय ।
भूषणानां च शुभ्राणां कवचानां च सर्वशः ॥ ०१६ ॥

सवर्मभिर्भूषणैस्ते द्राग्भ्राजद्भिरितस्ततः ।
सक्रोधामर्षजिह्मभ्रूसकषायदृशस्तथा ॥ ०१७ ॥

सूतोपक्लृप्तान्रुचिरान्सदश्वोद्यतधूर्गतान् ।
रथानास्थाय ते वीराः सर्वप्रहरणान्विताः ॥ ०१८ ॥

प्रयान्तमेकं कौरव्यमनुसस्रुरुदायुधाः ॥ ०१८ ॥

ततः समभवद्युद्धं तेषां तस्य च भारत ।
एकस्य च बहूनां च तुमुलं लोमहर्षणम् ॥ ०१९ ॥

ते त्विषून्दशसाहस्रांस्तस्मै युगपदाक्षिपन् ।
अप्राप्तांश्चैव तानाशु भीष्मः सर्वांस्तदाच्छिनत् ॥ ०२० ॥

ततस्ते पार्थिवाः सर्वे सर्वतः परिवारयन् ।
ववर्षुः शरवर्षेण वर्षेणेवाद्रिमम्बुदाः ॥ ०२१ ॥

स तद्बाणमयं वर्षं शरैरावार्य सर्वतः ।
ततः सर्वान्महीपालान्प्रत्यविध्यत्त्रिभिस्त्रिभिः ॥ ०२२ ॥

तस्याति पुरुषानन्या.ण्लाघवं रथचारिणः ।
रक्षणं चात्मनः संख्ये शत्रवोऽप्यभ्यपूजयन् ॥ ०२३ ॥

तान्विनिर्जित्य तु रणे सर्वशस्त्रविशारदः ।
कन्याभिः सहितः प्रायाद्भारतो भारतान्प्रति ॥ ०२४ ॥

ततस्तं पृष्ठतो राजञ्शाल्वराजो महारथः ।
अभ्याहनदमेयात्मा भीष्मं शांतनवं रणे ॥ ०२५ ॥

वारणं जघने निघ्नन्दन्ताभ्यामपरो यथा ।
वाशितामनुसंप्राप्तो यूथपो बलिनां वरः ॥ ०२६ ॥

स्त्रीकाम तिष्ठ तिष्ठेति भीष्ममाह स पार्थिवः ।
शाल्वराजो महाबाहुरमर्षेणाभिचोदितः ॥ ०२७ ॥

ततः स पुरुषव्याघ्रो भीष्मः परबलार्दनः ।
तद्वाक्याकुलितः क्रोधाद्विधूमोऽग्निरिव ज्वलन् ॥ ०२८ ॥

क्षत्रधर्मं समास्थाय व्यपेतभयसंभ्रमः ।
निवर्तयामास रथं शाल्वं प्रति महारथः ॥ ०२९ ॥

निवर्तमानं तं दृष्ट्वा राजानः सर्व एव ते ।
प्रेक्षकाः समपद्यन्त भीष्मशाल्वसमागमे ॥ ०३० ॥

तौ वृषाविव नर्दन्तौ बलिनौ वाशितान्तरे ।
अन्योन्यमभिवर्तेतां बलविक्रमशालिनौ ॥ ०३१ ॥

ततो भीष्मं शांतनवं शरैः शतसहस्रशः ।
शाल्वराजो नरश्रेष्ठः समवाकिरदाशुगैः ॥ ०३२ ॥

पूर्वमभ्यर्दितं दृष्ट्वा भीष्मं शाल्वेन ते नृपाः ।
विस्मिताः समपद्यन्त साधु साध्विति चाब्रुवन् ॥ ०३३ ॥

लाघवं तस्य ते दृष्ट्वा संयुगे सर्वपार्थिवाः ।

अपूजयन्त संहृष्टा वाग्भिः शाल्वं नराधिपाः ॥ ०३४ ॥

क्षत्रियाणां तदा वाचः श्रुत्वा परपुरञ्जयः ।
क्रुद्धः शांतनवो भीष्मस्तिष्ठ तिष्ठेत्यभाषत ॥ ०३५ ॥

सारथिं चाब्रवीत्क्रुद्धो याहि यत्रैष पार्थिवः ।
यावदेनं निहन्म्यद्य भुजङ्गमिव पक्षिराट् ॥ ०३६ ॥

ततोऽस्त्रं वारुणं सम्यग्योजयामास कौरवः ।
तेनाश्वांश्चतुरोऽमृद्नाच्छाल्वराज्ञो नराधिप ॥ ०३७ ॥

अस्त्रैरस्त्राणि संवार्य शाल्वराज्ञः स कौरवः ।
भीष्मो नृपतिशार्दूल न्यवधीत्तस्य सारथिम् ॥ ०३८ ॥

अस्त्रेण चाप्यथैकेन न्यवधीत्तुरगोत्तमान् ॥ ०३८ ॥

कन्याहेतोर्नरश्रेष्ठ भीष्मः शांतनवस्तदा ।
जित्वा विसर्जयामास जीवन्तं नृपसत्तमम् ॥ ०३९ ॥

ततः शाल्वः स्वनगरं प्रययौ भरतर्षभ ॥ ०३९ ॥

राजानो ये च तत्रासन्स्वयंवरदिदृक्षवः ।
स्वान्येव तेऽपि राष्ट्राणि जग्मुः परपुरञ्जय ॥ ०४० ॥

एवं विजित्य ताः कन्या भीष्मः प्रहरतां वरः ।
प्रययौ हास्तिनपुरं यत्र राजा स कौरवः ॥ ०४१ ॥

सोऽचिरेणैव कालेन अत्यक्रामन्नराधिप ।
वनानि सरितश्चैव शैलांश्च विविधद्रुमान् ॥ ०४२ ॥

अक्षतः क्षपयित्वारीन्संख्येऽसंख्येयविक्रमः ।
आनयामास काश्यस्य सुताः सागरगासुतः ॥ ०४३ ॥

स्नुषा इव स धर्मात्मा भगिन्य इव चानुजाः ।
यथा दुहितरश्चैव प्रतिगृह्य ययौ कुरून् ॥ ०४४ ॥

ताः सर्वा गुणसंपन्ना भ्राता भ्रात्रे यवीयसे ।
भीष्मो विचित्रवीर्याय प्रददौ विक्रमाहृताः ॥ ०४५ ॥

सतां धर्मेण धर्मज्ञः कृत्वा कर्मातिमानुषम् ।
भ्रातुर्विचित्रवीर्यस्य विवाहायोपचक्रमे ॥ ०४६ ॥

सत्यवत्या सह मिथः कृत्वा निश्चयमात्मवान् ॥ ०४६ ॥

विवाहं कारयिष्यन्तं भीष्मं काशिपतेः सुता ।
ज्येष्ठा तासामिदं वाक्यमब्रवीद्ध सती तदा ॥ ०४७ ॥

मया सौभपतिः पूर्वं मनसाभिवृतः पतिः ।
तेन चास्मि वृता पूर्वमेष कामश्च मे पितुः ॥ ०४८ ॥

मया वरयितव्योऽभूच्छाल्वस्तस्मिन्स्वयंवरे ।
एतद्विज्ञाय धर्मज्ञ ततस्त्वं धर्ममाचर ॥ ०४९ ॥

एवमुक्तस्तया भीष्मः कन्यया विप्रसंसदि ।
चिन्तामभ्यगमद्वीरो युक्तां तस्यैव कर्मणः ॥ ०५० ॥

स विनिश्चित्य धर्मज्ञो ब्राह्मणैर्वेदपारगैः ।
अनुजज्ञे तदा ज्येष्ठामम्बां काशिपतेः सुताम् ॥ ०५१ ॥

अम्बिकाम्बालिके भार्ये प्रादाद्भ्रात्रे यवीयसे ।
भीष्मो विचित्रवीर्याय विधिदृष्टेन कर्मणा ॥ ०५२ ॥

तयोः पाणिं गृहीत्वा स रूपयौवनदर्पितः ।

विचित्रवीर्यो धर्मात्मा कामात्मा समपद्यत ॥ ०५३ ॥

ते चापि बृहती श्यामे नीलकुञ्चितमूर्धजे ।
रक्ततुङ्गनखोपेते पीनश्रोणिपयोधरे ॥ ०५४ ॥

आत्मनः प्रतिरूपोऽसौ लब्धः पतिरिति स्थिते ।
विचित्रवीर्यं कल्याणं पूजयामासतुस्तु ते ॥ ०५५ ॥

स चाश्विरूपसदृशो देवसत्त्वपराक्रमः ।
सर्वासामेव नारीणां चित्तप्रमथनोऽभवत् ॥ ०५६ ॥

ताभ्यां सह समाः सप्त विहरन्पृथिवीपतिः ।
विचित्रवीर्यस्तरुणो यक्ष्माणं समपद्यत ॥ ०५७ ॥

सुहृदां यतमानानामाप्तैः सह चिकित्सकैः ।
जगामास्तमिवादित्यः कौरव्यो यमसादनम् ॥ ०५८ ॥

प्रेतकार्याणि सर्वाणि तस्य सम्यगकारयत् ।
राज्ञो विचित्रवीर्यस्य सत्यवत्या मते स्थितः ॥ ०५९ ॥

ऋत्विग्भिः सहितो भीष्मः सर्वैश्च कुरुपुङ्गवैः ॥ ०५९ ॥

---

# अध्याय ०९७

वैशंपायन उवाच ॥

ततः सत्यवती दीना कृपणा पुत्रगृद्धिनी ।
पुत्रस्य कृत्वा कार्याणि स्नुषाभ्यां सह भारत ॥ ००१ ॥

धर्मं च पितृवंशं च मातृवंशं च मानिनी ।
प्रसमीक्ष्य महाभागा गाङ्गेयं वाक्यमब्रवीत् ॥ ००२ ॥

शंतनोर्धर्मनित्यस्य कौरव्यस्य यशस्विनः ।
त्वयि पिण्डश्च कीर्तिश्च संतानं च प्रतिष्ठितम् ॥ ००३ ॥

यथा कर्म शुभं कृत्वा स्वर्गोपगमनं ध्रुवम् ।
यथा चायुर्ध्रुवं सत्ये त्वयि धर्मस्तथा ध्रुवः ॥ ००४ ॥

वेत्थ धर्मांश्च धर्मज्ञ समासेनेतरेण च ।
विविधास्त्वं श्रुतीर्वेत्थ वेत्थ वेदांश्च सर्वशः ॥ ००५ ॥

व्यवस्थानं च ते धर्मे कुलाचारं च लक्षये ।
प्रतिपत्तिं च कृच्छ्रेषु शुक्राङ्गिरसयोरिव ॥ ००६ ॥

तस्मात्सुभृशमाश्वस्य त्वयि धर्मभृतां वर ।
कार्ये त्वां विनियोक्ष्यामि तच्छ्रुत्वा कर्तुमर्हसि ॥ ००७ ॥

मम पुत्रस्तव भ्राता वीर्यवान्सुप्रियश्च ते ।
बाल एव गतः स्वर्गमपुत्रः पुरुषर्षभ ॥ ००८ ॥

इमे महिष्यौ भ्रातुस्ते काशिराजसुते शुभे ।
रूपयौवनसंपन्ने पुत्रकामे च भारत ॥ ००९ ॥

तयोरुत्पादयापत्यं संतानाय कुलस्य नः ।
मन्नियोगान्महाभाग धर्मं कर्तुमिहार्हसि ॥ ०१० ॥

राज्ये चैवाभिषिच्यस्व भारताननुशाधि च ।
दारांश्च कुरु धर्मेण मा निमज्जीः पितामहान् ॥ ०११ ॥

तथोच्यमानो मात्रा च सुहृद्भिश्च परंतपः ।
प्रत्युवाच स धर्मात्मा धर्म्यमेवोत्तरं वचः ॥ ०१२ ॥

असंशयं परो धर्मस्त्वया मातरुदाहृतः ।
त्वमपत्यं प्रति च मे प्रतिज्ञां वेत्थ वै पराम् ॥ ०१३ ॥

जानासि च यथावृत्तं शुल्कहेतोस्त्वदन्तरे ।
स सत्यवति सत्यं ते प्रतिजानाम्यहं पुनः ॥ ०१४ ॥

परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः ।
यद्वाप्यधिकमेताभ्यां न तु सत्यं कथञ्चन ॥ ०१५ ॥

त्यजेच्च पृथिवी गन्धमापश्च रसमात्मनः ।
ज्योतिस्तथा त्यजेद्रूपं वायुः स्पर्शगुणं त्यजेत् ॥ ०१६ ॥

प्रभां समुत्सृजेदर्को धूमकेतुस्तथोष्णताम् ।
त्यजेच्छब्दं तथाकाशः सोमः शीतांशुतां त्यजेत् ॥ ०१७ ॥

विक्रमं वृत्रहा जह्याद्धर्मं जह्याच्च धर्मराट् ।
न त्वहं सत्यमुत्स्रष्टुं व्यवसेयं कथञ्चन ॥ ०१८ ॥

एवमुक्ता तु पुत्रेण भूरिद्रविणतेजसा ।
माता सत्यवती भीष्ममुवाच तदनन्तरम् ॥ ०१९ ॥

जानामि ते स्थितिं सत्ये परां सत्यपराक्रम ।
इच्छन्सृजेथास्त्री.णल्लोकानन्यांस्त्वं स्वेन तेजसा ॥ ०२० ॥

जानामि चैव सत्यं तन्मदर्थं यदभाषथाः ।
आपद्धर्ममवेक्षस्व वह पैतामहीं धुरम् ॥ ०२१ ॥

यथा ते कुलतन्तुश्च धर्मश्च न पराभवेत् ।

सुहृदश्च प्रहृष्येरंस्तथा कुरु परंतप ॥ ०२२ ॥

लालप्यमानां तामेवं कृपणां पुत्रगृद्धिनीम् ।
धर्मादपेतं ब्रुवतीं भीष्मो भूयोऽब्रवीदिदम् ॥ ०२३ ॥

राज्ञि धर्मानवेक्षस्व मा नः सर्वान्व्यनीनशः ।
सत्याच्च्युतिः क्षत्रियस्य न धर्मेषु प्रशस्यते ॥ ०२४ ॥

शंतनोरपि संतानं यथा स्यादक्षयं भुवि ।
तत्ते धर्मं प्रवक्ष्यामि क्षात्रं राज्ञि सनातनम् ॥ ०२५ ॥

श्रुत्वा तं प्रतिपद्येथाः प्राज्ञैः सह पुरोहितैः ।
आपद्धर्मार्थकुशलैर्लोकतन्त्रमवेक्ष्य च ॥ ०२६ ॥

---

# अध्याय ०९८

भीष्म उवाच ॥

जामदग्न्येन रामेण पितुर्वधममृष्यता ।
क्रुद्धेन च महाभागे हैहयाधिपतिर्हतः ॥ ००१ ॥

शतानि दश बाहूनां निकृत्तान्यर्जुनस्य वै ॥ ००१ ॥

पुनश्च धनुरादाय महास्त्राणि प्रमुञ्चता ।
निर्दग्धं क्षत्रमसकृद्रथेन जयता महीम् ॥ ००२ ॥

एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना ।

त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ॥ ००३ ॥

ततः संभूय सर्वाभिः क्षत्रियाभिः समन्ततः ।
उत्पादितान्यपत्यानि ब्राह्मणैर्नियतात्मभिः ॥ ००४ ॥

पाणिग्राहस्य तनय इति वेदेषु निश्चितम् ।
धर्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः ॥ ००५ ॥

लोकेऽप्याचरितो दृष्टः क्षत्रियाणां पुनर्भवः ॥ ००५ ॥

अथोतथ्य इति ख्यात आसीद्धीमानृषिः पुरा ।
ममता नाम तस्यासीद्भार्या परमसंमता ॥ ००६ ॥

उतथ्यस्य यवीयांस्तु पुरोधास्त्रिदिवौकसाम् ।
बृहस्पतिर्बृहत्तेजा ममतां सोऽन्वपद्यत ॥ ००७ ॥

उवाच ममता तं तु देवरं वदतां वरम् ।
अन्तर्वत्नी अहं भ्रात्रा ज्येष्ठेनारम्यतामिति ॥ ००८ ॥

अयं च मे महाभाग कुक्षावेव बृहस्पते ।
औतथ्यो वेदमत्रैव षडङ्गं प्रत्यधीयत ॥ ००९ ॥

अमोघरेतास्त्वं चापि नूनं भवितुमर्हसि ।
तस्मादेवङ्गतेऽद्य त्वमुपारमितुमर्हसि ॥ ०१० ॥

एवमुक्तस्तया सम्यग्बृहत्तेजा बृहस्पतिः ।
कामात्मानं तदात्मानं न शशाक नियच्छितुम् ॥ ०११ ॥

संबभूव ततः कामी तया सार्धमकामया ।
उत्सृजन्तं तु तं रेतः स गर्भस्थोऽभ्यभाषत ॥ ०१२ ॥

भोस्तात कन्यस वदे द्वयोर्नास्त्यत्र संभवः ।
अमोघशुक्रश्च भवान्पूर्वं चाहमिहागतः ॥ ०१३ ॥

शशाप तं ततः क्रुद्ध एवमुक्तो बृहस्पतिः ।
उतथ्यपुत्रं गर्भस्थं निर्भर्त्स्य भगवानृषिः ॥ ०१४ ॥

यस्मात्त्वमीदृशे काले सर्वभूतेप्सिते सति ।
एवमात्थ वचस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि ॥ ०१५ ॥

स वै दीर्घतमा नाम शापादृषिरजायत ।
बृहस्पतेर्बृहत्कीर्तेर्बृहस्पतिरिवौजसा ॥ ०१६ ॥

स पुत्राञ्जनयामास गौतमादीन्महायशाः ।
ऋषेरुतथ्यस्य तदा संतानकुलवृद्धये ॥ ०१७ ॥

लोभमोहाभिभूतास्ते पुत्रास्तं गौतमादयः ।
काष्ठे समुद्गे प्रक्षिप्य गङ्गायां समवासृजन् ॥ ०१८ ॥

न स्यादन्धश्च वृद्धश्च भर्तव्योऽयमिति स्म ते ।
चिन्तयित्वा ततः क्रूराः प्रतिजग्मुरथो गृहान् ॥ ०१९ ॥

सोऽनुस्रोतस्तदा राजन्प्लवमान ऋषिस्ततः ।
जगाम सुबहून्देशानन्धस्तेनोडुपेन ह ॥ ०२० ॥

तं तु राजा बलिर्नाम सर्वधर्मविशारदः ।
अपश्यन्मज्जनगतः स्रोतसाभ्याशमागतम् ॥ ०२१ ॥

जग्राह चैनं धर्मात्मा बलिः सत्यपराक्रमः ।
ज्ञात्वा चैनं स वव्रेऽथ पुत्रार्थं मनुजर्षभ ॥ ०२२ ॥

संतानार्थं महाभाग भार्यासु मम मानद ।

पुत्रान्धर्मार्थकुशलानुत्पादयितुमर्हसि ॥ ०२३ ॥

एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः ।
तस्मै स राजा स्वां भार्यां सुदेष्णां प्राहिणोत्तदा ॥ ०२४ ॥

अन्धं वृद्धं च तं मत्वा न सा देवी जगाम ह ।
स्वां तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा ॥ ०२५ ॥

तस्यां काक्षीवदादीन्स शूद्रयोनावृषिर्वशी ।
जनयामास धर्मात्मा पुत्रानेकादशैव तु ॥ ०२६ ॥

काक्षीवदादीन्पुत्रांस्तान्दृष्ट्वा सर्वानधीयतः ।
उवाच तमृषिं राजा ममैत इति वीर्यवान् ॥ ०२७ ॥

नेत्युवाच महर्षिस्तं ममैवैत इति ब्रुवन् ।
शूद्रयोनौ मया हीमे जाताः काक्षीवदादयः ॥ ०२८ ॥

अन्धं वृद्धं च मां मत्वा सुदेष्णा महिषी तव ।
अवमन्य ददौ मूढा शूद्रां धात्रेयिकां हि मे ॥ ०२९ ॥

ततः प्रसादयामास पुनस्तमृषिसत्तमम् ।
बलिः सुदेष्णां भार्यां च तस्मै तां प्राहिणोत्पुनः ॥ ०३० ॥

तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत् ।
भविष्यति कुमारस्ते तेजस्वी सत्यवागिति ॥ ०३१ ॥

तत्राङ्गो नाम राजर्षिः सुदेष्णायामजायत ।
एवमन्ये महेष्वासा ब्राह्मणैः क्षत्रिया भुवि ॥ ०३२ ॥

जाताः परमधर्मज्ञा वीर्यवन्तो महाबलाः ।
एतच्छ्रुत्वा त्वमप्यत्र मातः कुरु यथेप्सितम् ॥ ०३३ ॥

# अध्याय ०९९

भीष्म उवाच ॥

पुनर्भरतवंशस्य हेतुं संतानवृद्धये ।
वक्ष्यामि नियतं मातस्तन्मे निगदतः श‍ृणु ॥ ००१ ॥

ब्राह्मणो गुणवान्कश्चिद्धनेनोपनिमन्त्र्यताम् ।
विचित्रवीर्यक्षेत्रेषु यः समुत्पादयेत्प्रजाः ॥ ००२ ॥

वैशंपायन उवाच ॥

ततः सत्यवती भीष्मं वाचा संसज्जमानया ।
विहसन्तीव सव्रीडमिदं वचनमब्रवीत् ॥ ००३ ॥

सत्यमेतन्महाबाहो यथा वदसि भारत ।
विश्वासात्ते प्रवक्ष्यामि संतानाय कुलस्य च ॥ ००४ ॥

न ते शक्यमनाख्यातुमापद्धीयं तथाविधा ॥ ००४ ॥

त्वमेव नः कुले धर्मस्त्वं सत्यं त्वं परा गतिः ।
तस्मान्निशम्य वाक्यं मे कुरुष्व यदनन्तरम् ॥ ००५ ॥

धर्मयुक्तस्य धर्मात्मन्पितुरासीत्तरी मम ।
सा कदाचिदहं तत्र गता प्रथमयौवने ॥ ००६ ॥

अथ धर्मभृतां श्रेष्ठः परमर्षिः पराशरः ।

आजगाम तरीं धीमांस्तरिष्यन्यमुनां नदीम् ॥ ००७ ॥

स तार्यमाणो यमुनां मामुपेत्याब्रवीत्तदा ।
सान्त्वपूर्वं मुनिश्रेष्ठः कामार्तो मधुरं बहु ॥ ००८ ॥

तमहं शापभीता च पितुर्भीता च भारत ।
वरैरसुलभैरुक्ता न प्रत्याख्यातुमुत्सहे ॥ ००९ ॥

अभिभूय स मां बालां तेजसा वशमानयत् ।
तमसा लोकमावृत्य नौगतामेव भारत ॥ ०१० ॥

मत्स्यगन्धो महानासीत्पुरा मम जुगुप्सितः ।
तमपास्य शुभं गन्धमिमं प्रादात्स मे मुनिः ॥ ०११ ॥

ततो मामाह स मुनिर्गर्भमुत्सृज्य मामकम् ।
द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि ॥ ०१२ ॥

पाराशर्यो महायोगी स बभूव महानृषिः ।
कन्यापुत्रो मम पुरा द्वैपायन इति स्मृतः ॥ ०१३ ॥

यो व्यस्य वेदांश्चतुरस्तपसा भगवानृषिः ।
लोके व्यासत्वमापेदे कार्ष्ण्यात्कृष्णत्वमेव च ॥ ०१४ ॥

सत्यवादी शमपरस्तपस्वी दग्धकिल्बिषः ।
स नियुक्तो मया व्यक्तं त्वया च अमितद्युते ॥ ०१५ ॥

भ्रातुः क्षेत्रेषु कल्याणमपत्यं जनयिष्यति ॥ ०१५ ॥

स हि मामुक्तवांस्तत्र स्मरेः कृत्येषु मामिति ।
तं स्मरिष्ये महाबाहो यदि भीष्म त्वमिच्छसि ॥ ०१६ ॥

तव ह्यनुमते भीष्म नियतं स महातपाः ।
विचित्रवीर्यक्षेत्रेषु पुत्रानुत्पादयिष्यति ॥ ०१७ ॥

महर्षेः कीर्तने तस्य भीष्मः प्राञ्जलिरब्रवीत् ।
धर्ममर्थं च कामं च त्रीनेतान्योऽनुपश्यति ॥ ०१८ ॥

अर्थमर्थानुबन्धं च धर्मं धर्मानुबन्धनम् ।
कामं कामानुबन्धं च विपरीतान्पृथक्पृथक् ॥ ०१९ ॥

यो विचिन्त्य धिया सम्यग्व्यवस्यति स बुद्धिमान् ॥ ०१९ ॥

तदिदं धर्मयुक्तं च हितं चैव कुलस्य नः ।
उक्तं भवत्या यच्छ्रेयः परमं रोचते मम ॥ ०२० ॥

ततस्तस्मिन्प्रतिज्ञाते भीष्मेण कुरुनन्दन ।
कृष्णद्वैपायनं काली चिन्तयामास वै मुनिम् ॥ ०२१ ॥

स वेदान्विब्रुवन्धीमान्मातुर्विज्ञाय चिन्तितम् ।
प्रादुर्बभूवाविदितः क्षणेन कुरुनन्दन ॥ ०२२ ॥

तस्मै पूजां तदा दत्त्वा सुताय विधिपूर्वकम् ।
परिष्वज्य च बाहुभ्यां प्रस्नवैरभिषिच्य च ॥ ०२३ ॥

मुमोच बाष्पं दाशेयी पुत्रं दृष्ट्वा चिरस्य तम् ॥ ०२३ ॥

तामद्भिः परिषिच्यार्तां महर्षिरभिवाद्य च ।
मातरं पूर्वजः पुत्रो व्यासो वचनमब्रवीत् ॥ ०२४ ॥

भवत्या यदभिप्रेतं तदहं कर्तुमागतः ।
शाधि मां धर्मतत्त्वज्ञे करवाणि प्रियं तव ॥ ०२५ ॥

तस्मै पूजां ततोऽकार्षीत्पुरोधाः परमर्षये ।
स च तां प्रतिजग्राह विधिवन्मन्त्रपूर्वकम् ॥ ०२६ ॥

तमासनगतं माता पृष्ट्वा कुशलमव्ययम् ।
सत्यवत्यभिवीक्ष्यैनमुवाचेदमनन्तरम् ॥ ०२७ ॥

मातापित्रोः प्रजायन्ते पुत्राः साधारणाः कवे ।
तेषां पिता यथा स्वामी तथा माता न संशयः ॥ ०२८ ॥

विधातृविहितः स त्वं यथा मे प्रथमः सुतः ।
विचित्रवीर्यो ब्रह्मर्षे तथा मेऽवरजः सुतः ॥ ०२९ ॥

यथैव पितृतो भीष्मस्तथा त्वमपि मातृतः ।
भ्राता विचित्रवीर्यस्य यथा वा पुत्र मन्यसे ॥ ०३० ॥

अयं शांतनवः सत्यं पालयन्सत्यविक्रमः ।
बुद्धिं न कुरुतेऽपत्ये तथा राज्यानुशासने ॥ ०३१ ॥

स त्वं व्यपेक्षया भ्रातुः संतानाय कुलस्य च ।
भीष्मस्य चास्य वचनान्नियोगाच्च ममानघ ॥ ०३२ ॥

अनुक्रोशाच्च भूतानां सर्वेषां रक्षणाय च ।
आनृशंस्येन यद्ब्रूयां तच्छ्रुत्वा कर्तुमर्हसि ॥ ०३३ ॥

यवीयसस्तव भ्रातुर्भार्ये सुरसुतोपमे ।
रूपयौवनसंपन्ने पुत्रकामे च धर्मतः ॥ ०३४ ॥

तयोरुत्पादयापत्यं समर्थो ह्यसि पुत्रक ।
अनुरूपं कुलस्यास्य संतत्याः प्रसवस्य च ॥ ०३५ ॥

व्यास उवाच ॥

वेत्थ धर्मं सत्यवति परं चापरमेव च ।
यथा च तव धर्मज्ञे धर्मे प्रणिहिता मतिः ॥ ०३६ ॥

तस्मादहं त्वन्नियोगाद्धर्ममुद्दिश्य कारणम् ।
ईप्सितं ते करिष्यामि दृष्टं ह्येतत्पुरातनम् ॥ ०३७ ॥

भ्रातुः पुत्रान्प्रदास्यामि मित्रावरुणयोः समान् ।
व्रतं चरेतां ते देव्यौ निर्दिष्टमिह यन्मया ॥ ०३८ ॥

संवत्सरं यथान्यायं ततः शुद्धे भविष्यतः ।
न हि मामव्रतोपेता उपेयात्काचिदङ्गना ॥ ०३९ ॥

सत्यवत्युवाच ॥

यथा सद्यः प्रपद्येत देवी गर्भं तथा कुरु ।
अराजकेषु राष्ट्रेषु नास्ति वृष्टिर्न देवताः ॥ ०४० ॥

कथमराजकं राष्ट्रं शक्यं धारयितुं प्रभो ।
तस्माद्गर्भं समाधत्स्व भीष्मस्तं वर्धयिष्यति ॥ ०४१ ॥

व्यास उवाच ॥

यदि पुत्रः प्रदातव्यो मया क्षिप्रमकालिकम् ।
विरूपतां मे सहतामेतदस्याः परं व्रतम् ॥ ०४२ ॥

यदि मे सहते गन्धं रूपं वेषं तथा वपुः ।
अद्यैव गर्भं कौसल्या विशिष्टं प्रतिपद्यताम् ॥ ०४३ ॥

वैशंपायन उवाच ॥

समागमनमाकाङ्क्षन्निति सोऽन्तर्हितो मुनिः ।
ततोऽभिगम्य सा देवी स्नुषां रहसि सङ्गताम् ॥ ०४४ ॥

धर्म्यमर्थसमायुक्तमुवाच वचनं हितम् ॥ ०४४ ॥

कौसल्ये धर्मतन्त्रं यद्ब्रवीमि त्वां निबोध मे ।
भरतानां समुच्छेदो व्यक्तं मद्भाग्यसङ्क्षयात् ॥ ०४५ ॥

व्यथितां मां च संप्रेक्ष्य पितृवंशं च पीडितम् ।
भीष्मो बुद्धिमदान्मेऽत्र धर्मस्य च विवृद्धये ॥ ०४६ ॥

सा च बुद्धिस्तवाधीना पुत्रि ज्ञातं मयेति ह ।
नष्टं च भारतं वंशं पुनरेव समुद्धर ॥ ०४७ ॥

पुत्रं जनय सुश्रोणि देवराजसमप्रभम् ।
स हि राज्यधुरं गुर्वीमुद्वक्ष्यति कुलस्य नः ॥ ०४८ ॥

सा धर्मतोऽनुनीयैनां कथञ्चिद्धर्मचारिणीम् ।
भोजयामास विप्रांश्च देवर्षीनतिथींस्तथा ॥ ०४९ ॥

---

# अध्याय १००

वैशंपायन उवाच ॥

ततः सत्यवती काले वधूं स्नातामृतौ तदा ।
संवेशयन्ती शयने शनकैर्वाक्यमब्रवीत् ॥ ००१ ॥

कौसल्ये देवरस्तेऽस्ति सोऽद्य त्वानुप्रवेक्ष्यति ।
अप्रमत्ता प्रतीक्षैनं निशीथे आगमिष्यति ॥ ००२ ॥

श्वश्र्वास्तद्वचनं श्रुत्वा शयाना शयने शुभे ।
साचिन्तयत्तदा भीष्ममन्यांश्च कुरुपुङ्गवान् ॥ ००३ ॥

ततोऽम्बिकायां प्रथमं नियुक्तः सत्यवागृषिः ।
दीप्यमानेषु दीपेषु शयनं प्रविवेश ह ॥ ००४ ॥

तस्य कृष्णस्य कपिला जटा दीप्ते च लोचने ।
बभ्रूणि चैव श्मश्रूणि दृष्ट्वा देवी न्यमीलयत् ॥ ००५ ॥

संबभूव तया रात्रौ मातुः प्रियचिकीर्षया ।
भयात्काशिसुता तं तु नाशक्नोदभिवीक्षितुम् ॥ ००६ ॥

ततो निष्क्रान्तमासाद्य माता पुत्रमथाब्रवीत् ।
अप्यस्यां गुणवान्पुत्र राजपुत्रो भविष्यति ॥ ००७ ॥

निशम्य तद्वचो मातुर्व्यासः परमबुद्धिमान् ।
प्रोवाचातीन्द्रियज्ञानो विधिना संप्रचोदितः ॥ ००८ ॥

नागायुतसमप्राणो विद्वान्राजर्षिसत्तमः ।
महाभागो महावीर्यो महाबुद्धिर्भविष्यति ॥ ००९ ॥

तस्य चापि शतं पुत्रा भविष्यन्ति महाबलाः ।
किं तु मातुः स वैगुण्यादन्ध एव भविष्यति ॥ ०१० ॥

तस्य तद्वचनं श्रुत्वा माता पुत्रमथाब्रवीत् ।
नान्धः कुरूणां नृपतिरनुरूपस्तपोधन ॥ ०११ ॥

ज्ञातिवंशस्य गोप्तारं पितृणां वंशवर्धनम् ।

द्वितीयं कुरुवंशस्य राजानं दातुमर्हसि ॥ ०१२ ॥

स तथेति प्रतिज्ञाय निश्चक्राम महातपाः ।
सापि कालेन कौसल्या सुषुवेऽन्धं तमात्मजम् ॥ ०१३ ॥

पुनरेव तु सा देवी परिभाष्य स्नुषां ततः ।
ऋषिमावाहयत्सत्या यथापूर्वमनिन्दिता ॥ ०१४ ॥

ततस्तेनैव विधिना महर्षिस्तामपद्यत ।
अम्बालिकामथाभ्यागादृषिं दृष्ट्वा च सापि तम् ॥ ०१५ ॥

विषण्णा पाण्डुसङ्काशा समपद्यत भारत ॥ ०१५ ॥

तां भीतां पाण्डुसङ्काशां विषण्णां प्रेक्ष्य पार्थिव ।
व्यासः सत्यवतीपुत्र इदं वचनमब्रवीत् ॥ ०१६ ॥

यस्मात्पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामपि ।
तस्मादेष सुतस्तुभ्यं पाण्डुरेव भविष्यति ॥ ०१७ ॥

नाम चास्य तदेवेह भविष्यति शुभानने ।
इत्युक्त्वा स निराक्रामद्भगवानृषिसत्तमः ॥ ०१८ ॥

ततो निष्क्रान्तमालोक्य सत्या पुत्रमभाषत ।
शशंस स पुनर्मात्रे तस्य बालस्य पाण्डुताम् ॥ ०१९ ॥

तं माता पुनरेवान्यमेकं पुत्रमयाचत ।
तथेति च महर्षिस्तां मातरं प्रत्यभाषत ॥ ०२० ॥

ततः कुमारं सा देवी प्राप्तकालमजीजनत् ।
पाण्डुं लक्षणसंपन्नं दीप्यमानमिव श्रिया ॥ ०२१ ॥

तस्य पुत्रा महेष्वासा जज्ञिरे पञ्च पाण्डवाः ॥ ०२१ ॥

ऋतुकाले ततो ज्येष्ठां वधूं तस्मै न्ययोजयत् ।
सा तु रूपं च गन्धं च महर्षेः प्रविचिन्त्य तम् ॥ ०२२ ॥

नाकरोद्वचनं देव्या भयात्सुरसुतोपमा ॥ ०२२ ॥

ततः स्वैर्भूषणैर्दासीं भूषयित्वाप्सरोपमाम् ।
प्रेषयामास कृष्णाय ततः काशिपतेः सुता ॥ ०२३ ॥

दासी ऋषिमनुप्राप्तं प्रत्युद्गम्याभिवाद्य च ।
संविवेशाभ्यनुज्ञाता सत्कृत्योपचचार ह ॥ ०२४ ॥

कामोपभोगेन तु स तस्यां तुष्टिमगादृषिः ।
तया सहोषितो रात्रिं महर्षिः प्रीयमाणया ॥ ०२५ ॥

उत्तिष्ठन्नब्रवीदेनामभुजिष्या भविष्यसि ।
अयं च ते शुभे गर्भः श्रीमानुदरमागतः ॥ ०२६ ॥

धर्मात्मा भविता लोके सर्वबुद्धिमतां वरः ॥ ०२६ ॥

स जज्ञे विदुरो नाम कृष्णद्वैपायनात्मजः ।
धृतराष्ट्रस्य च भ्राता पाण्डोश्चामितबुद्धिमान् ॥ ०२७ ॥

धर्मो विदुररूपेण शापात्तस्य महात्मनः ।
माण्डव्यस्यार्थतत्त्वज्ञः कामक्रोधविवर्जितः ॥ ०२८ ॥

स धर्मस्यानृणो भूत्वा पुनर्मात्रा समेत्य च ।
तस्यै गर्भं समावेद्य तत्रैवान्तरधीयत ॥ ०२९ ॥

एवं विचित्रवीर्यस्य क्षेत्रे द्वैपायनादपि ।

जज्ञिरे देवगर्भाभाः कुरुवंशविवर्धनाः ॥ ०३० ॥

---

# अध्याय १०१

जनमेजय उवाच ॥

किं कृतं कर्म धर्मेण येन शापमुपेयिवान् ।
कस्य शापाच्च ब्रह्मर्षे शूद्रयोनावजायत ॥ ००१ ॥

वैशंपायन उवाच ॥

बभूव ब्राह्मणः कश्चिन्माण्डव्य इति विश्रुतः ।
धृतिमान्सर्वधर्मज्ञः सत्ये तपसि च स्थितः ॥ ००२ ॥

स आश्रमपदद्वारि वृक्षमूले महातपाः ।
ऊर्ध्वबाहुर्महायोगी तस्थौ मौनव्रतान्वितः ॥ ००३ ॥

तस्य कालेन महता तस्मिंस्तपसि तिष्ठतः ।
तमाश्रमपदं प्राप्ता दस्यवो लोप्त्रहारिणः ॥ ००४ ॥

अनुसार्यमाणा बहुभी रक्षिभिर्भरतर्षभ ॥ ००४ ॥

ते तस्यावसथे लोप्त्रं निदधुः कुरुसत्तम ।
निधाय च भयाल्लीनास्तत्रैवान्वागते बले ॥ ००५ ॥

तेषु लीनेष्वथो शीघ्रं ततस्तद्रक्षिणां बलम् ।
आजगाम ततोऽपश्यंस्तमृषिं तस्करानुगाः ॥ ००६ ॥

तमपृच्छंस्ततो राजंस्तथावृत्तं तपोधनम् ।
कतरेण पथा याता दस्यवो द्विजसत्तम ॥ ००७ ॥

तेन गच्छामहे ब्रह्मन्पथा शीघ्रतरं वयम् ॥ ००७ ॥

तथा तु रक्षिणां तेषां ब्रुवतां स तपोधनः ।
न किञ्चिद्वचनं राजन्नवदत्साध्वसाधु वा ॥ ००८ ॥

ततस्ते राजपुरुषा विचिन्वानास्तदाश्रमम् ।
ददृशुस्तत्र संलीनांस्तांश्चोरान्द्रव्यमेव च ॥ ००९ ॥

ततः शङ्का समभवद्रक्षिणां तं मुनिं प्रति ।
संयम्यैनं ततो राज्ञे दस्यूंश्चैव न्यवेदयन् ॥ ०१० ॥

तं राजा सह तैश्चोरैरन्वशाद्वध्यतामिति ।
स वध्यघातैरज्ञातः शूले प्रोतो महातपाः ॥ ०११ ॥

ततस्ते शूलमारोप्य तं मुनिं रक्षिणस्तदा ।
प्रतिजग्मुर्महीपालं धनान्यादाय तान्यथ ॥ ०१२ ॥

शूलस्थः स तु धर्मात्मा कालेन महता ततः ।
निराहारोऽपि विप्रर्षिर्मरणं नाभ्युपागमत् ॥ ०१३ ॥

धारयामास च प्राणानृषींश्च समुपानयत् ॥ ०१३ ॥

शूलाग्रे तप्यमानेन तपस्तेन महात्मना ।
संतापं परमं जग्मुर्मुनयोऽथ परंतप ॥ ०१४ ॥

ते रात्रौ शकुना भूत्वा संन्यवर्तन्त सर्वतः ।
दर्शयन्तो यथाशक्ति तमपृच्छन्द्विजोत्तमम् ॥ ०१५ ॥

श्रोतुमिच्छामहे ब्रह्मन्किं पापं कृतवानसि ॥ ०१५ ॥

ततः स मुनिशार्दूलस्तानुवाच तपोधनान् ।
दोषतः कं गमिष्यामि न हि मेऽन्योऽपराध्यति ॥ ०१६ ॥

राजा च तमृषिं श्रुत्वा निष्क्रम्य सह मन्त्रिभिः ।
प्रसादयामास तदा शूलस्थमृषिसत्तमम् ॥ ०१७ ॥

यन्मयापकृतं मोहादज्ञानादृषिसत्तम ।
प्रसादये त्वां तत्राहं न मे त्वं क्रोद्धुमर्हसि ॥ ०१८ ॥

एवमुक्तस्ततो राज्ञा प्रसादमकरोन्मुनिः ।
कृतप्रसादो राजा तं ततः समवतारयत् ॥ ०१९ ॥

अवतार्य च शूलाग्रात्तच्छूलं निश्चकर्ष ह ।
अशक्नुवंश्च निष्क्रष्टुं शूलं मूले स चिच्छिदे ॥ ०२० ॥

स तथान्तर्गतेनैव शूलेन व्यचरन्मुनिः ।
स तेन तपसा लोकान्विजिग्ये दुर्लभान्परैः ॥ ०२१ ॥

अणीमाण्डव्य इति च ततो लोकेषु कथ्यते ॥ ०२१ ॥

स गत्वा सदनं विप्रो धर्मस्य परमार्थवित् ।
आसनस्थं ततो धर्मं दृष्ट्वोपालभत प्रभुः ॥ ०२२ ॥

किं नु तद्दुष्कृतं कर्म मया कृतमजानता ।
यस्येयं फलनिर्वृत्तिरीदृश्यासादिता मया ॥ ०२३ ॥

शीघ्रमाचक्ष्व मे तत्त्वं पश्य मे तपसो बलम् ॥ ०२३ ॥

धर्म उवाच ॥

पतङ्गकानां पुच्छेषु त्वयेषीका प्रवेशिता ।
कर्मणस्तस्य ते प्राप्तं फलमेतत्तपोधन ॥ ०२४ ॥

अणीमाण्डव्य उवाच ॥

अल्पेऽपराधे विपुलो मम दण्डस्त्वया कृतः ।
शूद्रयोनावतो धर्म मानुषः संभविष्यसि ॥ ०२५ ॥

मर्यादां स्थापयाम्यद्य लोके धर्मफलोदयाम् ।
आ चतुर्दशमाद्वर्षान्न भविष्यति पातकम् ॥ ०२६ ॥

परेण कुर्वतामेवं दोष एव भविष्यति ॥ ०२६ ॥

वैशंपायन उवाच ॥

एतेन त्वपराधेन शापात्तस्य महात्मनः ।
धर्मो विदुररूपेण शूद्रयोनावजायत ॥ ०२७ ॥

धर्मे चार्थे च कुशलो लोभक्रोधविवर्जितः ।
दीर्घदर्शी शमपरः कुरूणां च हिते रतः ॥ ०२८ ॥

---

# अध्याय १०२

वैशंपायन उवाच ॥

तेषु त्रिषु कुमारेषु जातेषु कुरुजाङ्गलम् ।

कुरवोऽथ कुरुक्षेत्रं त्रयमेतदवर्धत ॥ ००१ ॥

ऊर्ध्वसस्याभवद्भूमिः सस्यानि फलवन्ति च ।
यथर्तुवर्षी पर्जन्यो बहुपुष्पफला द्रुमाः ॥ ००२ ॥

वाहनानि प्रहृष्टानि मुदिता मृगपक्षिणः ।
गन्धवन्ति च माल्यानि रसवन्ति फलानि च ॥ ००३ ॥

वणिग्भिश्चावकीर्यन्त नगराण्यथ शिल्पिभिः ।
शूराश्च कृतविद्याश्च सन्तश्च सुखिनोऽभवन् ॥ ००४ ॥

नाभवन्दस्यवः केचिन्नाधर्मरुचयो जनाः ।
प्रदेशेष्वपि राष्ट्राणां कृतं युगमवर्तत ॥ ००५ ॥

दानक्रियाधर्मशीला यज्ञव्रतपरायणाः ।
अन्योन्यप्रीतिसंयुक्ता व्यवर्धन्त प्रजास्तदा ॥ ००६ ॥

मानक्रोधविहीनाश्च जना लोभविवर्जिताः ।
अन्योन्यमभ्यवर्धन्त धर्मोत्तरमवर्तत ॥ ००७ ॥

तन्महोदधिवत्पूर्णं नगरं वै व्यरोचत ।
द्वारतोरणनिर्यूहैर्युक्तमभ्रचयोपमैः ॥ ००८ ॥

प्रासादशतसंबाधं महेन्द्रपुरसंनिभम् ॥ ००८ ॥

नदीषु वनखण्डेषु वापीपल्वलसानुषु ।
काननेषु च रम्येषु विजह्रुर्मुदिता जनाः ॥ ००९ ॥

उत्तरैः कुरुभिः सार्धं दक्षिणाः कुरवस्तदा ।
विस्पर्धमाना व्यचरंस्तथा सिद्धर्षिचारणैः ॥ ०१० ॥

नाभवत्कृपणः कश्चिन्नाभवन्विधवाः स्त्रियः ॥ ०१० ॥

तस्मिञ्जनपदे रम्ये बहवः कुरुभिः कृताः ।
कूपारामसभावाप्यो ब्राह्मणावसथास्तथा ॥ ०११ ॥

भीष्मेण शास्त्रतो राजन्सर्वतः परिरक्षिते ॥ ०११ ॥

बभूव रमणीयश्च चैत्ययूपशताङ्कितः ।
स देशः परराष्ट्राणि प्रतिगृह्याभिवर्धितः ॥ ०१२ ॥

भीष्मेण विहितं राष्ट्रे धर्मचक्रमवर्तत ॥ ०१२ ॥

क्रियमाणेषु कृत्येषु कुमाराणां महात्मनाम् ।
पौरजानपदाः सर्वे बभूवुः सततोत्सवाः ॥ ०१३ ॥

गृहेषु कुरुमुख्यानां पौराणां च नराधिप ।
दीयतां भुज्यतां चेति वाचोऽश्रूयन्त सर्वशः ॥ ०१४ ॥

धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः ।
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ॥ ०१५ ॥

संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः ।
श्रमव्यायामकुशलाः समपद्यन्त यौवनम् ॥ ०१६ ॥

धनुर्वेदेऽश्वपृष्ठे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः ॥ ०१७ ॥

इतिहासपुराणेषु नानाशिक्षासु चाभिभो ।
वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्रमाः ॥ ०१८ ॥

पाण्डुर्धनुषि विक्रान्तो नरेभ्योऽभ्यधिकोऽभवत् ।

अत्यन्यान्बलवानासीद्धृतराष्ट्रो महीपतिः ॥ ०१९ ॥

त्रिषु लोकेषु न त्वासीत्कश्चिद्विदुरसंमितः ।
धर्मनित्यस्ततो राजन्धर्मे च परमं गतः ॥ ०२० ॥

प्रनष्टं शंतनोर्वंशं समीक्ष्य पुनरुद्धृतम् ।
ततो निर्वचनं लोके सर्वराष्ट्रेष्ववर्तत ॥ ०२१ ॥

वीरसूनां काशिसुते देशानां कुरुजाङ्गलम् ।
सर्वधर्मविदां भीष्मः पुराणां गजसाह्वयम् ॥ ०२२ ॥

धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत ।
करणत्वाच्च विदुरः पाण्डुरासीन्महीपतिः ॥ ०२३ ॥

---

# अध्याय १०३

भीष्म उवाच ॥

गुणैः समुदितं सम्यगिदं नः प्रथितं कुलम् ।
अत्यन्यान्पृथिवीपालान्पृथिव्यामधिराज्यभाक् ॥ ००१ ॥

रक्षितं राजभिः पूर्वैर्धर्मविद्भिर्महात्मभिः ।
नोत्सादमगमच्चेदं कदाचिदिह नः कुलम् ॥ ००२ ॥

मया च सत्यवत्या च कृष्णेन च महात्मना ।
समवस्थापितं भूयो युष्मासु कुलतन्तुषु ॥ ००३ ॥

वर्धते तदिदं पुत्र कुलं सागरवद्यथा ।

तथा मया विधातव्यं त्वया चैव विशेषतः ॥ ००४ ॥

श्रूयते यादवी कन्या अनुरूपा कुलस्य नः ।
सुबलस्यात्मजा चैव तथा मद्रेश्वरस्य च ॥ ००५ ॥

कुलीना रूपवत्यश्च नाथवत्यश्च सर्वशः ।
उचिताश्चैव संबन्धे तेऽस्माकं क्षत्रियर्षभाः ॥ ००६ ॥

मन्ये वरयितव्यास्ता इत्यहं धीमतां वर ।
संतानार्थं कुलस्यास्य यद्वा विदुर मन्यसे ॥ ००७ ॥

विदुर उवाच ॥

भवान्पिता भवान्माता भवान्नः परमो गुरुः ।
तस्मात्स्वयं कुलस्यास्य विचार्य कुरु यद्धितम् ॥ ००८ ॥

वैशंपायन उवाच ॥

अथ शुश्राव विप्रेभ्यो गान्धारीं सुबलात्मजाम् ।
आराध्य वरदं देवं भगनेत्रहरं हरम् ॥ ००९ ॥

गान्धारी किल पुत्राणां शतं लेभे वरं शुभा ॥ ००९ ॥

इति श्रुत्वा च तत्त्वेन भीष्मः कुरुपितामहः ।
ततो गान्धारराजस्य प्रेषयामास भारत ॥ ०१० ॥

अचक्षुरिति तत्रासीत्सुबलस्य विचारणा ।
कुलं ख्यातिं च वृत्तं च बुद्ध्या तु प्रसमीक्ष्य सः ॥ ०११ ॥

ददौ तां धृतराष्ट्राय गान्धारीं धर्मचारिणीम् ॥ ०११ ॥

गान्धारी त्वपि शुश्राव धृतराष्ट्रमचक्षुषम् ।
आत्मानं दित्सितं चास्मै पित्रा मात्रा च भारत ॥ ०१२ ॥

ततः सा पट्टमादाय कृत्वा बहुगुणं शुभा ।
बबन्ध नेत्रे स्वे राजन्पतिव्रतपरायणा ॥ ०१३ ॥

नात्यश्नीयां पतिमहमित्येवं कृतनिश्चया ॥ ०१३ ॥

ततो गान्धारराजस्य पुत्रः शकुनिरभ्ययात् ।
स्वसारं परया लक्ष्म्या युक्तामादाय कौरवान् ॥ ०१४ ॥

दत्त्वा स भगिनीं वीरो यथार्हं च परिच्छदम् ।
पुनरायात्स्वनगरं भीष्मेण प्रतिपूजितः ॥ ०१५ ॥

गान्धार्यपि वरारोहा शीलाचारविचेष्टितैः ।
तुष्टिं कुरूणां सर्वेषां जनयामास भारत ॥ ०१६ ॥

वृत्तेनाराध्य तान्सर्वान्पतिव्रतपरायणा ।
वाचापि पुरुषानन्यान्सुव्रता नान्वकीर्तयत् ॥ ०१७ ॥

---

# अध्याय १०४

वैशंपायन उवाच ॥

शूरो नाम यदुश्रेष्ठो वसुदेवपिताभवत् ।
तस्य कन्या पृथा नाम रूपेणासदृशी भुवि ॥ ००१ ॥

पैतृष्वसेयाय स तामनपत्याय वीर्यवान् ।

अग्र्यमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वीर्यवान् ॥ ००२ ॥

अग्रजातेति तां कन्यामग्र्यानुग्रहकाङ्क्षिणे ।
प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने ॥ ००३ ॥

सा नियुक्ता पितुर्गेहे देवतातिथिपूजने ।
उग्रं पर्यचरद्घोरं ब्राह्मणं संशितव्रतम् ॥ ००४ ॥

निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत् ॥ ००५ ॥

तस्यै स प्रददौ मन्त्रमापद्धर्मान्ववेक्षया ।
अभिचाराभिसंयुक्तमब्रवीच्चैव तां मुनिः ॥ ००६ ॥

यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तस्य तस्य प्रसादेन पुत्रस्तव भविष्यति ॥ ००७ ॥

तथोक्ता सा तु विप्रेण तेन कौतूहलात्तदा ।
कन्या सती देवमर्कमाजुहाव यशस्विनी ॥ ००८ ॥

सा ददर्श तमायान्तं भास्करं लोकभावनम् ।
विस्मिता चानवद्याङ्गी दृष्ट्वा तन्महदद्भुतम् ॥ ००९ ॥

प्रकाशकर्मा तपनस्तस्यां गर्भं दधौ ततः ।
अजीजनत्ततो वीरं सर्वशस्त्रभृतां वरम् ॥ ०१० ॥

आमुक्तकवचः श्रीमान्देवगर्भः श्रियावृतः ॥ ०१० ॥

सहजं कवचं बिभ्रत्कुण्डलोद्योतिताननः ।
अजायत सुतः कर्णः सर्वलोकेषु विश्रुतः ॥ ०११ ॥

प्रादाच्च तस्याः कन्यात्वं पुनः स परमद्युतिः ।
दत्त्वा च ददतां श्रेष्ठो दिवमाचक्रमे ततः ॥ ०१२ ॥

गूहमानापचारं तं बन्धुपक्षभयात्तदा ।
उत्ससर्ज जले कुन्ती तं कुमारं सलक्षणम् ॥ ०१३ ॥

तमुत्सृष्टं तदा गर्भं राधाभर्ता महायशाः ।
पुत्रत्वे कल्पयामास सभार्यः सूतनन्दनः ॥ ०१४ ॥

नामधेयं च चक्राते तस्य बालस्य तावुभौ ।
वसुना सह जातोऽयं वसुषेणो भवत्विति ॥ ०१५ ॥

स वर्धमानो बलवान्सर्वास्त्रेषूद्यतोऽभवत् ।
आ पृष्ठतापादादित्यमुपतस्थे स वीर्यवान् ॥ ०१६ ॥

यस्मिन्काले जपन्नास्ते स वीरः सत्यसङ्गरः ।
नादेयं ब्राह्मणेष्वासीत्तस्मिन्काले महात्मनः ॥ ०१७ ॥

तमिन्द्रो ब्राह्मणो भूत्वा भिक्षार्थं भूतभावनः ।
कुण्डले प्रार्थयामास कवचं च महाद्युतिः ॥ ०१८ ॥

उत्कृत्य विमनाः स्वाङ्गात्कवचं रुधिरस्रवम् ।
कर्णस्तु कुण्डले छित्त्वा प्रायच्छत्स कृताञ्जलिः ॥ ०१९ ॥

शक्तिं तस्मै ददौ शक्रः विस्मितो वाक्यमब्रवीत् ।
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ॥ ०२० ॥

यस्मै क्षेप्स्यसि रुष्टः सन्सोऽनया न भविष्यति ॥ ०२० ॥

पुरा नाम तु तस्यासीद्वसुषेण इति श्रुतम् ।
ततो वैकर्तनः कर्णः कर्मणा तेन सोऽभवत् ॥ ०२१ ॥

# अध्याय १०५

वैशंपायन उवाच ॥

रूपसत्त्वगुणोपेता धर्मारामा महाव्रता ।
दुहिता कुन्तिभोजस्य कृते पित्रा स्वयंवरे ॥ ००१ ॥

सिंहदंष्ट्रं गजस्कन्धमृषभाक्षं महाबलम् ।
भूमिपालसहस्राणां मध्ये पाण्डुमविन्दत ॥ ००२ ॥

स तया कुन्तिभोजस्य दुहित्रा कुरुनन्दनः ।
युयुजेऽमितसौभाग्यः पौलोम्या मघवानिव ॥ ००३ ॥

यात्वा देवव्रतेनापि मद्राणां पुटभेदनम् ।
विश्रुता त्रिषु लोकेषु माद्री मद्रपतेः सुता ॥ ००४ ॥

सर्वराजसु विख्याता रूपेणासदृशी भुवि ।
पाण्डोरर्थे परिक्रीता धनेन महता तदा ॥ ००५ ॥

विवाहं कारयामास भीष्मः पाण्डोर्महात्मनः ॥ ००५ ॥

सिंहोरस्कं गजस्कन्धमृषभाक्षं मनस्विनम् ।
पाण्डुं दृष्ट्वा नरव्याघ्रं व्यस्मयन्त नरा भुवि ॥ ००६ ॥

कृतोद्वाहस्ततः पाण्डुर्बलोत्साहसमन्वितः ।
जिगीषमाणो वसुधां ययौ शत्रूननेकशः ॥ ००७ ॥

पूर्वमागस्कृतो गत्वा दशार्णाः समरे जिताः ।
पाण्डुना नरसिंहेन कौरवाणां यशोभृता ॥ ००८ ॥

ततः सेनामुपादाय पाण्डुर्नानाविधध्वजाम् ।
प्रभूतहस्त्यश्वरथां पदातिगणसङ्कुलाम् ॥ ००९ ॥

आगस्कृत्सर्ववीराणां वैरी सर्वमहीभृताम् ।
गोप्ता मगधराष्ट्रस्य दार्वो राजगृहे हतः ॥ ०१० ॥

ततः कोशं समादाय वाहनानि बलानि च ।
पाण्डुना मिथिलां गत्वा विदेहाः समरे जिताः ॥ ०११ ॥

तथा काशिषु सुह्मेषु पुण्ड्रेषु भरतर्षभ ।
स्वबाहुबलवीर्येण कुरूणामकरोद्यशः ॥ ०१२ ॥

तं शरौघमहाज्वालमस्त्रार्चिषमरिंदमम् ।
पाण्डुपावकमासाद्य व्यदह्यन्त नराधिपाः ॥ ०१३ ॥

ते ससेनाः ससेनेन विध्वंसितबला नृपाः ।
पाण्डुना वशगाः कृत्वा करकर्मसु योजिताः ॥ ०१४ ॥

तेन ते निर्जिताः सर्वे पृथिव्यां सर्वपार्थिवाः ।
तमेकं मेनिरे शूरं देवेष्विव पुरंदरम् ॥ ०१५ ॥

तं कृताञ्जलयः सर्वे प्रणता वसुधाधिपाः ।
उपाजग्मुर्धनं गृह्य रत्नानि विविधानि च ॥ ०१६ ॥

मणिमुक्ताप्रवालं च सुवर्णं रजतं तथा ।
गोरत्नान्यश्वरत्नानि रथरत्नानि कुञ्जरान् ॥ ०१७ ॥

खरोष्ट्रमहिषांश्चैव यच्च किञ्चिदजाविकम् ।

तत्सर्वं प्रतिजग्राह राजा नागपुराधिपः ॥ ०१८ ॥

तदादाय ययौ पाण्डुः पुनर्मुदितवाहनः ।
हर्षयिष्यन्स्वराष्ट्राणि पुरं च गजसाह्वयम् ॥ ०१९ ॥

शंतनो राजसिंहस्य भरतस्य च धीमतः ।
प्रनष्टः कीर्तिजः शब्दः पाण्डुना पुनरुद्धृतः ॥ ०२० ॥

ये पुरा कुरुराष्ट्राणि जह्रुः कुरुधनानि च ।
ते नागपुरसिंहेन पाण्डुना करदाः कृताः ॥ ०२१ ॥

इत्यभाषन्त राजानो राजामात्याश्च सङ्गताः ।
प्रतीतमनसो हृष्टाः पौरजानपदैः सह ॥ ०२२ ॥

प्रत्युद्ययुस्तं संप्राप्तं सर्वे भीष्मपुरोगमाः ।
ते नदूरमिवाध्वानं गत्वा नागपुरालयाः ॥ ०२३ ॥

आवृतं ददृशुर्लोकं हृष्टा बहुविधैर्जनैः ॥ ०२३ ॥

नानायानसमानीतै रत्नैरुच्चावचैस्तथा ।
हस्त्यश्वरथरत्नैश्च गोभिरुष्ट्रैरथाविकैः ॥ ०२४ ॥

नान्तं ददृशुरासाद्य भीष्मेण सह कौरवाः ॥ ०२४ ॥

सोऽभिवाद्य पितुः पादौ कौसल्यानन्दवर्धनः ।
यथार्हं मानयामास पौरजानपदानपि ॥ ०२५ ॥

प्रमृद्य परराष्ट्राणि कृतार्थं पुनरागतम् ।
पुत्रमासाद्य भीष्मस्तु हर्षादश्रूण्यवर्तयत् ॥ ०२६ ॥

स तूर्यशतसंघानां भेरीणां च महास्वनैः ।

हर्षयन्सर्वशः पौरान्विवेश गजसाह्वयम् ॥ ०२७ ॥

---

# अध्याय १०६

वैशंपायन उवाच ॥

धृतराष्ट्राभ्यनुज्ञातः स्वबाहुविजितं धनम् ।
भीष्माय सत्यवत्यै च मात्रे चोपजहार सः ॥ ००१ ॥

विदुराय च वै पाण्डुः प्रेषयामास तद्धनम् ।
सुहृदश्चापि धर्मात्मा धनेन समतर्पयत् ॥ ००२ ॥

ततः सत्यवतीं भीष्मः कौसल्यां च यशस्विनीम् ।
शुभैः पाण्डुजितै रत्नैस्तोषयामास भारत ॥ ००३ ॥

ननन्द माता कौसल्या तमप्रतिमतेजसम् ।
जयन्तमिव पौलोमी परिष्वज्य नरर्षभम् ॥ ००४ ॥

तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः ।
अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ॥ ००५ ॥

संप्रयुक्तश्च कुन्त्या च माद्र्या च भरतर्षभ ।
जिततन्द्रीस्तदा पाण्डुर्बभूव वनगोचरः ॥ ००६ ॥

हित्वा प्रासादनिलयं शुभानि शयनानि च ।
अरण्यनित्यः सततं बभूव मृगयापरः ॥ ००७ ॥

स चरन्दक्षिणं पार्श्वं रम्यं हिमवतो गिरेः ।

उवास गिरिपृष्ठेषु महाशालवनेषु च ॥ ००८ ॥

रराज कुन्त्या माद्र्या च पाण्डुः सह वने वसन् ।
करेण्वोरिव मध्यस्थः श्रीमान्पौरंदरो गजः ॥ ००९ ॥

भारतं सह भार्याभ्यां बाणखङ्गधनुर्धरम् ।
विचित्रकवचं वीरं परमास्त्रविदं नृपम् ॥ ०१० ॥

देवोऽयमित्यमन्यन्त चरन्तं वनवासिनः ॥ ०१० ॥

तस्य कामांश्च भोगांश्च नरा नित्यमतन्द्रिताः ।
उपजह्रुर्वनान्तेषु धृतराष्ट्रेण चोदिताः ॥ ०११ ॥

अथ पारशवीं कन्यां देवकस्य महीपतेः ।
रूपयौवनसंपन्नां स शुश्रावापगासुतः ॥ ०१२ ॥

ततस्तु वरयित्वा तामानाय्य पुरुषर्षभः ।
विवाहं कारयामास विदुरस्य महामतेः ॥ ०१३ ॥

तस्यां चोत्पादयामास विदुरः कुरुनन्दनः ।
पुत्रान्विनयसंपन्नानात्मनः सदृशान्गुणैः ॥ ०१४ ॥

---

# अध्याय १०७

वैशंपायन उवाच ॥

ततः पुत्रशतं जज्ञे गान्धार्यां जनमेजय ।
धृतराष्ट्रस्य वैश्यायामेकश्चापि शतात्परः ॥ ००१ ॥

पाण्डोः कुन्त्यां च माद्र्यां च पञ्च पुत्रा महारथाः ।
देवेभ्यः समपद्यन्त संतानाय कुलस्य वै ॥ ००२ ॥

जनमेजय उवाच ॥

कथं पुत्रशतं जज्ञे गान्धार्यां द्विजसत्तम ।
कियता चैव कालेन तेषामायुश्च किं परम् ॥ ००३ ॥

कथं चैकः स वैश्यायां धृतराष्ट्रसुतोऽभवत् ।
कथं च सदृशीं भार्यां गान्धारीं धर्मचारिणीम् ॥ ००४ ॥

आनुकूल्ये वर्तमानां धृतराष्ट्रोऽत्यवर्तत ॥ ००४ ॥

कथं च शप्तस्य सतः पाण्डोस्तेन महात्मना ।
समुत्पन्ना दैवतेभ्यः पञ्च पुत्रा महारथाः ॥ ००५ ॥

एतद्विद्वन्यथावृत्तं विस्तरेण तपोधन ।
कथयस्व न मे तृप्तिः कथ्यमानेषु बन्धुषु ॥ ००६ ॥

वैशंपायन उवाच ॥

क्षुच्छ्रमाभिपरिग्लानं द्वैपायनमुपस्थितम् ।
तोषयामास गान्धारी व्यासस्तस्यै वरं ददौ ॥ ००७ ॥

सा वव्रे सदृशं भर्तुः पुत्राणां शतमात्मनः ।
ततः कालेन सा गर्भं धृतराष्ट्रादथाग्रहीत् ॥ ००८ ॥

संवत्सरद्वयं तं तु गान्धारी गर्भमाहितम् ।
अप्रजा धारयामास ततस्तां दुःखमाविशत् ॥ ००९ ॥

श्रुत्वा कुन्तीसुतं जातं बालार्कसमतेजसम् ।
उदरस्यात्मनः स्थैर्यमुपलभ्यान्वचिन्तयत् ॥ ०१० ॥

अज्ञातं धृतराष्ट्रस्य यत्नेन महता ततः ।
सोदरं पातयामास गान्धारी दुःखमूर्च्छिता ॥ ०११ ॥

ततो जज्ञे मांसपेशी लोहाष्ठीलेव संहता ।
द्विवर्षसंभृतां कुक्षौ तामुत्स्रष्टुं प्रचक्रमे ॥ ०१२ ॥

अथ द्वैपायनो ज्ञात्वा त्वरितः समुपागमत् ।
तां स मांसमयीं पेशीं ददर्श जपतां वरः ॥ ०१३ ॥

ततोऽब्रवीत्सौबलेयीं किमिदं ते चिकीर्षितम् ।
सा चात्मनो मतं सत्यं शशंस परमर्षये ॥ ०१४ ॥

ज्येष्ठं कुन्तीसुतं जातं श्रुत्वा रविसमप्रभम् ।
दुःखेन परमेणेदमुदरं पातितं मया ॥ ०१५ ॥

शतं च किल पुत्राणां वितीर्णं मे त्वया पुरा ।
इयं च मे मांसपेशी जाता पुत्रशताय वै ॥ ०१६ ॥

व्यास उवाच ॥

एवमेतत्सौबलेयि नैतज्जात्वन्यथा भवेत् ।
वितथं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा ॥ ०१७ ॥

घृतपूर्णं कुण्डशतं क्षिप्रमेव विधीयताम् ।
शीताभिरद्भिरष्ठीलामिमां च परिषिञ्चत ॥ ०१८ ॥

वैशंपायन उवाच ॥

सा सिच्यमाना अष्ठीला अभवच्छतधा तदा ।
अङ्गुष्ठपर्वमात्राणां गर्भाणां पृथगेव तु ॥ ०१९ ॥

एकाधिकशतं पूर्णं यथायोगं विशां पते ।
मांसपेश्यास्तदा राजन्क्रमशः कालपर्ययात् ॥ ०२० ॥

ततस्तांस्तेषु कुण्डेषु गर्भानवदधे तदा ।
स्वनुगुप्तेषु देशेषु रक्षां च व्यदधात्ततः ॥ ०२१ ॥

शशास चैव भगवान्कालेनैतावता पुनः ।
विघट्टनीयान्येतानि कुण्डानीति स्म सौबलीम् ॥ ०२२ ॥

इत्युक्त्वा भगवान्व्यासस्तथा प्रतिविधाय च ।
जगाम तपसे धीमान्हिमवन्तं शिलोच्चयम् ॥ ०२३ ॥

जज्ञे क्रमेण चैतेन तेषां दुर्योधनो नृपः ।
जन्मतस्तु प्रमाणेन ज्येष्ठो राजा युधिष्ठिरः ॥ ०२४ ॥

जातमात्रे सुते तस्मिन्धृतराष्ट्रोऽब्रवीदिदम् ।
समानीय बहून्विप्रान्भीष्मं विदुरमेव च ॥ ०२५ ॥

युधिष्ठिरो राजपुत्रो ज्येष्ठो नः कुलवर्धनः ।
प्राप्तः स्वगुणतो राज्यं न तस्मिन्वाच्यमस्ति नः ॥ ०२६ ॥

अयं त्वनन्तरस्तस्मादपि राजा भविष्यति ।
एतद्धि ब्रूत मे सत्यं यदत्र भविता ध्रुवम् ॥ ०२७ ॥

वाक्यस्यैतस्य निधने दिक्षु सर्वासु भारत ।
क्रव्यादाः प्राणदन्घोराः शिवाश्चाशिवशंसिनः ॥ ०२८ ॥

लक्षयित्वा निमित्तानि तानि घोराणि सर्वशः ।

तेऽब्रुवन्ब्राह्मणा राजन्विदुरश्च महामतिः ॥ ०२९ ॥

व्यक्तं कुलान्तकरणो भवितैष सुतस्तव ।
तस्य शान्तिः परित्यागे पुष्ट्या त्वपनयो महान् ॥ ०३० ॥

शतमेकोनमप्यस्तु पुत्राणां ते महीपते ।
एकेन कुरु वै क्षेमं लोकस्य च कुलस्य च ॥ ०३१ ॥

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ०३२ ॥

स तथा विदुरेणोक्तस्तैश्च सर्वैर्द्विजोत्तमैः ।
न चकार तथा राजा पुत्रस्नेहसमन्वितः ॥ ०३३ ॥

ततः पुत्रशतं सर्वं धृतराष्ट्रस्य पार्थिव ।
मासमात्रेण सञ्जज्ञे कन्या चैका शताधिका ॥ ०३४ ॥

गान्धार्यां क्लिश्यमानायामुदरेण विवर्धता ।
धृतराष्ट्रं महाबाहुं वैश्या पर्यचरत्किल ॥ ०३५ ॥

तस्मिन्संवत्सरे राजन्धृतराष्ट्रान्महायशाः ।
जज्ञे धीमांस्ततस्तस्यां युयुत्सुः करणो नृप ॥ ०३६ ॥

एवं पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ।
महारथानां वीराणां कन्या चैकाथ दुःशला ॥ ०३७ ॥

# अध्याय १०८

जनमेजय उवाच ॥

ज्येष्ठानुज्येष्ठतां तेषां नामधेयानि चाभिभो ।
धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्तय ॥ ००१ ॥

वैशंपायन उवाच ॥

दुर्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा ।
दुःसहो दुःशलश्चैव जलसंधः समः सहः ॥ ००२ ॥

विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः ।
दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ॥ ००३ ॥

विविंशतिर्विकर्णश्च जलसंधः सुलोचनः ।
चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः ॥ ००४ ॥

दुर्मदो दुष्प्रगाहश्च विवित्सुर्विकटः समः ।
ऊर्णनाभः सुनाभश्च तथा नन्दोपनन्दकौ ॥ ००५ ॥

सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ ।
चित्रबाणश्चित्रवर्मा सुवर्मा दुर्विमोचनः ॥ ००६ ॥

अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः ।
भीमवेगो भीमबलो बलाकी बलवर्धनः ॥ ००७ ॥

उग्रायुधो भीमकर्मा कनकायुर्दृढायुधः ।
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ॥ ००८ ॥

दृढसंधो जरासंधः सत्यसंधः सदःसुवाक् ।

उग्रश्रवा अश्वसेनः सेनानीर्दुष्पराजयः ॥ ००९ ॥

अपराजितः पण्डितको विशालाक्षो दुरावरः ।
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ ॥ ०१० ॥

आदित्यकेतुर्बह्वाशी नागदन्तोग्रयायिनौ ।
कवची निषङ्गी पाशी च दण्डधारो धनुर्ग्रहः ॥ ०११ ॥

उग्रो भीमरथो वीरो वीरबाहुरलोलुपः ।
अभयो रौद्रकर्मा च तथा दृढरथस्त्रयः ॥ ०१२ ॥

अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः ।
दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकध्वजः ॥ ०१३ ॥

कुण्डाशी विरजाश्चैव दुःशला च शताधिका ।
एतदेकशतं राजन्कन्या चैका प्रकीर्तिता ॥ ०१४ ॥

नामधेयानुपूर्व्येण विद्धि जन्मक्रमं नृप ।
सर्वे त्वतिरथाः शूराः सर्वे युद्धविशारदाः ॥ ०१५ ॥

सर्वे वेदविदश्चैव राजशास्त्रेषु कोविदाः ।
सर्वे संसर्गविद्यासु विद्याभिजनशोभिनः ॥ ०१६ ॥

सर्वेषामनुरूपाश्च कृता दारा महीपते ।
धृतराष्ट्रेण समये समीक्ष्य विधिवत्तदा ॥ ०१७ ॥

दुःशलां समये राजा सिन्धुराजाय भारत ।
जयद्रथाय प्रददौ सौबलानुमते तदा ॥ ०१८ ॥

# अध्याय १०९

जनमेजय उवाच ॥

कथितो धार्तराष्ट्राणामार्षः संभव उत्तमः ।
अमानुषो मानुषाणां भवता ब्रह्मवित्तम ॥ ००१ ॥

नामधेयानि चाप्येषां कथ्यमानानि भागशः ।
त्वत्तः श्रुतानि मे ब्रह्मन्पाण्डवानां तु कीर्तय ॥ ००२ ॥

ते हि सर्वे महात्मानो देवराजपराक्रमाः ।
त्वयैवांशावतरणे देवभागाः प्रकीर्तिताः ॥ ००३ ॥

तस्मादिच्छाम्यहं श्रोतुमतिमानुषकर्मणाम् ।
तेषामाजननं सर्वं वैशंपायन कीर्तय ॥ ००४ ॥

वैशंपायन उवाच ॥

राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते ।
वने मैथुनकालस्थं ददर्श मृगयूथपम् ॥ ००५ ॥

ततस्तां च मृगीं तं च रुक्मपुङ्खैः सुपत्रिभिः ।
निर्बिभेद शरैस्तीक्ष्णैः पाण्डुः पञ्चभिराशुगैः ॥ ००६ ॥

स च राजन्महातेजा ऋषिपुत्रस्तपोधनः ।
भार्यया सह तेजस्वी मृगरूपेण सङ्गतः ॥ ००७ ॥

संसक्तस्तु तया मृग्या मानुषीमीरयन्गिरम् ।
क्षणेन पतितो भूमौ विललापाकुलेन्द्रियः ॥ ००८ ॥

मृग उवाच ॥

काममन्युपरीतापि बुध्यङ्गरहितापि च ।
वर्जयन्ति नृशंसानि पापेष्वभिरता नराः ॥ ००९ ॥

न विधिं ग्रसते प्रज्ञा प्रज्ञां तु ग्रसते विधिः ।
विधिपर्यागतानर्थान्प्रज्ञा न प्रतिपद्यते ॥ ०१० ॥

शश्वद्धर्मात्मनां मुख्ये कुले जातस्य भारत ।
कामलोभाभिभूतस्य कथं ते चलिता मतिः ॥ ०११ ॥

पाण्डुरुवाच ॥

शत्रूणां या वधे वृत्तिः सा मृगाणां वधे स्मृता ।
राज्ञां मृग न मां मोहात्त्वं गर्हयितुमर्हसि ॥ ०१२ ॥

अच्छद्मनामायया च मृगाणां वध इष्यते ।
स एव धर्मो राज्ञां तु तद्विद्वान्किं नु गर्हसे ॥ ०१३ ॥

अगस्त्यः सत्रमासीनश्चचार मृगयामृषिः ।
आरण्यान्सर्वदैवत्यान्मृगान्प्रोक्ष्य महावने ॥ ०१४ ॥

प्रमाणदृष्टधर्मेण कथमस्मान्विगर्हसे ।
अगस्त्यस्याभिचारेण युष्माकं वै वपा हुता ॥ ०१५ ॥

मृग उवाच ॥

न रिपून्वै समुद्दिश्य विमुञ्चन्ति पुरा शरान् ।
रन्ध्र एषां विशेषेण वधकालः प्रशस्यते ॥ ०१६ ॥

पाण्डुरुवाच ॥

प्रमत्तमप्रमत्तं वा विवृतं घ्नन्ति चौजसा ।
उपायैरिषुभिस्तीक्ष्णैः कस्मान्मृग विगर्हसे ॥ ०१७ ॥

मृग उवाच ॥

नाहं घ्नन्तं मृगान्राजन्विगर्हे आत्मकारणात् ।
मैथुनं तु प्रतीक्ष्यं मे स्यात्त्वयेहानृशंसतः ॥ ०१८ ॥

सर्वभूतहिते काले सर्वभूतेप्सिते तथा ।
को हि विद्वान्मृगं हन्याच्चरन्तं मैथुनं वने ॥ ०१९ ॥

पुरुषार्थफलं कान्तं यत्त्वया वितथं कृतम् ॥ ०१९ ॥

पौरवाणामृषीणां च तेषामक्लिष्टकर्मणाम् ।
वंशे जातस्य कौरव्य नानुरूपमिदं तव ॥ ०२० ॥

नृशंसं कर्म सुमहत्सर्वलोकविगर्हितम् ।
अस्वर्ग्यमयशस्यं च अधर्मिष्ठं च भारत ॥ ०२१ ॥

स्त्रीभोगानां विशेषज्ञः शास्त्रधर्मार्थतत्त्ववित् ।
नार्हस्त्वं सुरसङ्काश कर्तुमस्वर्ग्यमीदृशम् ॥ ०२२ ॥

त्वया नृशंसकर्तारः पापाचाराश्च मानवाः ।
निग्राह्याः पार्थिवश्रेष्ठ त्रिवर्गपरिवर्जिताः ॥ ०२३ ॥

किं कृतं ते नरश्रेष्ठ निघ्नतो मामनागसम् ।
मुनिं मूलफलाहारं मृगवेषधरं नृप ॥ ०२४ ॥

वसमानमरण्येषु नित्यं शमपरायणम् ॥ ०२४ ॥

त्वयाहं हिंसितो यस्मात्तस्मात्त्वामप्यसंशयम् ।

द्वयोर्नृशंसकर्तारमवशं काममोहितम् ॥ ०२५ ॥

जीवितान्तकरो भाव एवमेवागमिष्यति ॥ ०२५ ॥

अहं हि किंदमो नाम तपसाप्रतिमो मुनिः ।
व्यपत्रपन्मनुष्याणां मृग्यां मैथुनमाचरम् ॥ ०२६ ॥

मृगो भूत्वा मृगैः सार्धं चरामि गहने वने ।
न तु ते ब्रह्महत्येयं भविष्यत्यविजानतः ॥ ०२७ ॥

मृगरूपधरं हत्वा मामेवं काममोहितम् ॥ ०२७ ॥

अस्य तु त्वं फलं मूढ प्राप्स्यसीदृशमेव हि ।
प्रियया सह संवासं प्राप्य कामविमोहितः ॥ ०२८ ॥

त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि ॥ ०२८ ॥

अन्तकाले च संवासं यया गन्तासि कान्तया ।
प्रेतराजवशं प्राप्तं सर्वभूतदुरत्ययम् ॥ ०२९ ॥

भक्त्या मतिमतां श्रेष्ठ सैव त्वामनुयास्यति ॥ ०२९ ॥

वर्तमानः सुखे दुःखं यथाहं प्रापितस्त्वया ।
तथा सुखं त्वां संप्राप्तं दुःखमभ्यागमिष्यति ॥ ०३० ॥

वैशंपायन उवाच ॥

एवमुक्त्वा सुदुःखार्तो जीवितात्स व्ययुज्यत ।
मृगः पाण्डुश्च शोकार्तः क्षणेन समपद्यत ॥ ०३१ ॥

# अध्याय ११०

वैशंपायन उवाच ॥

तं व्यतीतमतिक्रम्य राजा स्वमिव बान्धवम् ।
सभार्यः शोकदुःखार्तः पर्यदेवयदातुरः ॥ ००१ ॥

पाण्डुरुवाच ॥

सतामपि कुले जाताः कर्मणा बत दुर्गतिम् ।
प्राप्नुवन्त्यकृतात्मानः कामजालविमोहिताः ॥ ००२ ॥

शश्वद्धर्मात्मना जातो बाल एव पिता मम ।
जीवितान्तमनुप्राप्तः कामात्मैवेति नः श्रुतम् ॥ ००३ ॥

तस्य कामात्मनः क्षेत्रे राज्ञः संयतवागृषिः ।
कृष्णद्वैपायनः साक्षाद्भगवान्मामजीजनत् ॥ ००४ ॥

तस्याद्य व्यसने बुद्धिः सञ्जातेयं ममाधमा ।
त्यक्तस्य देवैरनयान्मृगयायां दुरात्मनः ॥ ००५ ॥

मोक्षमेव व्यवस्यामि बन्धो हि व्यसनं महत् ।
सुवृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम् ॥ ००६ ॥

अतीव तपसात्मानं योजयिष्याम्यसंशयम् ॥ ००६ ॥

तस्मादेकोऽहमेकाहमेकैकस्मिन्वनस्पतौ ।
चरन्भैक्षं मुनिर्मुण्डश्चरिष्यामि महीमिमाम् ॥ ००७ ॥

पांसुना समवच्छन्नः शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ ००८ ॥

न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः ।
निराशीर्निर्नमस्कारो निर्द्वन्द्वो निष्परिग्रहः ॥ ००९ ॥

न चाप्यवहसन्कञ्चिन्न कुर्वन्भ्रुकुटीं क्वचित् ।
प्रसन्नवदनो नित्यं सर्वभूतहिते रतः ॥ ०१० ॥

जङ्गमाजङ्गमं सर्वमविहिंसंश्चतुर्विधम् ।
स्वासु प्रजास्विव सदा समः प्राणभृतां प्रति ॥ ०११ ॥

एककालं चरन्भैक्षं कुलानि द्वे च पञ्च च ।
असंभवे वा भैक्षस्य चरन्ननशनान्यपि ॥ ०१२ ॥

अल्पमल्पं यथाभोज्यं पूर्वलाभेन जातु चित् ।
नित्यं नातिचर.णल्लाभे अलाभे सप्त पूरयन् ॥ ०१३ ॥

वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं प्रध्यायन्नुभयोस्तयोः ॥ ०१४ ॥

न जिजीविषुवत्किञ्चिन्न मुमूर्षुवदाचरन् ।
मरणं जीवितं चैव नाभिनन्दन्न च द्विषन् ॥ ०१५ ॥

याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः ।
ताः सर्वाः समतिक्रम्य निमेषादिष्ववस्थितः ॥ ०१६ ॥

तासु सर्वास्ववस्थासु त्यक्तसर्वेन्द्रियक्रियः ।
संपरित्यक्तधर्मात्मा सुनिर्णिक्तात्मकल्मषः ॥ ०१७ ॥

निर्मुक्तः सर्वपापेभ्यो व्यतीतः सर्ववागुराः ।

न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वनः ॥ ०१८ ॥

एतया सततं वृत्त्या चरन्नेवंप्रकारया ।
देहं संधारयिष्यामि निर्भयं मार्गमास्थितः ॥ ०१९ ॥

नाहं श्वाचरिते मार्गे अवीर्यकृपणोचिते ।
स्वधर्मात्सततापेते रमेयं वीर्यवर्जितः ॥ ०२० ॥

सत्कृतोऽसत्कृतो वापि योऽन्यां कृपणचक्षुषा ।
उपैति वृत्तिं कामात्मा स शुनां वर्तते पथि ॥ ०२१ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा सुदुःखार्तो निःश्वासपरमो नृपः ।
अवेक्षमाणः कुन्तीं च माद्रीं च समभाषत ॥ ०२२ ॥

कौसल्या विदुरः क्षत्ता राजा च सह बन्धुभिः ।
आर्या सत्यवती भीष्मस्ते च राजपुरोहिताः ॥ ०२३ ॥

ब्राह्मणाश्च महात्मानः सोमपाः संशितव्रताः ।
पौरवृद्धाश्च ये तत्र निवसन्त्यस्मदाश्रयाः ॥ ०२४ ॥

प्रसाद्य सर्वे वक्तव्याः पाण्डुः प्रव्रजितो वनम् ॥ ०२४ ॥

निशम्य वचनं भर्तुर्वनवासे धृतात्मनः ।
तत्समं वचनं कुन्ती माद्री च समभाषताम् ॥ ०२५ ॥

अन्येऽपि ह्याश्रमाः सन्ति ये शक्या भरतर्षभ ।
आवाभ्यां धर्मपत्नीभ्यां सह तप्त्वा तपो महत् ॥ ०२६ ॥

त्वमेव भविता सार्थः स्वर्गस्यापि न संशयः ॥ ०२६ ॥

प्रणिधायेन्द्रियग्रामं भर्तृलोकपरायणे ।
त्यक्तकामसुखे ह्यावां तप्स्यावो विपुलं तपः ॥ ०२७ ॥

यदि आवां महाप्राज्ञ त्यक्ष्यसि त्वं विशां पते ।
अद्यैवावां प्रहास्यावो जीतिवं नात्र संशयः ॥ ०२८ ॥

पाण्डुरुवाच ॥

यदि व्यवसितं ह्येतद्युवयोर्धर्मसंहितम् ।
स्ववृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम् ॥ ०२९ ॥

त्यक्तग्राम्यसुखाचारस्तप्यमानो महत्तपः ।
वल्कली फलमूलाशी चरिष्यामि महावने ॥ ०३० ॥

अग्निं जुह्वन्नुभौ कालावुभौ कालावुपस्पृशन् ।
कृशः परिमिताहारश्चीरचर्मजटाधरः ॥ ०३१ ॥

शीतवातातपसहः क्षुत्पिपासाश्रमान्वितः ।
तपसा दुश्चरेणेदं शरीरमुपशोषयन् ॥ ०३२ ॥

एकान्तशीली विमृशन्पक्वापक्वेन वर्तयन् ।
पितॄन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ॥ ०३३ ॥

वानप्रस्थजनस्यापि दर्शनं कुलवासिनाम् ।
नाप्रियाण्याचरञ्जातु किं पुनर्ग्रामवासिनाम् ॥ ०३४ ॥

एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिम् ।
काङ्क्षमाणोऽहमासिष्ये देहस्यास्य समापनात् ॥ ०३५ ॥

वैशंपायन उवाच ॥

इत्येवमुक्त्वा भार्ये ते राजा कौरववंशजः ।
ततश्चूडामणिं निष्कमङ्गदे कुण्डलानि च ॥ ०३६ ॥

वासांसि च महार्हाणि स्त्रीणामाभरणानि च ॥ ०३६ ॥

प्रदाय सर्वं विप्रेभ्यः पाण्डुः पुनरभाषत ।
गत्वा नागपुरं वाच्यं पाण्डुः प्रव्रजितो वनम् ॥ ०३७ ॥

अर्थं कामं सुखं चैव रतिं च परमात्मिकाम् ।
प्रतस्थे सर्वमुत्सृज्य सभार्यः कुरुपुङ्गवः ॥ ०३८ ॥

ततस्तस्यानुयात्राणि ते चैव परिचारकाः ।
श्रुत्वा भरतसिंहस्य विविधाः करुणा गिरः ॥ ०३९ ॥

भीममार्तस्वरं कृत्वा हाहेति परिचुक्रुशुः ॥ ०३९ ॥

उष्णमश्रु विमुञ्चन्तस्तं विहाय महीपतिम् ।
ययुर्नागपुरं तूर्णं सर्वमादाय तद्वचः ॥ ०४० ॥

श्रुत्वा च तेभ्यस्तत्सर्वं यथावृत्तं महावने ।
धृतराष्ट्रो नरश्रेष्ठः पाण्डुमेवान्वशोचत ॥ ०४१ ॥

राजपुत्रस्तु कौरव्यः पाण्डुर्मूलफलाशनः ।
जगाम सह भार्याभ्यां ततो नागसभं गिरिम् ॥ ०४२ ॥

स चैत्ररथमासाद्य वारिषेणमतीत्य च ।
हिमवन्तमतिक्रम्य प्रययौ गन्धमादनम् ॥ ०४३ ॥

रक्ष्यमाणो महाभूतैः सिद्धैश्च परमर्षिभिः ।
उवास स तदा राजा समेषु विषमेषु च ॥ ०४४ ॥

इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च ।
शतशृङ्गे महाराज तापसः समपद्यत ॥ ०४५ ॥

---

# अध्याय १११

वैशंपायन उवाच ॥

तत्रापि तपसि श्रेष्ठे वर्तमानः स वीर्यवान् ।
सिद्धचारणसंघानां बभूव प्रियदर्शनः ॥ ००१ ॥

शुश्रूषुरनहंवादी संयतात्मा जितेन्द्रियः ।
स्वर्गं गन्तुं पराक्रान्तः स्वेन वीर्येण भारत ॥ ००२ ॥

केषाञ्चिदभवद्भ्राता केषाञ्चिदभवत्सखा ।
ऋषयस्त्वपरे चैनं पुत्रवत्पर्यपालयन् ॥ ००३ ॥

स तु कालेन महता प्राप्य निष्कल्मषं तपः ।
ब्रह्मर्षिसदृशः पाण्डुर्बभूव भरतर्षभ ॥ ००४ ॥

स्वर्गपारं तितीर्षन्स शतशृङ्गादुदङ्मुखः ।
प्रतस्थे सह पत्नीभ्यामब्रुवंस्तत्र तापसाः ॥ ००५ ॥

उपर्युपरि गच्छन्तः शैलराजमुदङ्मुखाः ॥ ००५ ॥

दृष्टवन्तो गिरेरस्य दुर्गान्देशान्बहून्वयम् ।
आक्रीडभूतान्देवानां गन्धर्वाप्सरसां तथा ॥ ००६ ॥

उद्यानानि कुबेरस्य समानि विषमाणि च ।
महानदीनितम्बांश्च दुर्गांश्च गिरिगह्वरान् ॥ ००७ ॥

सन्ति नित्यहिमा देशा निर्वृक्षमृगपक्षिणः ।
सन्ति केचिन्महावर्षा दुर्गाः केचिद्दुरासदाः ॥ ००८ ॥

अतिक्रामेन्न पक्षी यान्कुत एवेतरे मृगाः ।
वायुरेकोऽतिगाद्यत्र सिद्धाश्च परमर्षयः ॥ ००९ ॥

गच्छन्त्यौ शैलराजेऽस्मिन्राजपुत्र्यौ कथं त्विमे ।
न सीदेतामदुःखार्हे मा गमो भरतर्षभ ॥ ०१० ॥

पाण्डुरुवाच ॥

अप्रजस्य महाभागा न द्वारं परिचक्षते ।
स्वर्गे तेनाभितप्तोऽहमप्रजस्तद्ब्रवीमि वः ॥ ०११ ॥

ऋणैश्चतुर्भिः संयुक्ता जायन्ते मनुजा भुवि ।
पितृदेवर्षिमनुजदेयैः शतसहस्रशः ॥ ०१२ ॥

एतानि तु यथाकालं यो न बुध्यति मानवः ।
न तस्य लोकाः सन्तीति धर्मविद्भिः प्रतिष्ठितम् ॥ ०१३ ॥

यज्ञैश्च देवान्प्रीणाति स्वाध्यायतपसा मुनीन् ।
पुत्रैः श्राद्धैः पितॄंश्चापि आनृशंस्येन मानवान् ॥ ०१४ ॥

ऋषिदेवमनुष्याणां परिमुक्तोऽस्मि धर्मतः ।
पित्र्यादृणादनिर्मुक्तस्तेन तप्ये तपोधनाः ॥ ०१५ ॥

देहनाशे ध्रुवो नाशः पितृणामेष निश्चयः ।
इह तस्मात्प्रजाहेतोः प्रजायन्ते नरोत्तमाः ॥ ०१६ ॥

यथैवाहं पितुः क्षेत्रे सृष्टस्तेन महात्मना ।
तथैवास्मिन्मम क्षेत्रे कथं वै संभवेत्प्रजा ॥ ०१७ ॥

तापसा ऊचुः ॥

अस्ति वै तव धर्मात्मन्विद्म देवोपमं शुभम् ।
अपत्यमनघं राजन्वयं दिव्येन चक्षुषा ॥ ०१८ ॥

दैवदिष्टं नरव्याघ्र कर्मणेहोपपादय ।
अक्लिष्टं फलमव्यग्रो विन्दते बुद्धिमान्नरः ॥ ०१९ ॥

तस्मिन्दृष्टे फले तात प्रयत्नं कर्तुमर्हसि ।
अपत्यं गुणसंपन्नं लब्ध्वा प्रीतिमवाप्स्यसि ॥ ०२० ॥

वैशंपायन उवाच ॥

तच्छ्रुत्वा तापसवचः पाण्डुश्चिन्तापरोऽभवत् ।
आत्मनो मृगशापेन जानन्नुपहतां क्रियाम् ॥ ०२१ ॥

सोऽब्रवीद्विजने कुन्तीं धर्मपत्नीं यशस्विनीम् ।
अपत्योत्पादने योगमापदि प्रसमर्थयन् ॥ ०२२ ॥

अपत्यं नाम लोकेषु प्रतिष्ठा धर्मसंहिता ।
इति कुन्ति विदुर्धीराः शाश्वतं धर्ममादितः ॥ ०२३ ॥

इष्टं दत्तं तपस्तप्तं नियमश्च स्वनुष्ठितः ।
सर्वमेवानपत्यस्य न पावनमिहोच्यते ॥ ०२४ ॥

सोऽहमेवं विदित्वैतत्प्रपश्यामि शुचिस्मिते ।
अनपत्यः शुभा.ण्ल्लोकान्नावाप्स्यामीति चिन्तयन् ॥ ०२५ ॥

मृगाभिशापान्नष्टं मे प्रजनं ह्यकृतात्मनः ।
नृशंसकारिणो भीरु यथैवोपहतं तथा ॥ ०२६ ॥

इमे वै बन्धुदायादाः षट्पुत्रा धर्मदर्शने ।
षडेवाबन्धुदायादाः पुत्रास्ताञ्शृणु मे पृथे ॥ ०२७ ॥

स्वयञ्जातः प्रणीतश्च परिक्रीतश्च यः सुतः ।
पौनर्भवश्च कानीनः स्वैरिण्यां यश्च जायते ॥ ०२८ ॥

दत्तः क्रीतः कृत्रिमश्च उपगच्छेत्स्वयं च यः ।
सहोढो जातरेताश्च हीनयोनिधृतश्च यः ॥ ०२९ ॥

पूर्वपूर्वतमाभावे मत्वा लिप्सेत वै सुतम् ।
उत्तमादवराः पुंसः काङ्क्षन्ते पुत्रमापदि ॥ ०३० ॥

अपत्यं धर्मफलदं श्रेष्ठं विन्दन्ति साधवः ।
आत्मशुक्रादपि पृथे मनुः स्वायम्भुवोऽब्रवीत् ॥ ०३१ ॥

तस्मात्प्रहेष्याम्यद्य त्वां हीनः प्रजननात्स्वयम् ।
सदृशाच्छ्रेयसो वा त्वं विद्ध्यपत्यं यशस्विनि ॥ ०३२ ॥

शृणु कुन्ति कथां चेमां शारदण्डायनीं प्रति ।
या वीरपत्नी गुरुभिर्नियुक्तापत्यजन्मनि ॥ ०३३ ॥

पुष्पेण प्रयता स्नाता निशि कुन्ति चतुष्पथे ।
वरयित्वा द्विजं सिद्धं हुत्वा पुंसवनेऽनलम् ॥ ०३४ ॥

कर्मण्यवसिते तस्मिन्सा तेनैव सहावसत् ।
तत्र त्रीञ्जनयामास दुर्जयादीन्महारथान् ॥ ०३५ ॥

तथा त्वमपि कल्याणि ब्राह्मणात्तपसाधिकात् ।
मन्नियोगाद्यत क्षिप्रमपत्योत्पादनं प्रति ॥ ०३६ ॥

---

# अध्याय ११२

वैशंपायन उवाच ॥

एवमुक्ता महाराज कुन्ती पाण्डुमभाषत ।
कुरूणामृषभं वीरं तदा भूमिपतिं पतिम् ॥ ००१ ॥

न मामर्हसि धर्मज्ञ वक्तुमेवं कथञ्चन ।
धर्मपत्नीमभिरतां त्वयि राजीवलोचन ॥ ००२ ॥

त्वमेव तु महाबाहो मय्यपत्यानि भारत ।
वीर वीर्योपपन्नानि धर्मतो जनयिष्यसि ॥ ००३ ॥

स्वर्गं मनुजशार्दूल गच्छेयं सहिता त्वया ।
अपत्याय च मां गच्छ त्वमेव कुरुनन्दन ॥ ००४ ॥

न ह्यहं मनसाप्यन्यं गच्छेयं त्वदृते नरम् ।
त्वत्तः प्रतिविशिष्टश्च कोऽन्योऽस्ति भुवि मानवः ॥ ००५ ॥

इमां च तावद्धर्म्यां त्वं पौराणीं शृणु मे कथाम् ।
परिश्रुतां विशालाक्ष कीर्तयिष्यामि यामहम् ॥ ००६ ॥

व्युषिताश्व इति ख्यातो बभूव किल पार्थिवः ।
पुरा परमधर्मिष्ठः पूरोर्वंशविवर्धनः ॥ ००७ ॥

तस्मिंश्च यजमाने वै धर्मात्मनि महात्मनि ।
उपागमंस्ततो देवाः सेन्द्राः सह महर्षिभिः ॥ ००८ ॥

अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
व्युषिताश्वस्य राजर्षेस्ततो यज्ञे महात्मनः ॥ ००९ ॥

व्युषिताश्वस्ततो राजन्नति मर्त्यान्व्यरोचत ।
सर्वभूतान्यति यथा तपनः शिशिरात्यये ॥ ०१० ॥

स विजित्य गृहीत्वा च नृपतीन्राजसत्तमः ।
प्राच्यानुदीच्यान्मध्यांश्च दक्षिणात्यानकालयत् ॥ ०११ ॥

अश्वमेधे महायज्ञे व्युषिताश्वः प्रतापवान् ।
बभूव स हि राजेन्द्रो दशनागबलान्वितः ॥ ०१२ ॥

अप्यत्र गाथां गायन्ति ये पुराणविदो जनाः ।
व्युषिताश्वः समुद्रान्तां विजित्येमां वसुंधराम् ॥ ०१३ ॥

अपालयत्सर्ववर्णान्पिता पुत्रानिवौरसान् ॥ ०१३ ॥

यजमानो महायज्ञैर्ब्राह्मणेभ्यो ददौ धनम् ।
अनन्तरत्नान्यादाय आजहार महाक्रतून् ॥ ०१४ ॥

सुषाव च बहून्सोमान्सोमसंस्थास्तताान च ॥ ०१४ ॥

आसीत्काक्षीवती चास्य भार्या परमसंमता ।
भद्रा नाम मनुष्येन्द्र रूपेणासदृशी भुवि ॥ ०१५ ॥

कामयामासतुस्तौ तु परस्परमिति श्रुतिः ।
स तस्यां कामसंमत्तो यक्ष्माणं समपद्यत ॥ ०१६ ॥

तेनाचिरेण कालेन जगामास्तमिवांशुमान् ।
तस्मिन्प्रेते मनुष्येन्द्रे भार्यास्य भृशदुःखिता ॥ ०१७ ॥

अपुत्रा पुरुषव्याघ्र विललापेति नः श्रुतम् ।
भद्रा परमदुःखार्ता तन्निबोध नराधिप ॥ ०१८ ॥

नारी परमधर्मज्ञ सर्वा पुत्रविनाकृता ।
पतिं विना जीवति या न सा जीवति दुःखिता ॥ ०१९ ॥

पतिं विना मृतं श्रेयो नार्याः क्षत्रियपुङ्गव ।
त्वद्गतिं गन्तुमिच्छामि प्रसीदस्व नयस्व माम् ॥ ०२० ॥

त्वया हीना क्षणमपि नाहं जीवितुमुत्सहे ।
प्रसादं कुरु मे राजन्नितस्तूर्णं नयस्व माम् ॥ ०२१ ॥

पृष्ठतोऽनुगमिष्यामि समेषु विषमेषु च ।
त्वामहं नरशार्दूल गच्छन्तमनिवर्तिनम् ॥ ०२२ ॥

छायेवानपगा राजन्सततं वशवर्तिनी ।
भविष्यामि नरव्याघ्र नित्यं प्रियहिते रता ॥ ०२३ ॥

अद्य प्रभृति मां राजन्कष्टा हृदयशोषणाः ।
आधयोऽभिभविष्यन्ति त्वदृते पुष्करेक्षण ॥ ०२४ ॥

अभाग्यया मया नूनं वियुक्ताः सहचारिणः ।
संयोगा विप्रयुक्ता वा पूर्वदेहेषु पार्थिव ॥ ०२५ ॥

तदिदं कर्मभिः पापैः पूर्वदेहेषु सञ्चितम् ।
दुःखं मामनुसंप्राप्तं राजंस्त्वद्विप्रयोगजम् ॥ ०२६ ॥

अद्य प्रभृत्यहं राजन्कुशप्रस्तरशायिनी ।
भविष्याम्यसुखाविष्टा त्वद्दर्शनपरायणा ॥ ०२७ ॥

दर्शयस्व नरव्याघ्र साधु मामसुखान्विताम् ।
दीनामनाथां कृपणां विलपन्तीं नरेश्वर ॥ ०२८ ॥

एवं बहुविधं तस्यां विलपन्त्यां पुनः पुनः ।
तं शवं संपरिष्वज्य वाक्किलान्तर्हिताब्रवीत् ॥ ०२९ ॥

उत्तिष्ठ भद्रे गच्छ त्वं ददानीह वरं तव ।
जनयिष्याम्यपत्यानि त्वय्यहं चारुहासिनि ॥ ०३० ॥

आत्मीये च वरारोहे शयनीये चतुर्दशीम् ।
अष्टमीं वा ऋतुस्नाता संविशेथा मया सह ॥ ०३१ ॥

एवमुक्ता तु सा देवी तथा चक्रे पतिव्रता ।
यथोक्तमेव तद्वाक्यं भद्रा पुत्रार्थिनी तदा ॥ ०३२ ॥

सा तेन सुषुवे देवी शवेन मनुजाधिप ।
त्रीञ्शाल्वांश्चतुरो मद्रान्सुतान्भरतसत्तम ॥ ०३३ ॥

तथा त्वमपि मय्येव मनसा भरतर्षभ ।
शक्तो जनयितुं पुत्रांस्तपोयोगबलान्वयात् ॥ ०३४ ॥

---

# अध्याय ११३

वैशंपायन उवाच ॥

एवमुक्तस्तया राजा तां देवीं पुनरब्रवीत् ।
धर्मविद्धर्मसंयुक्तमिदं वचनमुत्तमम् ॥ ००१ ॥

एवमेतत्पुरा कुन्ति व्युषिताश्वश्चकार ह ।
यथा त्वयोक्तं कल्याणि स ह्यासीदमरोपमः ॥ ००२ ॥

अथ त्विमं प्रवक्ष्यामि धर्मं त्वेतं निबोध मे ।
पुराणमृषिभिर्दृष्टं धर्मविद्भिर्महात्मभिः ॥ ००३ ॥

अनावृताः किल पुरा स्त्रिय आसन्वरानने ।
कामचारविहारिण्यः स्वतन्त्राश्चारुलोचने ॥ ००४ ॥

तासां व्युच्चरमाणानां कौमारात्सुभगे पतीन् ।
नाधर्मोऽभूद्वरारोहे स हि धर्मः पुराभवत् ॥ ००५ ॥

तं चैव धर्मं पौराणं तिर्यग्योनिगताः प्रजाः ।
अद्याप्यनुविधीयन्ते कामद्वेषविवर्जिताः ॥ ००६ ॥

पुराणदृष्टो धर्मोऽयं पूज्यते च महर्षिभिः ॥ ००६ ॥

उत्तरेषु च रम्भोरु कुरुष्वद्यापि वर्तते ।
स्त्रीणामनुग्रहकरः स हि धर्मः सनातनः ॥ ००७ ॥

अस्मिंस्तु लोके नचिरान्मर्यादेयं शुचिस्मिते ।
स्थापिता येन यस्माच्च तन्मे विस्तरतः शृणु ॥ ००८ ॥

बभूवोद्दालको नाम महर्षिरिति नः श्रुतम् ।
श्वेतकेतुरिति ख्यातः पुत्रस्तस्याभवन्मुनिः ॥ ००९ ॥

मर्यादेयं कृता तेन मानुषेष्विति नः श्रुतम् ।
कोपात्कमलपत्राक्षि यदर्थं तन्निबोध मे ॥ ०१० ॥

श्वेतकेतोः किल पुरा समक्षं मातरं पितुः ।
जग्राह ब्राह्मणः पाणौ गच्छाव इति चाब्रवीत् ॥ ०११ ॥

ऋषिपुत्रस्ततः कोपं चकारामर्षितस्तदा ।
मातरं तां तथा दृष्ट्वा नीयमानां बलादिव ॥ ०१२ ॥

क्रुद्धं तं तु पिता दृष्ट्वा श्वेतकेतुमुवाच ह ।
मा तात कोपं कार्षीस्त्वमेष धर्मः सनातनः ॥ ०१३ ॥

अनावृता हि सर्वेषां वर्णानामङ्गना भुवि ।
यथा गावः स्थितास्तात स्वे स्वे वर्णे तथा प्रजाः ॥ ०१४ ॥

ऋषिपुत्रोऽथ तं धर्मं श्वेतकेतुर्न चक्षमे ।
चकार चैव मर्यादामिमां स्त्रीपुंसयोर्भुवि ॥ ०१५ ॥

मानुषेषु महाभागे न त्वेवान्येषु जन्तुषु ।
तदा प्रभृति मर्यादा स्थितेयमिति नः श्रुतम् ॥ ०१६ ॥

व्युच्चरन्त्याः पतिं नार्या अद्य प्रभृति पातकम् ।
भ्रूणहत्याकृतं पापं भविष्यत्यसुखावहम् ॥ ०१७ ॥

भार्यां तथा व्युच्चरतः कौमारीं ब्रह्मचारिणीम् ।
पतिव्रतामेतदेव भविता पातकं भुवि ॥ ०१८ ॥

पत्या नियुक्ता या चैव पत्न्यपत्यार्थमेव च ।
न करिष्यति तस्याश्च भविष्यत्येतदेव हि ॥ ०१९ ॥

इति तेन पुरा भीरु मर्यादा स्थापिता बलात् ।
उद्दालकस्य पुत्रेण धर्म्या वै श्वेतकेतुना ॥ ०२० ॥

सौदासेन च रम्भोरु नियुक्तापत्यजन्मनि ।
मदयन्ती जगामर्षिं वसिष्ठमिति नः श्रुतम् ॥ ०२१ ॥

तस्माल्लेभे च सा पुत्रमश्मकं नाम भामिनी ।
भार्या कल्माषपादस्य भर्तुः प्रियचिकीर्षया ॥ ०२२ ॥

अस्माकमपि ते जन्म विदितं कमलेक्षणे ।
कृष्णद्वैपायनाद्भीरु कुरूणां वंशवृद्धये ॥ ०२३ ॥

अत एतानि सर्वाणि कारणानि समीक्ष्य वै ।
ममैतद्वचनं धर्म्यं कर्तुमर्हस्यनिन्दिते ॥ ०२४ ॥

ऋतावृतौ राजपुत्रि स्त्रिया भर्ता यतव्रते ।
नातिवर्तव्य इत्येवं धर्मं धर्मविदो विदुः ॥ ०२५ ॥

शेषेष्वन्येषु कालेषु स्वातन्त्र्यं स्त्री किलार्हति ।
धर्ममेतं जनाः सन्तः पुराणं परिचक्षते ॥ ०२६ ॥

भर्ता भार्यां राजपुत्रि धर्म्यं वाधर्म्यमेव वा ।
यद्ब्रूयात्तत्तथा कार्यमिति धर्मविदो विदुः ॥ ०२७ ॥

विशेषतः पुत्रगृद्धी हीनः प्रजननात्स्वयम् ।
यथाहमनवद्याङ्गि पुत्रदर्शनलालसः ॥ ०२८ ॥

तथा रक्ताङ्गुलितलः पद्मपत्रनिभः शुभे ।
प्रसादार्थं मया तेऽयं शिरस्यभ्युद्यतोऽञ्जलिः ॥ ०२९ ॥

मन्नियोगात्सुकेशान्ते द्विजातेस्तपसाधिकात् ।
पुत्रान्गुणसमायुक्तानुत्पादयितुमर्हसि ॥ ०३० ॥

त्वत्कृतेऽहं पृथुश्रोणि गच्छेयं पुत्रिणां गतिम् ॥ ०३० ॥

एवमुक्ता ततः कुन्ती पाण्डुं परपुरञ्जयम् ।
प्रत्युवाच वरारोहा भर्तुः प्रियहिते रता ॥ ०३१ ॥

पितृवेश्मन्यहं बाला नियुक्तातिथिपूजने ।
उग्रं पर्यचरं तत्र ब्राह्मणं संशितव्रतम् ॥ ०३२ ॥

निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमहं संशितात्मानं सर्वयत्नैरतोषयम् ॥ ०३३ ॥

स मेऽभिचारसंयुक्तमाचष्ट भगवान्वरम् ।
मन्त्रग्रामं च मे प्रादादब्रवीच्चैव मामिदम् ॥ ०३४ ॥

यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
अकामो वा सकामो वा स ते वशमुपैष्यति ॥ ०३५ ॥

इत्युक्ताहं तदा तेन पितृवेश्मनि भारत ।
ब्राह्मणेन वचस्तथ्यं तस्य कालोऽयमागतः ॥ ०३६ ॥

अनुज्ञाता त्वया देवमाह्वयेयमहं नृप ।
तेन मन्त्रेण राजर्षे यथा स्यान्नौ प्रजा विभो ॥ ०३७ ॥

आवाहयामि कं देवं ब्रूहि तत्त्वविदां वर ।
त्वत्तोऽनुज्ञाप्रतीक्षां मां विद्ध्यस्मिन्कर्मणि स्थिताम् ॥ ०३८ ॥

पाण्डुरुवाच ॥

अद्यैव त्वं वरारोहे प्रयतस्व यथाविधि ।
धर्ममावाहय शुभे स हि देवेषु पुण्यभाक् ॥ ०३९ ॥

अधर्मेण न नो धर्मः संयुज्येत कथञ्चन ।

लोकश्चायं वरारोहे धर्मोऽयमिति मंस्यते ॥ ०४० ॥

धार्मिकश्च कुरूणां स भविष्यति न संशयः ।
दत्तस्यापि च धर्मेण नाधर्मे रंस्यते मनः ॥ ०४१ ॥

तस्माद्धर्मं पुरस्कृत्य नियता त्वं शुचिस्मिते ।
उपचाराभिचाराभ्यां धर्ममाराधयस्व वै ॥ ०४२ ॥

वैशंपायन उवाच ॥

सा तथोक्ता तथेत्युक्त्वा तेन भर्त्रा वराङ्गना ।
अभिवाद्याभ्यनुज्ञाता प्रदक्षिणमवर्तत ॥ ०४३ ॥

---

# अध्याय ११४

वैशंपायन उवाच ॥

संवत्सराहिते गर्भे गान्धार्या जनमेजय ।
आह्वयामास वै कुन्ती गर्भार्थं धर्ममच्युतम् ॥ ००१ ॥

सा बलिं त्वरिता देवी धर्मायोपजहार ह ।
जजाप जप्यं विधिवद्दत्तं दुर्वाससा पुरा ॥ ००२ ॥

सङ्गम्य सा तु धर्मेण योगमूर्तिधरेण वै ।
लेभे पुत्रं वरारोहा सर्वप्राणभृतां वरम् ॥ ००३ ॥

ऐन्द्रे चन्द्रसमायुक्ते मुहूर्तेऽभिजितेऽष्टमे ।

दिवा मध्यगते सूर्ये तिथौ पुण्येऽभिपूजिते ॥ ००४ ॥

समृद्धयशसं कुन्ती सुषाव समये सुतम् ।
जातमात्रे सुते तस्मिन्वागुवाचाशरीरिणी ॥ ००५ ॥

एष धर्मभृतां श्रेष्ठो भविष्यति न संशयः ।
युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजः सुतः ॥ ००६ ॥

भविता प्रथितो राजा त्रिषु लोकेषु विश्रुतः ।
यशसा तेजसा चैव वृत्तेन च समन्वितः ॥ ००७ ॥

धार्मिकं तं सुतं लब्ध्वा पाण्डुस्तां पुनरब्रवीत् ।
प्राहुः क्षत्रं बलज्येष्ठं बलज्येष्ठं सुतं वृणु ॥ ००८ ॥

ततस्तथोक्ता पत्या तु वायुमेवाजुहाव सा ।
तस्माज्जज्ञे महाबाहुर्भीमो भीमपराक्रमः ॥ ००९ ॥

तमप्यतिबलं जातं वागभ्यवदद्च्युतम् ।
सर्वेषां बलिनां श्रेष्ठो जातोऽयमिति भारत ॥ ०१० ॥

इदमत्यद्भुतं चासीज्जातमात्रे वृकोदरे ।
यदङ्कात्पतितो मातुः शिलां गात्रैरचूर्णयत् ॥ ०११ ॥

कुन्ती व्याघ्रभयोद्विग्ना सहसोत्पतिता किल ।
नान्वबुध्यत संसुप्तमुत्सङ्गे स्वे वृकोदरम् ॥ ०१२ ॥

ततः स वज्रसंघातः कुमारोऽभ्यपतद्गिरौ ।
पतता तेन शतधा शिला गात्रैर्विचूर्णिता ॥ ०१३ ॥

तां शिलां चूर्णितां दृष्ट्वा पाण्डुर्विस्मयमागमत् ॥ ०१३ ॥

यस्मिन्नहनि भीमस्तु जज्ञे भरतसत्तम ।
दुर्योधनोऽपि तत्रैव प्रजज्ञे वसुधाधिप ॥ ०१४ ॥

जाते वृकोदरे पाण्डुरिदं भूयोऽन्वचिन्तयत् ।
कथं नु मे वरः पुत्रो लोकश्रेष्ठो भवेदिति ॥ ०१५ ॥

दैवे पुरुषकारे च लोकोऽयं हि प्रतिष्ठितः ।
तत्र दैवं तु विधिना कालयुक्तेन लभ्यते ॥ ०१६ ॥

इन्द्रो हि राजा देवानां प्रधान इति नः श्रुतम् ।
अप्रमेयबलोत्साहो वीर्यवानमितद्युतिः ॥ ०१७ ॥

तं तोषयित्वा तपसा पुत्रं लप्स्ये महाबलम् ।
यं दास्यति स मे पुत्रं स वरीयान्भविष्यति ॥ ०१८ ॥

कर्मणा मनसा वाचा तस्मात्तप्स्ये महत्तपः ॥ ०१८ ॥

ततः पाण्डुर्महातेजा मन्त्रयित्वा महर्षिभिः ।
दिदेश कुन्त्याः कौरव्यो व्रतं सांवत्सरं शुभम् ॥ ०१९ ॥

आत्मना च महाबाहुरेकपादस्थितोऽभवत् ।
उग्रं स तप आतस्थे परमेण समाधिना ॥ ०२० ॥

आरिराधयिषुर्देवं त्रिदशानां तमीश्वरम् ।
सूर्येण सह धर्मात्मा पर्यवर्तत भारत ॥ ०२१ ॥

तं तु कालेन महता वासवः प्रत्यभाषत ।
पुत्रं तव प्रदास्यामि त्रिषु लोकेषु विश्रुतम् ॥ ०२२ ॥

देवानां ब्राह्मणानां च सुहृदां चार्थसाधकम् ।
सुतं तेऽग्र्यं प्रदास्यामि सर्वामित्रविनाशनम् ॥ ०२३ ॥

इत्युक्तः कौरवो राजा वासवेन महात्मना ।
उवाच कुन्तीं धर्मात्मा देवराजवचः स्मरन् ॥ ०२४ ॥

नीतिमन्तं महात्मानमादित्यसमतेजसम् ।
दुराधर्षं क्रियावन्तमतीवाद्भुतदर्शनम् ॥ ०२५ ॥

पुत्रं जनय सुश्रोणि धाम क्षत्रियतेजसाम् ।
लब्धः प्रसादो देवेन्द्रात्तमाह्वय शुचिस्मिते ॥ ०२६ ॥

एवमुक्ता ततः शक्रमाजुहाव यशस्विनी ।
अथाजगाम देवेन्द्रो जनयामास चार्जुनम् ॥ ०२७ ॥

जातमात्रे कुमारे तु वागुवाचाशरीरिणी ।
महागम्भीरनिर्घोषा नभो नादयती तदा ॥ ०२८ ॥

कार्तवीर्यसमः कुन्ति शिबितुल्यपराक्रमः ।
एष शक्र इवाजेयो यशस्ते प्रथयिष्यति ॥ ०२९ ॥

अदित्या विष्णुना प्रीतिर्यथाभूदभिवर्धिता ।
तथा विष्णुसमः प्रीतिं वर्धयिष्यति तेऽर्जुनः ॥ ०३० ॥

एष मद्रान्वशे कृत्वा कुरूंश्च सह केकयैः ।
चेदिकाशिकरूषांश्च कुरुलक्ष्म सुधास्यति ॥ ०३१ ॥

एतस्य भुजवीर्येण खाण्डवे हव्यवाहनः ।
मेदसा सर्वभूतानां तृप्तिं यास्यति वै पराम् ॥ ०३२ ॥

ग्रामणीश्च महीपालानेष जित्वा महाबलः ।
भ्रातृभिः सहितो वीरस्त्रीन्मेधानाहरिष्यति ॥ ०३३ ॥

जामदग्न्यसमः कुन्ति विष्णुतुल्यपराक्रमः ।
एष वीर्यवतां श्रेष्ठो भविष्यत्यपराजितः ॥ ०३४ ॥

तथा दिव्यानि चास्त्राणि निखिलान्याहरिष्यति ।
विप्रनष्टां श्रियं चायमाहर्ता पुरुषर्षभः ॥ ०३५ ॥

एतामत्यद्भुतां वाचं कुन्तीपुत्रस्य सूतके ।
उक्तवान्वायुराकाशे कुन्ती शुश्राव चास्य ताम् ॥ ०३६ ॥

वाचमुच्चारितामुच्चैस्तां निशम्य तपस्विनाम् ।
बभूव परमो हर्षः शतशृङ्गनिवासिनाम् ॥ ०३७ ॥

तथा देवऋषीणां च सेन्द्राणां च दिवौकसाम् ।
आकाशे दुन्दुभीनां च बभूव तुमुलः स्वनः ॥ ०३८ ॥

उदतिष्ठन्महाघोषः पुष्पवृष्टिभिरावृतः ।
समवेत्य च देवानां गणाः पार्थमपूजयन् ॥ ०३९ ॥

काद्रवेया वैनतेया गन्धर्वाप्सरसस्तथा ।
प्रजानां पतयः सर्वे सप्त चैव महर्षयः ॥ ०४० ॥

भरद्वाजः कश्यपो गौतमश्च ; विश्वामित्रो जमदग्निर्वसिष्ठः ।
यश्चोदितो भास्करेऽभूत्प्रनष्टे ; सोऽप्यत्रात्रिर्भगवानाजगाम ॥ ०४१ ॥

मरीचिरङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः ।
दक्षः प्रजापतिश्चैव गन्धर्वाप्सरसस्तथा ॥ ०४२ ॥

दिव्यमाल्याम्बरधराः सर्वालङ्कारभूषिताः ।
उपगायन्ति बीभत्सुमुपनृत्यन्ति चाप्सराः ॥ ०४३ ॥

गन्धर्वैः सहितः श्रीमान्प्रागायत च तुम्बुरुः ॥ ०४३ ॥

भीमसेनोग्रसेनौ च ऊर्णायुरनघस्तथा ।
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः ॥ ०४४ ॥

युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा ।
त्रयोदशः शालिशिराः पर्जन्यश्च चतुर्दशः ॥ ०४५ ॥

कलिः पञ्चदशश्चात्र नारदश्चैव षोडशः ।
सद्वा बृहद्वा बृहकः करालश्च महायशाः ॥ ०४६ ॥

ब्रह्मचारी बहुगुणः सुपर्णश्चेति विश्रुतः ।
विश्वावसुर्भुमन्युश्च सुचन्द्रो दशमस्तथा ॥ ०४७ ॥

गीतमाधुर्यसंपन्नौ विख्यातौ च हहाहुहू ।
इत्येते देवगन्धर्वा जगुस्तत्र नरर्षभम् ॥ ०४८ ॥

तथैवाप्सरसो हृष्टाः सर्वालङ्कारभूषिताः ।
ननृतुर्वै महाभागा जगुश्चायतलोचनाः ॥ ०४९ ॥

अनूना चानवद्या च प्रियमुख्या गुणावरा ।
अद्रिका च तथा साची मिश्रकेशी अलम्बुसा ॥ ०५० ॥

मरीचिः शिचुका चैव विद्युत्पर्णा तिलोत्तमा ।
अग्निका लक्षणा क्षेमा देवी रम्भा मनोरमा ॥ ०५१ ॥

असिता च सुबाहुश्च सुप्रिया सुवपुस्तथा ।
पुण्डरीका सुगन्धा च सुरथा च प्रमाथिनी ॥ ०५२ ॥

काम्या शारद्वती चैव ननृतुस्तत्र संघशः ।
मेनका सहजन्या च पर्णिका पुञ्जिकस्थला ॥ ०५३ ॥

क्रतुस्थला घृताची च विश्वाची पूर्वचित्त्यपि ।
उम्लोचेत्यभिविख्याता प्रम्लोचेति च ता दश ॥ ०५४ ॥

उर्वश्येकादशीत्येता जगुरायतलोचनाः ॥ ०५४ ॥

धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान्पूषा च त्वष्टा च सविता तथा ॥ ०५५ ॥

पर्जन्यश्चैव विष्णुश्च आदित्याः पावकार्चिषः ।
महिमानं पाण्डवस्य वर्धयन्तोऽम्बरे स्थिताः ॥ ०५६ ॥

मृगव्याधश्च शर्वश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परंतपः ॥ ०५७ ॥

दहनोऽथेश्वरश्चैव कपाली च विशां पते ।
स्थाणुर्भवश्च भगवान्रुद्रास्तत्रावतस्थिरे ॥ ०५८ ॥

अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः ।
विश्वेदेवास्तथा साध्यास्तत्रासन्परिसंस्थिताः ॥ ०५९ ॥

कर्कोटकोऽथ शेषश्च वासुकिश्च भुजङ्गमः ।
कच्छपश्चापकुण्डश्च तक्षकश्च महोरगः ॥ ०६० ॥

आययुस्तेजसा युक्ता महाक्रोधा महाबलाः ।
एते चान्ये च बहवस्तत्र नागा व्यवस्थिताः ॥ ०६१ ॥

तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्चासितध्वजः ।
अरुणश्चारुणिश्चैव वैनतेया व्यवस्थिताः ॥ ०६२ ॥

तद्दृष्ट्वा महदाश्चर्यं विस्मिता मुनिसत्तमाः ।
अधिकां स्म ततो वृत्तिमवर्तन्पाण्डवान्प्रति ॥ ०६३ ॥

पाण्डुस्तु पुनरेवैनां पुत्रलोभान्महायशाः ।
प्राहिणोद्दर्शनीयाङ्गीं कुन्ती त्वेनमथाब्रवीत् ॥ ०६४ ॥

नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत ।
अतः परं चारिणी स्यात्पञ्चमे बन्धकी भवेत् ॥ ०६५ ॥

स त्वं विद्वन्धर्ममिमं बुद्धिगम्यं कथं नु माम् ।
अपत्यार्थं समुत्क्रम्य प्रमादादिव भाषसे ॥ ०६६ ॥

---

# अध्याय ११५

वैशंपायन उवाच ॥

कुन्तीपुत्रेषु जातेषु धृतराष्ट्रात्मजेषु च ।
मद्रराजसुता पाण्डुं रहो वचनमब्रवीत् ॥ ००१ ॥

न मेऽस्ति त्वयि संतापो विगुणेऽपि परंतप ।
नावरत्वे वरार्हायाः स्थित्वा चानघ नित्यदा ॥ ००२ ॥

गान्धार्याश्चैव नृपते जातं पुत्रशतं तथा ।
श्रुत्वा न मे तथा दुःखमभवत्कुरुनन्दन ॥ ००३ ॥

इदं तु मे महद्दुःखं तुल्यतायामपुत्रता ।
दिष्ट्या त्विदानीं भर्तुर्मे कुन्त्यामप्यस्ति संततिः ॥ ००४ ॥

यदि त्वपत्यसंतानं कुन्तिराजसुता मयि ।

कुर्यादनुग्रहो मे स्यात्तव चापि हितं भवेत् ॥ ००५ ॥

स्तम्भो हि मे सपत्नीत्वाद्वक्तुं कुन्तिसुतां प्रति ।
यदि तु त्वं प्रसन्नो मे स्वयमेनां प्रचोदय ॥ ००६ ॥

पाण्डुरुवाच ॥

ममाप्येष सदा माद्रि हृद्यर्थः परिवर्तते ।
न तु त्वां प्रसहे वक्तुमिष्टानिष्टविवक्षया ॥ ००७ ॥

तव त्विदं मतं ज्ञात्वा प्रयतिष्याम्यतः परम् ।
मन्ये ध्रुवं मयोक्ता सा वचो मे प्रतिपत्स्यते ॥ ००८ ॥

वैशंपायन उवाच ॥

ततः कुन्तीं पुनः पाण्डुर्विविक्त इदमब्रवीत् ।
कुलस्य मम संतानं लोकस्य च कुरु प्रियम् ॥ ००९ ॥

मम चापिण्डनाशाय पूर्वेषामपि चात्मनः ।
मत्प्रियार्थं च कल्याणि कुरु कल्याणमुत्तमम् ॥ ०१० ॥

यशसोऽर्थाय चैव त्वं कुरु कर्म सुदुष्करम् ।
प्राप्याधिपत्यमिन्द्रेण यज्ञैरिष्टं यशोर्थिना ॥ ०११ ॥

तथा मन्त्रविदो विप्रास्तपस्तप्त्वा सुदुष्करम् ।
गुरूनभ्युपगच्छन्ति यशसोऽर्थाय भामिनि ॥ ०१२ ॥

तथा राजर्षयः सर्वे ब्राह्मणाश्च तपोधनाः ।
चक्रुरुच्चावचं कर्म यशसोऽर्थाय दुष्करम् ॥ ०१३ ॥

सा त्वं माद्रीं प्लवेनेव तारयेमामनिन्दिते ।

अपत्यसंविभागेन परां कीर्तिमवाप्नुहि ॥ ०१४ ॥

एवमुक्ताब्रवीन्माद्रीं सकृच्चिन्तय दैवतम् ।
तस्मात्ते भवितापत्यमनुरूपमसंशयम् ॥ ०१५ ॥

ततो माद्री विचार्यैव जगाम मनसाश्विनौ ।
तावागम्य सुतौ तस्यां जनयामासतुर्यमौ ॥ ०१६ ॥

नकुलं सहदेवं च रूपेणाप्रतिमौ भुवि ।
तथैव तावपि यमौ वागुवाचाशरीरिणी ॥ ०१७ ॥

रूपसत्त्वगुणोपेतावेतावन्याञ्जनानति ।
भासतस्तेजसात्यर्थं रूपद्रविणसंपदा ॥ ०१८ ॥

नामानि चक्रिरे तेषां शतशृङ्गनिवासिनः ।
भक्त्या च कर्मणा चैव तथाशीर्भिर्विशां पते ॥ ०१९ ॥

ज्येष्ठं युधिष्ठिरेत्याहुर्भीमसेनेति मध्यमम् ।
अर्जुनेति तृतीयं च कुन्तीपुत्रानकल्पयन् ॥ ०२० ॥

पूर्वजं नकुलेत्येवं सहदेवेति चापरम् ।
माद्रीपुत्रावकथयंस्ते विप्राः प्रीतमानसाः ॥ ०२१ ॥

अनुसंवत्सरं जाता अपि ते कुरुसत्तमाः ॥ ०२१ ॥

कुन्तीमथ पुनः पाण्डुर्माद्र्यर्थे समचोदयत् ।
तमुवाच पृथा राजन्रहस्युक्ता सती सदा ॥ ०२२ ॥

उक्ता सकृद्द्वन्द्वमेषा लेभे तेनास्मि वञ्चिता ।
बिभेम्यस्याः परिभवान्नारीणां गतिरीदृशी ॥ ०२३ ॥

नाज्ञासिषमहं मूढा द्वन्द्वाह्वाने फलद्वयम् ।
तस्मान्नाहं नियोक्तव्या त्वयैषोऽस्तु वरो मम ॥ ०२४ ॥

एवं पाण्डोः सुताः पञ्च देवदत्ता महाबलाः ।
संभूताः कीर्तिमन्तस्ते कुरुवंशविवर्धनाः ॥ ०२५ ॥

शुभलक्षणसंपन्नाः सोमवत्प्रियदर्शनाः ।
सिंहदर्पा महेष्वासाः सिंहविक्रान्तगामिनः ॥ ०२६ ॥

सिंहग्रीवा मनुष्येन्द्रा ववृधुर्देवविक्रमाः ॥ ०२६ ॥

विवर्धमानास्ते तत्र पुण्ये हैमवते गिरौ ।
विस्मयं जनयामासुर्महर्षीणां समेयुषाम् ॥ ०२७ ॥

ते च पञ्च शतं चैव कुरुवंशविवर्धनाः ।
सर्वे ववृधुरल्पेन कालेनाप्स्विव नीरजाः ॥ ०२८ ॥

---

# अध्याय ११६

वैशंपायन उवाच ॥

दर्शनीयांस्ततः पुत्रान्पाण्डुः पञ्च महावने ।
तान्पश्यन्पर्वते रेमे स्वबाहुबलपालितान् ॥ ००१ ॥

सुपुष्पितवने काले कदाचिन्मधुमाधवे ।
भूतसंमोहने राजा सभार्यो व्यचरद्वनम् ॥ ००२ ॥

पलाशैस्तिलकैश्चूतैश्चम्पकैः पारिभद्रकैः ।
अन्यैश्च बहुभिर्वृक्षैः फलपुष्पसमृद्धिभिः ॥ ००३ ॥

जलस्थानैश्च विविधैः पद्मिनीभिश्च शोभितम् ।
पाण्डोर्वनं तु संप्रेक्ष्य प्रजज्ञे हृदि मन्मथः ॥ ००४ ॥

प्रहृष्टमनसं तत्र विहरन्तं यथामरम् ।
तं माद्र्यनुजगामैका वसनं बिभ्रती शुभम् ॥ ००५ ॥

समीक्षमाणः स तु तां वयःस्थां तनुवाससम् ।
तस्य कामः प्रववृधे गहनेऽग्निरिवोत्थितः ॥ ००६ ॥

रहस्यात्मसमां दृष्ट्वा राजा राजीवलोचनाम् ।
न शशाक नियन्तुं तं कामं कामबलात्कृतः ॥ ००७ ॥

तत एनां बलाद्राजा निजग्राह रहोगताम् ।
वार्यमाणस्तया देव्या विस्फुरन्त्या यथाबलम् ॥ ००८ ॥

स तु कामपरीतात्मा तं शापं नान्वबुध्यत ।
माद्रीं मैथुनधर्मेण गच्छमानो बलादिव ॥ ००९ ॥

जीवितान्ताय कौरव्यो मन्मथस्य वशं गतः ।
शापजं भयमुत्सृज्य जगामैव बलात्प्रियाम् ॥ ०१० ॥

तस्य कामात्मनो बुद्धिः साक्षात्कालेन मोहिता ।
संप्रमथ्येन्द्रियग्रामं प्रनष्टा सह चेतसा ॥ ०११ ॥

स तया सह सङ्गम्य भार्यया कुरुनन्दन ।
पाण्डुः परमधर्मात्मा युयुजे कालधर्मणा ॥ ०१२ ॥

ततो माद्री समालिङ्ग्य राजानं गतचेतसम् ।

मुमोच दुःखजं शब्दं पुनः पुनरतीव ह ॥ ०१३ ॥

सह पुत्रैस्ततः कुन्ती माद्रीपुत्रौ च पाण्डवौ ।
आजग्मुः सहितास्तत्र यत्र राजा तथागतः ॥ ०१४ ॥

ततो माद्यब्रवीद्राजन्नार्ता कुन्तीमिदं वचः ।
एकैव त्वमिहागच्छ तिष्ठन्त्वत्रैव दारकाः ॥ ०१५ ॥

तच्छ्रुत्वा वचनं तस्यास्तत्रैवावार्य दारकान् ।
हताहमिति विक्रुश्य सहसोपजगाम ह ॥ ०१६ ॥

दृष्ट्वा पाण्डुं च माद्रीं च शयानौ धरणीतले ।
कुन्ती शोकपरीताङ्गी विललाप सुदुःखिता ॥ ०१७ ॥

रक्ष्यमाणो मया नित्यं वीरः सततमात्मवान् ।
कथं त्वमभ्यतिक्रान्तः शापं जानन्वनौकसः ॥ ०१८ ॥

ननु नाम त्वया माद्रि रक्षितव्यो जनाधिपः ।
सा कथं लोभितवती विजने त्वं नराधिपम् ॥ ०१९ ॥

कथं दीनस्य सततं त्वामासाद्य रहोगताम् ।
तं विचिन्तयतः शापं प्रहर्षः समजायत ॥ ०२० ॥

धन्या त्वमसि बाह्लीकि मत्तो भाग्यतरा तथा ।
दृष्टवत्यसि यद्वक्त्रं प्रहृष्टस्य महीपतेः ॥ ०२१ ॥

माद्र्युवाच ॥

विलोभ्यमानेन मया वार्यमाणेन चासकृत् ।
आत्मा न वारितोऽनेन सत्यं दिष्टं चिकीर्षुणा ॥ ०२२ ॥

कुन्त्युवाच ॥

अहं ज्येष्ठा धर्मपत्नी ज्येष्ठं धर्मफलं मम ।
अवश्यं भाविनो भावान्मा मां माद्रि निवर्तय ॥ ०२३ ॥

अन्वेष्यामीह भर्तारमहं प्रेतवशं गतम् ।
उत्तिष्ठ त्वं विसृज्यैनमिमान्रक्षस्व दारकान् ॥ ०२४ ॥

माद्र्युवाच ॥

अहमेवानुयास्यामि भर्तारमपलायिनम् ।
न हि तृप्तास्मि कामानां तज्ज्येष्ठा अनुमन्यताम् ॥ ०२५ ॥

मां चाभिगम्य क्षीणोऽयं कामाद्भरतसत्तमः ।
तमुच्छिन्द्यामस्य कामं कथं नु यमसादने ॥ ०२६ ॥

न चाप्यहं वर्तयन्ती निर्विशेषं सुतेषु ते ।
वृत्तिमार्ये चरिष्यामि स्पृशेदेनस्तथा हि माम् ॥ ०२७ ॥

तस्मान्मे सुतयोः कुन्ति वर्तितव्यं स्वपुत्रवत् ।
मां हि कामयमानोऽयं राजा प्रेतवशं गतः ॥ ०२८ ॥

राज्ञः शरीरेण सह ममापीदं कलेवरम् ।
दग्धव्यं सुप्रतिच्छन्नमेतदार्ये प्रियं कुरु ॥ ०२९ ॥

दारकेष्वप्रमत्ता च भवेथाश्च हिता मम ।
अतोऽन्यन्न प्रपश्यामि संदेष्टव्यं हि किञ्चन ॥ ०३० ॥

वैशंपायन उवाच ॥

इत्युक्त्वा तं चिताग्निस्थं धर्मपत्नी नरर्षभम् ।

मद्रराजात्मजा तूर्णमन्वारोहद्यशस्विनी ॥ ०३१ ॥

---

# अध्याय ११७

वैशंपायन उवाच ॥

पाण्डोरवभृथं कृत्वा देवकल्पा महर्षयः ।
ततो मन्त्रमकुर्वन्त ते समेत्य तपस्विनः ॥ ००१ ॥

हित्वा राज्यं च राष्ट्रं च स महात्मा महातपाः ।
अस्मिन्स्थाने तपस्तप्तुं तापसाञ्शरणं गतः ॥ ००२ ॥

स जातमात्रान्पुत्रांश्च दारांश्च भवतामिह ।
प्रदायोपनिधिं राजा पाण्डुः स्वर्गमितो गतः ॥ ००३ ॥

ते परस्परमामन्त्र्य सर्वभूतहिते रताः ।
पाण्डोः पुत्रान्पुरस्कृत्य नगरं नागसाह्वयम् ॥ ००४ ॥

उदारमनसः सिद्धा गमने चक्रिरे मनः ।
भीष्माय पाण्डवान्दातुं धृतराष्ट्राय चैव हि ॥ ००५ ॥

तस्मिन्नेव क्षणे सर्वे तानादाय प्रतस्थिरे ।
पाण्डोर्दारांश्च पुत्रांश्च शरीरं चैव तापसाः ॥ ००६ ॥

सुखिनी सा पुरा भूत्वा सततं पुत्रवत्सला ।
प्रपन्ना दीर्घमध्वानं सङ्क्षिप्तं तदमन्यत ॥ ००७ ॥

सा नदीर्घेण कालेन संप्राप्ता कुरुजाङ्गलम् ।

वर्धमानपुरद्वारमाससाद यशस्विनी ॥ ००८ ॥

तं चारणसहस्राणां मुनीनामागमं तदा ।
श्रुत्वा नागपुरे नृणां विस्मयः समजायत ॥ ००९ ॥

मुहूर्तोदित आदित्ये सर्वे धर्मपुरस्कृताः ।
सदारास्तापसान्द्रष्टुं निर्ययुः पुरवासिनः ॥ ०१० ॥

स्त्रीसंघाः क्षत्रसंघाश्च यानसंघान्समास्थिताः ।
ब्राह्मणैः सह निर्जग्मुर्ब्राह्मणानां च योषितः ॥ ०११ ॥

तथा विड्शूद्रसंघानां महान्व्यतिकरोऽभवत् ।
न कश्चिदकरोदीर्ष्यामभवन्धर्मबुद्धयः ॥ ०१२ ॥

तथा भीष्मः शांतनवः सोमदत्तोऽथ बाह्लिकः ।
प्रज्ञाचक्षुश्च राजर्षिः क्षत्ता च विदुरः स्वयम् ॥ ०१३ ॥

सा च सत्यवती देवी कौसल्या च यशस्विनी ।
राजदारैः परिवृता गान्धारी च विनिर्ययौ ॥ ०१४ ॥

धृतराष्ट्रस्य दायादा दुर्योधनपुरोगमाः ।
भूषिता भूषणैश्चित्रैः शतसंख्या विनिर्ययुः ॥ ०१५ ॥

तान्महर्षिगणान्सर्वाञ्शिरोभिरभिवाद्य च ।
उपोपविविशुः सर्वे कौरव्याः सपुरोहिताः ॥ ०१६ ॥

तथैव शिरसा भूमावभिवाद्य प्रणम्य च ।
उपोपविविशुः सर्वे पौरजानपदा अपि ॥ ०१७ ॥

तमकूजमिवाज्ञाय जनौघं सर्वशस्तदा ।
भीष्मो राज्यं च राष्ट्रं च महर्षिभ्यो न्यवेदयत् ॥ ०१८ ॥

तेषामथो वृद्धतमः प्रत्युत्थाय जटाजिनी ।
महर्षिमतमाज्ञाय महर्षिरिदमब्रवीत् ॥ ०१९ ॥

यः स कौरव्यदायादः पाण्डुर्नाम नराधिपः ।
कामभोगान्परित्यज्य शतशृङ्गमितो गतः ॥ ०२० ॥

ब्रह्मचर्यव्रतस्थस्य तस्य दिव्येन हेतुना ।
साक्षाद्धर्मादयं पुत्रस्तस्य जातो युधिष्ठिरः ॥ ०२१ ॥

तथेमं बलिनां श्रेष्ठं तस्य राज्ञो महात्मनः ।
मातरिश्वा ददौ पुत्रं भीमं नाम महाबलम् ॥ ०२२ ॥

पुरुहूतादयं जज्ञे कुन्त्यां सत्यपराक्रमः ।
यस्य कीर्तिर्महेष्वासान्सर्वानभिभविष्यति ॥ ०२३ ॥

यौ तु माद्री महेष्वासावसूत कुरुसत्तमौ ।
अश्विभ्यां मनुजव्याघ्राविमौ तावपि तिष्ठतः ॥ ०२४ ॥

चरता धर्मनित्येन वनवासं यशस्विना ।
एष पैतामहो वंशः पाण्डुना पुनरुद्धृतः ॥ ०२५ ॥

पुत्राणां जन्म वृद्धिं च वैदिकाध्ययनानि च ।
पश्यतः सततं पाण्डोः शश्वत्प्रीतिरवर्धत ॥ ०२६ ॥

वर्तमानः सतां वृत्ते पुत्रलाभमवाप्य च ।
पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि ॥ ०२७ ॥

तं चितागतमाज्ञाय वैश्वानरमुखे हुतम् ।
प्रविष्टा पावकं माद्री हित्वा जीवितमात्मनः ॥ ०२८ ॥

सा गता सह तेनैव पतिलोकमनुव्रता ।
तस्यास्तस्य च यत्कार्यं क्रियतां तदनन्तरम् ॥ ०२९ ॥

इमे तयोः शरीरे द्वे सुताश्चेमे तयोर्वराः ।
क्रियाभिरनुगृह्यन्तां सह मात्रा परंतपाः ॥ ०३० ॥

प्रेतकार्ये च निर्वृत्ते पितृमेधं महायशाः ।
लभतां सर्वधर्मज्ञः पाण्डुः कुरुकुलोद्वहः ॥ ०३१ ॥

एवमुक्त्वा कुरून्सर्वान्कुरूणामेव पश्यताम् ।
क्षणेनान्तर्हिताः सर्वे चारणा गुह्यकैः सह ॥ ०३२ ॥

गन्धर्वनगराकारं तत्रैवान्तर्हितं पुनः ।
ऋषिसिद्धगणं दृष्ट्वा विस्मयं ते परं ययुः ॥ ०३३ ॥

---

# अध्याय ११८

धृतराष्ट्र उवाच ॥

पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय ।
राजवद्राजसिंहस्य माद्र्याश्चैव विशेषतः ॥ ००१ ॥

पशून्वासांसि रत्नानि धनानि विविधानि च ।
पाण्डोः प्रयच्छ माद्र्याश्च येभ्यो यावच्च वाञ्छितम् ॥ ००२ ॥

यथा च कुन्ती सत्कारं कुर्यान्माद्र्यास्तथा कुरु ।
यथा न वायुर्नादित्यः पश्येतां तां सुसंवृताम् ॥ ००३ ॥

न शोच्यः पाण्डुरनघः प्रशस्यः स नराधिपः ।
यस्य पञ्च सुता वीरा जाताः सुरसुतोपमाः ॥ ००४ ॥

वैशंपायन उवाच ॥

विदुरस्तं तथेत्युक्त्वा भीष्मेण सह भारत ।
पाण्डुं संस्कारयामास देशे परमसंवृते ॥ ००५ ॥

ततस्तु नगरात्तूर्णमाज्यहोमपुरस्कृताः ।
निर्हृताः पावका दीप्ताः पाण्डो राजपुरोहितैः ॥ ००६ ॥

अथैनमार्तवैर्गन्धैर्माल्यैश्च विविधैर्वरैः ।
शिबिकां समलञ्चक्रुर्वाससाच्छाद्य सर्वशः ॥ ००७ ॥

तां तथा शोभितां माल्यैर्वासोभिश्च महाधनैः ।
अमात्या ज्ञातयश्चैव सुहृदश्चोपतस्थिरे ॥ ००८ ॥

नृसिंहं नरयुक्तेन परमालङ्कृतेन तम् ।
अवहन्यानमुख्येन सह माद्र्या सुसंवृतम् ॥ ००९ ॥

पाण्डुरेणातपत्रेण चामरव्यजनेन च ।
सर्ववादित्रनादैश्च समलञ्चक्रिरे ततः ॥ ०१० ॥

रत्नानि चाप्युपादाय बहूनि शतशो नराः ।
प्रददुः काङ्क्षमाणेभ्यः पाण्डोस्तत्रौर्ध्वदेहिकम् ॥ ०११ ॥

अथ छत्राणि शुभ्राणि पाण्डुराणि बृहन्ति च ।
आजह्रुः कौरवस्यार्थे वासांसि रुचिराणि च ॥ ०१२ ॥

याजकैः शुक्लवासोभिर्हूयमाना हुताशनाः ।
अगच्छन्नग्रतस्तस्य दीप्यमानाः स्वलङ्कृताः ॥ ०१३ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव सहस्रशः ।
रुदन्तः शोकसंतप्ता अनुजग्मुर्नराधिपम् ॥ ०१४ ॥

अयमस्मानपाहाय दुःखे चाधाय शाश्वते ।
कृत्वानाथान्परो नाथः क्व यास्यति नराधिपः ॥ ०१५ ॥

क्रोशन्तः पाण्डवाः सर्वे भीष्मो विदुर एव च ।
रमणीये वनोद्देशे गङ्गातीरे समे शुभे ॥ ०१६ ॥

न्यासयामासुरथ तां शिबिकां सत्यवादिनः ।
सभार्यस्य नृसिंहस्य पाण्डोरक्लिष्टकर्मणः ॥ ०१७ ॥

ततस्तस्य शरीरं तत्सर्वगन्धनिषेवितम् ।
शुचिकालीयकादिग्धं मुख्यस्नानाधिवासितम् ॥ ०१८ ॥

पर्यषिञ्चज्जलेनाशु शातकुम्भमयैर्घटैः ॥ ०१८ ॥

चन्दनेन च मुख्येन शुक्लेन समलेपयन् ।
कालागुरुविमिश्रेण तथा तुङ्गरसेन च ॥ ०१९ ॥

अथैनं देशजैः शुक्लैर्वासोभिः समयोजयन् ।
आच्छन्नः स तु वासोभिर्जीवन्निव नरर्षभः ॥ ०२० ॥

शुशुभे पुरुषव्याघ्रो महार्हशयनोचितः ॥ ०२० ॥

याजकैरभ्यनुज्ञातं प्रेतकर्मणि निष्ठितैः ।
घृतावसिक्तं राजानं सह माद्र्या स्वलङ्कृतम् ॥ ०२१ ॥

तुङ्गपद्मकमिश्रेण चन्दनेन सुगन्धिना ।
अन्यैश्च विविधैर्गन्धैरनल्पैः समदाहयन् ॥ ०२२ ॥

ततस्तयोः शरीरे ते दृष्ट्वा मोहवशं गता ।
हाहा पुत्रेति कौसल्या पपात सहसा भुवि ॥ ०२३ ॥

तां प्रेक्ष्य पतितामार्तां पौरजानपदो जनः ।
रुरोद सस्वनं सर्वो राजभक्त्या कृपान्वितः ॥ ०२४ ॥

क्लान्तानीवार्तनादेन सर्वाणि च विचुक्रुशुः ।
मानुषैः सह भूतानि तिर्यग्योनिगतान्यपि ॥ ०२५ ॥

तथा भीष्मः शांतनवो विदुरश्च महामतिः ।
सर्वशः कौरवाश्चैव प्राणदन्भृशदुःखिताः ॥ ०२६ ॥

ततो भीष्मोऽथ विदुरो राजा च सह बन्धुभिः ।
उदकं चक्रिरे तस्य सर्वाश्च कुरुयोषितः ॥ ०२७ ॥

कृतोदकांस्तानादाय पाण्डवाञ्शोककर्शितान् ।
सर्वाः प्रकृतयो राजञ्शोचन्त्यः पर्यवारयन् ॥ ०२८ ॥

यथैव पाण्डवा भूमौ सुषुपुः सह बान्धवैः ।
तथैव नागरा राजञ्शिश्यिरे ब्राह्मणादयः ॥ ०२९ ॥

तदनानन्दमस्वस्थमाकुमारमहृष्टवत् ।
बभूव पाण्डवैः सार्धं नगरं द्वादश क्षपाः ॥ ०३० ॥

# अध्याय ११९

वैशंपायन उवाच ॥

ततः क्षत्ता च राजा च भीष्मश्च सह बन्धुभिः ।
ददुः श्राद्धं तदा पाण्डोः स्वधामृतमयं तदा ॥ ००१ ॥

कुरूंश्च विप्रमुख्यांश्च भोजयित्वा सहस्रशः ।
रत्नौघान्द्विजमुख्येभ्यो दत्त्वा ग्रामवरानपि ॥ ००२ ॥

कृतशौचांस्ततस्तांस्तु पाण्डवान्भरतर्षभान् ।
आदाय विविशुः पौराः पुरं वारणसाह्वयम् ॥ ००३ ॥

सततं स्मान्वतप्यन्त तमेव भरतर्षभम् ।
पौरजानपदाः सर्वे मृतं स्वमिव बान्धवम् ॥ ००४ ॥

श्राद्धावसाने तु तदा दृष्ट्वा तं दुःखितं जनम् ।
संमूढां दुःखशोकार्तां व्यासो मातरमब्रवीत् ॥ ००५ ॥

अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः ।
श्वः श्वः पापीयदिवसाः पृथिवी गतयौवना ॥ ००६ ॥

बहुमायासमाकीर्णो नानादोषसमाकुलः ।
लुप्तधर्मक्रियाचारो घोरः कालो भविष्यति ॥ ००७ ॥

गच्छ त्वं त्यागमास्थाय युक्ता वस तपोवने ।
मा द्रक्ष्यसि कुलस्यास्य घोरं सङ्क्षयमात्मनः ॥ ००८ ॥

तथेति समनुज्ञाय सा प्रविश्याब्रवीत्स्नुषाम् ।
अम्बिके तव पुत्रस्य दुर्नयात्किल भारताः ॥ ००९ ॥

सानुबन्धा विनङ्क्ष्यन्ति पौत्राश्चैवेति नः श्रुतम् ॥ ००९ ॥

तत्कौसल्यामिमामार्तां पुत्रशोकाभिपीडिताम् ।
वनमादाय भद्रं ते गच्छावो यदि मन्यसे ॥ ०१० ॥

तथेत्युक्ते अम्बिकया भीष्ममामन्त्र्य सुव्रता ।
वनं ययौ सत्यवती स्नुषाभ्यां सह भारत ॥ ०११ ॥

ताः सुघोरं तपः कृत्वा देव्यो भरतसत्तम ।
देहं त्यक्त्वा महाराज गतिमिष्टां ययुस्तदा ॥ ०१२ ॥

अवाप्नुवन्त वेदोक्तान्संस्कारान्पाण्डवास्तदा ।
अवर्धन्त च भोगांस्ते भुञ्जानाः पितृवेश्मनि ॥ ०१३ ॥

धार्तराष्ट्रैश्च सहिताः क्रीडन्तः पितृवेश्मनि ।
बालक्रीडासु सर्वासु विशिष्टाः पाण्डवाभवन् ॥ ०१४ ॥

जवे लक्ष्याभिहरणे भोज्ये पांसुविकर्षणे ।
धार्तराष्ट्रान्भीमसेनः सर्वान्स परिमर्दति ॥ ०१५ ॥

हर्षादेतान्क्रीडमानान्गृह्य काकनिलीयने ।
शिरःसु च निगृह्यैनान्योधयामास पाण्डवः ॥ ०१६ ॥

शतमेकोत्तरं तेषां कुमाराणां महौजसाम् ।
एक एव विमृद्नाति नातिकृच्छ्राद्वृकोदरः ॥ ०१७ ॥

पादेषु च निगृह्यैनान्विनिहत्य बलाद्बली ।
चकर्ष क्रोशतो भूमौ घृष्टजानुशिरोक्षिकान् ॥ ०१८ ॥

दश बालाञ्जले क्रीडन्भुजाभ्यां परिगृह्य सः ।
आस्ते स्म सलिले मग्नः प्रमृतांश्च विमुञ्चति ॥ ०१९ ॥

फलानि वृक्षमारुह्य प्रचिन्वन्ति च ते यदा ।
तदा पादप्रहारेण भीमः कम्पयते द्रुमम् ॥ ०२० ॥

प्रहारवेगाभिहताद्द्रुमाद्व्याघूर्णितास्ततः ।
सफलाः प्रपतन्ति स्म द्रुतं स्रस्ताः कुमारकाः ॥ ०२१ ॥

न ते नियुद्धे न जवे न योग्यासु कदाचन ।
कुमारा उत्तरं चक्रुः स्पर्धमाना वृकोदरम् ॥ ०२२ ॥

एवं स धार्तराष्ट्राणां स्पर्धमानो वृकोदरः ।
अप्रियेऽतिष्ठदत्यन्तं बाल्यान्न द्रोहचेतसा ॥ ०२३ ॥

ततो बलमतिख्यातं धार्तराष्ट्रः प्रतापवान् ।
भीमसेनस्य तज्ज्ञात्वा दुष्टभावमदर्शयत् ॥ ०२४ ॥

तस्य धर्मादपेतस्य पापानि परिपश्यतः ।
मोहादैश्वर्यलोभाच्च पापा मतिरजायत ॥ ०२५ ॥

अयं बलवतां श्रेष्ठः कुन्तीपुत्रो वृकोदरः ।
मध्यमः पाण्डुपुत्राणां निकृत्या संनिहन्यताम् ॥ ०२६ ॥

अथ तस्मादवरजं ज्येष्ठं चैव युधिष्ठिरम् ।
प्रसह्य बन्धने बद्धा प्रशासिष्ये वसुंधराम् ॥ ०२७ ॥

एवं स निश्चयं पापः कृत्वा दुर्योधनस्तदा ।
नित्यमेवान्तरप्रेक्षी भीमस्यासीन्महात्मनः ॥ ०२८ ॥

ततो जलविहारार्थं कारयामास भारत ।
चेलकम्बलवेश्मानि विचित्राणि महान्ति च ॥ ०२९ ॥

प्रमाणकोट्यामुद्देशं स्थलं किञ्चिदुपेत्य च ।
क्रीडावसाने सर्वे ते शुचिवस्त्राः स्वलङ्कृताः ॥ ०३० ॥

सर्वकामसमृद्धं तदन्नं बुभुजिरे शनैः ॥ ०३० ॥

दिवसान्ते परिश्रान्ता विहृत्य च कुरूद्वहाः ।
विहारावसथेष्वेव वीरा वासमरोचयन् ॥ ०३१ ॥

खिन्नस्तु बलवान्भीमो व्यायामाभ्यधिकस्तदा ।
वाहयित्वा कुमारांस्ताञ्जलक्रीडागतान्विभुः ॥ ०३२ ॥

प्रमाणकोट्यां वासार्थी सुष्वापारुह्य तत्स्थलम् ॥ ०३२ ॥

शीतं वासं समासाद्य श्रान्तो मदविमोहितः ।
निश्चेष्टः पाण्डवो राजन्सुष्वाप मृतकल्पवत् ॥ ०३३ ॥

ततो बद्ध्वा लतापाशैर्भीमं दुर्योधनः शनैः ।
गम्भीरं भीमवेगं च स्थलाज्जलमपातयत् ॥ ०३४ ॥

ततः प्रबुद्धः कौन्तेयः सर्वं संछिद्य बन्धनम् ।
उदतिष्ठज्जलाद्भूयो भीमः प्रहरतां वरः ॥ ०३५ ॥

सुप्तं चापि पुनः सर्पैस्तीक्ष्णदंष्ट्रैर्महाविषैः ।
कुपितैर्दंशयामास सर्वेष्वेवाङ्गमर्मसु ॥ ०३६ ॥

दंष्ट्राश्च दंष्ट्रिणां तेषां मर्मस्वपि निपातिताः ।
त्वचं नैवास्य बिभिदुः सारत्वात्पृथुवक्षसः ॥ ०३७ ॥

प्रतिबुद्धस्तु भीमस्तान्सर्वान्सर्पानपोथयत् ।
सारथिं चास्य दयितमपहस्तेन जघ्निवान् ॥ ०३८ ॥

भोजने भीमसेनस्य पुनः प्राक्षेपयद्विषम् ।
कालकूटं नवं तीक्ष्णं संभृतं लोमहर्षणम् ॥ ०३९ ॥

वैश्यापुत्रस्तदाचष्ट पार्थानां हितकाम्यया ।
तच्चापि भुक्त्वाजरयदविकारो वृकोदरः ॥ ०४० ॥

विकारं न ह्यजनयत्सुतीक्ष्णमपि तद्विषम् ।
भीमसंहननो भीमस्तदप्यजरयत्ततः ॥ ०४१ ॥

एवं दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
अनेकैरभ्युपायैस्ताञ्जिघांसन्ति स्म पाण्डवान् ॥ ०४२ ॥

पाण्डवाश्चापि तत्सर्वं प्रत्यजानन्नरिंदमाः ।
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ॥ ०४३ ॥

---

# अध्याय १२०

जनमेजय उवाच ॥

कृपस्यापि महाब्रह्मन्संभवं वक्तुमर्हसि ।
शरस्तम्भात्कथं जज्ञे कथं चास्त्राण्यवाप्तवान् ॥ ००१ ॥

वैशंपायन उवाच ॥

महर्षेर्गौतमस्यासीच्छरद्वान्नाम नामतः ।
पुत्रः किल महाराज जातः सह शरैर्विभो ॥ ००२ ॥

न तस्य वेदाध्ययने तथा बुद्धिरजायत ।

यथास्य बुद्धिरभवद्धनुर्वेदे परंतप ॥ ००३ ॥

अधिजग्मुर्यथा वेदांस्तपसा ब्रह्मवादिनः ।
तथा स तपसोपेतः सर्वाण्यस्त्राण्यवाप ह ॥ ००४ ॥

धनुर्वेदपरत्वाच्च तपसा विपुलेन च ।
भृशं संतापयामास देवराजं स गौतमः ॥ ००५ ॥

ततो जालपदीं नाम देवकन्यां सुरेश्वरः ।
प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव ॥ ००६ ॥

साभिगम्याश्रमपदं रमणीयं शरद्वतः ।
धनुर्बाणधरं बाला लोभयामास गौतमम् ॥ ००७ ॥

तामेकवसनां दृष्ट्वा गौतमोऽप्सरसं वने ।
लोकेऽप्रतिमसंस्थानामुत्फुल्लनयनोऽभवत् ॥ ००८ ॥

धनुश्च हि शराश्चास्य कराभ्यां प्रापतन्भुवि ।
वेपथुश्चास्य तां दृष्ट्वा शरीरे समजायत ॥ ००९ ॥

स तु ज्ञानगरीयस्त्वात्तपसश्च समन्वयात् ।
अवतस्थे महाप्राज्ञो धैर्येण परमेण ह ॥ ०१० ॥

यस्त्वस्य सहसा राजन्विकारः समपद्यत ।
तेन सुस्राव रेतोऽस्य स च तन्नावबुध्यत ॥ ०११ ॥

स विहायाश्रमं तं च तां चैवाप्सरसं मुनिः ।
जगाम रेतस्तत्तस्य शरस्तम्बे पपात ह ॥ ०१२ ॥

शरस्तम्बे च पतितं द्विधा तदभवन्नृप ।
तस्याथ मिथुनं जज्ञे गौतमस्य शरद्वतः ॥ ०१३ ॥

मृगयां चरतो राज्ञः शंतनोस्तु यदृच्छया ।
कश्चित्सेनाचरोऽरण्ये मिथुनं तदपश्यत ॥ ०१४ ॥

धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च ।
व्यवस्य ब्राह्मणापत्यं धनुर्वेदान्तगस्य तत् ॥ ०१५ ॥

स राज्ञे दर्शयामास मिथुनं सशरं तदा ॥ ०१५ ॥

स तदादाय मिथुनं राजाथ कृपयान्वितः ।
आजगाम गृहानेव मम पुत्राविति ब्रुवन् ॥ ०१६ ॥

ततः संवर्धयामास संस्कारैश्चाप्ययोजयत् ।
गौतमोऽपि तदापेत्य धनुर्वेदपरोऽभवत् ॥ ०१७ ॥

कृपया यन्मया बालाविमौ संवर्धिताविति ।
तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः ॥ ०१८ ॥

निहितौ गौतमस्तत्र तपसा तावविन्दत ।
आगम्य चास्मै गोत्रादि सर्वमाख्यातवांस्तदा ॥ ०१९ ॥

चतुर्विधं धनुर्वेदमस्त्राणि विविधानि च ।
निखिलेनास्य तत्सर्वं गुह्यमाख्यातवांस्तदा ॥ ०२० ॥

सोऽचिरेणैव कालेन परमाचार्यतां गतः ॥ ०२० ॥

ततोऽधिजग्मुः सर्वे ते धनुर्वेदं महारथाः ।
धृतराष्ट्रात्मजाश्चैव पाण्डवाश्च महाबलाः ॥ ०२१ ॥

वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः ॥ ०२१ ॥

# अध्याय १२१

वैशंपायन उवाच ॥

विशेषार्थी ततो भीष्मः पौत्राणां विनयेप्सया ।
इष्वस्त्रज्ञान्पर्यपृच्छदाचार्यान्वीर्यसंमतान् ॥ ००१ ॥

नाल्पधीर्नामहाभागस्तथानानास्त्रकोविदः ।
नादेवसत्त्वो विनयेत्कुरूनस्त्रे महाबलान् ॥ ००२ ॥

महर्षिस्तु भरद्वाजो हविर्धाने चरन्पुरा ।
ददर्शाप्सरसं साक्षाद्घृताचीमाप्लुतामृषिः ॥ ००३ ॥

तस्या वायुः समुद्धूतो वसनं व्यपकर्षत ।
ततोऽस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ॥ ००४ ॥

तस्मिन्समभवद्द्रोणः कलशे तस्य धीमतः ।
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ॥ ००५ ॥

अग्निवेश्यं महाभागं भरद्वाजः प्रतापवान् ।
प्रत्यपादयदाग्नेयमस्त्रं धर्मभृतां वरः ॥ ००६ ॥

अग्निष्टुज्जातः स मुनिस्ततो भरतसत्तम ।
भारद्वाजं तदाग्नेयं महास्त्रं प्रत्यपादयत् ॥ ००७ ॥

भरद्वाजसखा चासीत्पृषतो नाम पार्थिवः ।
तस्यापि द्रुपदो नाम तदा समभवत्सुतः ॥ ००८ ॥

स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः ।
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ॥ ००९ ॥

ततो व्यतीते पृषते स राजा द्रुपदोऽभवत् ।
पाञ्चालेषु महाबाहुरुत्तरेषु नरेश्वरः ॥ ०१० ॥

भरद्वाजोऽपि भगवानारुरोह दिवं तदा ।
ततः पितृनियुक्तात्मा पुत्रलोभान्महायशाः ॥ ०११ ॥

शारद्वतीं ततो द्रोणः कृपीं भार्यामविन्दत ॥ ०११ ॥

अग्निहोत्रे च धर्मे च दमे च सततं रता ।
अलभद्गौतमी पुत्रमश्वत्थामानमेव च ॥ ०१२ ॥

स जातमात्रो व्यनदद्यथैवोच्चैःश्रवा हयः ।
तच्छ्रुत्वान्तर्हितं भूतमन्तरिक्षस्थमब्रवीत् ॥ ०१३ ॥

अश्वस्येवास्य यत्स्थाम नदतः प्रदिशो गतम् ।
अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति ॥ ०१४ ॥

सुतेन तेन सुप्रीतो भारद्वाजस्ततोऽभवत् ।
तत्रैव च वसन्धीमान्धनुर्वेदपरोऽभवत् ॥ ०१५ ॥

स शुश्राव महात्मानं जामदग्न्यं परंतपम् ।
ब्राह्मणेभ्यस्तदा राजन्दित्सन्तं वसु सर्वशः ॥ ०१६ ॥

वनं तु प्रस्थितं रामं भारद्वाजस्तदाब्रवीत् ।
आगतं वित्तकामं मां विद्धि द्रोणं द्विजर्षभम् ॥ ०१७ ॥

राम उवाच ॥

हिरण्यं मम यच्चान्यद्वसु किञ्चन विद्यते ।
ब्राह्मणेभ्यो मया दत्तं सर्वमेव तपोधन ॥ ०१८ ॥

तथैवेयं धरा देवी सागरान्ता सपत्तना ।
कश्यपाय मया दत्ता कृत्स्ना नगरमालिनी ॥ ०१९ ॥

शरीरमात्रमेवाद्य मयेदमवशेषितम् ।
अस्त्राणि च महार्हाणि शस्त्राणि विविधानि च ॥ ०२० ॥

वृणीष्व किं प्रयच्छामि तुभ्यं द्रोण वदाशु तत् ॥ ०२० ॥

द्रोण उवाच ॥

अस्त्राणि मे समग्राणि ससंहाराणि भार्गव ।
सप्रयोगरहस्यानि दातुमर्हस्यशेषतः ॥ ०२१ ॥

वैशंपायन उवाच ॥

तथेत्युक्त्वा ततस्तस्मै प्रादादस्त्राणि भार्गवः ।
सरहस्यव्रतं चैव धनुर्वेदमशेषतः ॥ ०२२ ॥

प्रतिगृह्य तु तत्सर्वं कृतास्त्रो द्विजसत्तमः ।
प्रियं सखायं सुप्रीतो जगाम द्रुपदं प्रति ॥ ०२३ ॥

---

# अध्याय १२२

वैशंपायन उवाच ॥

ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान् ।
अब्रवीत्पार्षतं राजन्सखायं विद्धि मामिति ॥ ००१ ॥

द्रुपद उवाच ॥

अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसी ।
यन्मां ब्रवीषि प्रसभं सखा तेऽहमिति द्विज ॥ ००२ ॥

न हि राज्ञामुदीर्णानामेवं भूतैर्नरैः क्वचित् ।
सख्यं भवति मन्दात्मञ्श्रिया हीनैर्धनच्युतैः ॥ ००३ ॥

सौहृदान्यपि जीर्यन्ते कालेन परिजीर्यताम् ।
सौहृदं मे त्वया ह्यासीत्पूर्वं सामर्थ्यबन्धनम् ॥ ००४ ॥

न सख्यमजरं लोके जातु दृश्येत कर्हिचित् ।
कामो वैनं विहरति क्रोधश्चैनं प्रवृश्चति ॥ ००५ ॥

मैवं जीर्णमुपासिष्ठाः सख्यं नवमुपाकुरु ।
आसीत्सख्यं द्विजश्रेष्ठ त्वया मेऽर्थनिबन्धनम् ॥ ००६ ॥

न दरिद्रो वसुमतो नाविद्वान्विदुषः सखा ।
शूरस्य न सखा क्लीबः सखिपूर्वं किमिष्यते ॥ ००७ ॥

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोः सख्यं विवाहश्च न तु पुष्टविपुष्टयोः ॥ ००८ ॥

नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ।
नाराज्ञा सङ्गतं राज्ञः सखिपूर्वं किमिष्यते ॥ ००९ ॥

वैशंपायन उवाच ॥

द्रुपदेनैवमुक्तस्तु भारद्वाजः प्रतापवान् ।
मुहूर्तं चिन्तयामास मन्युनाभिपरिप्लुतः ॥ ०१० ॥

स विनिश्चित्य मनसा पाञ्चालं प्रति बुद्धिमान् ।
जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ॥ ०११ ॥

कुमारास्त्वथ निष्क्रम्य समेता गजसाह्वयात् ।
क्रीडन्तो वीटया तत्र वीराः पर्यचरन्मुदा ॥ ०१२ ॥

पपात कूपे सा वीटा तेषां वै क्रीडतां तदा ।
न च ते प्रत्यपद्यन्त कर्म वीटोपलब्धये ॥ ०१३ ॥

अथ द्रोणः कुमारांस्तान्दृष्ट्वा कृत्यवतस्तदा ।
प्रहस्य मन्दं पैशल्यादभ्यभाषत वीर्यवान् ॥ ०१४ ॥

अहो नु धिग्बलं क्षात्रं धिगेतां वः कृतास्त्रताम् ।
भरतस्यान्वये जाता ये वीटां नाधिगच्छत ॥ ०१५ ॥

एष मुष्टिरिषीकाणां मयास्त्रेणाभिमन्त्रितः ।
अस्य वीर्यं निरीक्षध्वं यदन्यस्य न विद्यते ॥ ०१६ ॥

वेत्स्यामीषीकया वीटां तामिषीकामथान्यया ।
तामन्यया समायोगो वीटाया ग्रहणे मम ॥ ०१७ ॥

तदपश्यन्कुमारास्ते विस्मयोत्फुल्ललोचनाः ।
अवेक्ष्य चोद्धृतां वीटां वीटावेद्धारमब्रुवन् ॥ ०१८ ॥

अभिवादयामहे ब्रह्मन्नैतदन्येषु विद्यते ।
कोऽसि कं त्वाभिजानीमो वयं किं करवामहे ॥ ०१९ ॥

द्रोण उवाच ॥

आचक्षध्वं च भीष्माय रूपेण च गुणैश्च माम् ।
स एव सुमहाबुद्धिः सांप्रतं प्रतिपत्स्यते ॥ ०२० ॥

वैशंपायन उवाच ॥

तथेत्युक्त्वा तु ते सर्वे भीष्ममूचुः पितामहम् ।
ब्राह्मणस्य वचस्तथ्यं तच्च कर्मविशेषवत् ॥ ०२१ ॥

भीष्मः श्रुत्वा कुमाराणां द्रोणं तं प्रत्यजानत ।
युक्तरूपः स हि गुरुरित्येवमनुचिन्त्य च ॥ ०२२ ॥

अथैनमानीय तदा स्वयमेव सुसत्कृतम् ।
परिपप्रच्छ निपुणं भीष्मः शस्त्रभृतां वरः ॥ ०२३ ॥

हेतुमागमने तस्य द्रोणः सर्वं न्यवेदयत् ॥ ०२३ ॥

महर्षेरग्निवेश्यस्य सकाशमहमच्युत ।
अस्त्रार्थमगमं पूर्वं धनुर्वेदजिघृक्षया ॥ ०२४ ॥

ब्रह्मचारी विनीतात्मा जटिलो बहुलाः समाः ।
अवसं तत्र सुचिरं धनुर्वेदचिकीर्षया ॥ ०२५ ॥

पाञ्चालराजपुत्रस्तु यज्ञसेनो महाबलः ।
मया सहाकरोद्विद्यां गुरोः श्राम्यन्समाहितः ॥ ०२६ ॥

स मे तत्र सखा चासीदुपकारी प्रियश्च मे ।
तेनाहं सह सङ्गम्य रतवान्सुचिरं बत ॥ ०२७ ॥

बाल्यात्प्रभृति कौरव्य सहाध्ययनमेव च ॥ ०२७ ॥

स समासाद्य मां तत्र प्रियकारी प्रियंवदः ।
अब्रवीदिति मां भीष्म वचनं प्रीतिवर्धनम् ॥ ०२८ ॥

अहं प्रियतमः पुत्रः पितुर्द्रोण महात्मनः ।
अभिषेक्ष्यति मां राज्ये स पाञ्चाल्यो यदा तदा ॥ ०२९ ॥

त्वद्भोज्यं भविता राज्यं सखे सत्येन ते शपे ।
मम भोगाश्च वित्तं च त्वदधीनं सुखानि च ॥ ०३० ॥

एवमुक्तः प्रवव्राज कृतास्त्रोऽहं धनेप्सया ।
अभिषिक्तं च श्रुत्वैनं कृतार्थोऽस्मीति चिन्तयन् ॥ ०३१ ॥

प्रियं सखायं सुप्रीतो राज्यस्थं पुनराव्रजम् ।
संस्मरन्सङ्गमं चैव वचनं चैव तस्य तत् ॥ ०३२ ॥

ततो द्रुपदमागम्य सखिपूर्वमहं प्रभो ।
अब्रुवं पुरुषव्याघ्र सखायं विद्धि मामिति ॥ ०३३ ॥

उपस्थितं तु द्रुपदः सखिवच्चाभिसङ्गतम् ।
स मां निराकारमिव प्रहसन्निदमब्रवीत् ॥ ०३४ ॥

अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसी ।
यदात्थ मां त्वं प्रसभं सखा तेऽहमिति द्विज ॥ ०३५ ॥

न हि राज्ञामुदीर्णानामेवंभूतैर्नरैः क्वचित् ।
सख्यं भवति मन्दात्मञ्श्रिया हीनैर्धनच्युतैः ॥ ०३६ ॥

नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ।
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥ ०३७ ॥

द्रुपदेनैवमुक्तोऽहं मन्युनाभिपरिप्लुतः ।
अभ्यागच्छं कुरून्भीष्म शिष्यैरर्थी गुणान्वितैः ॥ ०३८ ॥

प्रतिजग्राह तं भीष्मो गुरुं पाण्डुसुतैः सह ।
पौत्रानादाय तान्सर्वान्वसूनि विविधानि च ॥ ०३९ ॥

शिष्या इति ददौ राजन्द्रोणाय विधिपूर्वकम् ।
स च शिष्यान्महेष्वासः प्रतिजग्राह कौरवान् ॥ ०४० ॥

प्रतिगृह्य च तान्सर्वान्द्रोणो वचनमब्रवीत् ।
रहस्येकः प्रतीतात्मा कृतोपसदनांस्तदा ॥ ०४१ ॥

कार्यं मे काङ्क्षितं किञ्चिद्धृदि संपरिवर्तते ।
कृतास्त्रैस्तत्प्रदेयं मे तदृतं वदतानघाः ॥ ०४२ ॥

तच्छ्रुत्वा कौरवेयास्ते तूष्णीमासन्विशां पते ।
अर्जुनस्तु ततः सर्वं प्रतिजज्ञे परंतपः ॥ ०४३ ॥

ततोऽर्जुनं मूर्ध्नि तदा समाघ्राय पुनः पुनः ।
प्रीतिपूर्वं परिष्वज्य प्ररुरोद मुदा तदा ॥ ०४४ ॥

ततो द्रोणः पाण्डुपुत्रानस्त्राणि विविधानि च ।
ग्राहयामास दिव्यानि मानुषाणि च वीर्यवान् ॥ ०४५ ॥

राजपुत्रास्तथैवान्ये समेत्य भरतर्षभ ।
अभिजग्मुस्ततो द्रोणमस्त्रार्थे द्विजसत्तमम् ॥ ०४६ ॥

वृष्णयश्चान्धकाश्चैव नानादेश्याश्च पार्थिवाः ॥ ०४६ ॥

सूतपुत्रश्च राधेयो गुरुं द्रोणमियात्तदा ।

स्पर्धमानस्तु पार्थेन सूतपुत्रोऽत्यमर्षणः ॥ ०४७ ॥

दुर्योधनमुपाश्रित्य पाण्डवानत्यमन्यत ॥ ०४७ ॥

---

# अध्याय १२३

वैशंपायन उवाच ॥

अर्जुनस्तु परं यत्नमातस्थे गुरुपूजने ।
अस्त्रे च परमं योगं प्रियो द्रोणस्य चाभवत् ॥ ००१ ॥

द्रोणेन तु तदाहूय रहस्युक्तोऽन्नसाधकः ।
अन्धकारेऽर्जुनायान्नं न देयं ते कथञ्चन ॥ ००२ ॥

ततः कदाचिद्भुञ्जाने प्रववौ वायुरर्जुने ।
तेन तत्र प्रदीपः स दीप्यमानो निवापितः ॥ ००३ ॥

भुङ्क्त एवार्जुनो भक्तं न चास्यास्याद्व्यमुह्यत ।
हस्तस्तेजस्विनो नित्यमन्नग्रहणकारणात् ॥ ००४ ॥

तदभ्यासकृतं मत्वा रात्रावभ्यस्त पाण्डवः ॥ ००४ ॥

तस्य ज्यातलनिर्घोषं द्रोणः शुश्राव भारत ।
उपेत्य चैनमुत्थाय परिष्वज्येदमब्रवीत् ॥ ००५ ॥

प्रयतिष्ये तथा कर्तुं यथा नान्यो धनुर्धरः ।
त्वत्समो भविता लोके सत्यमेतद्ब्रवीमि ते ॥ ००६ ॥

ततो द्रोणोऽर्जुनं भूयो रथेषु च गजेषु च ।
अश्वेषु भूमावपि च रणशिक्षामशिक्षयत् ॥ ००७ ॥

गदायुद्धेऽसिचर्यायां तोमरप्रासशक्तिषु ।
द्रोणः सङ्कीर्णयुद्धेषु शिक्षयामास पाण्डवम् ॥ ००८ ॥

तस्य तत्कौशलं दृष्ट्वा धनुर्वेदजिघृक्षवः ।
राजानो राजपुत्राश्च समाजग्मुः सहस्रशः ॥ ००९ ॥

ततो निषादराजस्य हिरण्यधनुषः सुतः ।
एकलव्यो महाराज द्रोणमभ्याजगाम ह ॥ ०१० ॥

न स तं प्रतिजग्राह नैषादिरिति चिन्तयन् ।
शिष्यं धनुषि धर्मज्ञस्तेषामेवान्ववेक्षया ॥ ०११ ॥

स तु द्रोणस्य शिरसा पादौ गृह्य परंतपः ।
अरण्यमनुसंप्राप्तः कृत्वा द्रोणं महीमयम् ॥ ०१२ ॥

तस्मिन्नाचार्यवृत्तिं च परमामास्थितस्तदा ।
इष्वस्त्रे योगमातस्थे परं नियममास्थितः ॥ ०१३ ॥

परया श्रद्धया युक्तो योगेन परमेण च ।
विमोक्षादानसंधाने लघुत्वं परमाप सः ॥ ०१४ ॥

अथ द्रोणाभ्यनुज्ञाताः कदाचित्कुरुपाण्डवाः ।
रथैर्विनिर्ययुः सर्वे मृगयामरिमर्दनाः ॥ ०१५ ॥

तत्रोपकरणं गृह्य नरः कश्चिद्यदृच्छया ।
राजन्ननुजगामैकः श्वानमादाय पाण्डवान् ॥ ०१६ ॥

तेषां विचरतां तत्र तत्तत्कर्म चिकीर्षताम् ।

श्वा चरन्स वने मूढो नैषादिं प्रति जग्मिवान् ॥ ०१७ ॥

स कृष्णं मलदिग्धाङ्गं कृष्णाजिनधरं वने ।
नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके ॥ ०१८ ॥

तदा तस्याथ भषतः शुनः सप्त शरान्मुखे ।
लाघवं दर्शयन्नस्त्रे मुमोच युगपद्यथा ॥ ०१९ ॥

स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह ।
तं दृष्ट्वा पाण्डवा वीरा विस्मयं परमं ययुः ॥ ०२० ॥

लाघवं शब्दवेधित्वं दृष्ट्वा तत्परमं तदा ।
प्रेक्ष्य तं व्रीडिताश्चासन्प्रशशंसुश्च सर्वशः ॥ ०२१ ॥

तं ततोऽन्वेषमाणास्ते वने वननिवासिनम् ।
ददृशुः पाण्डवा राजन्नस्यन्तमनिशं शरान् ॥ ०२२ ॥

न चैनमभ्यजानंस्ते तदा विकृतदर्शनम् ।
अथैनं परिपप्रच्छुः को भवान्कस्य वेत्युत ॥ ०२३ ॥

एकलव्य उवाच ॥

निषादाधिपतेर्वीरा हिरण्यधनुषः सुतम् ।
द्रोणशिष्यं च मां वित्त धनुर्वेदकृतश्रमम् ॥ ०२४ ॥

वैशंपायन उवाच ॥

ते तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः ।
यथावृत्तं च ते सर्वं द्रोणायाचख्युरद्भुतम् ॥ ०२५ ॥

कौन्तेयस्त्वर्जुनो राजन्नेकलव्यमनुस्मरन् ।

रहो द्रोणं समागम्य प्रणयादिदमब्रवीत् ॥ ०२६ ॥

नन्वहं परिरभ्यैकः प्रीतिपूर्वमिदं वचः ।
भवतोक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यति ॥ ०२७ ॥

अथ कस्मान्मद्विशिष्टो लोकादपि च वीर्यवान् ।
अस्त्यन्यो भवतः शिष्यो निषादाधिपतेः सुतः ॥ ०२८ ॥

मुहूर्तमिव तं द्रोणश्चिन्तयित्वा विनिश्चयम् ।
सव्यसाचिनमादाय नैषादिं प्रति जग्मिवान् ॥ ०२९ ॥

ददर्श मलदिग्धाङ्गं जटिलं चीरवाससम् ।
एकलव्यं धनुष्पाणिमस्यन्तमनिशं शरान् ॥ ०३० ॥

एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्तमन्तिकात् ।
अभिगम्योपसङ्गृह्य जगाम शिरसा महीम् ॥ ०३१ ॥

पूजयित्वा ततो द्रोणं विधिवत्स निषादजः ।
निवेद्य शिष्यमात्मानं तस्थौ प्राञ्जलिरग्रतः ॥ ०३२ ॥

ततो द्रोणोऽब्रवीद्राजन्नेकलव्यमिदं वचः ।
यदि शिष्योऽसि मे तूर्णं वेतनं संप्रदीयताम् ॥ ०३३ ॥

एकलव्यस्तु तच्छ्रुत्वा प्रीयमाणोऽब्रवीदिदम् ।
किं प्रयच्छामि भगवन्नाज्ञापयतु मां गुरुः ॥ ०३४ ॥

न हि किञ्चिददेयं मे गुरवे ब्रह्मवित्तम ।
तमब्रवीत्त्वयाङ्गुष्ठो दक्षिणो दीयतां मम ॥ ०३५ ॥

एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणम् ।
प्रतिज्ञामात्मनो रक्षन्सत्ये च निरतः सदा ॥ ०३६ ॥

तथैव हृष्टवदनस्तथैवादीनमानसः ।
छित्त्वाविचार्य तं प्रादाद्द्रोणायाङ्गुष्ठमात्मनः ॥ ०३७ ॥

ततः परं तु नैषादिरङ्गुलीभिर्व्यकर्षत ।
न तथा स तु शीघ्रोऽभूद्यथा पूर्वं नराधिप ॥ ०३८ ॥

ततोऽर्जुनः प्रीतमना बभूव विगतज्वरः ।
द्रोणश्च सत्यवागासीन्नान्योऽभ्यभवदर्जुनम् ॥ ०३९ ॥

द्रोणस्य तु तदा शिष्यौ गदायोग्यां विशेषतः ।
दुर्योधनश्च भीमश्च कुरूणामभ्यगच्छताम् ॥ ०४० ॥

अश्वत्थामा रहस्येषु सर्वेष्वभ्यधिकोऽभवत् ।
तथाति पुरुषानन्यान्त्सारुकौ यमजावुभौ ॥ ०४१ ॥

युधिष्ठिरो रथश्रेष्ठः सर्वत्र तु धनञ्जयः ॥ ०४१ ॥

प्रथितः सागरान्तायां रथयूथपयूथपः ।
बुद्धियोगबलोत्साहैः सर्वास्त्रेषु च पाण्डवः ॥ ०४२ ॥

अस्त्रे गुर्वनुरागे च विशिष्टोऽभवदर्जुनः ।
तुल्येष्वस्त्रोपदेशेषु सौष्ठवेन च वीर्यवान् ॥ ०४३ ॥

एकः सर्वकुमाराणां बभूवातिरथोऽर्जुनः ॥ ०४३ ॥

प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम् ।
धार्तराष्ट्रा दुरात्मानो नामृष्यन्त नराधिप ॥ ०४४ ॥

तांस्तु सर्वान्समानीय सर्वविद्यासु निष्ठितान् ।
द्रोणः प्रहरणज्ञाने जिज्ञासुः पुरुषर्षभ ॥ ०४५ ॥

कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतम् ।
अविज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत् ॥ ०४६ ॥

द्रोण उवाच ॥

शीघ्रं भवन्तः सर्वे वै धनूंष्यादाय सत्वराः ।
भासमेतं समुद्दिश्य तिष्ठन्तां संहितेषवः ॥ ०४७ ॥

मद्वाक्यसमकालं च शिरोऽस्य विनिपात्यताम् ।
एकैकशो नियोक्ष्यामि तथा कुरुत पुत्रकाः ॥ ०४८ ॥

वैशंपायन उवाच ॥

ततो युधिष्ठिरं पूर्वमुवाचाङ्गिरसां वरः ।
संधत्स्व बाणं दुर्धर्ष मद्वाक्यान्ते विमुञ्च च ॥ ०४९ ॥

ततो युधिष्ठिरः पूर्वं धनुर्गृह्य महारवम् ।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः ॥ ०५० ॥

ततो विततधन्वानं द्रोणस्तं कुरुनन्दनम् ।
स मुहूर्तादुवाचेदं वचनं भरतर्षभ ॥ ०५१ ॥

पश्यस्येनं द्रुमाग्रस्थं भासं नरवरात्मज ।
पश्यामीत्येवमाचार्यं प्रत्युवाच युधिष्ठिरः ॥ ०५२ ॥

स मुहूर्तादिव पुनर्द्रोणस्तं प्रत्यभाषत ।
अथ वृक्षमिमं मां वा भ्रातॄन्वापि प्रपश्यसि ॥ ०५३ ॥

तमुवाच स कौन्तेयः पश्याम्येनं वनस्पतिम् ।
भवन्तं च तथा भ्रातॄन्भासं चेति पुनः पुनः ॥ ०५४ ॥

तमुवाचापसर्पेति द्रोणोऽप्रीतमना इव ।
नैतच्छक्यं त्वया वेद्धुं लक्ष्यमित्येव कुत्सयन् ॥ ०५५ ॥

ततो दुर्योधनादींस्तान्धार्तराष्ट्रान्महायशाः ।
तेनैव क्रमयोगेन जिज्ञासुः पर्यपृच्छत ॥ ०५६ ॥

अन्यांश्च शिष्यान्भीमादीन्राज्ञश्चैवान्यदेशजान् ।
तथा च सर्वे सर्वं तत्पश्याम इति कुत्सिताः ॥ ०५७ ॥

ततो धनञ्जयं द्रोणः स्मयमानोऽभ्यभाषत ।
त्वयेदानीं प्रहर्तव्यमेतल्लक्ष्यं निशाम्यताम् ॥ ०५८ ॥

मद्वाक्यसमकालं ते मोक्तव्योऽत्र भवेच्छरः ।
वितत्य कार्मुकं पुत्र तिष्ठ तावन्मुहूर्तकम् ॥ ०५९ ॥

एवमुक्तः सव्यसाची मण्डलीकृतकार्मुकः ।
तस्थौ लक्ष्यं समुद्दिश्य गुरुवाक्यप्रचोदितः ॥ ०६० ॥

मुहूर्तादिव तं द्रोणस्तथैव समभाषत ।
पश्यस्येनं स्थितं भासं द्रुमं मामपि वेत्युत ॥ ०६१ ॥

पश्याम्येनं भासमिति द्रोणं पार्थोऽभ्यभाषत ।
न तु वृक्षं भवन्तं वा पश्यामीति च भारत ॥ ०६२ ॥

ततः प्रीतमना द्रोणो मुहूर्तादिव तं पुनः ।
प्रत्यभाषत दुर्धर्षः पाण्डवानां रथर्षभम् ॥ ०६३ ॥

भासं पश्यसि यद्येनं तथा ब्रूहि पुनर्वचः ।
शिरः पश्यामि भासस्य न गात्रमिति सोऽब्रवीत् ॥ ०६४ ॥

अर्जुनेनैवमुक्तस्तु द्रोणो हृष्टतनूरुहः ।
मुञ्चस्वेत्यब्रवीत्पार्थं स मुमोचाविचारयन् ॥ ०६५ ॥

ततस्तस्य नगस्थस्य क्षुरेण निशितेन ह ।
शिर उत्कृत्य तरसा पातयामास पाण्डवः ॥ ०६६ ॥

तस्मिन्कर्मणि संसिद्धे पर्यष्वजत फल्गुनम् ।
मेने च द्रुपदं संख्ये सानुबन्धं पराजितम् ॥ ०६७ ॥

कस्यचित्त्वथ कालस्य सशिष्योऽङ्गिरसां वरः ।
जगाम गङ्गामभितो मज्जितुं भरतर्षभ ॥ ०६८ ॥

अवगाढमथो द्रोणं सलिले सलिलेचरः ।
ग्राहो जग्राह बलवाञ्जङ्घान्ते कालचोदितः ॥ ०६९ ॥

स समर्थोऽपि मोक्षाय शिष्यान्सर्वानचोदयत् ।
ग्राहं हत्वा मोक्षयध्वं मामिति त्वरयन्निव ॥ ०७० ॥

तद्वाक्यसमकालं तु बीभत्सुर्निशितैः शरैः ।
आवापैः पञ्चभिर्ग्राहं मग्नमम्भस्यताडयत् ॥ ०७१ ॥

इतरे तु विसंमूढास्तत्र तत्र प्रपेदिरे ॥ ०७१ ॥

तं च दृष्ट्वा क्रियोपेतं द्रोणोऽमन्यत पाण्डवम् ।
विशिष्टं सर्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा ॥ ०७२ ॥

स पार्थबाणैर्बहुधा खण्डशः परिकल्पितः ।
ग्राहः पञ्चत्वमापेदे जङ्घां त्यक्त्वा महात्मनः ॥ ०७३ ॥

अथाब्रवीन्महात्मानं भारद्वाजो महारथम् ।
गृहाणेदं महाबाहो विशिष्टमतिदुर्धरम् ॥ ०७४ ॥

अस्त्रं ब्रह्मशिरो नाम सप्रयोगनिवर्तनम् ॥ ०७४ ॥

न च ते मानुषेष्वेतत्प्रयोक्तव्यं कथञ्चन ।
जगद्विनिर्दहेदेतदल्पतेजसि पातितम् ॥ ०७५ ॥

असामान्यमिदं तात लोकेष्वस्त्रं निगद्यते ।
तद्धारयेथाः प्रयतः शृणु चेदं वचो मम ॥ ०७६ ॥

बाधेतामानुषः शत्रुर्यदा त्वां वीर कश्चन ।
तद्वधाय प्रयुञ्जीथास्तदास्त्रमिदमाहवे ॥ ०७७ ॥

तथेति तत्प्रतिश्रुत्य बीभत्सुः स कृताञ्जलिः ।
जग्राह परमास्त्रं तदाह चैनं पुनर्गुरुः ॥ ०७८ ॥

भविता त्वत्समो नान्यः पुमा.ण्ल्लोके धनुर्धरः ॥ ०७८ ॥

---

# जतुगृहदाहपर्व

## अध्याय १२४

वैशंपायन उवाच ॥

कृतास्त्रान्धार्तराष्ट्रांश्च पाण्डुपुत्रांश्च भारत ।
दृष्ट्वा द्रोणोऽब्रवीद्राजन्धृतराष्ट्रं जनेश्वरम् ॥ ००१ ॥

कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।

गाङ्गेयस्य च सांनिध्ये व्यासस्य विदुरस्य च ॥ ००२ ॥

राजन्संप्राप्तविद्यास्ते कुमराः कुरुसत्तम ।
ते दर्शयेयुः स्वां शिक्षां राजन्ननुमते तव ॥ ००३ ॥

ततोऽब्रवीन्महाराजः प्रहृष्टेनान्तरात्मना ।
भारद्वाज महत्कर्म कृतं ते द्विजसत्तम ॥ ००४ ॥

यदा तु मन्यसे कालं यस्मिन्देशे यथा यथा ।
तथा तथा विधानाय स्वयमाज्ञापयस्व माम् ॥ ००५ ॥

स्पृहयाम्यद्य निर्वेदात्पुरुषाणां सचक्षुषाम् ।
अस्त्रहेतोः पराक्रान्तान्ये मे द्रक्ष्यन्ति पुत्रकान् ॥ ००६ ॥

क्षत्तर्यद्गुरुराचार्यो ब्रवीति कुरु तत्तथा ।
न हीदृशं प्रियं मन्ये भविता धर्मवत्सल ॥ ००७ ॥

ततो राजानमामन्त्र्य विदुरानुगतो बहिः ।
भारद्वाजो महाप्राज्ञो मापयामास मेदिनीम् ॥ ००८ ॥

समामवृक्षां निर्गुल्मामुदक्प्रवणसंस्थिताम् ॥ ००८ ॥

तस्यां भूमौ बलिं चक्रे तिथौ नक्षत्रपूजिते ।
अवघुष्टं पुरे चापि तदर्थं वदतां वर ॥ ००९ ॥

रङ्गभूमौ सुविपुलं शास्त्रदृष्टं यथाविधि ।
प्रेक्षागारं सुविहितं चक्रुस्तत्र च शिल्पिनः ॥ ०१० ॥

राज्ञः सर्वायुधोपेतं स्त्रीणां चैव नरर्षभ ॥ ०१० ॥

मञ्चांश्च कारयामासुस्तत्र जानपदा जनाः ।

विपुलानुच्छ्रयोपेताञ्शिबिकाश्च महाधनाः ॥ ०११ ॥

तस्मिंस्ततोऽहनि प्राप्ते राजा ससचिवस्तदा ।
भीष्मं प्रमुखतः कृत्वा कृपं चाचार्यसत्तमम् ॥ ०१२ ॥

मुक्ताजालपरिक्षिप्तं वैडूर्यमणिभूषितम् ।
शातकुम्भमयं दिव्यं प्रेक्षागारमुपागमत् ॥ ०१३ ॥

गान्धारी च महाभागा कुन्ती च जयतां वर ।
स्त्रियश्च सर्वा या राज्ञः सप्रेष्याः सपरिच्छदाः ॥ ०१४ ॥

हर्षादारुरुहुर्मञ्चान्मेरुं देवस्त्रियो यथा ॥ ०१४ ॥

ब्राह्मणक्षत्रियाद्यं च चातुर्वर्ण्यं पुराद्द्रुतम् ।
दर्शनेप्सु समभ्यागात्कुमाराणां कृतास्त्रताम् ॥ ०१५ ॥

प्रवादितैश्च वादित्रैर्जनकौतूहलेन च ।
महार्णव इव क्षुब्धः समाजः सोऽभवत्तदा ॥ ०१६ ॥

ततः शुक्लाम्बरधरः शुक्लयज्ञोपवीतवान् ।
शुक्लकेशः सितश्मश्रुः शुक्लमाल्यानुलेपनः ॥ ०१७ ॥

रङ्गमध्यं तदाचार्यः सपुत्रः प्रविवेश ह ।
नभो जलधरैर्हीनं साङ्गारक इवांशुमान् ॥ ०१८ ॥

स यथासमयं चक्रे बलिं बलवतां वरः ।
ब्राह्मणांश्चात्र मन्त्रज्ञान्वाचयामास मङ्गलम् ॥ ०१९ ॥

अथ पुण्याहघोषस्य पुण्यस्य तदनन्तरम् ।
विविशुर्विविधं गृह्य शस्त्रोपकरणं नराः ॥ ०२० ॥

ततो बद्धतनुत्राणा बद्धकक्ष्या महाबलाः ।
बद्धतूणाः सधनुषो विविशुर्भरतर्षभाः ॥ ०२१ ॥

अनुज्येष्ठं च ते तत्र युधिष्ठिरपुरोगमाः ।
चक्रुरस्त्रं महावीर्याः कुमाराः परमाद्भुतम् ॥ ०२२ ॥

केचिच्छराक्षेपभयाच्छिरांस्यवननामिरे ।
मनुजा धृष्टमपरे वीक्षां चक्रुः सविस्मयाः ॥ ०२३ ॥

ते स्म लक्ष्याणि विविधुर्बाणैर्नामाङ्कशोभितैः ।
विविधैर्लाघवोत्सृष्टैरुह्यन्तो वाजिभिर्द्रुतम् ॥ ०२४ ॥

तत्कुमारबलं तत्र गृहीतशरकार्मुकम् ।
गन्धर्वनगराकारं प्रेक्ष्य ते विस्मिताभवन् ॥ ०२५ ॥

सहसा चुक्रुशुस्तत्र नराः शतसहस्रशः ।
विस्मयोत्फुल्लनयनाः साधु साध्विति भारत ॥ ०२६ ॥

कृत्वा धनुषि ते मार्गान्रथचर्यासु चासकृत् ।
गजपृष्ठेऽश्वपृष्ठे च नियुद्धे च महाबलाः ॥ ०२७ ॥

गृहीतखड्गचर्माणस्ततो भूयः प्रहारिणः ।
त्सरुमार्गान्यथोद्दिष्टांश्चेरुः सर्वासु भूमिषु ॥ ०२८ ॥

लाघवं सौष्ठवं शोभां स्थिरत्वं दृढमुष्टिताम् ।
ददृशुस्तत्र सर्वेषां प्रयोगे खड्गचर्मणाम् ॥ ०२९ ॥

अथ तौ नित्यसंहृष्टौ सुयोधनवृकोदरौ ।
अवतीर्णौ गदाहस्तावेकशृङ्गाविवाचलौ ॥ ०३० ॥

बद्धकक्ष्यौ महाबाहू पौरुषे पर्यवस्थितौ ।

बृंहन्तौ वाशिताहेतोः समदाविव कुञ्जरौ ॥ ०३१ ॥

तौ प्रदक्षिणसव्यानि मण्डलानि महाबलौ ।
चेरतुर्निर्मलगदौ समदाविव गोवृषौ ॥ ०३२ ॥

विदुरो धृतराष्ट्राय गान्धार्यै पाण्डवारणिः ।
न्यवेदयेतां तत्सर्वं कुमाराणां विचेष्टितम् ॥ ०३३ ॥

---

# अध्याय १२५

वैशंपायन उवाच ॥

कुरुराजे च रङ्गस्थे भीमे च बलिनां वरे ।
पक्षपातकृतस्नेहः स द्विधेवाभवज्जनः ॥ ००१ ॥

हा वीर कुरुराजेति हा भीमेति च नर्दताम् ।
पुरुषाणां सुविपुलाः प्रणादाः सहसोत्थिताः ॥ ००२ ॥

ततः क्षुब्धार्णवनिभं रङ्गमालोक्य बुद्धिमान् ।
भारद्वाजः प्रियं पुत्रमश्वत्थामानमब्रवीत् ॥ ००३ ॥

वारयैतौ महावीर्यौ कृतयोग्यावुभावपि ।
मा भूद्रङ्गप्रकोपोऽयं भीमदुर्योधनोद्भवः ॥ ००४ ॥

ततस्तावुद्यतगदौ गुरुपुत्रेण वारितौ ।
युगान्तानिलसङ्क्षुब्धौ महावेगाविवार्णवौ ॥ ००५ ॥

ततो रङ्गाङ्गणगतो द्रोणो वचनमब्रवीत् ।

निवार्य वादित्रगणं महामेघनिभस्वनम् ॥ ००६ ॥

यो मे पुत्रात्प्रियतरः सर्वास्त्रविदुषां वरः ।
ऐन्द्रिरिन्द्रानुजसमः स पार्थो दृश्यतामिति ॥ ००७ ॥

आचार्यवचनेनाथ कृतस्वस्त्ययनो युवा ।
बद्धगोधाङ्गुलित्राणः पूर्णतूणः सकार्मुकः ॥ ००८ ॥

काञ्चनं कवचं बिभ्रत्प्रत्यदृश्यत फल्गुनः ।
सार्कः सेन्द्रायुधतडित्ससंध्य इव तोयदः ॥ ००९ ॥

ततः सर्वस्य रङ्गस्य समुत्पिञ्जोऽभवन्महान् ।
प्रावाद्यन्त च वाद्यानि सशङ्खानि समन्ततः ॥ ०१० ॥

एष कुन्तीसुतः श्रीमानेष पाण्डवमध्यमः ।
एष पुत्रो महेन्द्रस्य कुरूणामेष रक्षिता ॥ ०११ ॥

एषोऽस्त्रविदुषां श्रेष्ठ एष धर्मभृतां वरः ।
एष शीलवतां चापि शीलज्ञाननिधिः परः ॥ ०१२ ॥

इत्येवमतुला वाचः शृण्वन्त्याः प्रेक्षकेरिताः ।
कुन्त्याः प्रस्नवसंमिश्रैरस्रैः क्लिन्नमुरोऽभवत् ॥ ०१३ ॥

तेन शब्देन महता पूर्णश्रुतिरथाब्रवीत् ।
धृतराष्ट्रो नरश्रेष्ठो विदुरं हृष्टमानसः ॥ ०१४ ॥

क्षत्तः क्षुब्धार्णवनिभः किमेष सुमहास्वनः ।
सहसैवोत्थितो रङ्गे भिन्दन्निव नभस्तलम् ॥ ०१५ ॥

विदुर उवाच ॥

एष पार्थो महाराज फल्गुनः पाण्डुनन्दनः ।
अवतीर्णः सकवचस्तत्रैष सुमहास्वनः ॥ ०१६ ॥

धृतराष्ट्र उवाच ॥

धन्योऽस्म्यनुगृहीतोऽस्मि रक्षितोऽस्मि महामते ।
पृथारणिसमुद्भूतैस्त्रिभिः पाण्डववह्निभिः ॥ ०१७ ॥

वैशंपायन उवाच ॥

तस्मिन्समुदिते रङ्गे कथञ्चित्पर्यवस्थिते ।
दर्शयामास बीभत्सुराचार्यादस्त्रलाघवम् ॥ ०१८ ॥

आग्नेयेनासृजद्वह्निं वारुणेनासृजत्पयः ।
वायव्येनासृजद्वायुं पार्जन्येनासृजद्घनान् ॥ ०१९ ॥

भौमेन प्राविशद्भूमिं पार्वतेनासृजद्गिरीन् ।
अन्तर्धानेन चास्त्रेण पुनरन्तर्हितोऽभवत् ॥ ०२० ॥

क्षणात्प्रांशुः क्षणाद्ध्रस्वः क्षणाच्च रथधूर्गतः ।
क्षणेन रथमध्यस्थः क्षणेनावापतन्महीम् ॥ ०२१ ॥

सुकुमारं च सूक्ष्मं च गुरुं चापि गुरुप्रियः ।
सौष्ठवेनाभिसंयुक्तः सोऽविध्यद्विविधैः शरैः ॥ ०२२ ॥

भ्रमतश्च वराहस्य लोहस्य प्रमुखे समम् ।
पञ्च बाणानसंसक्तान्स मुमोचैकबाणवत् ॥ ०२३ ॥

गव्ये विषाणकोशे च चले रज्ज्ववलम्बिते ।
निचखान महावीर्यः सायकानेकविंशतिम् ॥ ०२४ ॥

इत्येवमादि सुमहत्खड्गे धनुषि चाभवत् ।
गदायां शस्त्रकुशलो दर्शनानि व्यदर्शयत् ॥ ०२५ ॥

ततः समाप्तभूयिष्ठे तस्मिन्कर्मणि भारत ।
मन्दीभूते समाजे च वादित्रस्य च निस्वने ॥ ०२६ ॥

द्वारदेशात्समुद्भूतो माहात्म्य बलसूचकः ।
वज्रनिष्पेषसदृशः शुश्रुवे भुजनिस्वनः ॥ ०२७ ॥

दीर्यन्ते किं नु गिरयः किं स्विद्भूमिर्विदीर्यते ।
किं स्विदापूर्यते व्योम जलभारघनैर्घनैः ॥ ०२८ ॥

रङ्गस्यैवं मतिरभूत्क्षणेन वसुधाधिप ।
द्वारं चाभिमुखाः सर्वे बभूवुः प्रेक्षकास्तदा ॥ ०२९ ॥

पञ्चभिर्भ्रातृभिः पार्थैर्द्रोणः परिवृतो बभौ ।
पञ्चतारेण संयुक्तः सावित्रेणेव चन्द्रमाः ॥ ०३० ॥

अश्वत्थाम्ना च सहितं भ्रातृणां शतमूर्जितम् ।
दुर्योधनममित्रघ्नमुत्थितं पर्यवारयत् ॥ ०३१ ॥

स तैस्तदा भ्रातृभिरुद्यतायुधै ;र्वृतो गदापाणिरवस्थितैः स्थितः ।
बभौ यथा दानवसङ्क्षये पुरा ; पुरंदरो देवगणैः समावृतः ॥ ०३२ ॥

---

# अध्याय १२६

वैशंपायन उवाच ॥

दत्तेऽवकाशे पुरुषैर्विस्मयोत्फुल्ललोचनैः ।
विवेश रङ्गं विस्तीर्णं कर्णः परपुरञ्जयः ॥ ००१ ॥

सहजं कवचं बिभ्रत्कुण्डलोद्योतिताननः ।
सधनुर्बद्धनिस्त्रिंशः पादचारीव पर्वतः ॥ ००२ ॥

कन्यागर्भः पृथुयशाः पृथायाः पृथुलोचनः ।
तीक्ष्णांशोर्भास्करस्यांशः कर्णोऽरिगणसूदनः ॥ ००३ ॥

सिंहर्षभगजेन्द्राणां तुल्यवीर्यपराक्रमः ।
दीप्तिकान्तिद्युतिगुणैः सूर्येन्दुज्वलनोपमः ॥ ००४ ॥

प्रांशुः कनकतालाभः सिंहसंहननो युवा ।
असंख्येयगुणः श्रीमान्भास्करस्यात्मसंभवः ॥ ००५ ॥

स निरीक्ष्य महाबाहुः सर्वतो रङ्गमण्डलम् ।
प्रणामं द्रोणकृपयोर्नात्यादृतमिवाकरोत् ॥ ००६ ॥

स सामाजजनः सर्वो निश्चलः स्थिरलोचनः ।
कोऽयमित्यागतक्षोभः कौतूहलपरोऽभवत् ॥ ००७ ॥

सोऽब्रवीन्मेघधीरेण स्वरेण वदतां वरः ।
भ्राता भ्रातरमज्ञातं सावित्रः पाकशासनिम् ॥ ००८ ॥

पार्थ यत्ते कृतं कर्म विशेषवदहं ततः ।
करिष्ये पश्यतां नृणां मात्मना विस्मयं गमः ॥ ००९ ॥

असमाप्ते ततस्तस्य वचने वदतां वर ।
यन्त्रोत्क्षिप्त इव क्षिप्रमुत्तस्थौ सर्वतो जनः ॥ ०१० ॥

प्रीतिश्च पुरुषव्याघ्र दुर्योधनमथास्पृशत् ।
ह्रीश्च क्रोधश्च बीभत्सुं क्षणेनान्वविशच्च ह ॥ ०११ ॥

ततो द्रोणाभ्यनुज्ञातः कर्णः प्रियरणः सदा ।
यत्कृतं तत्र पार्थेन तच्चकार महाबलः ॥ ०१२ ॥

अथ दुर्योधनस्तत्र भ्रातृभिः सह भारत ।
कर्णं परिष्वज्य मुदा ततो वचनमब्रवीत् ॥ ०१३ ॥

स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मानद ।
अहं च कुरुराज्यं च यथेष्टमुपभुज्यताम् ॥ ०१४ ॥

कर्ण उवाच ॥

कृतं सर्वेण मेऽन्येन सखित्वं च त्वया वृणे ।
द्वन्द्वयुद्धं च पार्थेन कर्तुमिच्छामि भारत ॥ ०१५ ॥

दुर्योधन उवाच ॥

भुङ्क्ष्व भोगान्मया सार्धं बन्धूनां प्रियकृद्भव ।
दुर्हृदां कुरु सर्वेषां मूर्ध्नि पादमरिंदम ॥ ०१६ ॥

वैशंपायन उवाच ॥

ततः क्षिप्तमिवात्मानं मत्वा पार्थोऽभ्यभाषत ।
कर्णं भ्रातृसमूहस्य मध्येऽचलमिव स्थितम् ॥ ०१७ ॥

अनाहूतोपसृप्तानामनाहूतोपजल्पिनाम् ।
ये लोकास्तान्हतः कर्ण मया त्वं प्रतिपत्स्यसे ॥ ०१८ ॥

कर्ण उवाच ॥

रङ्गोऽयं सर्वसामान्यः किमत्र तव फल्गुन ।
वीर्यश्रेष्ठाश्च राजन्या बलं धर्मोऽनुवर्तते ॥ ०१९ ॥

किं क्षेपैर्दुर्बलाश्वासैः शरैः कथय भारत ।
गुरोः समक्षं यावत्ते हराम्यद्य शिरः शरैः ॥ ०२० ॥

वैशंपायन उवाच ॥

ततो द्रोणाभ्यनुज्ञातः पार्थः परपुरञ्जयः ।
भ्रातृभिस्त्वरयाश्लिष्टो रणायोपजगाम तम् ॥ ०२१ ॥

ततो दुर्योधनेनापि सभ्रात्रा समरोद्यतः ।
परिष्वक्तः स्थितः कर्णः प्रगृह्य सशरं धनुः ॥ ०२२ ॥

ततः सविद्युत्स्तनितैः सेन्द्रायुधपुरोजवैः ।
आवृतं गगनं मेघैर्बलाकापङ्क्तिहासिभिः ॥ ०२३ ॥

ततः स्नेहाद्धरिहयं दृष्ट्वा रङ्गावलोकिनम् ।
भास्करोऽप्यनयन्नाशं समीपोपगतान्घनान् ॥ ०२४ ॥

मेघच्छायोपगूढस्तु ततोऽदृश्यत पाण्डवः ।
सूर्यातपपरिक्षिप्तः कर्णोऽपि समदृश्यत ॥ ०२५ ॥

धार्तराष्ट्रा यतः कर्णस्तस्मिन्देशे व्यवस्थिताः ।
भारद्वाजः कृपो भीष्मो यतः पार्थस्ततोऽभवन् ॥ ०२६ ॥

द्विधा रङ्गः समभवत्स्त्रीणां द्वैधमजायत ।
कुन्तिभोजसुता मोहं विज्ञातार्था जगाम ह ॥ ०२७ ॥

तां तथा मोहसंपन्नां विदुरः सर्वधर्मवित् ।

कुन्तीमाश्वासयामास प्रोक्ष्याद्भिश्चन्दनोक्षितैः ॥ ०२८ ॥

ततः प्रत्यागतप्राणा तावुभावपि दंशितौ ।
पुत्रौ दृष्ट्वा सुसंतप्ता नान्वपद्यत किञ्चन ॥ ०२९ ॥

तावुद्यतमहाचापौ कृपः शारद्वतोऽब्रवीत् ।
द्वन्द्वयुद्धसमाचारे कुशलः सर्वधर्मवित् ॥ ०३० ॥

अयं पृथायास्तनयः कनीयान्पाण्डुनन्दनः ।
कौरवो भवता सार्धं द्वन्द्वयुद्धं करिष्यति ॥ ०३१ ॥

त्वमप्येवं महाबाहो मातरं पितरं कुलम् ।
कथयस्व नरेन्द्राणां येषां त्वं कुलवर्धनः ॥ ०३२ ॥

ततो विदित्वा पार्थस्त्वां प्रतियोत्स्यति वा न वा ॥ ०३२ ॥

एवमुक्तस्य कर्णस्य व्रीडावनतमाननम् ।
बभौ वर्षाम्बुभिः क्लिन्नं पद्ममागलितं यथा ॥ ०३३ ॥

दुर्योधन उवाच ॥

आचार्य त्रिविधा योनी राज्ञां शास्त्रविनिश्चये ।
तत्कुलीनश्च शूरश्च सेनां यश्च प्रकर्षति ॥ ०३४ ॥

यद्ययं फल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति ।
तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते ॥ ०३५ ॥

वैशंपायन उवाच ॥

ततस्तस्मिन्क्षणे कर्णः सलाजकुसुमैर्घटैः ।
काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्महारथः ॥ ०३६ ॥

अभिषिक्तोऽङ्गराज्ये स श्रिया युक्तो महाबलः ॥ ०३६ ॥

सच्छत्रवालव्यजनो जयशब्दान्तरेण च ।
उवाच कौरवं राजा राजानं तं वृषस्तदा ॥ ०३७ ॥

अस्य राज्यप्रदानस्य सदृशं किं ददानि ते ।
प्रब्रूहि राजशार्दूल कर्ता ह्यस्मि तथा नृप ॥ ०३८ ॥

अत्यन्तं सख्यमिच्छामीत्याह तं स सुयोधनः ॥ ०३८ ॥

एवमुक्तस्ततः कर्णस्तथेति प्रत्यभाषत ।
हर्षाच्चोभौ समाश्लिष्य परां मुदमवापतुः ॥ ०३९ ॥

---

# अध्याय १२७

वैशंपायन उवाच ॥

ततः स्रस्तोत्तरपटः सप्रस्वेदः सवेपथुः ।
विवेशाधिरथो रङ्गं यष्टिप्राणो ह्वयन्निव ॥ ००१ ॥

तमालोक्य धनुस्त्यक्त्वा पितृगौरवयन्त्रितः ।
कर्णोऽभिषेकार्द्रशिराः शिरसा समवन्दत ॥ ००२ ॥

ततः पादाववच्छाद्य पटान्तेन ससंभ्रमः ।
पुत्रेति परिपूर्णार्थमब्रवीद्रथसारथिः ॥ ००३ ॥

परिष्वज्य च तस्याथ मूर्धानं स्नेहविक्लवः ।

अङ्गराज्याभिषेकार्द्रमश्रुभिः सिषिचे पुनः ॥ ००४ ॥

तं दृष्ट्वा सूतपुत्रोऽयमिति निश्चित्य पाण्डवः ।
भीमसेनस्तदा वाक्यमब्रवीत्प्रहसन्निव ॥ ००५ ॥

न त्वमर्हसि पार्थेन सूतपुत्र रणे वधम् ।
कुलस्य सदृशस्तूर्णं प्रतोदो गृह्यतां त्वया ॥ ००६ ॥

अङ्गराज्यं च नार्हस्त्वमुपभोक्तुं नराधम ।
श्वा हुताशसमीपस्थं पुरोडाशमिवाध्वरे ॥ ००७ ॥

एवमुक्तस्ततः कर्णः किञ्चित्प्रस्फुरिताधरः ।
गगनस्थं विनिःश्वस्य दिवाकरमुदैक्षत ॥ ००८ ॥

ततो दुर्योधनः कोपादुत्पपात महाबलः ।
भ्रातृपद्मवनात्तस्मान्मदोत्कट इव द्विपः ॥ ००९ ॥

सोऽब्रवीद्भीमकर्माणं भीमसेनमवस्थितम् ।
वृकोदर न युक्तं ते वचनं वक्तुमीदृशम् ॥ ०१० ॥

क्षत्रियाणां बलं ज्येष्ठं योद्धव्यं क्षत्रबन्धुना ।
शूराणां च नदीनां च प्रभवा दुर्विदाः किल ॥ ०११ ॥

सलिलादुत्थितो वह्निर्येन व्याप्तं चराचरम् ।
दधीचस्यास्थितो वज्रं कृतं दानवसूदनम् ॥ ०१२ ॥

आग्नेयः कृत्तिकापुत्रो रौद्रो गाङ्गेय इत्यपि ।
श्रूयते भगवान्देवः सर्वगुह्यमयो गुहः ॥ ०१३ ॥

क्षत्रियाभ्यश्च ये जाता ब्राह्मणास्ते च विश्रुताः ।
आचार्यः कलशाज्जातः शरस्तम्बाद्गुरुः कृपः ॥ ०१४ ॥

भवतां च यथा जन्म तदप्यागमितं नृपैः ॥ ०१४ ॥

सकुण्डलं सकवचं दिव्यलक्षणलक्षितम् ।
कथमादित्यसङ्काशं मृगी व्याघ्रं जनिष्यति ॥ ०१५ ॥

पृथिवीराज्यमर्होऽयं नाङ्गराज्यं नरेश्वरः ।
अनेन बाहुवीर्येण मया चाज्ञानुवर्तिना ॥ ०१६ ॥

यस्य वा मनुजस्येदं न क्षान्तं मद्विचेष्टितम् ।
रथमारुह्य पद्भ्यां वा विनामयतु कार्मुकम् ॥ ०१७ ॥

ततः सर्वस्य रङ्गस्य हाहाकारो महानभूत् ।
साधुवादानुसंबद्धः सूर्यश्चास्तमुपागमत् ॥ ०१८ ॥

ततो दुर्योधनः कर्णमालम्ब्याथ करे नृप ।
दीपिकाग्निकृतालोकस्तस्माद्रङ्गाद्विनिर्ययौ ॥ ०१९ ॥

पाण्डवाश्च सहद्रोणाः सकृपाश्च विशां पते ।
भीष्मेण सहिताः सर्वे ययुः स्वं स्वं निवेशनम् ॥ ०२० ॥

अर्जुनेति जनः कश्चित्कश्चित्कर्णेति भारत ।
कश्चिद्दुर्योधनेत्येवं ब्रुवन्तः प्रस्थितास्तदा ॥ ०२१ ॥

कुन्त्याश्च प्रत्यभिज्ञाय दिव्यलक्षणसूचितम् ।
पुत्रमङ्गेश्वरं स्नेहाच्छन्ना प्रीतिरवर्धत ॥ ०२२ ॥

दुर्योधनस्यापि तदा कर्णमासाद्य पार्थिव ।
भयमर्जुनसाञ्जातं क्षिप्रमन्तरधीयत ॥ ०२३ ॥

स चापि वीरः कृतशस्त्रनिश्रमः ; परेण साम्नाभ्यवदत्सुयोधनम् ।

युधिष्ठिरस्याप्यभवत्तदा मति ;र्न कर्णतुल्योऽस्ति धनुर्धरः क्षितौ ॥ ०२४ ॥

---

# अध्याय १२८

वैशंपायन उवाच ॥

ततः शिष्यान्समानीय आचार्यार्थमचोदयत् ।
द्रोणः सर्वानशेषेण दक्षिणार्थं महीपते ॥ ००१ ॥

पाञ्चालराजं द्रुपदं गृहीत्वा रणमूर्धनि ।
पर्यानयत भद्रं वः सा स्यात्परमदक्षिणा ॥ ००२ ॥

तथेत्युक्त्वा तु ते सर्वे रथैस्तूर्णं प्रहारिणः ।
आचार्यधनदानार्थं द्रोणेन सहिता ययुः ॥ ००३ ॥

ततोऽभिजग्मुः पाञ्चालान्निघ्नन्तस्ते नरर्षभाः ।
ममृदुस्तस्य नगरं द्रुपदस्य महौजसः ॥ ००४ ॥

ते यज्ञसेनं द्रुपदं गृहीत्वा रणमूर्धनि ।
उपाजह्रुः सहामात्यं द्रोणाय भरतर्षभाः ॥ ००५ ॥

भग्नदर्पं हृतधनं तथा च वशमागतम् ।
स वैरं मनसा ध्यात्वा द्रोणो द्रुपदमब्रवीत् ॥ ००६ ॥

प्रमृद्य तरसा राष्ट्रं पुरं ते मृदितं मया ।
प्राप्य जीवन्रिपुवशं सखिपूर्वं किमिष्यते ॥ ००७ ॥

एवमुक्त्वा प्रहस्यैनं निश्चित्य पुनरब्रवीत् ।
मा भैः प्राणभयाद्राजन्क्षमिणो ब्राह्मणा वयम् ॥ ००८ ॥

आश्रमे क्रीडितं यत्तु त्वया बाल्ये मया सह ।
तेन संवर्धितः स्नेहस्त्वया मे क्षत्रियर्षभ ॥ ००९ ॥

प्रार्थयेयं त्वया सख्यं पुनरेव नरर्षभ ।
वरं ददामि ते राजन्राज्यस्यार्धमवाप्नुहि ॥ ०१० ॥

अराजा किल नो राज्ञां सखा भवितुमर्हति ।
अतः प्रयतितं राज्ये यज्ञसेन मया तव ॥ ०११ ॥

राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे ।
सखायं मां विजानीहि पाञ्चाल यदि मन्यसे ॥ ०१२ ॥

द्रुपद उवाच ॥

अनाश्चर्यमिदं ब्रह्मन्विक्रान्तेषु महात्मसु ।
प्रीये त्वयाहं त्वत्तश्च प्रीतिमिच्छामि शाश्वतीम् ॥ ०१३ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु तं द्रोणो मोक्षयामास भारत ।
सत्कृत्य चैनं प्रीतात्मा राज्यार्धं प्रत्यपादयत् ॥ ०१४ ॥

माकन्दीमथ गङ्गायास्तीरे जनपदायुताम् ।
सोऽध्यावसद्दीनमनाः काम्पिल्यं च पुरोत्तमम् ॥ ०१५ ॥

दक्षिणांश्चैव पाञ्चालान्यावच्चर्मण्वती नदी ॥ ०१५ ॥

द्रोणेन वैरं द्रुपदः संस्मरन्न शशाम ह ।

क्षात्रेण च बलेनास्य नापश्यत्स पराजयम् ॥ ०१६ ॥

हीनं विदित्वा चात्मानं ब्राह्मणेन बलेन च ।
पुत्रजन्म परीप्सन्वै स राजा तदधारयत् ॥ ०१७ ॥

अहिच्छत्रं च विषयं द्रोणः समभिपद्यत ॥ ०१७ ॥

एवं राजन्नहिच्छत्रा पुरी जनपदायुता ।
युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादिता ॥ ०१८ ॥

---

# अध्याय १२९

वैशंपायन उवाच ॥

प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम् ।
दुर्योधनो लक्षयित्व पर्यतप्यत दुर्मतिः ॥ ००१ ॥

ततो वैकर्तनः कर्णः शकुनिश्चापि सौबलः ।
अनेकैरभ्युपायैस्ताञ्जिघांसन्ति स्म पाण्डवान् ॥ ००२ ॥

पाण्डवाश्चापि तत्सर्वं प्रत्यजानन्नरिंदमाः ।
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ॥ ००३ ॥

गुणैः समुदितान्दृष्ट्वा पौराः पाण्डुसुतांस्तदा ।
कथयन्ति स्म संभूय चत्वरेषु सभासु च ॥ ००४ ॥

प्रज्ञाचक्षुरचक्षुष्ट्वाद्धृतराष्ट्रो जनेश्वरः ।

राज्यमप्राप्तवान्पूर्वं स कथं नृपतिर्भवेत् ॥ ००५ ॥

तथा भीष्मः शांतनवः सत्यसंधो महाव्रतः ।
प्रत्याख्याय पुरा राज्यं नाद्य जातु ग्रहीष्यति ॥ ००६ ॥

ते वयं पाण्डवं ज्येष्ठं तरुणं वृद्धशीलिनम् ।
अभिषिञ्चाम साध्वद्य सत्यं करुणवेदिनम् ॥ ००७ ॥

स हि भीष्मं शांतनवं धृतराष्ट्रं च धर्मवित् ।
सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन् ॥ ००८ ॥

तेषां दुर्योधनः श्रुत्वा तानि वाक्यानि भाषताम् ।
युधिष्ठिरानुरक्तानां पर्यतप्यत दुर्मतिः ॥ ००९ ॥

स तप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे ।
ईर्ष्यया चाभिसंतप्तो धृतराष्ट्रमुपागमत् ॥ ०१० ॥

ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य सः ।
पौरानुरागसंतप्तः पश्चादिदमभाषत ॥ ०११ ॥

श्रुता मे जल्पतां तात पौराणामशिवा गिरः ।
त्वामनादृत्य भीष्मं च पतिमिच्छन्ति पाण्डवम् ॥ ०१२ ॥

मतमेतच्च भीष्मस्य न स राज्यं बुभूषति ।
अस्माकं तु परां पीडां चिकीर्षन्ति पुरे जनाः ॥ ०१३ ॥

पितृतः प्राप्तवान्राज्यं पाण्डुरात्मगुणैः पुरा ।
त्वमप्यगुणसंयोगात्प्राप्तं राज्यं न लब्धवान् ॥ ०१४ ॥

स एष पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः ।
तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्येति चापरः ॥ ०१५ ॥

ते वयं राजवंशेन हीनाः सह सुतैरपि ।
अवज्ञाता भविष्यामो लोकस्य जगतीपते ॥ ०१६ ॥

सततं निरयं प्राप्ताः परपिण्डोपजीविनः ।
न भवेम यथा राजंस्तथा शीघ्रं विधीयताम् ॥ ०१७ ॥

अभविष्यः स्थिरो राज्ये यदि हि त्वं पुरा नृप ।
ध्रुवं प्राप्स्याम च वयं राज्यमप्यवशे जने ॥ ०१८ ॥

---

# अध्याय १३०

वैशंपायन उवाच ॥

धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वचनमीदृशम् ।
मुहूर्तमिव सञ्चिन्त्य दुर्योधनमथाब्रवीत् ॥ ००१ ॥

धर्मनित्यः सदा पाण्डुर्ममासीत्प्रियकृद्धितः ।
सर्वेषु ज्ञातिषु तथा मयि त्वासीद्विशेषतः ॥ ००२ ॥

नास्य किञ्चिन्न जानामि भोजनादि चिकीर्षितम् ।
निवेदयति नित्यं हि मम राज्यं धृतव्रतः ॥ ००३ ॥

तस्य पुत्रो यथा पाण्डुस्तथा धर्मपरायणः ।
गुणवा.ल्लोकविख्यातः पौराणां च सुसंमतः ॥ ००४ ॥

स कथं शक्यमस्माभिरपक्रष्टुं बलादितः ।

पितृपैतामहाद्राज्यात्ससहायो विशेषतः ॥ ००५ ॥

भृता हि पाण्डुनामात्या बलं च सततं भृतम् ।
भृताः पुत्राश्च पौत्राश्च तेषामपि विशेषतः ॥ ००६ ॥

ते पुरा सत्कृतास्तात पाण्डुना पौरवा जनाः ।
कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान् ॥ ००७ ॥

दुर्योधन उवाच ॥

एवमेतन्मया तात भावितं दोषमात्मनि ।
दृष्ट्वा प्रकृतयः सर्वा अर्थमानेन योजिताः ॥ ००८ ॥

ध्रुवमस्मत्सहायास्ते भविष्यन्ति प्रधानतः ।
अर्थवर्गः सहामात्यो मत्संस्थोऽद्य महीपते ॥ ००९ ॥

स भवान्पाण्डवानाशु विवासयितुमर्हति ।
मृदुनैवाभ्युपायेन नगरं वारणावतम् ॥ ०१० ॥

यदा प्रतिष्ठितं राज्यं मयि राजन्भविष्यति ।
तदा कुन्ती सहापत्या पुनरेष्यति भारत ॥ ०११ ॥

धृतराष्ट्र उवाच ॥

दुर्योधन ममाप्येतद्धृदि संपरिवर्तते ।
अभिप्रायस्य पापत्वान्नैतत्तु विवृणोम्यहम् ॥ ०१२ ॥

न च भीष्मो न च द्रोणो न क्षत्ता न च गौतमः ।
विवास्यमानान्कौन्तेयाननुमंस्यन्ति कर्हिचित् ॥ ०१३ ॥

समा हि कौरवेयाणां वयमेते च पुत्रक ।

नैते विषममिच्छेयुर्धर्मयुक्ता मनस्विनः ॥ ०१४ ॥

ते वयं कौरवेयाणामेतेषां च महात्मनाम् ।
कथं न वध्यतां तात गच्छेम जगतस्तथा ॥ ०१५ ॥

दुर्योधन उवाच ॥

मध्यस्थः सततं भीष्मो द्रोणपुत्रो मयि स्थितः ।
यतः पुत्रस्ततो द्रोणो भविता नात्र संशयः ॥ ०१६ ॥

कृपः शारद्वतश्चैव यत एते त्रयस्ततः ।
द्रोणं च भागिनेयं च न स त्यक्ष्यति कर्हिचित् ॥ ०१७ ॥

क्षत्तार्थबद्धस्त्वस्माकं प्रच्छन्नं तु यतः परे ।
न चैकः स समर्थोऽस्मान्पाण्डवार्थे प्रबाधितुम् ॥ ०१८ ॥

स विश्रब्धः पाण्डुपुत्रान्सह मात्रा विवासय ।
वारणावतमद्यैव नात्र दोषो भविष्यति ॥ ०१९ ॥

विनिद्रकरणं घोरं हृदि शल्यमिवार्पितम् ।
शोकपावकमुद्भूतं कर्मणैतेन नाशय ॥ ०२० ॥

---

# अध्याय १३१

वैशंपायन उवाच ॥

ततो दुर्योधनो राजा सर्वास्ताः प्रकृतीः शनैः ।
अर्थमानप्रदानाभ्यां सञ्जहार सहानुजः ॥ ००१ ॥

धृतराष्ट्रप्रयुक्तास्तु केचित्कुशलमन्त्रिणः ।
कथयां चक्रिरे रम्यं नगरं वारणावतम् ॥ ००२ ॥

अयं समाजः सुमहान्रमणीयतमो भुवि ।
उपस्थितः पशुपतेर्नगरे वारणावते ॥ ००३ ॥

सर्वरत्नसमाकीर्णे पुंसां देशे मनोरमे ।
इत्येवं धृतराष्ट्रस्य वचनाच्चक्रिरे कथाः ॥ ००४ ॥

कथ्यमाने तथा रम्ये नगरे वारणावते ।
गमने पाण्डुपुत्राणां जज्ञे तत्र मतिर्नृप ॥ ००५ ॥

यदा त्वमन्यत नृपो जातकौतूहला इति ।
उवाचैनानथ तदा पाण्डवानम्बिकासुतः ॥ ००६ ॥

ममेमे पुरुषा नित्यं कथयन्ति पुनः पुनः ।
रमणीयतरं लोके नगरं वारणावतम् ॥ ००७ ॥

ते तात यदि मन्यध्वमुत्सवं वारणावते ।
सगणाः सानुयात्राश्च विहरध्वं यथामराः ॥ ००८ ॥

ब्राह्मणेभ्यश्च रत्नानि गायनेभ्यश्च सर्वशः ।
प्रयच्छध्वं यथाकामं देवा इव सुवर्चसः ॥ ००९ ॥

कञ्चित्कालं विहृत्यैवमनुभूय परां मुदम् ।
इदं वै हास्तिनपुरं सुखिनः पुनरेष्यथ ॥ ०१० ॥

धृतराष्ट्रस्य तं काममनुबुद्ध्वा युधिष्ठिरः ।
आत्मनश्चासहायत्वं तथेति प्रत्युवाच तम् ॥ ०११ ॥

ततो भीष्मं महाप्राज्ञं विदुरं च महामतिम् ।
द्रोणं च बाह्लिकं चैव सोमदत्तं च कौरवम् ॥ ०१२ ॥

कृपमाचार्यपुत्रं च गान्धारीं च यशस्विनीम् ।
युधिष्ठिरः शनैर्दीनमुवाचेदं वचस्तदा ॥ ०१३ ॥

रमणीये जनाकीर्णे नगरे वारणावते ।
सगणास्तात वत्स्यामो धृतराष्ट्रस्य शासनात् ॥ ०१४ ॥

प्रसन्नमनसः सर्वे पुण्या वाचो विमुञ्चत ।
आशीर्भिर्वर्धितानस्मान्न पापं प्रसहिष्यति ॥ ०१५ ॥

एवमुक्तास्तु ते सर्वे पाण्डुपुत्रेण कौरवाः ।
प्रसन्नवदना भूत्वा तेऽभ्यवर्तन्त पाण्डवान् ॥ ०१६ ॥

स्वस्त्यस्तु वः पथि सदा भूतेभ्यश्चैव सर्वशः ।
मा च वोऽस्त्वशुभं किञ्चित्सर्वतः पाण्डुनन्दनाः ॥ ०१७ ॥

ततः कृतस्वस्त्ययना राज्यलाभाय पाण्डवाः ।
कृत्वा सर्वाणि कार्याणि प्रययुर्वारणावतम् ॥ ०१८ ॥

---

# अध्याय १३२

वैशंपायन उवाच ॥

एवमुक्तेषु राज्ञा तु पाण्डवेषु महात्मसु ।
दुर्योधनः परं हर्षमाजगाम दुरात्मवान् ॥ ००१ ॥

स पुरोचनमेकान्तमानीय भरतर्षभ ।
गृहीत्वा दक्षिणे पाणौ सचिवं वाक्यमब्रवीत् ॥ ००२ ॥

ममेयं वसुसंपूर्णा पुरोचन वसुंधरा ।
यथेयं मम तद्वत्ते स तां रक्षितुमर्हसि ॥ ००३ ॥

न हि मे कश्चिदन्योऽस्ति वैश्वासिकतरस्त्वया ।
सहायो येन संधाय मन्त्रयेयं यथा त्वया ॥ ००४ ॥

संरक्ष तात मन्त्रं च सपत्नांश्च ममोद्धर ।
निपुणेनाभ्युपायेन यद्ब्रवीमि तथा कुरु ॥ ००५ ॥

पाण्डवा धृतराष्ट्रेण प्रेषिता वारणावतम् ।
उत्सवे विहरिष्यन्ति धृतराष्ट्रस्य शासनात् ॥ ००६ ॥

स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना ।
वारणावतमद्यैव यथा यासि तथा कुरु ॥ ००७ ॥

तत्र गत्वा चतुःशालं गृहं परमसंवृतम् ।
आयुधागारमाश्रित्य कारयेथा महाधनम् ॥ ००८ ॥

शणसर्जरसादीनि यानि द्रव्याणि कानिचित् ।
आग्नेयान्युत सन्तीह तानि सर्वाणि दापय ॥ ००९ ॥

सर्पिषा च सतैलेन लाक्षया चाप्यनल्पया ।
मृत्तिकां मिश्रयित्वा त्वं लेपं कुड्येषु दापयेः ॥ ०१० ॥

शणान्वंशं घृतं दारु यन्त्राणि विविधानि च ।
तस्मिन्वेश्मनि सर्वाणि निक्षिपेथाः समन्ततः ॥ ०११ ॥

यथा च त्वां न शङ्केरन्परीक्षन्तोऽपि पाण्डवाः ।
आग्नेयमिति तत्कार्यमिति चान्ये च मानवाः ॥ ०१२ ॥

वेश्मन्येवं कृते तत्र कृत्वा तान्परमार्चितान् ।
वासयेः पाण्डवेयांश्च कुन्तीं च ससुहृज्जनाम् ॥ ०१३ ॥

तत्रासनानि मुख्यानि यानानि शयनानि च ।
विधातव्यानि पाण्डूनां यथा तुष्येत मे पिता ॥ ०१४ ॥

यथा रमेरन्विश्रब्धा नगरे वारणावते ।
तथा सर्वं विधातव्यं यावत्कालस्य पर्ययः ॥ ०१५ ॥

ज्ञात्वा तु तान्सुविश्वस्ताञ्शयानानकुतोभयान् ।
अग्निस्ततस्त्वया देयो द्वारतस्तस्य वेश्मनः ॥ ०१६ ॥

दग्धानेवं स्वके गेहे दग्धा इति ततो जनाः ।
ज्ञातयो वा वदिष्यन्ति पाण्डवार्थाय कर्हिचित् ॥ ०१७ ॥

तत्तथेति प्रतिज्ञाय कौरवाय पुरोचनः ।
प्रायाद्रासभयुक्तेन नगरं वारणावतम् ॥ ०१८ ॥

स गत्वा त्वरितो राजन्दुर्योधनमते स्थितः ।
यथोक्तं राजपुत्रेण सर्वं चक्रे पुरोचनः ॥ ०१९ ॥

---

# अध्याय १३३

वैशंपायन उवाच ॥

पाण्डवास्तु रथान्युक्त्वा सदश्वैरनिलोपमैः ।
आरोहमाणा भीष्मस्य पादौ जगृहुरार्तवत् ॥ ००१ ॥

राज्ञश्च धृतराष्ट्रस्य द्रोणस्य च महात्मनः ।
अन्येषां चैव वृद्धानां विदुरस्य कृपस्य च ॥ ००२ ॥

एवं सर्वान्कुरून्वृद्धानभिवाद्य यतव्रताः ।
समालिङ्ग्य समानांश्च बालैश्चाप्यभिवादिताः ॥ ००३ ॥

सर्वा मातृस्तथापृष्ट्वा कृत्वा चैव प्रदक्षिणम् ।
सर्वाः प्रकृतयश्चैव प्रययुर्वारणावतम् ॥ ००४ ॥

विदुरश्च महाप्राज्ञस्तथान्ये कुरुपुङ्गवाः ।
पौराश्च पुरुषव्याघ्रानन्वयुः शोककर्शिताः ॥ ००५ ॥

तत्र केचिद्ब्रुवन्ति स्म ब्राह्मणा निर्भयास्तदा ।
शोचमानाः पाण्डुपुत्रानतीव भरतर्षभ ॥ ००६ ॥

विषमं पश्यते राजा सर्वथा तमसावृतः ।
धृतराष्ट्रः सुदुर्बुद्धिर्न च धर्मं प्रपश्यति ॥ ००७ ॥

न हि पापमपापात्मा रोचयिष्यति पाण्डवः ।
भीमो वा बलिनां श्रेष्ठः कौन्तेयो वा धनञ्जयः ॥ ००८ ॥

कुत एव महाप्राज्ञौ माद्रीपुत्रौ करिष्यतः ॥ ००८ ॥

तद्राज्यं पितृतः प्राप्तं धृतराष्ट्रो न मृष्यते ।
अधर्ममखिलं किं नु भीष्मोऽयमनुमन्यते ॥ ००९ ॥

विवास्यमानानस्थाने कौन्तेयान्भरतर्षभान् ॥ ००९ ॥

पितेव हि नृपोऽस्माकमभूच्छांतनवः पुरा ।
विचित्रवीर्यो राजर्षिः पाण्डुश्च कुरुनन्दनः ॥ ०१० ॥

स तस्मिन्पुरुषव्याघ्रे दिष्टभावं गते सति ।
राजपुत्रानिमान्बालान्धृतराष्ट्रो न मृष्यते ॥ ०११ ॥

वयमेतदमृष्यन्तः सर्व एव पुरोत्तमात् ।
गृहान्विहाय गच्छामो यत्र याति युधिष्ठिरः ॥ ०१२ ॥

तांस्तथावादिनः पौरान्दुःखितान्दुःखकर्शितः ।
उवाच परमप्रीतो धर्मराजो युधिष्ठिरः ॥ ०१३ ॥

पिता मान्यो गुरुः श्रेष्ठो यदाह पृथिवीपतिः ।
अशङ्कमानैस्तत्कार्यमस्माभिरिति नो व्रतम् ॥ ०१४ ॥

भवन्तः सुहृदोऽस्माकमस्मान्कृत्वा प्रदक्षिणम् ।
आशीर्भिरभिनन्द्यास्मान्निवर्तध्वं यथागृहम् ॥ ०१५ ॥

यदा तु कार्यमस्माकं भवद्भिरुपपत्स्यते ।
तदा करिष्यथ मम प्रियाणि च हितानि च ॥ ०१६ ॥

ते तथेति प्रतिज्ञाय कृत्वा चैतान्प्रदक्षिणम् ।
आशीर्भिरभिनन्द्यैनाञ्जग्मुर्नगरमेव हि ॥ ०१७ ॥

पौरेषु तु निवृत्तेषु विदुरः सर्वधर्मवित् ।
बोधयन्पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ॥ ०१८ ॥

प्राज्ञः प्राज्ञं प्रलापज्ञः सम्यग्धर्मार्थदर्शिवान् ॥ ०१८ ॥

विज्ञायेदं तथा कुर्यादापदं निस्तरेद्यथा ।
अलोहं निशितं शस्त्रं शरीरपरिकर्तनम् ॥ ०१९ ॥

यो वेत्ति न तमाघ्नन्ति प्रतिघातविदं द्विषः ॥ ०१९ ॥

कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः ।
न दहेदिति चात्मानं यो रक्षति स जीवति ॥ ०२० ॥

नाचक्षुर्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः ।
नाधृतिर्भूतिमाप्नोति बुध्यस्वैवं प्रबोधितः ॥ ०२१ ॥

अनाप्तैर्दत्तमादत्ते नरः शस्त्रमलोहजम् ।
श्वाविच्छरणमासाद्य प्रमुच्येत हुताशनात् ॥ ०२२ ॥

चरन्मार्गान्विजानाति नक्षत्रैर्विन्दते दिशः ।
आत्मना चात्मनः पञ्च पीडयन्नानुपीड्यते ॥ ०२३ ॥

अनुशिष्ट्वानुगत्वा च कृत्वा चैनान्प्रदक्षिणम् ।
पाण्डवानभ्यनुज्ञाय विदुरः प्रययौ गृहान् ॥ ०२४ ॥

निवृत्ते विदुरे चैव भीष्मे पौरजने तथा ।
अजातशत्रुमामन्त्र्य कुन्ती वचनमब्रवीत् ॥ ०२५ ॥

क्षत्ता यदब्रवीद्वाक्यं जनमध्येऽब्रुवन्निव ।
त्वया च तत्तथेत्युक्तो जानीमो न च तद्वयम् ॥ ०२६ ॥

यदि तच्छक्यमस्माभिः श्रोतुं न च सदोषवत् ।
श्रोतुमिच्छामि तत्सर्वं संवादं तव तस्य च ॥ ०२७ ॥

युधिष्ठिर उवाच ॥

विषादग्नेश्च बोद्धव्यमिति मां विदुरोऽब्रवीत् ।
पन्थाश्च वो नाविदितः कश्चित्स्यादिति चाब्रवीत् ॥ ०२८ ॥

जितेन्द्रियश्च वसुधां प्राप्स्यसीति च माब्रवीत् ।
विज्ञातमिति तत्सर्वमित्युक्तो विदुरो मया ॥ ०२९ ॥

वैशंपायन उवाच ॥

अष्टमेऽहनि रोहिण्यां प्रयाताः फल्गुनस्य ते ।
वारणावतमासाद्य ददृशुर्नागरं जनम् ॥ ०३० ॥

---

# अध्याय १३४

वैशंपायन उवाच ॥

ततः सर्वाः प्रकृतयो नगराद्वारणावतात् ।
सर्वमङ्गलसंयुक्ता यथाशास्त्रमतन्द्रिताः ॥ ००१ ॥

श्रुत्वागतान्पाण्डुपुत्रान्नानायानैः सहस्रशः ।
अभिजग्मुर्नरश्रेष्ठाञ्श्रुत्वैव परया मुदा ॥ ००२ ॥

ते समासाद्य कौन्तेयान्वारणावतका जनाः ।
कृत्वा जयाशिषः सर्वे परिवार्योपतस्थिरे ॥ ००३ ॥

तैर्वृतः पुरुषव्याघ्रो धर्मराजो युधिष्ठिरः ।
विबभौ देवसङ्काशो वज्रपाणिरिवामरैः ॥ ००४ ॥

सत्कृतास्ते तु पौरैश्च पौरान्सत्कृत्य चानघाः ।
अलङ्कृतं जनाकीर्णं विविशुर्वारणावतम् ॥ ००५ ॥

ते प्रविश्य पुरं वीरास्तूर्णं जग्मुरथो गृहान् ।
ब्राह्मणानां महीपाल रतानां स्वेषु कर्मसु ॥ ००६ ॥

नगराधिकृतानां च गृहाणि रथिनां तथा ।
उपतस्थुर्नरश्रेष्ठा वैश्यशूद्रगृहानपि ॥ ००७ ॥

अर्चिताश्च नरैः पौरैः पाण्डवा भरतर्षभाः ।
जग्मुरावसथं पश्चात्पुरोचनपुरस्कृताः ॥ ००८ ॥

तेभ्यो भक्ष्यान्नपानानि शयनानि शुभानि च ।
आसनानि च मुख्यानि प्रददौ स पुरोचनः ॥ ००९ ॥

तत्र ते सत्कृतास्तेन सुमहार्हपरिच्छदाः ।
उपास्यमानाः पुरुषैरूषुः पुरनिवासिभिः ॥ ०१० ॥

दशरात्रोषितानां तु तत्र तेषां पुरोचनः ।
निवेदयामास गृहं शिवाख्यमशिवं तदा ॥ ०११ ॥

तत्र ते पुरुषव्याघ्रा विविशुः सपरिच्छदाः ।
पुरोचनस्य वचनात्कैलासमिव गुह्यकाः ॥ ०१२ ॥

तत्त्वगारमभिप्रेक्ष्य सर्वधर्मविशारदः ।
उवाचाग्नेयमित्येवं भीमसेनं युधिष्ठिरः ॥ ०१३ ॥

जिघ्रन्सोम्य वसागन्धं सर्पिर्जतुविमिश्रितम् ॥ ०१३ ॥

कृतं हि व्यक्तमाग्नेयमिदं वेश्म परंतप ।
शणसर्जरसं व्यक्तमानीतं गृहकर्मणि ॥ ०१४ ॥

मुञ्जबल्वजवंशादि द्रव्यं सर्वं घृतोक्षितम् ॥ ०१४ ॥

शिल्पिभिः सुकृतं ह्याप्तैर्विनीतैर्वेश्मकर्मणि ।
विश्वस्तं मामयं पापो दग्धुकामः पुरोचनः ॥ ०१५ ॥

इमां तु तां महाबुद्धिर्विदुरो दृष्टवांस्तदा ।
आपदं तेन मां पार्थ स संबोधितवान्पुरा ॥ ०१६ ॥

ते वयं बोधितास्तेन बुद्धवन्तोऽशिवं गृहम् ।
आचार्यैः सुकृतं गूढैर्दुर्योधनवशानुगैः ॥ ०१७ ॥

भीम उवाच ॥

यदिदं गृहमाग्नेयं विहितं मन्यते भवान् ।
तत्रैव साधु गच्छामो यत्र पूर्वोषिता वयम् ॥ ०१८ ॥

युधिष्ठिर उवाच ॥

इह यत्तैर्निराकारैर्वस्तव्यमिति रोचये ।
नष्टैरिव विचिन्वद्भिर्गतिमिष्टां ध्रुवामितः ॥ ०१९ ॥

यदि विन्देत चाकारमस्माकं हि पुरोचनः ।
शीघ्रकारी ततो भूत्वा प्रसह्यापि दहेत नः ॥ ०२० ॥

नायं बिभेत्युपक्रोशादधर्माद्वा पुरोचनः ।
तथा हि वर्तते मन्दः सुयोधनमते स्थितः ॥ ०२१ ॥

अपि चेह प्रदग्धेषु भीष्मोऽस्मासु पितामहः ।
कोपं कुर्यात्किमर्थं वा कौरवान्कोपयेत सः ॥ ०२२ ॥

धर्म इत्येव कुप्येत तथान्ये कुरुपुङ्गवाः ॥ ०२२ ॥

वयं तु यदि दाहस्य बिभ्यतः प्रद्रवेम हि ।
स्पशैर्नो घातयेत्सार्वान्राज्यलुब्धः सुयोधनः ॥ ०२३ ॥

अपदस्थान्पदे तिष्ठन्नपक्षान्पक्षसंस्थितः ।
हीनकोशान्महाकोशः प्रयोगैर्घातयेद्ध्रुवम् ॥ ०२४ ॥

तदस्माभिरिमं पापं तं च पापं सुयोधनम् ।
वञ्चयद्भिर्निवस्तव्यं छन्नवासं क्वचित्क्वचित् ॥ ०२५ ॥

ते वयं मृगयाशीलाश्चराम वसुधामिमाम् ।
तथा नो विदिता मार्गा भविष्यन्ति पलायताम् ॥ ०२६ ॥

भौमं च बिलमद्यैव करवाम सुसंवृतम् ।
गूढोच्छ्वसान्न नस्तत्र हुताशः संप्रधक्ष्यति ॥ ०२७ ॥

वसतोऽत्र यथा चास्मान्न बुध्येत पुरोचनः ।
पौरो वापि जनः कश्चित्तथा कार्यमतन्द्रितैः ॥ ०२८ ॥

---

# अध्याय १३५

वैशंपायन उवाच ॥

विदुरस्य सुहृत्कश्चित्खनकः कुशलः क्वचित् ।
विविक्ते पाण्डवान्राजन्निदं वचनमब्रवीत् ॥ ००१ ॥

प्रहितो विदुरेणास्मि खनकः कुशलो भृशम् ।
पाण्डवानां प्रियं कार्यमिति किं करवाणि वः ॥ ००२ ॥

प्रच्छन्नं विदुरेणोक्तः श्रेयस्त्वमिह पाण्डवान् ।
प्रतिपादय विश्वासादिति किं करवाणि वः ॥ ००३ ॥

कृष्णपक्षे चतुर्दश्यां रात्रावस्य पुरोचनः ।
भवनस्य तव द्वारि प्रदास्यति हुताशनम् ॥ ००४ ॥

मात्रा सह प्रदग्धव्याः पाण्डवाः पुरुषर्षभाः ।
इति व्यवसितं पार्थ धार्तराष्ट्रस्य मे श्रुतम् ॥ ००५ ॥

किञ्चिच्च विदुरेणोक्तो म्लेच्छवाचासि पाण्डव ।
त्वया च तत्तथेत्युक्तमेतद्विश्वासकारणम् ॥ ००६ ॥

उवाच तं सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।
अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै ॥ ००७ ॥

शुचिमाप्तं प्रियं चैव सदा च दृढभक्तिकम् ।
न विद्यते कवेः किञ्चिदभिज्ञानप्रयोजनम् ॥ ००८ ॥

यथा नः स तथा नस्त्वं निर्विशेषा वयं त्वयि ।
भवतः स्म यथा तस्य पालयास्मान्यथा कविः ॥ ००९ ॥

इदं शरणमाग्नेयं मदर्थमिति मे मतिः ।
पुरोचनेन विहितं धार्तराष्ट्रस्य शासनात् ॥ ०१० ॥

स पापः कोशवांश्चैव ससहायश्च दुर्मतिः ।
अस्मानपि च दुष्टात्मा नित्यकालं प्रबाधते ॥ ०११ ॥

स भवान्मोक्षयत्वस्मान्यत्नेनास्माद्धुताशनात् ।
अस्मास्विह हि दग्धेषु सकामः स्यात्सुयोधनः ॥ ०१२ ॥

समृद्धमायुधागारमिदं तस्य दुरात्मनः ।
वप्रान्ते निष्प्रतीकारमाश्लिष्येदं कृतं महत् ॥ ०१३ ॥

इदं तदशुभं नूनं तस्य कर्म चिकीर्षितम् ।
प्रागेव विदुरो वेद तेनास्मानन्वबोधयत् ॥ ०१४ ॥

सेयमापदनुप्राप्ता क्षत्ता यां दृष्टवान्पुरा ।
पुरोचनस्याविदितानस्मांस्त्वं विप्रमोचय ॥ ०१५ ॥

स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः ।
परिखामुत्किरन्नाम चकार सुमहद्बिलम् ॥ ०१६ ॥

चक्रे च वेश्मनस्तस्य मध्ये नातिमहन्मुखम् ।
कपाटयुक्तमज्ञातं समं भूम्या च भारत ॥ ०१७ ॥

पुरोचनभयाच्चैव व्यदधात्संवृतं मुखम् ।
स तत्र च गृहद्वारि वसत्यशुभधीः सदा ॥ ०१८ ॥

तत्र ते सायुधाः सर्वे वसन्ति स्म क्षपां नृप ।
दिवा चरन्ति मृगयां पाण्डवेया वनाद्वनम् ॥ ०१९ ॥

विश्वस्तवदविश्वस्ता वञ्चयन्तः पुरोचनम् ।
अतुष्टास्तुष्टवद्राजन्नूषुः परमदुःखिताः ॥ ०२० ॥

न चैनानन्वबुध्यन्त नरा नगरवासिनः ।
अन्यत्र विदुरामात्यात्तस्मात्खनकसत्तमात् ॥ ०२१ ॥

# अध्याय १३६

वैशंपायन उवाच ॥

तांस्तु दृष्ट्वा सुमनसः परिसंवत्सरोषितान् ।
विश्वस्तानिव संलक्ष्य हर्षं चक्रे पुरोचनः ॥ ००१ ॥

पुरोचने तथा हृष्टे कौन्तेयोऽथ युधिष्ठिरः ।
भीमसेनार्जुनौ चैव यमौ चोवाच धर्मवित् ॥ ००२ ॥

अस्मानयं सुविश्वस्तान्वेत्ति पापः पुरोचनः ।
वञ्चितोऽयं नृशंसात्मा कालं मन्ये पलायने ॥ ००३ ॥

आयुधागारमादीप्य दग्ध्वा चैव पुरोचनम् ।
षड्प्राणिनो निधायेह द्रवामोऽनभिलक्षिताः ॥ ००४ ॥

अथ दानापदेशेन कुन्ती ब्राह्मणभोजनम् ।
चक्रे निशि महद्राजन्नाजग्मुस्तत्र योषितः ॥ ००५ ॥

ता विहृत्य यथाकामं भुक्त्वा पीत्वा च भारत ।
जग्मुर्निशि गृहानेव समनुज्ञाप्य माधवीम् ॥ ००६ ॥

निषादी पञ्चपुत्रा तु तस्मिन्भोज्ये यदृच्छया ।
अन्नार्थिनी समभ्यागात्सपुत्रा कालचोदिता ॥ ००७ ॥

सा पीत्वा मदिरां मत्ता सपुत्रा मदविह्वला ।
सह सर्वैः सुतै राजंस्तस्मिन्नेव निवेशने ॥ ००८ ॥

सुष्वाप विगतज्ञाना मृतकल्पा नराधिप ॥ ००८ ॥

अथ प्रवाते तुमुले निशि सुप्ते जने विभो ।

तदुपादीपयद्भीमः शेते यत्र पुरोचनः ॥ ००९ ॥

ततः प्रतापः सुमहाञ्शब्दश्चैव विभावसोः ।
प्रादुरासीत्तदा तेन बुबुधे स जनव्रजः ॥ ०१० ॥

पौरा ऊचुः ॥

दुर्योधनप्रयुक्तेन पापेनाकृतबुद्धिना ।
गृहमात्मविनाशाय कारितं दाहितं च यत् ॥ ०११ ॥

अहो धिग्धृतराष्ट्रस्य बुद्धिर्नातिसमञ्जसी ।
यः शुचीन्पाण्डवान्बालान्दाहयामास मन्त्रिणा ॥ ०१२ ॥

दिष्ट्या त्विदानीं पापात्मा दग्धोऽयमतिदुर्मतिः ।
अनागसः सुविश्वस्तान्यो ददाह नरोत्तमान् ॥ ०१३ ॥

वैशंपायन उवाच ॥

एवं ते विलपन्ति स्म वारणावतका जनाः ।
परिवार्य गृहं तच्च तस्थू रात्रौ समन्ततः ॥ ०१४ ॥

पाण्डवाश्चापि ते राजन्मात्रा सह सुदुःखिताः ।
बिलेन तेन निर्गत्य जग्मुर्गूढमलक्षिताः ॥ ०१५ ॥

तेन निद्रोपरोधेन साध्वसेन च पाण्डवाः ।
न शेकुः सहसा गन्तुं सह मात्रा परंतपाः ॥ ०१६ ॥

भीमसेनस्तु राजेन्द्र भीमवेगपराक्रमः ।
जगाम भ्रातॄनादाय सर्वान्मातरमेव च ॥ ०१७ ॥

स्कन्धमारोप्य जननीं यमावङ्केन वीर्यवान् ।

पार्थौ गृहीत्वा पाणिभ्यां भ्रातरौ सुमहाबलौ ॥ ०१८ ॥

तरसा पादपान्भञ्जन्महीं पद्भ्यां विदारयन् ।
स जगामाशु तेजस्वी वातरंहा वृकोदरः ॥ ०१९ ॥

---

# अध्याय १३७

वैशंपायन उवाच ॥

अथ रात्र्यां व्यतीतायामशेषो नागरो जनः ।
तत्राजगाम त्वरितो दिदृक्षुः पाण्डुनन्दनान् ॥ ००१ ॥

निर्वापयन्तो ज्वलनं ते जना ददृशुस्ततः ।
जातुषं तद्गृहं दग्धममात्यं च पुरोचनम् ॥ ००२ ॥

नूनं दुर्योधनेनेदं विहितं पापकर्मणा ।
पाण्डवानां विनाशाय इत्येवं चुक्रुशुर्जनाः ॥ ००३ ॥

विदिते धृतराष्ट्रस्य धार्तराष्ट्रो न संशयः ।
दग्धवान्पाण्डुदायादान्न ह्येनं प्रतिषिद्धवान् ॥ ००४ ॥

नूनं शांतनवो भीष्मो न धर्ममनुवर्तते ।
द्रोणश्च विदुरश्चैव कृपश्चान्ये च कौरवाः ॥ ००५ ॥

ते वयं धृतराष्ट्रस्य प्रेषयामो दुरात्मनः ।
संवृत्तस्ते परः कामः पाण्डवान्दग्धवानसि ॥ ००६ ॥

ततो व्यपोहमानास्ते पाण्डवार्थे हुताशनम् ।

निषादीं ददृशुर्दग्धां पञ्चपुत्रामनागसम् ॥ ००७ ॥

खनकेन तु तेनैव वेश्म शोधयता बिलम् ।
पांसुभिः प्रत्यपिहितं पुरुषैस्तैरलक्षितम् ॥ ००८ ॥

ततस्ते प्रेषयामासुर्धृतराष्ट्रस्य नागराः ।
पाण्डवानग्निना दग्धानमात्यं च पुरोचनम् ॥ ००९ ॥

श्रुत्वा तु धृतराष्ट्रस्तद्राजा सुमहदप्रियम् ।
विनाशं पाण्डुपुत्राणां विललाप सुदुःखितः ॥ ०१० ॥

अद्य पाण्डुर्मृतो राजा भ्राता मम सुदुर्लभः ।
तेषु वीरेषु दग्धेषु मात्रा सह विशेषतः ॥ ०११ ॥

गच्छन्तु पुरुषाः शीघ्रं नगरं वारणावतम् ।
सत्कारयन्तु तान्वीरान्कुन्तिराजसुतां च ताम् ॥ ०१२ ॥

कारयन्तु च कुल्यानि शुभ्राणि च महान्ति च ।
ये च तत्र मृतास्तेषां सुहृदोऽर्चन्तु तानपि ॥ ०१३ ॥

एवङ्गते मया शक्यं यद्यत्कारयितुं हितम् ।
पाण्डवानां च कुन्त्याश्च तत्सर्वं क्रियतां धनैः ॥ ०१४ ॥

एवमुक्त्वा ततश्चक्रे ज्ञातिभिः परिवारितः ।
उदकं पाण्डुपुत्राणां धृतराष्ट्रोऽम्बिकासुतः ॥ ०१५ ॥

चुक्रुशुः कौरवाः सर्वे भृशं शोकपरायणाः ।
विदुरस्त्वल्पशश्चक्रे शोकं वेद परं हि सः ॥ ०१६ ॥

पाण्डवाश्चापि निर्गत्य नगराद्वारणावतात् ।
जवेन प्रययू राजन्दक्षिणां दिशमाश्रिताः ॥ ०१७ ॥

विज्ञाय निशि पन्थानं नक्षत्रैर्दक्षिणामुखाः ।
यतमाना वनं राजन्गहनं प्रतिपेदिरे ॥ ०१८ ॥

ततः श्रान्ताः पिपासार्ता निद्रान्धाः पाण्डुनन्दनाः ।
पुनरूचुर्महावीर्यं भीमसेनमिदं वचः ॥ ०१९ ॥

इतः कष्टतरं किं नु यद्वयं गहने वने ।
दिशश्च न प्रजानीमो गन्तुं चैव न शक्नुमः ॥ ०२० ॥

तं च पापं न जानीमो यदि दग्धः पुरोचनः ।
कथं नु विप्रमुच्येम भयादस्मादलक्षिताः ॥ ०२१ ॥

पुनरस्मानुपादाय तथैव व्रज भारत ।
त्वं हि नो बलवानेको यथा सततगस्तथा ॥ ०२२ ॥

इत्युक्तो धर्मराजेन भीमसेनो महाबलः ।
आदाय कुन्तीं भ्रातृंश्च जगामाशु महाबलः ॥ ०२३ ॥

---

# अध्याय १३८

वैशंपायन उवाच ॥

तेन विक्रमता तूर्णमूरुवेगसमीरितम् ।
प्रववावनिलो राजञ्शुचिशुक्रागमे यथा ॥ ००१ ॥

स मृद्नन्पुष्पितांश्चैव फलितांश्च वनस्पतीन् ।
आरुजन्दारुगुल्मांश्च पथस्तस्य समीपजान् ॥ ००२ ॥

तथा वृक्षान्भञ्जमानो जगामामितविक्रमः ।
तस्य वेगेन पाण्डूनां मूर्च्छेव समजायत ॥ ००३ ॥

असकृच्चापि संतीर्य दूरपारं भुजप्लवैः ।
पथि प्रच्छन्नमासेदुर्धार्तराष्ट्रभयात्तदा ॥ ००४ ॥

कृच्छ्रेण मातरं त्वेकां सुकुमारीं यशस्विनीम् ।
अवहत्तत्र पृष्ठेन रोधःसु विषमेषु च ॥ ००५ ॥

आगमंस्ते वनोद्देशमल्पमूलफलोदकम् ।
क्रूरपक्षिमृगं घोरं सायाह्ने भरतर्षभाः ॥ ००६ ॥

घोरा समभवत्संध्या दारुणा मृगपक्षिणः ।
अप्रकाशा दिशः सर्वा वातैरासन्ननार्तवैः ॥ ००७ ॥

ते श्रमेण च कौरव्यास्तृष्णया च प्रपीडिताः ।
नाशक्नुवंस्तदा गन्तुं निद्रया च प्रवृद्धया ॥ ००८ ॥

ततो भीमो वनं घोरं प्रविश्य विजनं महत् ।
न्यग्रोधं विपुलच्छायं रमणीयमुपाद्रवत् ॥ ००९ ॥

तत्र निक्षिप्य तान्सर्वानुवाच भरतर्षभः ।
पानीयं मृगयामीह विश्रमध्वमिति प्रभो ॥ ०१० ॥

एते रुवन्ति मधुरं सारसा जलचारिणः ।
ध्रुवमत्र जलस्थायो महानिति मतिर्मम ॥ ०११ ॥

अनुज्ञातः स गच्छेति भ्रात्रा ज्येष्ठेन भारत ।
जगाम तत्र यत्र स्म रुवन्ति जलचारिणः ॥ ०१२ ॥

स तत्र पीत्वा पानीयं स्नात्वा च भरतर्षभ ।
उत्तरीयेण पानीयमाजहार तदा नृप ॥ ०१३ ॥

गव्यूतिमात्रादागत्य त्वरितो मातरं प्रति ।
स सुप्तां मातरं दृष्ट्वा भ्रातृंश्च वसुधातले ॥ ०१४ ॥

भृशं दुःखपरीतात्मा विललाप वृकोदरः ॥ ०१४ ॥

शयनेषु परार्ध्येषु ये पुरा वारणावते ।
नाधिजग्मुस्तदा निद्रां तेऽद्य सुप्ता महीतले ॥ ०१५ ॥

स्वसारं वसुदेवस्य शत्रुसंघावमर्दिनः ।
कुन्तिभोजसुतां कुन्तीं सर्वलक्षणपूजिताम् ॥ ०१६ ॥

स्नुषां विचित्रवीर्यस्य भार्यां पाण्डोर्महात्मनः ।
प्रासादशयनां नित्यं पुण्डरीकान्तरप्रभाम् ॥ ०१७ ॥

सुकुमारतरां स्त्रीणां महार्हशयनोचिताम् ।
शयानां पश्यताद्येह पृथिव्यामतथोचिताम् ॥ ०१८ ॥

धर्मादिन्द्राच्च वायोश्च सुषुवे या सुतानिमान् ।
सेयं भूमौ परिश्रान्ता शेते ह्यद्यातथोचिता ॥ ०१९ ॥

किं नु दुःखतरं शक्यं मया द्रष्टुमतः परम् ।
योऽहमद्य नरव्याघ्रान्सुप्तान्पश्यामि भूतले ॥ ०२० ॥

त्रिषु लोकेषु यद्राज्यं धर्मविद्योऽर्हते नृपः ।
सोऽयं भूमौ परिश्रान्तः शेते प्राकृतवत्कथम् ॥ ०२१ ॥

अयं नीलाम्बुदश्यामो नरेष्वप्रतिमो भुवि ।
शेते प्राकृतवद्भूमावतो दुःखतरं नु किम् ॥ ०२२ ॥

अश्विनाविव देवानां याविमौ रूपसंपदा ।
तौ प्राकृतवद्द्येमौ प्रसुप्तौ धरणीतले ॥ ०२३ ॥

ज्ञातयो यस्य नैव स्युर्विषमाः कुलपांसनाः ।
स जीवेत्सुसुखं लोके ग्रामे द्रुम इवैकजः ॥ ०२४ ॥

एको वृक्षो हि यो ग्रामे भवेत्पर्णफलान्वितः ।
चैत्यो भवति निर्ज्ञातिरर्चनीयः सुपूजितः ॥ ०२५ ॥

येषां च बहवः शूरा ज्ञातयो धर्मसंश्रिताः ।
ते जीवन्ति सुखं लोके भवन्ति च निरामयाः ॥ ०२६ ॥

बलवन्तः समृद्धार्था मित्रबान्धवनन्दनाः ।
जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव ॥ ०२७ ॥

वयं तु धृतराष्ट्रेण सपुत्रेण दुरात्मना ।
विवासिता न दग्धाश्च कथञ्चित्तस्य शासनात् ॥ ०२८ ॥

तस्मान्मुक्ता वयं दाहादिमं वृक्षमुपाश्रिताः ।
कां दिशं प्रतिपत्स्यामः प्राप्ताः क्लेशमनुत्तमम् ॥ ०२९ ॥

नातिदूरे च नगरं वनादस्माद्धि लक्षये ।
जागर्तव्ये स्वपन्तीमे हन्त जागर्म्यहं स्वयम् ॥ ०३० ॥

पास्यन्तीमे जलं पश्चात्प्रतिबुद्धा जितक्लमाः ।
इति भीमो व्यवस्यैव जजागार स्वयं तदा ॥ ०३१ ॥

# हिडिम्बवधपर्व

## अध्याय १३९

वैशंपायन उवाच ॥

तत्र तेषु शयानेषु हिडिम्बो नाम राक्षसः ।
अविदूरे वनात्तस्माच्छालवृक्षमुपाश्रितः ॥ ००१ ॥

क्रूरो मानुषमांसादो महावीर्यो महाबलः ।
विरूपरूपः पिङ्गाक्षः करालो घोरदर्शनः ॥ ००२ ॥

पिशितेप्सुः क्षुधार्तस्तानपश्यत यदृच्छया ॥ ००२ ॥

ऊर्ध्वाङ्गुलिः स कण्डूयन्धुन्वन्रूक्षाञ्शिरोरुहान् ।
जृम्भमाणो महावक्त्रः पुनः पुनरवेक्ष्य च ॥ ००३ ॥

दुष्टो मानुषमांसादो महाकायो महाबलः ।
आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ॥ ००४ ॥

उपपन्नश्चिरस्याद्य भक्षो मम मनःप्रियः ।
स्नेहस्रवान्प्रस्रवति जिह्वा पर्येति मे मुखम् ॥ ००५ ॥

अष्टौ दंष्ट्राः सुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः ।
देहेषु मज्जयिष्यामि स्निग्धेषु पिशितेषु च ॥ ००६ ॥

आक्रम्य मानुषं कण्ठमाच्छिद्य धमनीमपि ।
उष्णं नवं प्रपास्यामि फेनिलं रुधिरं बहु ॥ ००७ ॥

गच्छ जानीहि के त्वेते शेरते वनमाश्रिताः ।
मानुषो बलवान्गन्धो घ्राणं तर्पयतीव मे ॥ ००८ ॥

हत्वैतान्मानुषान्सर्वानानयस्व ममान्तिकम् ।
अस्मद्विषयसुप्तेभ्यो नैतेभ्यो भयमस्ति ते ॥ ००९ ॥

एषां मांसानि संस्कृत्य मानुषाणां यथेष्टतः ।
भक्षयिष्याव सहितौ कुरु तूर्णं वचो मम ॥ ०१० ॥

भ्रातुर्वचनमाज्ञाय त्वरमाणेव राक्षसी ।
जगाम तत्र यत्र स्म पाण्डवा भरतर्षभ ॥ ०११ ॥

ददर्श तत्र गत्वा सा पाण्डवान्पृथया सह ।
शयानान्भीमसेनं च जाग्रतं त्वपराजितम् ॥ ०१२ ॥

दृष्ट्वैव भीमसेनं सा शालस्कन्धमिवोद्गतम् ।
राक्षसी कामयामास रूपेणाप्रतिमं भुवि ॥ ०१३ ॥

अयं श्यामो महाबाहुः सिंहस्कन्धो महाद्युतिः ।
कम्बुग्रीवः पुष्कराक्षो भर्ता युक्तो भवेन्मम ॥ ०१४ ॥

नाहं भ्रातृवचो जातु कुर्यां क्रूरोपसंहितम् ।
पतिस्नेहोऽतिबलवान्न तथा भ्रातृसौहृदम् ॥ ०१५ ॥

मुहूर्तमिव तृप्तिश्च भवेद्भ्रातुर्ममैव च ।
हतैरेतैरहत्वा तु मोदिष्ये शाश्वतिः समाः ॥ ०१६ ॥

सा कामरूपिणी रूपं कृत्वा मानुषमुत्तमम् ।
उपतस्थे महाबाहुं भीमसेनं शनैः शनैः ॥ ०१७ ॥

विलज्जमानेव लता दिव्याभरणभूषिता ।
स्मितपूर्वमिदं वाक्यं भीमसेनमथाब्रवीत् ॥ ०१८ ॥

कुतस्त्वमसि संप्राप्तः कश्चासि पुरुषर्षभ ।
क इमे शेरते चेह पुरुषा देवरूपिणः ॥ ०१९ ॥

केयं च बृहती श्यामा सुकुमारी तवानघ ।
शेते वनमिदं प्राप्य विश्वस्ता स्वगृहे यथा ॥ ०२० ॥

नेदं जानाति गहनं वनं राक्षससेवितम् ।
वसति ह्यत्र पापात्मा हिडिम्बो नाम राक्षसः ॥ ०२१ ॥

तेनाहं प्रेषिता भ्रात्रा दुष्टभावेन रक्षसा ।
बिभक्षयिषता मांसं युष्माकममरोपम ॥ ०२२ ॥

साहं त्वामभिसंप्रेक्ष्य देवगर्भसमप्रभम् ।
नान्यं भर्तारमिच्छामि सत्यमेतद्ब्रवीमि ते ॥ ०२३ ॥

एतद्विज्ञाय धर्मज्ञ युक्तं मयि समाचर ।
कामोपहतचित्ताङ्गीं भजमानां भजस्व माम् ॥ ०२४ ॥

त्रास्येऽहं त्वां महाबाहो राक्षसात्पुरुषादकात् ।
वत्स्यावो गिरिदुर्गेषु भर्ता भव ममानघ ॥ ०२५ ॥

अन्तरिक्षचरा ह्यस्मि कामतो विचरामि च ।
अतुलामाप्नुहि प्रीतिं तत्र तत्र मया सह ॥ ०२६ ॥

भीम उवाच ॥

मातरं भ्रातरं ज्येष्ठं कनिष्ठानपरानिमान् ।
परित्यजेत को न्वद्य प्रभवन्निव राक्षसि ॥ ०२७ ॥

को हि सुप्तानिमान्भ्रातृन्दत्त्वा राक्षसभोजनम् ।
मातरं च नरो गच्छेत्कामार्त इव मद्विधः ॥ ०२८ ॥

राक्षस्युवाच ॥

यत्ते प्रियं तत्करिष्ये सर्वानेतान्प्रबोधय ।
मोक्षयिष्यामि वः कामं राक्षसात्पुरुषादकात् ॥ ०२९ ॥

भीम उवाच ॥

सुखसुप्तान्वने भ्रातृन्मातरं चैव राक्षसि ।
न भयाद्बोधयिष्यामि भ्रातुस्तव दुरात्मनः ॥ ०३० ॥

न हि मे राक्षसा भीरु सोढुं शक्ताः पराक्रमम् ।
न मनुष्या न गन्धर्वा न यक्षाश्चारुलोचने ॥ ०३१ ॥

गच्छ वा तिष्ठ वा भद्रे यद्वापीच्छसि तत्कुरु ।
तं वा प्रेषय तन्वङ्गि भ्रातरं पुरुषादकम् ॥ ०३२ ॥

---

# अध्याय १४०

वैशंपायन उवाच ॥

तां विदित्वा चिरगतां हिडिम्बो राक्षसेश्वरः ।
अवतीर्य द्रुमात्तस्मादाजगामाथ पाण्डवान् ॥ ००१ ॥

लोहिताक्षो महाबाहुरूर्ध्वकेशो महाबलः ।
मेघसंघातवर्ष्मा च तीक्ष्णदंष्ट्रोज्ज्वलाननः ॥ ००२ ॥

तमापतन्तं दृष्ट्वैव तथा विकृतदर्शनम् ।

हिडिम्बोवाच वित्रस्ता भीमसेनमिदं वचः ॥ ००३ ॥

आपतत्येष दुष्टात्मा सङ्क्रुद्धः पुरुषादकः ।
त्वामहं भ्रातृभिः सार्धं यद्ब्रवीमि तथा कुरु ॥ ००४ ॥

अहं कामगमा वीर रक्षोबलसमन्विता ।
आरुहेमां मम श्रोणीं नेष्यामि त्वां विहायसा ॥ ००५ ॥

प्रबोधयैनान्संसुप्तान्मातरं च परंतप ।
सर्वानेव गमिष्यामि गृहीत्वा वो विहायसा ॥ ००६ ॥

भीम उवाच ॥

मा भैस्त्वं विपुलश्रोणि नैष कश्चिन्मयि स्थिते ।
अहमेनं हनिष्यामि प्रेक्षन्त्यास्ते सुमध्यमे ॥ ००७ ॥

नायं प्रतिबलो भीरु राक्षसापसदो मम ।
सोढुं युधि परिस्पन्दमथवा सर्वराक्षसाः ॥ ००८ ॥

पश्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ ।
ऊरू परिघसङ्काशौ संहतं चाप्युरो मम ॥ ००९ ॥

विक्रमं मे यथेन्द्रस्य साद्य द्रक्ष्यसि शोभने ।
मावमंस्थाः पृथुश्रोणि मत्वा मामिह मानुषम् ॥ ०१० ॥

हिडिम्बोवाच ॥

नावमन्ये नरव्याघ्र त्वामहं देवरूपिणम् ।
दृष्टापदानस्तु मया मानुषेष्वेव राक्षसः ॥ ०११ ॥

वैशंपायन उवाच ॥

तथा सञ्जल्पतस्तस्य भीमसेनस्य भारत ।
वाचः शुश्राव ताः क्रुद्धो राक्षसः पुरुषादकः ॥ ०१२ ॥

अवेक्षमाणस्तस्याश्च हिडिम्बो मानुषं वपुः ।
स्रग्दामपूरितशिखं समग्रेन्दुनिभाननम् ॥ ०१३ ॥

सुभ्रूनासाक्षिकेशान्तं सुकुमारनखत्वचम् ।
सर्वाभरणसंयुक्तं सुसूक्ष्माम्बरवाससम् ॥ ०१४ ॥

तां तथा मानुषं रूपं बिभ्रतीं सुमनोहरम् ।
पुंस्कामां शङ्कमानश्च चुक्रोध पुरुषादकः ॥ ०१५ ॥

सङ्क्रुद्धो राक्षसस्तस्या भगिन्याः कुरुसत्तम ।
उत्फाल्य विपुले नेत्रे ततस्तामिदमब्रवीत् ॥ ०१६ ॥

को हि मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः ।
न बिभेषि हिडिम्बे किं मत्कोपाद्विप्रमोहिता ॥ ०१७ ॥

धिक्त्वामसति पुंस्कामे मम विप्रियकारिणि ।
पूर्वेषां राक्षसेन्द्राणां सर्वेषामयशस्करि ॥ ०१८ ॥

यानिमानाश्रिताकार्षीरप्रियं सुमहन्मम ।
एष तानद्य वै सर्वान्हनिष्यामि त्वया सह ॥ ०१९ ॥

एवमुक्त्वा हिडिम्बां स हिडिम्बो लोहितेक्षणः ।
वधायाभिपपातैनां दन्तैर्दन्तानुपस्पृशन् ॥ ०२० ॥

तमापतन्तं संप्रेक्ष्य भीमः प्रहरतां वरः ।
भर्त्सयामास तेजस्वी तिष्ठ तिष्ठेति चाब्रवीत् ॥ ०२१ ॥

# अध्याय १४१

वैशंपायन उवाच ॥

भीमसेनस्तु तं दृष्ट्वा राक्षसं प्रहसन्निव ।
भगिनीं प्रति सङ्क्रुद्धमिदं वचनमब्रवीत् ॥ ००१ ॥

किं ते हिडिम्ब एतैर्वा सुखसुप्तैः प्रबोधितैः ।
मामासादय दुर्बुद्धे तरसा त्वं नराशन ॥ ००२ ॥

मय्येव प्रहरैहि त्वं न स्त्रियं हन्तुमर्हसि ।
विशेषतोऽनपकृते परेणापकृते सति ॥ ००३ ॥

न हीयं स्ववशा बाला कामयत्यद्य मामिह ।
चोदितैषा ह्यनङ्गेन शरीरान्तरचारिणा ॥ ००४ ॥

भगिनी तव दुर्बुद्धे राक्षसानां यशोहर ॥ ००४ ॥

त्वन्नियोगेन चैवेयं रूपं मम समीक्ष्य च ।
कामयत्यद्य मां भीरुर्नैषा दूषयते कुलम् ॥ ००५ ॥

अनङ्गेन कृते दोषे नेमां त्वमिह राक्षस ।
मयि तिष्ठति दुष्टात्मन्न स्त्रियं हन्तुमर्हसि ॥ ००६ ॥

समागच्छ मया सार्धमेकेनैको नराशन ।
अहमेव नयिष्यामि त्वामद्य यमसादनम् ॥ ००७ ॥

अद्य ते तलनिष्पिष्टं शिरो राक्षस दीर्यताम् ।

कुञ्जरस्येव पादेन विनिष्पिष्टं बलीयसः ॥ ००८ ॥

अद्य गात्राणि क्रव्यादाः श्येना गोमायवश्च ते ।
कर्षन्तु भुवि संहृष्टा निहतस्य मया मृधे ॥ ००९ ॥

क्षणेनाद्य करिष्येऽहमिदं वनमकण्टकम् ।
पुरस्ताद्दूषितं नित्यं त्वया भक्षयता नरान् ॥ ०१० ॥

अद्य त्वां भगिनी पाप कृष्यमाणं मया भुवि ।
द्रक्षत्यद्रिप्रतीकाशं सिंहेनेव महाद्विपम् ॥ ०११ ॥

निराबाधास्त्वयि हते मया राक्षसपांसन ।
वनमेतच्चरिष्यन्ति पुरुषा वनचारिणः ॥ ०१२ ॥

हिडिम्ब उवाच ॥

गर्जितेन वृथा किं ते कत्थितेन च मानुष ।
कृत्वैतत्कर्मणा सर्वं कत्थेथा मा चिरं कृथाः ॥ ०१३ ॥

बलिनं मन्यसे यच्च आत्मानमपराक्रमम् ।
ज्ञास्यस्यद्य समागम्य मयात्मानं बलाधिकम् ॥ ०१४ ॥

न तावदेतान्हिंसिष्ये स्वपन्त्वेते यथासुखम् ।
एष त्वामेव दुर्बुद्धे निहन्म्यद्याप्रियंवदम् ॥ ०१५ ॥

पीत्वा तवासृग्गात्रेभ्यस्ततः पश्चादिमानपि ।
हनिष्यामि ततः पश्चादिमां विप्रियकारिणीम् ॥ ०१६ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा ततो बाहुं प्रगृह्य पुरुषादकः ।

अभ्यधावत सङ्क्रुद्धो भीमसेनमरिंदमम् ॥ ०१७ ॥

तस्याभिपततस्तूर्णं भीमो भीमपराक्रमः ।
वेगेन प्रहृतं बाहुं निजग्राह हसन्निव ॥ ०१८ ॥

निगृह्य तं बलाद्भीमो विस्फुरन्तं चकर्ष ह ।
तस्माद्देशाद्धनूंष्यष्टौ सिंहः क्षुद्रमृगं यथा ॥ ०१९ ॥

ततः स राक्षसः क्रुद्धः पाण्डवेन बलाद्धृतः ।
भीमसेनं समालिङ्ग्य व्यनदद्भैरवं रवम् ॥ ०२० ॥

पुनर्भीमो बलादेनं विचकर्ष महाबलः ।
मा शब्दः सुखसुप्तानां भ्रातॄणां मे भवेदिति ॥ ०२१ ॥

अन्योन्यं तौ समासाद्य विचकर्षतुरोजसा ।
राक्षसो भीमसेनश्च विक्रमं चक्रतुः परम् ॥ ०२२ ॥

बभञ्जतुर्महावृक्षा.ण्लताश्चाकर्षतुस्ततः ।
मत्ताविव सुसंरब्धौ वारणौ षष्टिहायनौ ॥ ०२३ ॥

तयोः शब्देन महता विबुद्धास्ते नरर्षभाः ।
सह मात्रा तु ददृशुर्हिडिम्बामग्रतः स्थिताम् ॥ ०२४ ॥

---

# अध्याय १४२

वैशंपायन उवाच ॥

प्रबुद्धास्ते हिडिम्बाया रूपं दृष्ट्वातिमानुषम् ।

विस्मिताः पुरुषव्याघ्रा बभूवुः पृथया सह ॥ ००१ ॥

ततः कुन्ती समीक्ष्यैनां विस्मिता रूपसंपदा ।
उवाच मधुरं वाक्यं सान्त्वपूर्वमिदं शनैः ॥ ००२ ॥

कस्य त्वं सुरगर्भाभे का चासि वरवर्णिनि ।
केन कार्येण सुश्रोणि कुतश्चागमनं तव ॥ ००३ ॥

यदि वास्य वनस्यासि देवता यदि वाप्सराः ।
आचक्ष्व मम तत्सर्वं किमर्थं चेह तिष्ठसि ॥ ००४ ॥

हिडिम्बोवाच ॥

यदेतत्पश्यसि वनं नीलमेघनिभं महत् ।
निवासो राक्षसस्यैतद्धिडिम्बस्य ममैव च ॥ ००५ ॥

तस्य मां राक्षसेन्द्रस्य भगिनीं विद्धि भामिनि ।
भ्रात्रा संप्रेषितामार्ये त्वां सपुत्रां जिघांसता ॥ ००६ ॥

क्रूरबुद्धेरहं तस्य वचनादागता इह ।
अद्राक्षं हेमवर्णाभं तव पुत्रं महौजसम् ॥ ००७ ॥

ततोऽहं सर्वभूतानां भावे विचरता शुभे ।
चोदिता तव पुत्रस्य मन्मथेन वशानुगा ॥ ००८ ॥

ततो वृतो मया भर्ता तव पुत्रो महाबलः ।
अपनेतुं च यतितो न चैव शकितो मया ॥ ००९ ॥

चिरायमाणां मां ज्ञात्वा ततः स पुरुषादकः ।
स्वयमेवागतो हन्तुमिमान्सर्वांस्तवात्मजान् ॥ ०१० ॥

स तेन मम कान्तेन तव पुत्रेण धीमता ।
बलादितो विनिष्पिष्य व्यपकृष्टो महात्मना ॥ ०११ ॥

विकर्षन्तौ महावेगौ गर्जमानौ परस्परम् ।
पश्यध्वं युधि विक्रान्तावेतौ तौ नरराक्षसौ ॥ ०१२ ॥

वैशंपायन उवाच ॥

तस्याः श्रुत्वैव वचनमुत्पपात युधिष्ठिरः ।
अर्जुनो नकुलश्चैव सहदेवश्च वीर्यवान् ॥ ०१३ ॥

तौ ते ददृशुरासक्तौ विकर्षन्तौ परस्परम् ।
काङ्क्षमाणौ जयं चैव सिंहाविव रणोत्कटौ ॥ ०१४ ॥

तावन्योन्यं समाश्लिष्य विकर्षन्तौ परस्परम् ।
दावाग्निधूमसदृशं चक्रतुः पार्थिवं रजः ॥ ०१५ ॥

वसुधारेणुसंवीतौ वसुधाधरसंनिभौ ।
विभ्राजेतां यथा शैलौ नीहारेणाभिसंवृतौ ॥ ०१६ ॥

राक्षसेन तथा भीमं क्लिश्यमानं निरीक्ष्य तु ।
उवाचेदं वचः पार्थः प्रहसञ्शनकैरिव ॥ ०१७ ॥

भीम मा भैर्महाबाहो न त्वां बुध्यामहे वयम् ।
समेतं भीमरूपेण प्रसुप्ताः श्रमकर्शिताः ॥ ०१८ ॥

साहाय्येऽस्मि स्थितः पार्थ योधयिष्यामि राक्षसम् ।
नकुलः सहदेवश्च मातरं गोपयिष्यतः ॥ ०१९ ॥

भीम उवाच ॥

उदासीनो निरीक्षस्व न कार्यः संभ्रमस्त्वया ।
न जात्वयं पुनर्जीवेन्मद्बाह्वन्तरमागतः ॥ ०२० ॥

अर्जुन उवाच ॥

किमनेन चिरं भीम जीवता पापरक्षसा ।
गन्तव्यं न चिरं स्थातुमिह शक्यमरिंदम ॥ ०२१ ॥

पुरा संरज्यते प्राची पुरा संध्या प्रवर्तते ।
रौद्रे मुहूर्ते रक्षांसि प्रबलानि भवन्ति च ॥ ०२२ ॥

त्वरस्व भीम मा क्रीड जहि रक्षो विभीषणम् ।
पुरा विकुरुते मायां भुजयोः सारमर्पय ॥ ०२३ ॥

वैशंपायन उवाच ॥

अर्जुनेनैवमुक्तस्तु भीमो भीमस्य रक्षसः ।
उत्क्षिप्याभ्रामयद्देहं तूर्णं गुणशताधिकम् ॥ ०२४ ॥

भीम उवाच ॥

वृथामांसैर्वृथा पुष्टो वृथा वृद्धो वृथामतिः ।
वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि ॥ ०२५ ॥

अर्जुन उवाच ॥

अथ वा मन्यसे भारं त्वमिमं राक्षसं युधि ।
करोमि तव साहाय्यं शीघ्रमेव निहन्यताम् ॥ ०२६ ॥

अथ वाप्यहमेवैनं हनिष्यामि वृकोदर ।
कृतकर्मा परिश्रान्तः साधु तावदुपारम ॥ ०२७ ॥

वैशंपायन उवाच ॥

तस्य तद्वचनं श्रुत्वा भीमसेनोऽत्यमर्षणः ।
निष्पिष्यैनं बलाद्भूमौ पशुमारममारयत् ॥ ०२८ ॥

स मार्यमाणो भीमेन ननाद विपुलं स्वनम् ।
पूरयंस्तद्वनं सर्वं जलार्द्र इव दुन्दुभिः ॥ ०२९ ॥

भुजाभ्यां योक्त्रयित्वा तं बलवान्पाण्डुनन्दनः ।
मध्ये भङ्क्त्वा स बलवान्हर्षयामास पाण्डवान् ॥ ०३० ॥

हिडिम्बं निहतं दृष्ट्वा संहृष्टास्ते तरस्विनः ।
अपूजयन्नरव्याघ्रं भीमसेनमरिंदमम् ॥ ०३१ ॥

अभिपूज्य महात्मानं भीमं भीमपराक्रमम् ।
पुनरेवार्जुनो वाक्यमुवाचेदं वृकोदरम् ॥ ०३२ ॥

नदूरे नगरं मन्ये वनादस्मादहं प्रभो ।
शीघ्रं गच्छाम भद्रं ते न नो विद्यात्सुयोधनः ॥ ०३३ ॥

ततः सर्वे तथेत्युक्त्वा सह मात्रा परंतपाः ।
प्रययुः पुरुषव्याघ्रा हिडिम्बा चैव राक्षसी ॥ ०३४ ॥

# बकवधपर्व

## अध्याय १४३

भीम उवाच ॥

स्मरन्ति वैरं रक्षांसि मायामाश्रित्य मोहिनीम् ।
हिडिम्बे व्रज पन्थानं त्वं वै भ्रातृनिषेवितम् ॥ ००१ ॥

युधिष्ठिर उवाच ॥

क्रुद्धोऽपि पुरुषव्याघ्र भीम मा स्म स्त्रियं वधीः ।
शरीरगुप्त्याभ्यधिकं धर्मं गोपय पाण्डव ॥ ००२ ॥

वधाभिप्रायमायान्तमवधीस्त्वं महाबलम् ।
रक्षसस्तस्य भगिनी किं नः क्रुद्धा करिष्यति ॥ ००३ ॥

वैशंपायन उवाच ॥

हिडिम्बा तु ततः कुन्तीमभिवाद्य कृताञ्जलिः ।
युधिष्ठिरं च कौन्तेयमिदं वचनमब्रवीत् ॥ ००४ ॥

आर्ये जानासि यद्दुःखमिह स्त्रीणामनङ्गजम् ।
तदिदं मामनुप्राप्तं भीमसेनकृतं शुभे ॥ ००५ ॥

सोढं तत्परमं दुःखं मया कालप्रतीक्षया ।
सोऽयमभ्यागतः कालो भविता मे सुखाय वै ॥ ००६ ॥

मया ह्युत्सृज्य सुहृदः स्वधर्मं स्वजनं तथा ।
वृतोऽयं पुरुषव्याघ्रस्तव पुत्रः पतिः शुभे ॥ ००७ ॥

वरेणापि तथानेन त्वया चापि यशस्विनि ।
तथा ब्रुवन्ती हि तदा प्रत्याख्याता क्रियां प्रति ॥ ००८ ॥

त्वं मां मूढेति वा मत्वा भक्ता वानुगतेति वा ।
भर्त्रानेन महाभागे संयोजय सुतेन ते ॥ ००९ ॥

तमुपादाय गच्छेयं यथेष्टं देवरूपिणम् ।
पुनश्चैवागमिष्यामि विश्रम्भं कुरु मे शुभे ॥ ०१० ॥

अहं हि मनसा ध्याता सर्वान्नेष्यामि वः सदा ।
वृजिने तारयिष्यामि दुर्गेषु च नरर्षभान् ॥ ०११ ॥

पृष्ठेन वो वहिष्यामि शीघ्रां गतिमभीप्सतः ।
यूयं प्रसादं कुरुत भीमसेनो भजेत माम् ॥ ०१२ ॥

आपदस्तरणे प्राणान्धारयेद्येन येन हि ।
सर्वमादृत्य कर्तव्यं तद्धर्ममनुवर्तता ॥ ०१३ ॥

आपत्सु यो धारयति ध्रमं धर्मविदुत्तमः ।
व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते ॥ ०१४ ॥

पुण्यं प्राणान्धारयति पुण्यं प्राणदमुच्यते ।
येन येनाचरेद्धर्मं तस्मिन्गर्हा न विद्यते ॥ ०१५ ॥

युधिष्ठिर उवाच ॥

एवमेतद्यथात्थ त्वं हिडिम्बे नात्र संशयः ।
स्थातव्यं तु त्वया धर्मे यथा ब्रूयां सुमध्यमे ॥ ०१६ ॥

स्नातं कृताह्निकं भद्रे कृतकौतुकमङ्गलम् ।
भीमसेनं भजेथास्त्वं प्रागस्तगमनाद्भवेः ॥ ०१७ ॥

अहःसु विहरानेन यथाकामं मनोजवा ।
अयं त्वानयितव्यस्ते भीमसेनः सदा निशि ॥ ०१८ ॥

वैशंपायन उवाच ॥

तथेति तत्प्रतिज्ञाय हिडिम्बा राक्षसी तदा ।
भीमसेनमुपादाय ऊर्ध्वमाचक्रमे ततः ॥ ०१९ ॥

शैलशृङ्गेषु रम्येषु देवतायतनेषु च ।
मृगपक्षिविघुष्टेषु रमणीयेषु सर्वदा ॥ ०२० ॥

कृत्वा च परमं रूपं सर्वाभरणभूषिता ।
सञ्जल्पन्ती सुमधुरं रमयामास पाण्डवम् ॥ ०२१ ॥

तथैव वनदुर्गेषु पुष्पितद्रुमसानुषु ।
सरःसु रमणीयेषु पद्मोत्पलयुतेषु च ॥ ०२२ ॥

नदीद्वीपप्रदेशेषु वैडूर्यसिकतासु च ।
सुतीर्थवनतोयासु तथा गिरिनदीषु च ॥ ०२३ ॥

सगरस्य प्रदेशेषु मणिहेमचितेषु च ।
पत्तनेषु च रम्येषु महाशालवनेषु च ॥ ०२४ ॥

देवारण्येषु पुण्येषु तथा पर्वतसानुषु ।
गुह्यकानां निवासेषु तापसायतनेषु च ॥ ०२५ ॥

सर्वर्तुफलपुष्पेषु मानसेषु सरःसु च ।
बिभ्रती परमं रूपं रमयामास पाण्डवम् ॥ ०२६ ॥

रमयन्ती तथा भीमं तत्र तत्र मनोजवा ।

प्रजज्ञे राक्षसी पुत्रं भीमसेनान्महाबलम् ॥ ०२७ ॥

विरूपाक्षं महावक्त्रं शङ्कुकर्णं विभीषणम् ।
भीमरूपं सुताम्रोष्ठं तीक्ष्णदंष्ट्रं महाबलम् ॥ ०२८ ॥

महेष्वासं महावीर्यं महासत्त्वं महाभुजम् ।
महाजवं महाकायं महामायमरिंदमम् ॥ ०२९ ॥

अमानुषं मानुषजं भीमवेगं महाबलम् ।
यः पिशाचानतीवान्यान्बभूवाति स मानुषान् ॥ ०३० ॥

बालोऽपि यौवनं प्राप्तो मानुषेषु विशां पते ।
सर्वास्त्रेषु परं वीरः प्रकर्षमगमद्बली ॥ ०३१ ॥

सद्यो हि गर्भं राक्षस्यो लभन्ते प्रसवन्ति च ।
कामरूपधराश्चैव भवन्ति बहुरूपिणः ॥ ०३२ ॥

प्रणम्य विकचः पादावगृह्णात्स पितुस्तदा ।
मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः ॥ ०३३ ॥

घटभासोत्कच इति मातरं सोऽभ्यभाषत ।
अभवत्तेन नामास्य घटोत्कच इति स्म ह ॥ ०३४ ॥

अनुरक्तश्च तानासीत्पाण्डवान्स घटोत्कचः ।
तेषां च दयितो नित्यमात्मभूतो बभूव सः ॥ ०३५ ॥

संवाससमयो जीर्ण इत्यभाषत तं ततः ।
हिडिम्बा समयं कृत्वा स्वां गतिं प्रत्यपद्यत ॥ ०३६ ॥

कृत्यकाल उपस्थास्ये पितॄनिति घटोत्कचः ।
आमन्त्र्य राक्षसश्रेष्ठः प्रतस्थे चोत्तरां दिशम् ॥ ०३७ ॥

स हि सृष्टो मघवता शक्तिहेतोर्महात्मना ।
कर्णस्याप्रतिवीर्यस्य विनाशाय महात्मनः ॥ ०३८ ॥

---

# अध्याय १४४

वैशंपायन उवाच ॥

ते वनेन वनं वीरा घ्नन्तो मृगगणान्बहून् ।
अपक्रम्य ययू राजंस्त्वरमाणा महारथाः ॥ ००१ ॥

मत्स्यांस्त्रिगर्तान्पाञ्चालान्कीचकानन्तरेण च ।
रमणीयान्वनोद्देशान्प्रेक्षमाणाः सरांसि च ॥ ००२ ॥

जटाः कृत्वात्मनः सर्वे वल्कलाजिनवाससः ।
सह कुन्त्या महात्मानो बिभ्रतस्तापसं वपुः ॥ ००३ ॥

क्वचिद्वहन्तो जननीं त्वरमाणा महारथाः ।
क्वचिच्छन्देन गच्छन्तस्ते जग्मुः प्रसभं पुनः ॥ ००४ ॥

ब्राह्मं वेदमधीयाना वेदाङ्गानि च सर्वशः ।
नीतिशास्त्रं च धर्मज्ञा ददृशुस्ते पितामहम् ॥ ००५ ॥

तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं तदा ।
तस्थुः प्राञ्जलयः सर्वे सह मात्रा परंतपाः ॥ ००६ ॥

व्यास उवाच ॥

मयेदं मनसा पूर्वं विदितं भरतर्षभाः ।
यथा स्थितैरधर्मेण धार्तराष्ट्रैर्विवासिताः ॥ ००७ ॥

तद्विदित्वास्मि संप्राप्तश्चिकीर्षुः परमं हितम् ।
न विषादोऽत्र कर्तव्यः सर्वमेतत्सुखाय वः ॥ ००८ ॥

समास्ते चैव मे सर्वे यूयं चैव न संशयः ।
दीनतो बालतश्चैव स्नेहं कुर्वन्ति बान्धवाः ॥ ००९ ॥

तस्मादभ्यधिकः स्नेहो युष्मासु मम सांप्रतम् ।
स्नेहपूर्वं चिकीर्षामि हितं वस्तन्निबोधत ॥ ०१० ॥

इदं नगरमभ्याशे रमणीयं निरामयम् ।
वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ॥ ०११ ॥

वैशंपायन उवाच ॥

एवं स तान्समाश्वास्य व्यासः पार्थानरिंदमान् ।
एकचक्रामभिगतः कुन्तीमाश्वासयत्प्रभुः ॥ ०१२ ॥

जीवपुत्रि सुतस्तेऽयं धर्मपुत्रो युधिष्ठिरः ।
पृथिव्यां पार्थिवान्सर्वान्प्रशासिष्यति धर्मराट् ॥ ०१३ ॥

धर्मेण जित्वा पृथिवीमखिलां धर्मविद्वशी ।
भीमसेनार्जुनबलाद्भोक्ष्यत्ययमसंशयः ॥ ०१४ ॥

पुत्रास्तव च माद्र्याश्च सर्व एव महारथाः ।
स्वराष्ट्रे विहरिष्यन्ति सुखं सुमनसस्तदा ॥ ०१५ ॥

यक्ष्यन्ति च नरव्याघ्रा विजित्य पृथिवीमिमाम् ।
राजसूयाश्वमेधाद्यैः क्रतुभिर्भूरिदक्षिणैः ॥ ०१६ ॥

अनुगृह्य सुहृद्वर्गं धनेन च सुखेन च ।
पितृपैतामहं राज्यमिह भोक्ष्यन्ति ते सुताः ॥ ०१७ ॥

एवमुक्त्वा निवेश्यैनान्ब्राह्मणस्य निवेशने ।
अब्रवीत्पार्थिवश्रेष्ठमृषिर्द्वैपायनस्तदा ॥ ०१८ ॥

इह मां संप्रतीक्षध्वमागमिष्याम्यहं पुनः ।
देशकालौ विदित्वैव वेत्स्यध्वं परमां मुदम् ॥ ०१९ ॥

स तैः प्राञ्जलिभिः सर्वैस्तथेत्युक्तो नराधिप ।
जगाम भगवान्व्यासो यथाकाममृषिः प्रभुः ॥ ०२० ॥

---

# अध्याय १४५

जनमेजय उवाच ॥

एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः ।
अतः परं द्विजश्रेष्ठ किमकुर्वत पाण्डवाः ॥ ००१ ॥

वैशंपायन उवाच ॥

एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः ।
ऊषुर्नातिचिरं कालं ब्राह्मणस्य निवेशने ॥ ००२ ॥

रमणीयानि पश्यन्तो वनानि विविधानि च ।
पार्थिवानपि चोद्देशान्सरितश्च सरांसि च ॥ ००३ ॥

चेरुर्भैक्षं तदा ते तु सर्व एव विशां पते ।
बभूवुर्नागराणां च स्वैर्गुणैः प्रियदर्शनाः ॥ ००४ ॥

निवेदयन्ति स्म च ते भैक्षं कुन्त्याः सदा निशि ।
तया विभक्तान्भागांस्ते भुञ्जते स्म पृथक्पृथक् ॥ ००५ ॥

अर्धं ते भुञ्जते वीराः सह मात्रा परंतपाः ।
अर्धं भैक्षस्य सर्वस्य भीमो भुङ्क्ते महाबलः ॥ ००६ ॥

तथा तु तेषां वसतां तत्र राजन्महात्मनाम् ।
अतिचक्राम सुमहान्कालोऽथ भरतर्षभ ॥ ००७ ॥

ततः कदाचिद्भैक्षाय गतास्ते भरतर्षभाः ।
सङ्गत्या भीमसेनस्तु तत्रास्ते पृथया सह ॥ ००८ ॥

अथार्तिजं महाशब्दं ब्राह्मणस्य निवेशने ।
भृशमुत्पतितं घोरं कुन्ती शुश्राव भारत ॥ ००९ ॥

रोरूयमाणांस्तान्सर्वान्परिदेवयतश्च सा ।
कारुण्यात्साधुभावाच्च देवी राजन्न चक्षमे ॥ ०१० ॥

मथ्यमानेव दुःखेन हृदयेन पृथा ततः ।
उवाच भीमं कल्याणी कृपान्वितमिदं वचः ॥ ०११ ॥

वसामः सुसुखं पुत्र ब्राह्मणस्य निवेशने ।
अज्ञाता धार्तराष्ट्राणां सत्कृता वीतमन्यवः ॥ ०१२ ॥

सा चिन्तये सदा पुत्र ब्राह्मणस्यास्य किं न्वहम् ।
प्रियं कुर्यामिति गृहे यत्कुर्युरुषिताः सुखम् ॥ ०१३ ॥

एतावान्पुरुषस्तात कृतं यस्मिन्न नश्यति ।
यावच्च कुर्यादन्योऽस्य कुर्यादभ्यधिकं ततः ॥ ०१४ ॥

तदिदं ब्राह्मणस्यास्य दुःखमापतितं ध्रुवम् ।
तत्रास्य यदि साहाय्यं कुर्याम सुकृतं भवेत् ॥ ०१५ ॥

भीम उवाच ॥

ज्ञायतामस्य यद्दुःखं यतश्चैव समुत्थितम् ।
विदिते व्यवसिष्यामि यद्यपि स्यात्सुदुष्करम् ॥ ०१६ ॥

वैशंपायन उवाच ॥

तथा हि कथयन्तौ तौ भूयः शुश्रुवतुः स्वनम् ।
आर्तिजं तस्य विप्रस्य सभार्यस्य विशां पते ॥ ०१७ ॥

अन्तःपुरं ततस्तस्य ब्राह्मणस्य महात्मनः ।
विवेश कुन्ती त्वरिता बद्धवत्सेव सौरभी ॥ ०१८ ॥

ततस्तं ब्राह्मणं तत्र भार्यया च सुतेन च ।
दुहित्रा चैव सहितं ददर्श विकृताननम् ॥ ०१९ ॥

ब्राह्मण उवाच ॥

धिगिदं जीवितं लोकेऽनलसारमनर्थकम् ।
दुःखमूलं पराधीनं भृशमप्रियभागि च ॥ ०२० ॥

जीविते परमं दुःखं जीविते परमो ज्वरः ।
जीविते वर्तमानस्य द्वन्द्वानामागमो ध्रुवः ॥ ०२१ ॥

एकात्मापि हि धर्मार्थौ कामं च न निषेवते ।

एतैश्च विप्रयोगोऽपि दुःखं परमकं मतम् ॥ ०२२ ॥

आहुः केचित्परं मोक्षं स च नास्ति कथञ्चन ।
अर्थप्राप्तौ च नरकः कृत्स्न एवोपपद्यते ॥ ०२३ ॥

अर्थेप्सुता परं दुःखमर्थप्राप्तौ ततोऽधिकम् ।
जातस्नेहस्य चार्थेषु विप्रयोगे महत्तरम् ॥ ०२४ ॥

न हि योगं प्रपश्यामि येन मुच्येयमापदः ।
पुत्रदारेण वा सार्धं प्राद्रवेयामनामयम् ॥ ०२५ ॥

यतितं वै मया पूर्वं यथा त्वं वेत्थ ब्राह्मणि ।
यतः क्षेमं ततो गन्तुं त्वया तु मम न श्रुतम् ॥ ०२६ ॥

इह जाता विवृद्धास्मि पिता चेह ममेति च ।
उक्तवत्यसि दुर्मेधे याच्यमाना मयासकृत् ॥ ०२७ ॥

स्वर्गतो हि पिता वृद्धस्तथा माता चिरं तव ।
बान्धवा भूतपूर्वाश्च तत्र वासे तु का रतिः ॥ ०२८ ॥

सोऽयं ते बन्धुकामाया अश्रृण्वन्त्या वचो मम ।
बन्धुप्रणाशः संप्राप्तो भृशं दुःखकरो मम ॥ ०२९ ॥

अथवा मद्विनाशोऽयं न हि शक्ष्यामि कञ्चन ।
परित्यक्तुमहं बन्धुं स्वयं जीवन्नृशंसवत् ॥ ०३० ॥

सहधर्मचरीं दान्तां नित्यं मातृसमां मम ।
सखायं विहितां देवैर्नित्यं परमिकां गतिम् ॥ ०३१ ॥

मात्रा पित्रा च विहितां सदा गार्हस्थ्यभागिनीम् ।
वरयित्वा यथान्यायं मन्त्रवत्परिणीय च ॥ ०३२ ॥

कुलीनां शीलसंपन्नामपत्यजननीं मम ।
त्वामहं जीवितस्यार्थे साध्वीमनपकारिणीम् ॥ ०३३ ॥

परित्यक्तुं न शक्ष्यामि भार्यां नित्यमनुव्रताम् ॥ ०३३ ॥

कुत एव परित्यक्तुं सुतां शक्ष्याम्यहं स्वयम् ।
बालामप्राप्तवयसमजातव्यञ्जनाकृतिम् ॥ ०३४ ॥

भर्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना ।
यस्यां दौहित्रजा.ण्ल्लोकानाशंसे पितृभिः सह ॥ ०३५ ॥

स्वयमुत्पाद्य तां बालां कथमुत्स्रष्टुमुत्सहे ॥ ०३५ ॥

मन्यन्ते केचिदधिकं स्नेहं पुत्रे पितुर्नराः ।
कन्यायां नैव तु पुनर्मम तुल्यावुभौ मतौ ॥ ०३६ ॥

यस्मि.ण्ल्लोकाः प्रसूतिश्च स्थिता नित्यमथो सुखम् ।
अपापां तामहं बालां कथमुत्स्रष्टुमुत्सहे ॥ ०३७ ॥

आत्मानमपि चोत्सृज्य तप्स्ये प्रेतवशं गतः ।
त्यक्ता ह्येते मया व्यक्तं नेह शक्ष्यन्ति जीवितुम् ॥ ०३८ ॥

एषां चान्यतमत्यागो नृशंसो गर्हितो बुधैः ।
आत्मत्यागे कृते चेमे मरिष्यन्ति मया विना ॥ ०३९ ॥

स कृच्छ्रामहमापन्नो न शक्तस्तर्तुमापदम् ।
अहो धिक्कां गतिं त्वद्य गमिष्यामि सबान्धवः ॥ ०४० ॥

सर्वैः सह मृतं श्रेयो न तु मे जीवितं क्षमम् ॥ ०४० ॥

# अध्याय १४६

ब्राह्मण्युवाच ॥

न संतापस्त्वया कार्यः प्राकृतेनेव कर्हिचित् ।
न हि संतापकालोऽयं वैद्यस्य तव विद्यते ॥ ००१ ॥

अवश्यं निधनं सर्वैर्गन्तव्यमिह मानवैः ।
अवश्यभाविन्यर्थे वै संतापो नेह विद्यते ॥ ००२ ॥

भार्या पुत्रोऽथ दुहिता सर्वमात्मार्थमिष्यते ।
व्यथां जहि सुबुद्ध्या त्वं स्वयं यास्यामि तत्र वै ॥ ००३ ॥

एतद्धि परमं नार्याः कार्यं लोके सनातनम् ।
प्राणानपि परित्यज्य यद्भर्तृहितमाचरेत् ॥ ००४ ॥

तच्च तत्र कृतं कर्म तवापीह सुखावहम् ।
भवत्यमुत्र चाक्षय्यं लोकेऽस्मिंश्च यशस्करम् ॥ ००५ ॥

एष चैव गुरुर्धर्मो यं प्रवक्ष्याम्यहं तव ।
अर्थश्च तव धर्मश्च भूयानत्र प्रदृश्यते ॥ ००६ ॥

यदर्थमिष्यते भार्या प्राप्तः सोऽर्थस्त्वया मयि ।
कन्या चैव कुमारश्च कृताहमनृणा त्वया ॥ ००७ ॥

समर्थः पोषणे चासि सुतयो रक्षणे तथा ।
न त्वहं सुतयोः शक्ता तथा रक्षणपोषणे ॥ ००८ ॥

मम हि त्वद्विहीनायाः सर्वकामा न आपदः ।
कथं स्यातां सुतौ बालौ भवेयं च कथं त्वहम् ॥ ००९ ॥

कथं हि विधवानाथा बालपुत्रा विना त्वया ।
मिथुनं जीवयिष्यामि स्थिता साधुगते पथि ॥ ०१० ॥

अहङ्कृतावलिप्तैश्च प्रार्थ्यमानामिमां सुताम् ।
अयुक्तैस्तव संबन्धे कथं शक्ष्यामि रक्षितुम् ॥ ०११ ॥

उत्सृष्टमामिषं भूमौ प्रार्थयन्ति यथा खगाः ।
प्रार्थयन्ति जनाः सर्वे वीरहीनां तथा स्त्रियम् ॥ ०१२ ॥

साहं विचाल्यमाना वै प्रार्थ्यमाना दुरात्मभिः ।
स्थातुं पथि न शक्ष्यामि सज्जनेष्टे द्विजोत्तम ॥ ०१३ ॥

कथं तव कुलस्यैकामिमां बालामसंस्कृताम् ।
पितृपैतामहे मार्गे नियोक्तुमहमुत्सहे ॥ ०१४ ॥

कथं शक्ष्यामि बालेऽस्मिन्गुणानाधातुमीप्सितान् ।
अनाथे सर्वतो लुप्ते यथा त्वं धर्मदर्शिवान् ॥ ०१५ ॥

इमामपि च ते बालामनाथां परिभूय माम् ।
अनर्हाः प्रार्थयिष्यन्ति शूद्रा वेदश्रुतिं यथा ॥ ०१६ ॥

तां चेदहं न दित्सेयं त्वद्गुणैरुपबृंहिताम् ।
प्रमथ्यैनां हरेयुस्ते हविर्ध्वाङ्क्षा इवाध्वरात् ॥ ०१७ ॥

संप्रेक्षमाणा पुत्रं ते नानुरूपमिवात्मनः ।
अनर्हवशमापन्नामिमां चापि सुतां तव ॥ ०१८ ॥

अवज्ञाता च लोकस्य तथात्मानमजानती ।

अवलिप्तैर्नरैर्ब्रह्मन्मरिष्यामि न संशयः ॥ ०१९ ॥

तौ विहीनौ मया बालौ त्वया चैव ममात्मजौ ।
विनश्येतां न संदेहो मत्स्याविव जलक्षये ॥ ०२० ॥

त्रितयं सर्वथाप्येवं विनशिष्यत्यसंशयम् ।
त्वया विहीनं तस्मात्त्वं मां परित्यक्तुमर्हसि ॥ ०२१ ॥

व्युष्टिरेषा परा स्त्रीणां पूर्वं भर्तुः परा गतिः ।
न तु ब्राह्मण पुत्राणां विषये परिवर्तितुम् ॥ ०२२ ॥

परित्यक्तः सुतश्चायं दुहितेयं तथा मया ।
बान्धवाश्च परित्यक्तास्त्वदर्थं जीवितं च मे ॥ ०२३ ॥

यज्ञैस्तपोभिर्नियमैर्दानैश्च विविधैस्तथा ।
विशिष्यते स्त्रिया भर्तुर्नित्यं प्रियहिते स्थितिः ॥ ०२४ ॥

तदिदं यच्चिकीर्षामि धर्म्यं परमसंमतम् ।
इष्टं चैव हितं चैव तव चैव कुलस्य च ॥ ०२५ ॥

इष्टानि चाप्यपत्यानि द्रव्याणि सुहृदः प्रियाः ।
आपद्धर्मविमोक्षाय भार्या चापि सतां मतम् ॥ ०२६ ॥

एकतो वा कुलं कृत्स्नमात्मा वा कुलवर्धन ।
न समं सर्वमेवेति बुधानामेष निश्चयः ॥ ०२७ ॥

स कुरुष्व मया कार्यं तारयात्मानमात्मना ।
अनुजानीहि मामार्य सुतौ मे परिरक्ष च ॥ ०२८ ॥

अवध्याः स्त्रिय इत्याहुर्धर्मज्ञा धर्मनिश्चये ।
धर्मज्ञात्राक्षसानाहुर्न हन्यात्स च मामपि ॥ ०२९ ॥

निःसंशयो वधः पुंसां स्त्रीणां संशयितो वधः ।
अतो मामेव धर्मज्ञ प्रस्थापयितुमर्हसि ॥ ०३० ॥

भुक्तं प्रियाण्यवाप्तानि धर्मश्च चरितो मया ।
त्वत्प्रसूतिः प्रिया प्राप्ता न मां तप्स्यत्यजीवितम् ॥ ०३१ ॥

जातपुत्रा च वृद्धा च प्रियकामा च ते सदा ।
समीक्ष्यैतदहं सर्वं व्यवसायं करोम्यतः ॥ ०३२ ॥

उत्सृज्यापि च मामार्य वेत्स्यस्यन्यामपि स्त्रियम् ।
ततः प्रतिष्ठितो धर्मो भविष्यति पुनस्तव ॥ ०३३ ॥

न चाप्यधर्मः कल्याण बहुपत्नीकता नृणाम् ।
स्त्रीणामधर्मः सुमहान्भर्तुः पूर्वस्य लङ्घने ॥ ०३४ ॥

एतत्सर्वं समीक्ष्य त्वमात्मत्यागं च गर्हितम् ।
आत्मानं तारय मया कुलं चेमौ च दारकौ ॥ ०३५ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तया भर्ता तां समालिङ्ग्य भारत ।
मुमोच बाष्पं शनकैः सभार्यो भृशदुःखितः ॥ ०३६ ॥

---

# अध्याय १४७

वैशंपायन उवाच ॥

तयोर्दुःखितयोर्वाक्यमतिमात्रं निशम्य तत् ।
भृशं दुःखपरीताङ्गी कन्या तावभ्यभाषत ॥ ००१ ॥

किमिदं भृशदुःखार्तौ रोरवीथो अनाथवत् ।
ममापि श्रूयतां किञ्चिच्छ्रुत्वा च क्रियतां क्षमम् ॥ ००२ ॥

धर्मतोऽहं परित्याज्या युवयोर्नात्र संशयः ।
त्यक्तव्यां मां परित्यज्य त्रातं सर्वं मयैकया ॥ ००३ ॥

इत्यर्थमिष्यतेऽपत्यं तारयिष्यति मामिति ।
तस्मिन्नुपस्थिते काले तरतं प्लववन्मया ॥ ००४ ॥

इह वा तारयेद्दुर्गादुत वा प्रेत्य तारयेत् ।
सर्वथा तारयेत्पुत्रः पुत्र इत्युच्यते बुधैः ॥ ००५ ॥

आकाङ्क्षन्ते च दौहित्रानपि नित्यं पितामहाः ।
तान्स्वयं वै परित्रास्ये रक्षन्ती जीवितं पितुः ॥ ००६ ॥

भ्राता च मम बालोऽयं गते लोकममुं त्वयि ।
अचिरेणैव कालेन विनश्येत न संशयः ॥ ००७ ॥

तातेऽपि हि गते स्वर्गं विनष्टे च ममानुजे ।
पिण्डः पितृणां व्युच्छिद्येत्तत्तेषामप्रियं भवेत् ॥ ००८ ॥

पित्रा त्यक्ता तथा मात्रा भ्रात्रा चाहमसंशयम् ।
दुःखाद्दुःखतरं प्राप्य म्रियेयमतथोचिता ॥ ००९ ॥

त्वयि त्वरोगे निर्मुक्ते माता भ्राता च मे शिशुः ।
संतानश्चैव पिण्डश्च प्रतिष्ठास्यत्यसंशयम् ॥ ०१० ॥

आत्मा पुत्रः सखा भार्या कृच्छ्रं तु दुहिता किल ।

स कृच्छ्रान्मोचयात्मानं मां च धर्मेण योजय ॥ ०११ ॥

अनाथा कृपणा बाला यत्रक्वचनगामिनी ।
भविष्यामि त्वया तात विहीना कृपणा बत ॥ ०१२ ॥

अथवाहं करिष्यामि कुलस्यास्य विमोक्षणम् ।
फलसंस्था भविष्यामि कृत्वा कर्म सुदुष्करम् ॥ ०१३ ॥

अथवा यास्यसे तत्र त्यक्त्वा मां द्विजसत्तम ।
पीडिताहं भविष्यामि तदवेक्षस्व मामपि ॥ ०१४ ॥

तदस्मदर्थं धर्मार्थं प्रसवार्थं च सत्तम ।
आत्मानं परिरक्षस्व त्यक्तव्यां मां च संत्यज ॥ ०१५ ॥

अवश्यकरणीयेऽर्थे मा त्वां कालोऽत्यगादयम् ।
त्वया दत्तेन तोयेन भविष्यति हितं च मे ॥ ०१६ ॥

किं न्वतः परमं दुःखं यद्वयं स्वर्गते त्वयि ।
याचमानाः परादन्नं परिधावेमहि श्ववत् ॥ ०१७ ॥

त्वयि त्वरोगे निर्मुक्ते क्लेशादस्मात्सबान्धवे ।
अमृते वसती लोके भविष्यामि सुखान्विता ॥ ०१८ ॥

एवं बहुविधं तस्या निशम्य परिदेवितम् ।
पिता माता च सा चैव कन्या प्ररुरुदुस्त्रयः ॥ ०१९ ॥

ततः प्ररुदितान्सर्वान्निशम्याथ सुतस्तयोः ।
उत्फुल्लनयनो बालः कलमव्यक्तमब्रवीत् ॥ ०२० ॥

मा रोदीस्तात मा मातर्मा स्वसस्त्वमिति ब्रुवन् ।
प्रहसन्निव सर्वांस्तानेकैकं सोऽपसर्पति ॥ ०२१ ॥

ततः स तृणमादाय प्रहृष्टः पुनरब्रवीत् ।
अनेन तं हनिष्यामि राक्षसं पुरुषादकम् ॥ ०२२ ॥

तथापि तेषां दुःखेन परीतानां निशम्य तत् ।
बालस्य वाक्यमव्यक्तं हर्षः समभवन्महान् ॥ ०२३ ॥

अयं काल इति ज्ञात्वा कुन्ती समुपसृत्य तान् ।
गतासूनमृतेनेव जीवयन्तीदमब्रवीत् ॥ ०२४ ॥

---

# अध्याय १४८

कुन्त्युवाच ॥

कुतोमूलमिदं दुःखं ज्ञातुमिच्छामि तत्त्वतः ।
विदित्वा अपकर्षेयं शक्यं चेदपकर्षितुम् ॥ ००१ ॥

ब्राह्मण उवाच ॥

उपपन्नं सतामेतद्यद्ब्रवीषि तपोधने ।
न तु दुःखमिदं शक्यं मानुषेण व्यपोहितुम् ॥ ००२ ॥

समीपे नगरस्यास्य बको वसति राक्षसः ।
ईशो जनपदस्यास्य पुरस्य च महाबलः ॥ ००३ ॥

पुष्टो मानुषमांसेन दुर्बुद्धिः पुरुषादकः ।
रक्षत्यसुरराण्नित्यमिमं जनपदं बली ॥ ००४ ॥

नगरं चैव देशं च रक्षोबलसमन्वितः ।
तत्कृते परचक्राच्च भूतेभ्यश्च न नो भयम् ॥ ००५ ॥

वेतनं तस्य विहितं शालिवाहस्य भोजनम् ।
महिषौ पुरुषश्चैको यस्तदादाय गच्छति ॥ ००६ ॥

एकैकश्चैव पुरुषस्तत्प्रयच्छति भोजनम् ।
स वारो बहुभिर्वर्षैर्भवत्यसुतरो नरैः ॥ ००७ ॥

तद्विमोक्षाय ये चापि यतन्ते पुरुषाः क्वचित् ।
सपुत्रदारांस्तान्हत्वा तद्रक्षो भक्षयत्युत ॥ ००८ ॥

वेत्रकीयगृहे राजा नायं नयमिहास्थितः ।
अनामयं जनस्यास्य येन स्यादद्य शाश्वतम् ॥ ००९ ॥

एतदर्हा वयं नूनं वसामो दुर्बलस्य ये ।
विषये नित्यमुद्विग्नाः कुराजानमुपाश्रिताः ॥ ०१० ॥

ब्राह्मणाः कस्य वक्तव्याः कस्य वा छन्दचारिणः ।
गुणैरेते हि वास्यन्ते कामगाः पक्षिणो यथा ॥ ०११ ॥

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
त्रयस्य सञ्चये चास्य ज्ञातीन्पुत्रांश्च धारयेत् ॥ ०१२ ॥

विपरीतं मया चेदं त्रयं सर्वमुपार्जितम् ।
त इमामापदं प्राप्य भृशं तप्स्यामहे वयम् ॥ ०१३ ॥

सोऽयमस्माननुप्राप्तो वारः कुलविनाशनः ।
भोजनं पुरुषश्चैकः प्रदेयं वेतनं मया ॥ ०१४ ॥

न च मे विद्यते वित्तं सङ्क्रेतुं पुरुषं क्वचित् ।

सुहृज्जनं प्रदातुं च न शक्ष्यामि कथञ्चन ॥ ०१५ ॥

गतिं चापि न पश्यामि तस्मान्मोक्षाय रक्षसः ॥ ०१५ ॥

सोऽहं दुःखार्णवे मग्नो महत्यसुतरे भृशम् ।
सहैवैतैर्गमिष्यामि बान्धवैरद्य राक्षसम् ॥ ०१६ ॥

ततो नः सहितन्क्षुद्रः सर्वानेवोपभोक्ष्यति ॥ ०१६ ॥

---

# अध्याय १४९

कुन्त्युवाच ॥

न विषादस्त्वया कार्यो भयादस्मात्कथञ्चन ।
उपायः परिदृष्टोऽत्र तस्मान्मोक्षाय रक्षसः ॥ ००१ ॥

एकस्तव सुतो बालः कन्या चैका तपस्विनी ।
न ते तयोस्तथा पत्न्या गमनं तत्र रोचये ॥ ००२ ॥

मम पञ्च सुता ब्रह्मंस्तेषामेको गमिष्यति ।
त्वदर्थं बलिमादाय तस्य पापस्य रक्षसः ॥ ००३ ॥

ब्राह्मण उवाच ॥

नाहमेतत्करिष्यामि जीवितार्थी कथञ्चन ।
ब्राह्मणस्यातिथेश्चैव स्वार्थे प्राणैर्वियोजनम् ॥ ००४ ॥

न त्वेतदकुलीनासु नाधर्मिष्ठासु विद्यते ।

यद्ब्राह्मणार्थे विसृजेदात्मानमपि चात्मजम् ॥ ००५ ॥

आत्मनस्तु मया श्रेयो बोद्धव्यमिति रोचये ।
ब्रह्मवध्यात्मवध्या वा श्रेय आत्मवधो मम ॥ ००६ ॥

ब्रह्मवध्या परं पापं निष्कृतिर्नात्र विद्यते ।
अबुद्धिपूर्वं कृत्वापि श्रेय आत्मवधो मम ॥ ००७ ॥

न त्वहं वधमाकाङ्क्षे स्वयमेवात्मनः शुभे ।
परैः कृते वधे पापं न किञ्चिन्मयि विद्यते ॥ ००८ ॥

अभिसंधिकृते तस्मिन्ब्राह्मणस्य वधे मया ।
निष्कृतिं न प्रपश्यामि नृशंसं क्षुद्रमेव च ॥ ००९ ॥

आगतस्य गृहे त्यागस्तथैव शरणार्थिनः ।
याचमानस्य च वधो नृशंसं परमं मतम् ॥ ०१० ॥

कुर्यान्न निन्दितं कर्म न नृशंसं कदाचन ।
इति पूर्वे महात्मान आपद्धर्मविदो विदुः ॥ ०११ ॥

श्रेयांस्तु सहदारस्य विनाशोऽद्य मम स्वयम् ।
ब्राह्मणस्य वधं नाहमनुमंस्ये कथञ्चन ॥ ०१२ ॥

कुन्त्युवाच ॥

ममाप्येषा मतिर्ब्रह्मन्विप्रा रक्ष्या इति स्थिरा ।
न चाप्यनिष्टः पुत्रो मे यदि पुत्रशतं भवेत् ॥ ०१३ ॥

न चासौ राक्षसः शक्तो मम पुत्रविनाशने ।
वीर्यवान्मन्त्रसिद्धश्च तेजस्वी च सुतो मम ॥ ०१४ ॥

राक्षसाय च तत्सर्वं प्रापयिष्यति भोजनम् ।
मोक्षयिष्यति चात्मानमिति मे निश्चिता मतिः ॥ ०१५ ॥

समागताश्च वीरेण दृष्टपूर्वाश्च राक्षसाः ।
बलवन्तो महाकाया निहताश्चाप्यनेकशः ॥ ०१६ ॥

न त्विदं केषुचिद्ब्रह्मन्व्याहर्तव्यं कथञ्चन ।
विद्यार्थिनो हि मे पुत्रान्विप्रकुर्युः कुतूहलात् ॥ ०१७ ॥

गुरुणा चाननुज्ञातो ग्राहयेद्यं सुतो मम ।
न स कुर्यात्तया कार्यं विद्ययेति सतां मतम् ॥ ०१८ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु पृथया स विप्रो भार्यया सह ।
हृष्टः संपूजयामास तद्वाक्यममृतोपमम् ॥ ०१९ ॥

ततः कुन्ती च विप्रश्च सहितावनिलात्मजम् ।
तमब्रूतां कुरुष्वेति स तथेत्यब्रवीच्च तौ ॥ ०२० ॥

---

# अध्याय १५०

वैशंपायन उवाच ॥

करिष्य इति भीमेन प्रतिज्ञाते तु भारत ।
आजग्मुस्ते ततः सर्वे भैक्षमादाय पाण्डवाः ॥ ००१ ॥

आकारेणैव तं ज्ञात्वा पाण्डुपुत्रो युधिष्ठिरः ।

रहः समुपविश्यैकस्ततः पप्रच्छ मातरम् ॥ ००२ ॥

किं चिकीर्षत्ययं कर्म भीमो भीमपराक्रमः ।
भवत्यनुमते कच्चिदयं कर्तुमिहेच्छति ॥ ००३ ॥

कुन्त्युवाच ॥

ममैव वचनादेष करिष्यति परंतपः ।
ब्राह्मणार्थे महत्कृत्यं मोक्षाय नगरस्य च ॥ ००४ ॥

युधिष्ठिर उवाच ॥

किमिदं साहसं तीक्ष्णं भवत्या दुष्कृतं कृतम् ।
परित्यागं हि पुत्रस्य न प्रशंसन्ति साधवः ॥ ००५ ॥

कथं परसुतस्यार्थे स्वसुतं त्यक्तुमिच्छसि ।
लोकवृत्तिविरुद्धं वै पुत्रत्यागात्कृतं त्वया ॥ ००६ ॥

यस्य बाहू समाश्रित्य सुखं सर्वे स्वपामहे ।
राज्यं चापहृतं क्षुद्रैराजिहीर्षामहे पुनः ॥ ००७ ॥

यस्य दुर्योधनो वीर्यं चिन्तयन्नमितौजसः ।
न शेते वसतीः सर्वा दुःखाच्छकुनिना सह ॥ ००८ ॥

यस्य वीरस्य वीर्येण मुक्ता जतुगृहाद्वयम् ।
अन्येभ्यश्चैव पापेभ्यो निहतश्च पुरोचनः ॥ ००९ ॥

यस्य वीर्यं समाश्रित्य वसुपूर्णां वसुंधराम् ।
इमां मन्यामहे प्राप्तां निहत्य धृतराष्ट्रजान् ॥ ०१० ॥

तस्य व्यवसितस्त्यागो बुद्धिमास्थाय कां त्वया ।

कच्चिन्न दुःखैर्बुद्धिस्ते विप्लुता गतचेतसः ॥ ०११ ॥

कुन्त्युवाच ॥

युधिष्ठिर न संतापः कार्यः प्रति वृकोदरम् ।
न चायं बुद्धिदौर्बल्याद्व्यवसायः कृतो मया ॥ ०१२ ॥

इह विप्रस्य भवने वयं पुत्र सुखोषिताः ।
तस्य प्रतिक्रिया तात मयेयं प्रसमीक्षिता ॥ ०१३ ॥

एतावानेव पुरुषः कृतं यस्मिन्न नश्यति ॥ ०१३ ॥

दृष्ट्वा भीष्मस्य विक्रान्तं तदा जतुगृहे महत् ।
हिडिम्बस्य वधाच्चैव विश्वासो मे वृकोदरे ॥ ०१४ ॥

बाह्वोर्बलं हि भीमस्य नागायुतसमं महत् ।
येन यूयं गजप्रख्या निर्व्यूढा वारणावतात् ॥ ०१५ ॥

वृकोदरबलो नान्यो न भूतो न भविष्यति ।
योऽभ्युदीयाद्युधि श्रेष्ठमपि वज्रधरं स्वयम् ॥ ०१६ ॥

जातमात्रः पुरा चैष ममाङ्कात्पतितो गिरौ ।
शरीरगौरवात्तस्य शिला गात्रैर्विचूर्णिता ॥ ०१७ ॥

तदहं प्रज्ञया स्मृत्वा बलं भीमस्य पाण्डव ।
प्रतीकारं च विप्रस्य ततः कृतवती मतिम् ॥ ०१८ ॥

नेदं लोभान्न चाज्ञानान्न च मोहाद्विनिश्चितम् ।
बुद्धिपूर्वं तु धर्मस्य व्यवसायः कृतो मया ॥ ०१९ ॥

अर्थौ द्वावपि निष्पन्नौ युधिष्ठिर भविष्यतः ।

प्रतीकारश्च वासस्य धर्मश्च चरितो महान् ॥ ०२० ॥

यो ब्राह्मणस्य साहाय्यं कुर्यादर्थेषु कर्हिचित् ।
क्षत्रियः स शुभा.ण्ल्लोकान्प्राप्नुयादिति मे श्रुतम् ॥ ०२१ ॥

क्षत्रियः क्षत्रियस्यैव कुर्वाणो वधमोक्षणम् ।
विपुलां कीर्तिमाप्नोति लोकेऽस्मिंश्च परत्र च ॥ ०२२ ॥

वैश्यस्यैव तु साहाय्यं कुर्वाणः क्षत्रियो युधि ।
स सर्वेष्वपि लोकेषु प्रजा रञ्जयते ध्रुवम् ॥ ०२३ ॥

शूद्रं तु मोक्षयन्राजा शरणार्थिनमागतम् ।
प्राप्नोतीह कुले जन्म सद्रव्ये राजसत्कृते ॥ ०२४ ॥

एवं स भगवान्व्यासः पुरा कौरवनन्दन ।
प्रोवाच सुतरां प्राज्ञस्तस्मादेतच्चिकीर्षितम् ॥ ०२५ ॥

युधिष्ठिर उवाच ॥

उपपन्नमिदं मातस्त्वया यद्बुद्धिपूर्वकम् ।
आर्तस्य ब्राह्मणस्यैवमनुक्रोशादिदं कृतम् ॥ ०२६ ॥

ध्रुवमेष्यति भीमोऽयं निहत्य पुरुषादकम् ॥ ०२६ ॥

यथा त्विदं न विन्देयुर्नरा नगरवासिनः ।
तथायं ब्राह्मणो वाच्यः परिग्राह्यश्च यत्नतः ॥ ०२७ ॥

# अध्याय १५१

वैशंपायन उवाच ॥

ततो रात्र्यां व्यतीतायामन्नमादाय पाण्डवः ।
भीमसेनो ययौ तत्र यत्रासौ पुरुषादकः ॥ ००१ ॥

आसाद्य तु वनं तस्य रक्षसः पाण्डवो बली ।
आजुहाव ततो नाम्ना तदन्नमुपयोजयन् ॥ ००२ ॥

ततः स राक्षसः श्रुत्वा भीमसेनस्य तद्वचः ।
आजगाम सुसङ्क्रुद्धो यत्र भीमो व्यवस्थितः ॥ ००३ ॥

महाकायो महावेगो दारयन्निव मेदिनीम् ।
त्रिशिखां भृकुटिं कृत्वा संदश्य दशनच्छदम् ॥ ००४ ॥

भुञ्जानमन्नं तं दृष्ट्वा भीमसेनं स राक्षसः ।
विवृत्य नयने क्रुद्ध इदं वचनमब्रवीत् ॥ ००५ ॥

कोऽयमन्नमिदं भुङ्क्ते मदर्थमुपकल्पितम् ।
पश्यतो मम दुर्बुद्धिर्यियासुर्यमसादनम् ॥ ००६ ॥

भीमसेनस्तु तच्छ्रुत्वा प्रहसन्निव भारत ।
राक्षसं तमनादृत्य भुङ्क्त एव पराङ्मुखः ॥ ००७ ॥

ततः स भैरवं कृत्वा समुद्यम्य करावुभौ ।
अभ्यद्रवद्भीमसेनं जिघांसुः पुरुषादकः ॥ ००८ ॥

तथापि परिभूयैनं नेक्षमाणो वृकोदरः ।
राक्षसं भुङ्क्त एवान्नं पाण्डवः परवीरहा ॥ ००९ ॥

अमर्षेण तु संपूर्णः कुन्तीपुत्रस्य राक्षसः ।

जघान पृष्ठं पाणिभ्यामुभाभ्यां पृष्ठतः स्थितः ॥ ०१० ॥

तथा बलवता भीमः पाणिभ्यां भृशमाहतः ।
नैवावलोकयामास राक्षसं भुङ्क्त एव सः ॥ ०११ ॥

ततः स भूयः सङ्क्रुद्धो वृक्षमादाय राक्षसः ।
ताडयिष्यंस्तदा भीमं पुनरभ्यद्रवद्बली ॥ ०१२ ॥

ततो भीमः शनैर्भुक्त्वा तदन्नं पुरुषर्षभः ।
वार्युपस्पृश्य संहृष्टस्तस्थौ युधि महाबलः ॥ ०१३ ॥

क्षिप्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्यवान् ।
सव्येन पाणिना भीमः प्रहसन्निव भारत ॥ ०१४ ॥

ततः स पुनरुद्यम्य वृक्षान्बहुविधान्बली ।
प्राहिणोद्भीमसेनाय तस्मै भीमश्च पाण्डवः ॥ ०१५ ॥

तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
घोररूपं महाराज बकपाण्डवयोर्महत् ॥ ०१६ ॥

नाम विश्राव्य तु बकः समभिद्रुत्य पाण्डवम् ।
भुजाभ्यां परिजग्राह भीमसेनं महाबलम् ॥ ०१७ ॥

भीमसेनोऽपि तद्रक्षः परिरभ्य महाभुजः ।
विस्फुरन्तं महावेगं विचकर्ष बलाद्बली ॥ ०१८ ॥

स कृष्यमाणो भीमेन कर्षमाणश्च पाण्डवम् ।
समयुज्यत तीव्रेण श्रमेण पुरुषादकः ॥ ०१९ ॥

तयोर्वेगेन महता पृथिवी समकम्पत ।
पादपांश्च महाकायांश्चूर्णयामासतुस्तदा ॥ ०२० ॥

हीयमानं तु तद्रक्षः समीक्ष्य भरतर्षभ ।
निष्पिष्य भूमौ पाणिभ्यां समाजघ्ने वृकोदरः ॥ ०२१ ॥

ततोऽस्य जानुना पृष्ठमवपीड्य बलादिव ।
बाहुना परिजग्राह दक्षिणेन शिरोधराम् ॥ ०२२ ॥

सव्येन च कटीदेशे गृह्य वाससि पाण्डवः ।
तद्रक्षो द्विगुणं चक्रे नदन्तं भैरवान्रवान् ॥ ०२३ ॥

ततोऽस्य रुधिरं वक्त्रात्प्रादुरासीद्विशां पते ।
भज्यमानस्य भीमेन तस्य घोरस्य रक्षसः ॥ ०२४ ॥

---

# अध्याय १५२

वैशंपायन उवाच ॥

तेन शब्देन वित्रस्तो जनस्तस्याथ रक्षसः ।
निष्पपात गृहाद्राजन्सहैव परिचारिभिः ॥ ००१ ॥

तान्भीतान्विगतज्ञानान्भीमः प्रहरतां वरः ।
सान्त्वयामास बलवान्समये च न्यवेशयत् ॥ ००२ ॥

न हिंस्या मानुषा भूयो युष्माभिरिह कर्हिचित् ।
हिंसतां हि वधः शीघ्रमेवमेव भवेदिति ॥ ००३ ॥

तस्य तद्वचनं श्रुत्वा तानि रक्षांसि भारत ।
एवमस्त्विति तं प्राहुर्जगृहुः समयं च तम् ॥ ००४ ॥

ततः प्रभृति रक्षांसि तत्र सौम्यानि भारत ।
नगरे प्रत्यदृश्यन्त नरैर्नगरवासिभिः ॥ ००५ ॥

ततो भिमस्तमादाय गतासुं पुरुषादकम् ।
द्वारदेशे विनिक्षिप्य जगामानुपलक्षितः ॥ ००६ ॥

ततः स भीमस्तं हत्वा गत्वा ब्राह्मणवेश्म तत् ।
आचचक्षे यथावृत्तं राज्ञः सर्वमशेषतः ॥ ००७ ॥

ततो नरा विनिष्क्रान्ता नगरात्काल्यमेव तु ।
ददृशुर्निहतं भूमौ राक्षसं रुधिरोक्षितम् ॥ ००८ ॥

तमद्रिकूटसदृशं विनिकीर्णं भयावहम् ।
एकचक्रां ततो गत्वा प्रवृत्तिं प्रददुः परे ॥ ००९ ॥

ततः सहस्रशो राजन्नरा नगरवासिनः ।
तत्राजग्मुर्बकं द्रष्टुं सस्त्रीवृद्धकुमारकाः ॥ ०१० ॥

ततस्ते विस्मिताः सर्वे कर्म दृष्ट्वातिमानुषम् ।
दैवतान्यर्चयां चक्रुः सर्व एव विशां पते ॥ ०११ ॥

ततः प्रगणयामासुः कस्य वारोऽद्य भोजने ।
ज्ञात्वा चागम्य तं विप्रं पप्रच्छुः सर्व एव तत् ॥ ०१२ ॥

एवं पृष्टस्तु बहुशो रक्षमाणश्च पाण्डवान् ।
उवाच नागरान्सर्वानिदं विप्रर्षभस्तदा ॥ ०१३ ॥

आज्ञापितं मामशने रुदन्तं सह बन्धुभिः ।
ददर्श ब्राह्मणः कश्चिन्मन्त्रसिद्धो महाबलः ॥ ०१४ ॥

परिपृच्छ्य स मां पूर्वं परिक्लेशं पुरस्य च ।
अब्रवीद्ब्राह्मणश्रेष्ठ आश्वास्य प्रहसन्निव ॥ ०१५ ॥

प्रापयिष्याम्यहं तस्मै इदमन्नं दुरात्मने ।
मन्निमित्तं भयं चापि न कार्यमिति वीर्यवान् ॥ ०१६ ॥

स तदन्नमुपादाय गतो बकवनं प्रति ।
तेन नूनं भवेदेतत्कर्म लोकहितं कृतम् ॥ ०१७ ॥

ततस्ते ब्राह्मणाः सर्वे क्षत्रियाश्च सुविस्मिताः ।
वैश्याः शूद्राश्च मुदिताश्चक्रुर्ब्रह्ममहं तदा ॥ ०१८ ॥

ततो जानपदाः सर्वे आजग्मुर्नगरं प्रति ।
तदद्भुततमं द्रष्टुं पार्थास्तत्रैव चावसन् ॥ ०१९ ॥

---

# चैत्ररथपर्व

## अध्याय १५३

जनमेजय उवाच ॥

ते तथा पुरुषव्याघ्रा निहत्य बकराक्षसम् ।
अत ऊर्ध्वं ततो ब्रह्मन्किमकुर्वत पाण्डवाः ॥ ००१ ॥

वैशंपायन उवाच ॥

तत्रैव न्यवसन्राजन्निहत्य बकराक्षसम् ।

अधीयानाः परं ब्रह्म ब्राह्मणस्य निवेशने ॥ ००२ ॥

ततः कतिपयाहस्य ब्राह्मणः संशितव्रतः ।
प्रतिश्रयार्थं तद्वेश्म ब्राह्मणस्याजगाम ह ॥ ००३ ॥

स सम्यक्पूजयित्वा तं विद्वान्विप्रर्षभस्तदा ।
ददौ प्रतिश्रयं तस्मै सदा सर्वातिथिव्रती ॥ ००४ ॥

ततस्ते पाण्डवाः सर्वे सह कुन्त्या नरर्षभाः ।
उपासां चक्रिरे विप्रं कथयानं कथास्तदा ॥ ००५ ॥

कथयामास देशान्स तीर्थानि विविधानि च ।
राज्ञां च विविधाश्चर्याः पुराणि विविधानि च ॥ ००६ ॥

स तत्राकथयद्विप्रः कथान्ते जनमेजय ।
पाञ्चालेष्वद्भुताकारं याज्ञसेन्याः स्वयंवरम् ॥ ००७ ॥

धृष्टद्युम्नस्य चोत्पत्तिमुत्पत्तिं च शिखण्डिनः ।
अयोनिजत्वं कृष्णाया द्रुपदस्य महामखे ॥ ००८ ॥

तदद्भुततमं श्रुत्वा लोके तस्य महात्मनः ।
विस्तरेणैव पप्रच्छुः कथां तां पुरुषर्षभाः ॥ ००९ ॥

कथं द्रुपदपुत्रस्य धृष्टद्युम्नस्य पावकात् ।
वेदिमध्याच्च कृष्णायाः संभवः कथमद्भुतः ॥ ०१० ॥

कथं द्रोणान्महेष्वासात्सर्वाण्यस्त्राण्यशिक्षत ।
कथं प्रियसखायौ तौ भिन्नौ कस्य कृतेन च ॥ ०११ ॥

एवं तैश्चोदितो राजन्स विप्रः पुरुषर्षभैः ।
कथयामास तत्सर्वं द्रौपदीसंभवं तदा ॥ ०१२ ॥

# अध्याय १५४

ब्राह्मण उवाच ॥

गङ्गाद्वारं प्रति महान्बभूवर्षिर्महातपाः ।
भरद्वाजो महाप्राज्ञः सततं संशितव्रतः ॥ ००१ ॥

सोऽभिषेक्तुं गतो गङ्गां पूर्वमेवागतां सतीम् ।
ददर्शाप्सरसं तत्र घृताचीमाप्लुतामृषिः ॥ ००२ ॥

तस्या वायुर्नदीतीरे वसनं व्यहरत्तदा ।
अपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः ॥ ००३ ॥

तस्यां संसक्तमनसः कौमारब्रह्मचारिणः ।
हृष्टस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ॥ ००४ ॥

ततः समभवद्द्रोणः कुमारस्तस्य धीमतः ।
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ॥ ००५ ॥

भरद्वाजस्य तु सखा पृषतो नाम पार्थिवः ।
तस्यापि द्रुपदो नाम तदा समभवत्सुतः ॥ ००६ ॥

स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः ।
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ॥ ००७ ॥

ततस्तु पृषतेऽतीते स राजा द्रुपदोऽभवत् ।

द्रोणोऽपि रामं शुश्राव दित्सन्तं वसु सर्वशः ॥ ००८ ॥

वनं तु प्रस्थितं रामं भरद्वाजसुतोऽब्रवीत् ।
आगतं वित्तकामं मां विद्धि द्रोणं द्विजर्षभ ॥ ००९ ॥

राम उवाच ॥

शरीरमात्रमेवाद्य मयेदमवशेषितम् ।
अस्त्राणि वा शरीरं वा ब्रह्मन्नन्यतरं वृणु ॥ ०१० ॥

द्रोण उवाच ॥

अस्त्राणि चैव सर्वाणि तेषां संहारमेव च ।
प्रयोगं चैव सर्वेषां दातुमर्हति मे भवान् ॥ ०११ ॥

ब्राह्मण उवाच ॥

तथेत्युक्त्वा ततस्तस्मै प्रददौ भृगुनन्दनः ।
प्रतिगृह्य ततो द्रोणः कृतकृत्योऽभवत्तदा ॥ ०१२ ॥

संप्रहृष्टमनाश्चापि रामात्परमसंमतम् ।
ब्रह्मास्त्रं समनुप्राप्य नरेष्वभ्यधिकोऽभवत् ॥ ०१३ ॥

ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान् ।
अब्रवीत्पुरुषव्याघ्रः सखायं विद्धि मामिति ॥ ०१४ ॥

द्रुपद उवाच ॥

नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ।
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥ ०१५ ॥

ब्राह्मण उवाच ॥

स विनिश्चित्य मनसा पाञ्चाल्यं प्रति बुद्धिमान् ।
जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ॥ ०१६ ॥

तस्मै पौत्रान्समादाय वसूनि विविधानि च ।
प्राप्ताय प्रददौ भीष्मः शिष्यान्द्रोणाय धीमते ॥ ०१७ ॥

द्रोणः शिष्यांस्ततः सर्वानिदं वचनमब्रवीत् ।
समानीय तदा विद्वान्द्रुपदस्यासुखाय वै ॥ ०१८ ॥

आचार्यवेतनं किञ्चिद्धृदि संपरिवर्तते ।
कृतास्त्रैस्तत्प्रदेयं स्यात्तदृतं वदतानघाः ॥ ०१९ ॥

यदा च पाण्डवाः सर्वे कृतास्त्राः कृतनिश्रमाः ।
ततो द्रोणोऽब्रवीद्भूयो वेतनार्थमिदं वचः ॥ ०२० ॥

पार्षतो द्रुपदो नाम छत्रवत्यां नरेश्वरः ।
तस्यापकृष्य तद्राज्यं मम शीघ्रं प्रदीयताम् ॥ ०२१ ॥

ततः पाण्डुसुताः पञ्च निर्जित्य द्रुपदं युधि ।
द्रोणाय दर्शयामासुर्बद्ध्वा ससचिवं तदा ॥ ०२२ ॥

द्रोण उवाच ॥

प्रार्थयामि त्वया सख्यं पुनरेव नराधिप ।
अराजा किल नो राज्ञः सखा भवितुमर्हति ॥ ०२३ ॥

अतः प्रयतितं राज्ये यज्ञसेन मया तव ।
राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे ॥ ०२४ ॥

ब्राह्मण उवाच ॥

असत्कारः स सुमहान्मुहूर्तमपि तस्य तु ।
न व्येति हृदयाद्राज्ञो दुर्मनाः स कृशोऽभवत् ॥ ०२५ ॥

---

# अध्याय १५५

ब्राह्मण उवाच ॥

अमर्षी द्रुपदो राजा कर्मसिद्धान्द्विजर्षभान् ।
अन्विच्छन्परिचक्राम ब्राह्मणावसथान्बहून् ॥ ००१ ॥

पुत्रजन्म परीप्सन्वै शोकोपहतचेतनः ।
नास्ति श्रेष्ठं ममापत्यमिति नित्यमचिन्तयत् ॥ ००२ ॥

जातान्पुत्रान्स निर्वेदाद्धिग्बन्धूनिति चाब्रवीत् ।
निःश्वासपरमश्चासीद्द्रोणं प्रतिचिकीर्षया ॥ ००३ ॥

प्रभावं विनयं शिक्षां द्रोणस्य चरितानि च ।
क्षात्रेण च बलेनास्य चिन्तयन्नान्वपद्यत ॥ ००४ ॥

प्रतिकर्तुं नृपश्रेष्ठो यतमानोऽपि भारत ॥ ००४ ॥

अभितः सोऽथ कल्माषीं गङ्गाकूले परिभ्रमन् ।
ब्राह्मणावसथं पुण्यमाससाद महीपतिः ॥ ००५ ॥

तत्र नास्नातकः कश्चिन्न चासीदव्रती द्विजः ।
तथैव नामहाभागः सोऽपश्यत्संशितव्रतौ ॥ ००६ ॥

याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ पृषतात्मजः ।
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ॥ ००७ ॥

तारणे युक्तरूपौ तौ ब्राह्मणावृषिसत्तमौ ।
स तावामन्त्रयामास सर्वकामैरतन्द्रितः ॥ ००८ ॥

बुद्ध्वा तयोर्बलं बुद्धिं कनीयांसमुपह्वरे ।
प्रपेदे छन्दयन्कामैरुपयाजं धृतव्रतम् ॥ ००९ ॥

पादशुश्रूषणे युक्तः प्रियवाक्सर्वकामदः ।
अर्हयित्वा यथान्यायमुपयाजमुवाच सः ॥ ०१० ॥

येन मे कर्मणा ब्रह्मन्पुत्रः स्याद्द्रोणमृत्यवे ।
उपयाज कृते तस्मिन्गवां दातास्मि तेऽर्बुदम् ॥ ०११ ॥

यद्वा तेऽन्यद्द्विजश्रेष्ठ मनसः सुप्रियं भवेत् ।
सर्वं तत्ते प्रदाताहं न हि मेऽस्त्यत्र संशयः ॥ ०१२ ॥

इत्युक्तो नाहमित्येवं तमृषिः प्रत्युवाच ह ।
आराधयिष्यन्द्रुपदः स तं पर्यचरत्पुनः ॥ ०१३ ॥

ततः संवत्सरस्यान्ते द्रुपदं स द्विजोत्तमः ।
उपयाजोऽब्रवीद्राजन्काले मधुरया गिरा ॥ ०१४ ॥

ज्येष्ठो भ्राता ममागृह्णाद्विचरन्वननिर्झरे ।
अपरिज्ञातशौचायां भूमौ निपतितं फलम् ॥ ०१५ ॥

तदपश्यमहं भ्रातुरसांप्रतमनुव्रजन् ।
विमर्शं सङ्करादाने नायं कुर्यात्कथञ्चन ॥ ०१६ ॥

दृष्ट्वा फलस्य नापश्यद्दोषा येऽस्यानुबन्धिकाः ।
विविनक्ति न शौचं यः सोऽन्यत्रापि कथं भवेत् ॥ ०१७ ॥

संहिताध्ययनं कुर्वन्वसन्गुरुकुले च यः ।
भैक्षमुच्छिष्टमन्येषां भुङ्क्ते चापि सदा सदा ॥ ०१८ ॥

कीर्तयन्गुणमन्नानामघृणी च पुनः पुनः ॥ ०१८ ॥

तमहं फलार्थिनं मन्ये भ्रातरं तर्कचक्षुषा ।
तं वै गच्छस्व नृपते स त्वां संयाजयिष्यति ॥ ०१९ ॥

जुगुप्समानो नृपतिर्मनसेदं विचिन्तयन् ।
उपयाजवचः श्रुत्वा नृपतिः सर्वधर्मवित् ॥ ०२० ॥

अभिसंपूज्य पूजार्हमृषिं याजमुवाच ह ॥ ०२० ॥

अयुतानि ददान्यष्टौ गवां याजय मां विभो ।
द्रोणवैराभिसंतप्तं त्वं ह्लादयितुमर्हसि ॥ ०२१ ॥

स हि ब्रह्मविदां श्रेष्ठो ब्रह्मास्त्रे चाप्यनुत्तमः ।
तस्माद्द्रोणः पराजैषीन्मां वै स सखिविग्रहे ॥ ०२२ ॥

क्षत्रियो नास्ति तुल्योऽस्य पृथिव्यां कश्चिदग्रणीः ।
कौरवाचार्यमुख्यस्य भारद्वाजस्य धीमतः ॥ ०२३ ॥

द्रोणस्य शरजालानि प्राणिदेहहराणि च ।
षडरत्नि धनुश्चास्य दृश्यतेऽप्रतिमं महत् ॥ ०२४ ॥

स हि ब्राह्मणवेगेन क्षात्रं वेगमसंशयम् ।
प्रतिहन्ति महेष्वासो भारद्वाजो महामनाः ॥ ०२५ ॥

क्षत्रोच्छेदाय विहितो जामदग्न्य इवास्थितः ।
तस्य ह्यस्त्रबलं घोरमप्रसह्यं नरैर्भुवि ॥ ०२६ ॥

ब्राह्ममुच्चारयंस्तेजो हुताहुतिरिवानलः ।
समेत्य स दहत्याजौ क्षत्रं ब्रह्मपुरःसरः ॥ ०२७ ॥

ब्रह्मक्षत्रे च विहिते ब्रह्मतेजो विशिष्यते ॥ ०२७ ॥

सोऽहं क्षत्रबलाद्धीनो ब्रह्मतेजः प्रपेदिवान् ।
द्रोणाद्विशिष्टमासाद्य भवन्तं ब्रह्मवित्तमम् ॥ ०२८ ॥

द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम् ।
तत्कर्म कुरु मे याज निर्वपाम्यर्बुदं गवाम् ॥ ०२९ ॥

तथेत्युक्त्वा तु तं याजो याज्यार्थमुपकल्पयत् ।
गुर्वर्थ इति चाकाममुपयाजमचोदयत् ॥ ०३० ॥

याजो द्रोणविनाशाय प्रतिजज्ञे तथा च सः ॥ ०३० ॥

ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः ।
आचख्यौ कर्म वैतानं तदा पुत्रफलाय वै ॥ ०३१ ॥

स च पुत्रो महावीर्यो महातेजा महाबलः ।
इष्यते यद्विधो राजन्भविता ते तथाविधः ॥ ०३२ ॥

भारद्वाजस्य हन्तारं सोऽभिसंधाय भूमिपः ।
आजह्रे तत्तथा सर्वं द्रुपदः कर्मसिद्धये ॥ ०३३ ॥

याजस्तु हवनस्यान्ते देवीमाह्वापयत्तदा ।
प्रैहि मां राज्ञि पृषति मिथुनं त्वामुपस्थितम् ॥ ०३४ ॥

देव्युवाच ॥

अवलिप्तं मे मुखं ब्रह्मन्पुण्यान्गन्धान्बिभर्मि च ।
सुतार्थेनोपरुद्धास्मि तिष्ठ याज मम प्रिये ॥ ०३५ ॥

याज उवाच ॥

याजेन श्रपितं हव्यमुपयाजेन मन्त्रितम् ।
कथं कामं न संदध्यात्सा त्वं विप्रैहि तिष्ठ वा ॥ ०३६ ॥

ब्राह्मण उवाच ॥

एवमुक्ते तु याजेन हुते हविषि संस्कृते ।
उत्तस्थौ पावकात्तस्मात्कुमारो देवसंनिभः ॥ ०३७ ॥

ज्वालावर्णो घोररूपः किरीटी वर्म चोत्तमम् ।
बिभ्रत्सखड्गः सशरो धनुष्मान्विनदन्मुहुः ॥ ०३८ ॥

सोऽध्यारोहद्रथवरं तेन च प्रययौ तदा ।
ततः प्रणेदुः पाञ्चालाः प्रहृष्टाः साधु साध्विति ॥ ०३९ ॥

भयापहो राजपुत्रः पाञ्चालानां यशस्करः ।
राज्ञः शोकापहो जात एष द्रोणवधाय वै ॥ ०४० ॥

इत्युवाच महद्भूतमदृश्यं खेचरं तदा ॥ ०४० ॥

कुमारी चापि पाञ्चाली वेदिमध्यात्समुत्थिता ।
सुभगा दर्शनीयाङ्गी वेदिमध्या मनोरमा ॥ ०४१ ॥

श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्धजा ।
मानुषं विग्रहं कृत्वा साक्षादमरवर्णिनी ॥ ०४२ ॥

नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रवायति ।
या बिभर्ति परं रूपं यस्या नास्त्युपमा भुवि ॥ ०४३ ॥

तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी ।
सर्वयोषिद्वरा कृष्णा क्षयं क्षत्रं निनीषति ॥ ०४४ ॥

सुरकार्यमियं काले करिष्यति सुमध्यमा ।
अस्या हेतोः क्षत्रियाणां महदुत्पत्स्यते भयम् ॥ ०४५ ॥

तच्छ्रुत्वा सर्वपाञ्चालाः प्रणेदुः सिंहसंघवत् ।
न चैतान्हर्षसंपूर्णानियं सेहे वसुंधरा ॥ ०४६ ॥

तौ दृष्ट्वा पृषती याजं प्रपेदे वै सुतार्थिनी ।
न वै मदन्यां जननीं जानीयातामिमाविति ॥ ०४७ ॥

तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया ।
तयोश्च नामनी चक्रुर्द्विजाः संपूर्णमानसाः ॥ ०४८ ॥

धृष्टत्वादतिधृष्णुत्वाद्धर्माद्युत्संभवादपि ।
धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ॥ ०४९ ॥

कृष्णेत्येवाब्रुवन्कृष्णां कृष्णाभूत्सा हि वर्णतः ।
तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ॥ ०५० ॥

धृष्टद्युम्नं तु पाञ्चाल्यमानीय स्वं निवेशनम् ।
उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ॥ ०५१ ॥

अमोक्षणीयं दैवं हि भावि मत्वा महामतिः ।
तथा तत्कृतवान्द्रोण आत्मकीर्त्यनुरक्षणात् ॥ ०५२ ॥

# अध्याय १५६

वैशंपायन उवाच ॥

एतच्छ्रुत्वा तु कौन्तेयाः शल्यविद्धा इवाभवन् ।
सर्वे चास्वस्थमनसो बभूवुस्ते महारथाः ॥ ००१ ॥

ततः कुन्ती सुतान्दृष्ट्वा विभ्रान्तान्गतचेतसः ।
युधिष्ठिरमुवाचेदं वचनं सत्यवादिनी ॥ ००२ ॥

चिररात्रोषिताः स्मेह ब्राह्मणस्य निवेशने ।
रममाणाः पुरे रम्ये लब्धभैक्षा युधिष्ठिर ॥ ००३ ॥

यानीह रमणीयानि वनान्युपवनानि च ।
सर्वाणि तानि दृष्टानि पुनः पुनररिंदम ॥ ००४ ॥

पुनर्दृष्टानि तान्येव प्रीणयन्ति न नस्तथा ।
भैक्षं च न तथा वीर लभ्यते कुरुनन्दन ॥ ००५ ॥

ते वयं साधु पाञ्चालान्गच्छाम यदि मन्यसे ।
अपूर्वदर्शनं तात रमणीयं भविष्यति ॥ ००६ ॥

सुभिक्षाश्चैव पाञ्चालाः श्रूयन्ते शत्रुकर्शन ।
यज्ञसेनश्च राजासौ ब्रह्मण्य इति शुश्रुमः ॥ ००७ ॥

एकत्र चिरवासो हि क्षमो न च मतो मम ।
ते तत्र साधु गच्छामो यदि त्वं पुत्र मन्यसे ॥ ००८ ॥

युधिष्ठिर उवाच ॥

भवत्या यन्मतं कार्यं तदस्माकं परं हितम् ।
अनुजांस्तु न जानामि गच्छेयुर्नेति वा पुनः ॥ ००९ ॥

वैशंपायन उवाच ॥

ततः कुन्ती भीमसेनमर्जुनं यमजौ तथा ।
उवाच गमनं ते च तथेत्येवाब्रुवंस्तदा ॥ ०१० ॥

तत आमन्त्र्य तं विप्रं कुन्ती राजन्सुतैः सह ।
प्रतस्थे नगरीं रम्यां द्रुपदस्य महात्मनः ॥ ०११ ॥

---

## अध्याय १५७

वैशंपायन उवाच ॥

वसत्सु तेषु प्रच्छन्नं पाण्डवेषु महात्मसु ।
आजगामाथ तान्द्रष्टुं व्यासः सत्यवतीसुतः ॥ ००१ ॥

तमागतमभिप्रेक्ष्य प्रत्युद्गम्य परंतपाः ।
प्रणिपत्याभिवाद्यैनं तस्थुः प्राञ्जलयस्तदा ॥ ००२ ॥

समनुज्ञाप्य तान्सर्वानासीनान्मुनिरब्रवीत् ।
प्रसन्नः पूजितः पार्थैः प्रीतिपूर्वमिदं वचः ॥ ००३ ॥

अपि धर्मेण वर्तध्वं शास्त्रेण च परंतपाः ।

अपि विप्रेषु वः पूजा पूजार्हेषु न हीयते ॥ ००४ ॥

अथ धर्मार्थवद्वाक्यमुक्त्वा स भगवानृषिः ।
विचित्राश्च कथास्तास्ताः पुनरेवेदमब्रवीत् ॥ ००५ ॥

आसीत्तपोवने काचिदृषेः कन्या महात्मनः ।
विलग्नमध्या सुश्रोणी सुभ्रूः सर्वगुणान्विता ॥ ००६ ॥

कर्मभिः स्वकृतैः सा तु दुर्भगा समपद्यत ।
नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती ॥ ००७ ॥

तपस्तप्तुमथारेभे पत्यर्थमसुखा ततः ।
तोषयामास तपसा सा किलोग्रेण शङ्करम् ॥ ००८ ॥

तस्याः स भगवांस्तुष्टस्तामुवाच तपस्विनीम् ।
वरं वरय भद्रं ते वरदोऽस्मीति भामिनि ॥ ००९ ॥

अथेश्वरमुवाचेदमात्मनः सा वचो हितम् ।
पतिं सर्वगुणोपेतमिच्छामीति पुनः पुनः ॥ ०१० ॥

तामथ प्रत्युवाचेदमीशानो वदतां वरः ।
पञ्च ते पतयो भद्रे भविष्यन्तीति शङ्करः ॥ ०११ ॥

प्रतिब्रुवन्तीमेकं मे पतिं देहीति शङ्करम् ।
पुनरेवाब्रवीद्देव इदं वचनमुत्तमम् ॥ ०१२ ॥

पञ्चकृत्वस्त्वया उक्तः पतिं देहीत्यहं पुनः ।
देहमन्यं गतायास्ते यथोक्तं तद्भविष्यति ॥ ०१३ ॥

द्रुपदस्य कुले जाता कन्या सा देवरूपिणी ।
निर्दिष्टा भवतां पत्नी कृष्णा पार्षत्यनिन्दिता ॥ ०१४ ॥

पाञ्चालनगरं तस्मात्प्रविशध्वं महाबलाः ।
सुखिनस्तामनुप्राप्य भविष्यथ न संशयः ॥ ०१५ ॥

एवमुक्त्वा महाभागः पाण्डवानां पितामहः ।
पार्थानामन्त्र्य कुन्तीं च प्रातिष्ठत महातपाः ॥ ०१६ ॥

---

# अध्याय १५८

वैशंपायन उवाच ॥

ते प्रतस्थुः पुरस्कृत्य मातरं पुरुषर्षभाः ।
समैरुदङ्मुखैर्मार्गैर्यथोद्दिष्टं परंतपाः ॥ ००१ ॥

ते गच्छन्तस्त्वहोरात्रं तीर्थं सोमश्रवायणम् ।
आसेदुः पुरुषव्याघ्रा गङ्गायां पाण्डुनन्दनाः ॥ ००२ ॥

उल्मुकं तु समुद्यम्य तेषामग्रे धनञ्जयः ।
प्रकाशार्थं ययौ तत्र रक्षार्थं च महायशाः ॥ ००३ ॥

तत्र गङ्गाजले रम्ये विविक्ते क्रीडयन्स्त्रियः ।
ईर्ष्युर्गन्धर्वराजः स्म जलक्रीडामुपागतः ॥ ००४ ॥

शब्दं तेषां स शुश्राव नदीं समुपसर्पताम् ।
तेन शब्देन चाविष्टश्चुक्रोध बलवद्बली ॥ ००५ ॥

स दृष्ट्वा पाण्डवांस्तत्र सह मात्रा परंतपान् ।

विस्फारयन्धनुर्घोरमिदं वचनमब्रवीत् ॥ ००६ ॥

संध्या संरज्यते घोरा पूर्वरात्रागमेषु या ।
अशीतिभिस्त्रुटैर्हीनं तं मुहूर्तं प्रचक्षते ॥ ००७ ॥

विहितं कामचाराणां यक्षगन्धर्वरक्षसाम् ।
शेषमन्यन्मनुष्याणां कामचारमिह स्मृतम् ॥ ००८ ॥

लोभात्प्रचारं चरतस्तासु वेलासु वै नरान् ।
उपक्रान्ता निगृह्णीमो राक्षसैः सह बालिशान् ॥ ००९ ॥

ततो रात्रौ प्राप्नुवतो जलं ब्रह्मविदो जनाः ।
गर्हयन्ति नरान्सर्वान्बलस्थान्नृपतीनपि ॥ ०१० ॥

आरात्तिष्ठत मा मह्यं समीपमुपसर्पत ।
कस्मान्मां नाभिजानीत प्राप्तं भागीरथीजलम् ॥ ०११ ॥

अङ्गारपर्णं गन्धर्वं वित्त मां स्वबलाश्रयम् ।
अहं हि मानी चेर्ष्युश्च कुबेरस्य प्रियः सखा ॥ ०१२ ॥

अङ्गारपर्णमिति च ख्यतं वनमिदं मम ।
अनु गङ्गां च वाकां च चित्रं यत्र वसाम्यहम् ॥ ०१३ ॥

न कुणपाः शृङ्गिणो वा न देवा न च मानुषाः ।
इदं समुपसर्पन्ति तत्किं समुपसर्पथ ॥ ०१४ ॥

अर्जुन उवाच ॥

समुद्रे हिमवत्पार्श्वे नद्यामस्यां च दुर्मते ।
रात्रावहनि संधौ च कस्य क्लृप्तः परिग्रहः ॥ ०१५ ॥

वयं च शक्तिसंपन्ना अकाले त्वामधृष्णुमः ।
अशक्ता हि क्षणे क्रूरे युष्मानर्चन्ति मानवाः ॥ ०१६ ॥

पुरा हिमवतश्चैषा हेमशृङ्गाद्विनिःसृता ।
गङ्गा गत्वा समुद्राम्भः सप्तधा प्रतिपद्यते ॥ ०१७ ॥

इयं भूत्वा चैकवप्रा शुचिराकाशगा पुनः ।
देवेषु गङ्गा गन्धर्व प्राप्नोत्यलकनन्दताम् ॥ ०१८ ॥

तथा पितॄन्वैतरणी दुस्तरा पापकर्मभिः ।
गङ्गा भवति गन्धर्व यथा द्वैपायनोऽब्रवीत् ॥ ०१९ ॥

असंबाधा देवनदी स्वर्गसंपादनी शुभा ।
कथमिच्छसि तां रोद्धुं नैष धर्मः सनातनः ॥ ०२० ॥

अनिवार्यमसंबाधं तव वाचा कथं वयम् ।
न स्पृशेम यथाकामं पुण्यं भागीरथीजलम् ॥ ०२१ ॥

वैशंपायन उवाच ॥

अङ्गारपर्णस्तच्छ्रुत्वा क्रुद्ध आनम्य कार्मुकम् ।
मुमोच सायकान्दीप्तानहीनाशीविषानिव ॥ ०२२ ॥

उल्मुकं भ्रामयंस्तूर्णं पाण्डवश्चर्म चोत्तमम् ।
व्यपोवाह शरांस्तस्य सर्वानेव धनञ्जयः ॥ ०२३ ॥

अर्जुन उवाच ॥

बिभीषिकैषा गन्धर्व नास्त्रज्ञेषु प्रयुज्यते ।
अस्त्रज्ञेषु प्रयुक्तैषा फेनवत्प्रविलीयते ॥ ०२४ ॥

मानुषानति गन्धर्वान्सर्वान्गन्धर्व लक्षये ।
तस्मादस्त्रेण दिव्येन योत्स्येऽहं न तु मायया ॥ ०२५ ॥

पुरास्त्रमिदमाग्नेयं प्रादात्किल बृहस्पतिः ।
भरद्वाजस्य गन्धर्व गुरुपुत्रः शतक्रतोः ॥ ०२६ ॥

भरद्वाजादग्निवेश्यो अग्निवेश्याद्गुरुर्मम ।
स त्विदं मह्यमददाद्द्रोणो ब्राह्मणसत्तमः ॥ ०२७ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा पाण्डवः क्रुद्धो गन्धर्वाय मुमोच ह ।
प्रदीप्तमस्त्रमाग्नेयं ददाहास्य रथं तु तत् ॥ ०२८ ॥

विरथं विप्लुतं तं तु स गन्धर्वं महाबलम् ।
अस्त्रतेजःप्रमूढं च प्रपतन्तमवाङ्मुखम् ॥ ०२९ ॥

शिरोरुहेषु जग्राह माल्यवत्सु धनञ्जयः ।
भ्रातॄन्प्रति चकर्षाथ सोऽस्त्रपातादचेतसम् ॥ ०३० ॥

युधिष्ठिरं तस्य भार्या प्रपेदे शरणार्थिनी ।
नाम्ना कुम्भीनसी नाम पतित्राणमभीप्सती ॥ ०३१ ॥

गन्धर्व्युवाच ॥

त्राहि त्वं मां महाराज पतिं चेमं विमुञ्च मे ।
गन्धर्वीं शरणं प्राप्तां नाम्ना कुम्बीनसीं प्रभो ॥ ०३२ ॥

युधिष्ठिर उवाच ॥

युद्धे जितं यशोहीनं स्त्रीनाथमपराक्रमम् ।

को नु हन्याद्रिपुं त्वादृङ्मुञ्चेमं रिपुसूदन ॥ ०३३ ॥

अर्जुन उवाच ॥

अङ्गेमं प्रतिपद्यस्व गच्छ गन्धर्व मा शुचः ।
प्रदिशत्यभयं तेऽद्य कुरुराजो युधिष्ठिरः ॥ ०३४ ॥

गन्धर्व उवाच ॥

जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारपर्णताम् ।
न च श्लाघे बलेनाद्य न नाम्ना जनसंसदि ॥ ०३५ ॥

साध्विमं लब्धवा.ण्ल्लाभं योऽहं दिव्यास्त्रधारिणम् ।
गान्धर्व्या मायया योद्धुमिच्छामि वयसा वरम् ॥ ०३६ ॥

अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः ।
सोऽहं चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवम् ॥ ०३७ ॥

संभृता चैव विद्येयं तपसेह पुरा मया ।
निवेदयिष्ये तामद्य प्राणदाया महात्मने ॥ ०३८ ॥

संस्तम्भितं हि तरसा जितं शरणमागतम् ।
योऽरिं संयोजयेत्प्राणैः कल्याणं किं न सोऽर्हति ॥ ०३९ ॥

चक्षुषी नाम विद्येयं यां सोमाय ददौ मनुः ।
ददौ स विश्वावसवे मह्यं विश्वावसुर्ददौ ॥ ०४० ॥

सेयं कापुरुषं प्राप्ता गुरुदत्ता प्रणश्यति ।
आगमोऽस्या मया प्रोक्तो वीर्यं प्रतिनिबोध मे ॥ ०४१ ॥

यच्चक्षुषा द्रष्टुमिच्छेत्त्रिषु लोकेषु किञ्चन ।

तत्पश्येद्यादृशं चेच्छेत्तादृषं द्रष्टुमर्हति ॥ ०४२ ॥

समानपद्ये षण्मासान्स्थितो विद्यां लभेदिमाम् ।
अनुनेष्याम्यहं विद्यां स्वयं तुभ्यं व्रते कृते ॥ ०४३ ॥

विद्यया ह्यनया राजन्वयं नृभ्यो विशेषिताः ।
अविशिष्टाश्च देवानामनुभावप्रवर्तिताः ॥ ०४४ ॥

गन्धर्वजानामश्वानामहं पुरुषसत्तम ।
भ्रातृभ्यस्तव पञ्चभ्यः पृथग्दाता शतं शतम् ॥ ०४५ ॥

देवगन्धर्ववाहास्ते दिव्यगन्धा मनोगमाः ।
क्षीणाः क्षीणा भवन्त्येते न हीयन्ते च रंहसः ॥ ०४६ ॥

पुरा कृतं महेन्द्रस्य वज्रं वृत्रनिबर्हणे ।
दशधा शतधा चैव तच्छीर्णं वृत्रमूर्धनि ॥ ०४७ ॥

ततो भागीकृतो देवैर्वज्रभाग उपास्यते ।
लोके यत्साधनं किंचित्सा वै वज्रतनुः स्मृता ॥ ०४८ ॥

वज्रपाणिर्ब्राह्मणः स्यात्क्षत्रं वज्ररथं स्मृतम् ।
वैश्या वै दानवज्राश्च कर्मवज्रा यवीयसः ॥ ०४९ ॥

वज्रं क्षत्रस्य वाजिनो अवध्या वाजिनः स्मृताः ।
रथाङ्गं वडवा सूते सूताश्चाश्वेषु ये मताः ॥ ०५० ॥

कामवर्णाः कामजवाः कामतः समुपस्थिताः ।
इमे गन्धर्वजाः कामं पूरयिष्यन्ति ते हयाः ॥ ०५१ ॥

अर्जुन उवाच ॥

यदि प्रीतेन वा दत्तं संशये जीवितस्य वा ।
विद्या वित्तं श्रुतं वापि न तद्गन्धर्व कामये ॥ ०५२ ॥

गन्धर्व उवाच ॥

संयोगो वै प्रीतिकरः संसत्सु प्रतिदृश्यते ।
जीवितस्य प्रदानेन प्रीतो विद्यां ददामि ते ॥ ०५३ ॥

त्वत्तो ह्यहं ग्रहीष्यामि अस्त्रमाग्नेयमुत्तमम् ।
तथैव सख्यं बीभत्सो चिराय भरतर्षभ ॥ ०५४ ॥

अर्जुन उवाच ॥

त्वत्तोऽस्त्रेण वृणोम्यश्वान्संयोगः शाश्वतोऽस्तु नौ ।
सखे तद्ब्रूहि गन्धर्व युष्मभ्यो यद्भयं त्यजेत् ॥ ०५५ ॥

---

# अध्याय १५९

अर्जुन उवाच ॥

कारणं ब्रूहि गन्धर्व किं तद्येन स्म धर्षिताः ।
यान्तो ब्रह्मविदः सन्तः सर्वे रात्रावरिंदम ॥ ००१ ॥

गन्धर्व उवाच ॥

अनग्नयोऽनाहुतयो न च विप्रपुरस्कृताः ।
यूयं ततो धर्षिताः स्थ मया पाण्डवनन्दन ॥ ००२ ॥

यक्षराक्षसगन्धर्वाः पिशाचोरगमानवाः ।
विस्तरं कुरुवंशस्य श्रीमतः कथयन्ति ते ॥ ००३ ॥

नारदप्रभृतीनां च देवर्षीणां मया श्रुतम् ।
गुणान्कथयतां वीर पूर्वेषां तव धीमताम् ॥ ००४ ॥

स्वयं चापि मया दृष्टश्चरता सागराम्बराम् ।
इमां वसुमतीं कृत्स्नां प्रभावः स्वकुलस्य ते ॥ ००५ ॥

वेदे धनुषि चाचार्यमभिजानामि तेऽर्जुन ।
विश्रुतं त्रिषु लोकेषु भारद्वाजं यशस्विनम् ॥ ००६ ॥

धर्मं वायुं च शक्रं च विजानाम्यश्विनौ तथा ।
पाण्डुं च कुरुशार्दूल षडेतान्कुलवर्धनान् ॥ ००७ ॥

पितृनेतानहं पार्थ देवमानुषसत्तमान् ॥ ००७ ॥

दिव्यात्मानो महात्मानः सर्वशस्त्रभृतां वराः ।
भवन्तो भ्रातरः शूराः सर्वे सुचरितव्रताः ॥ ००८ ॥

उत्तमां तु मनोबुद्धिं भवतां भावितात्मनाम् ।
जानन्नपि च वः पार्थ कृतवानिह धर्षणाम् ॥ ००९ ॥

स्त्रीसकाशे च कौरव्य न पुमान्क्षन्तुमर्हति ।
धर्षणामात्मनः पश्यन्बाहुद्रविणमाश्रितः ॥ ०१० ॥

नक्तं च बलमस्माकं भूय एवाभिवर्धते ।
यतस्ततो मां कौन्तेय सदारं मन्युराविशत् ॥ ०११ ॥

सोऽहं त्वयेह विजितः संख्ये तापत्यवर्धन ।
येन तेनेह विधिना कीर्त्यमानं निबोध मे ॥ ०१२ ॥

ब्रह्मचर्यं परो धर्मः स चापि नियतस्त्वयि ।
यस्मात्तस्मादहं पार्थ रणेऽस्मिन्विजितस्त्वया ॥ ०१३ ॥

यस्तु स्यात्क्षत्रियः कश्चित्कामवृत्तः परंतप ।
नक्तं च युधि युध्येत न स जीवेत्कथञ्चन ॥ ०१४ ॥

यस्तु स्यात्कामवृत्तोऽपि राजा तापत्य सङ्गरे ।
जयेन्नक्तञ्चरान्सर्वान्स पुरोहितधूर्गतः ॥ ०१५ ॥

तस्मात्तापत्य यत्किञ्चिन्नृणां श्रेय इहेप्सितम् ।
तस्मिन्कर्मणि योक्तव्या दान्तात्मानः पुरोहिताः ॥ ०१६ ॥

वेदे षडङ्गे निरताः शुचयः सत्यवादिनः ।
धर्मात्मानः कृतात्मानः स्युर्नृपाणां पुरोहिताः ॥ ०१७ ॥

जयश्च नियतो राज्ञः स्वर्गश्च स्यादनन्तरम् ।
यस्य स्याद्धर्मविद्वाग्मी पुरोधाः शीलवाञ्शुचिः ॥ ०१८ ॥

लाभं लब्धुमलब्धं हि लब्धं च परिरक्षितुम् ।
पुरोहितं प्रकुर्वीत राजा गुणसमन्वितम् ॥ ०१९ ॥

पुरोहितमते तिष्ठेद्य इच्छेत्पृथिवीं नृपः ।
प्राप्तुं मेरुवरोत्तंसां सर्वशः सागराम्बराम् ॥ ०२० ॥

न हि केवलशौर्येण तापत्याभिजनेन च ।
जयेदब्राह्मणः कश्चिद्भूमिं भूमिपतिः क्वचित् ॥ ०२१ ॥

तस्मादेवं विजानीहि कुरूणां वंशवर्धन ।
ब्राह्मणप्रमुखं राज्यं शक्यं पालयितुं चिरम् ॥ ०२२ ॥

# तापस्योपाख्यानम्

## अध्याय १६०

अर्जुन उवाच ॥

तापत्य इति यद्वाक्यमुक्तवानसि मामिह ।
तदहं ज्ञातुमिच्छामि तापत्यार्थविनिश्चयम् ॥ ००१ ॥

तपती नाम का चैषा तापत्या यत्कृते वयम् ।
कौन्तेया हि वयं साधो तत्त्वमिच्छामि वेदितुम् ॥ ००२ ॥

वैशंपायन उवाच ॥

एवमुक्तः स गन्धर्वः कुन्तीपुत्रं धनञ्जयम् ।
विश्रुतां त्रिषु लोकेषु श्रावयामास वै कथाम् ॥ ००३ ॥

गन्धर्व उवाच ॥

हन्त ते कथयिष्यामि कथामेतां मनोरमाम् ।
यथावदखिलां पार्थ धर्म्यां धर्मभृतां वर ॥ ००४ ॥

उक्तवानस्मि येन त्वां तापत्य इति यद्वचः ।
तत्तेऽहं कथयिष्यामि शृणुष्वैकमना मम ॥ ००५ ॥

य एष दिवि धिष्ण्येन नाकं व्याप्नोति तेजसा ।
एतस्य तपती नाम बभूवासदृशी सुता ॥ ००६ ॥

विवस्वतो वै कौन्तेय सावित्र्यवरजा विभो ।
विश्रुता त्रिषु लोकेषु तपती तपसा युता ॥ ००७ ॥

न देवी नासुरी चैव न यक्षी न च राक्षसी ।
नाप्सरा न च गन्धर्वी तथारूपेण काचन ॥ ००८ ॥

सुविभक्तानवद्याङ्गी स्वसितायतलोचना ।
स्वाचारा चैव साध्वी च सुवेषा चैव भामिनी ॥ ००९ ॥

न तस्याः सदृशं कञ्चित्त्रिषु लोकेषु भारत ।
भर्तारं सविता मेने रूपशीलकुलश्रुतैः ॥ ०१० ॥

संप्राप्तयौवनां पश्यन्देयां दुहितरं तु ताम् ।
नोपलेभे ततः शान्तिं संप्रदानं विचिन्तयन् ॥ ०११ ॥

अर्थर्क्षपुत्रः कौन्तेय कुरूणामृषभो बली ।
सूर्यमाराधयामास नृपः संवरणः सदा ॥ ०१२ ॥

अर्घ्यमाल्योपहारैश्च शश्वच्च नृपतिर्यतः ।
नियमैरुपवासैश्च तपोभिर्विविधैरपि ॥ ०१३ ॥

शुश्रूषुरनहंवादी शुचिः पौरवनन्दनः ।
अंशुमन्तं समुद्यन्तं पूजयामास भक्तिमान् ॥ ०१४ ॥

ततः कृतज्ञं धर्मज्ञं रूपेणासदृशं भुवि ।
तपत्याः सदृशं मेने सूर्यः संवरणं पतिम् ॥ ०१५ ॥

दातुमैच्छत्ततः कन्यां तस्मै संवरणाय ताम् ।
नृपोत्तमाय कौरव्य विश्रुताभिजनाय वै ॥ ०१६ ॥

यथा हि दिवि दीप्तांशुः प्रभासयति तेजसा ।
तथा भुवि महीपालो दीप्त्या संवरणोऽभवत् ॥ ०१७ ॥

यथार्चयन्ति चादित्यमुद्यन्तं ब्रह्मवादिनः ।
तथा संवरणं पार्थ ब्राह्मणावरजाः प्रजाः ॥ ०१८ ॥

स सोममति कान्तत्वादादित्यमति तेजसा ।
बभूव नृपतिः श्रीमान्सुहृदां दुर्हृदामपि ॥ ०१९ ॥

एवङ्गुणस्य नृपतेस्तथावृत्तस्य कौरव ।
तस्मै दातुं मनश्चक्रे तपतीं तपनः स्वयम् ॥ ०२० ॥

स कदाचिदथो राजा श्रीमानुरुयशा भुवि ।
चचार मृगयां पार्थ पर्वतोपवने किल ॥ ०२१ ॥

चरतो मृगयां तस्य क्षुत्पिपासाश्रमान्वितः ।
ममार राज्ञः कौन्तेय गिरावप्रतिमो हयः ॥ ०२२ ॥

स मृताश्वश्चरन्पार्थ पद्भ्यामेव गिरौ नृपः ।
ददर्शासदृशीं लोके कन्यामायतलोचनाम् ॥ ०२३ ॥

स एक एकामासाद्य कन्यां तामरिमर्दनः ।
तस्थौ नृपतिशार्दूलः पश्यन्नविचलेक्षणः ॥ ०२४ ॥

स हि तां तर्कयामास रूपतो नृपतिः श्रियम् ।
पुनः संतर्कयामास रवेर्भ्रष्टामिव प्रभाम् ॥ ०२५ ॥

गिरिप्रस्थे तु सा यस्मिन्स्थिता स्वसितलोचना ।
स सवृक्षक्षुपलतो हिरण्मय इवाभवत् ॥ ०२६ ॥

अवमेने च तां दृष्ट्वा सर्वप्राणभृतां वपुः ।

अवाप्तं चात्मनो मेने स राजा चक्षुषः फलम् ॥ ०२७ ॥

जन्मप्रभृति यत्किञ्चिद्दृष्टवान्स महीपतिः ।
रूपं न सदृशं तस्यास्तर्कयामास किञ्चन ॥ ०२८ ॥

तया बद्धमनश्चक्षुः पाशैर्गुणमयैस्तदा ।
न चचाल ततो देशाद्बुबुधे न च किञ्चन ॥ ०२९ ॥

अस्या नूनं विशालाक्ष्याः सदेवासुरमानुषम् ।
लोकं निर्मथ्य धात्रेदं रूपमाविष्कृतं कृतम् ॥ ०३० ॥

एवं स तर्कयामास रूपद्रविणसंपदा ।
कन्यामसदृशीं लोके नृपः संवरणस्तदा ॥ ०३१ ॥

तां च दृष्ट्वैव कल्याणीं कल्याणाभिजनो नृपः ।
जगाम मनसा चिन्तां काममार्गणपीडितः ॥ ०३२ ॥

दह्यमानः स तीव्रेण नृपतिर्मन्मथाग्निना ।
अप्रगल्भां प्रगल्भः स तामुवाच यशस्विनीम् ॥ ०३३ ॥

कासि कस्यासि रम्भोरु किमर्थं चेह तिष्ठसि ।
कथं च निर्जनेऽरण्ये चरस्येका शुचिस्मिते ॥ ०३४ ॥

त्वं हि सर्वानवद्याङ्गी सर्वाभरणभूषिता ।
विभूषणमिवैतेषां भूषणानामभीप्सितम् ॥ ०३५ ॥

न देवीं नासुरीं चैव न यक्षीं न च राक्षसीम् ।
न च भोगवतीं मन्ये न गन्धर्वीं न मानुषीम् ॥ ०३६ ॥

या हि दृष्टा मया काश्चिच्छ्रुता वापि वराङ्गनाः ।
न तासां सदृशीं मन्ये त्वामहं मत्तकाशिनि ॥ ०३७ ॥

एवं तां स महीपालो बभाषे न तु सा तदा ।
कामार्तं निर्जनेऽरण्ये प्रत्यभाषत किञ्चन ॥ ०३८ ॥

ततो लालप्यमानस्य पार्थिवस्यायतेक्षणा ।
सौदामिनीव साभ्रेषु तत्रैवान्तरधीयत ॥ ०३९ ॥

तामन्विच्छन्स नृपतिः परिचक्राम तत्तदा ।
वनं वनजपत्राक्षीं भ्रमन्नुन्मत्तवत्तदा ॥ ०४० ॥

अपश्यमानः स तु तां बहु तत्र विलप्य च ।
निश्चेष्टः कौरवश्रेष्ठो मुहूर्तं स व्यतिष्ठत ॥ ०४१ ॥

---

# अध्याय १६१

गन्धर्व उवाच ॥

अथ तस्यामदृश्यायां नृपतिः काममोहितः ।
पातनः शत्रुसंघानां पपात धरणीतले ॥ ००१ ॥

तस्मिन्निपतिते भूमावथ सा चारुहासिनी ।
पुनः पीनायतश्रोणी दर्शयामास तं नृपम् ॥ ००२ ॥

अथाबभाषे कल्याणी वाचा मधुरया नृपम् ।
तं कुरूणां कुलकरं कामाभिहतचेतसम् ॥ ००३ ॥

उत्तिष्ठोत्तिष्ठ भद्रं ते न त्वमर्हस्यरिंदम ।
मोहं नृपतिशार्दूल गन्तुमाविष्कृतः क्षितौ ॥ ००४ ॥

एवमुक्तोऽथ नृपतिर्वाचा मधुरया तदा ।
ददर्श विपुलश्रोणीं तामेवाभिमुखे स्थिताम् ॥ ००५ ॥

अथ तामसितापाङ्गीमाबभाषे नराधिपः ।
मन्मथाग्निपरीतात्मा संदिग्धाक्षरया गिरा ॥ ००६ ॥

साधु मामसितापाङ्गे कामार्तं मत्तकाशिनि ।
भजस्व भजमानं मां प्राणा हि प्रजहन्ति माम् ॥ ००७ ॥

त्वदर्थं हि विशालाक्षि मामयं निशितैः शरैः ।
कामः कमलगर्भाभे प्रतिविध्यन्न शाम्यति ॥ ००८ ॥

ग्रस्तमेवमनाक्रन्दे भद्रे काममहाहिना ।
सा त्वं पीनायतश्रोणि पर्याप्नुहि शुभानने ॥ ००९ ॥

त्वय्यधीना हि मे प्राणाः किंनरोद्गीतभाषिणि ।
चारुसर्वानवद्याङ्गि पद्मेन्दुसदृशानने ॥ ०१० ॥

न ह्यहं त्वदृते भीरु शक्ष्ये जीवितुमात्मना ।
तस्मात्कुरु विशालाक्षि मय्यनुक्रोशमङ्गने ॥ ०११ ॥

भक्तं मामसितापाङ्गे न परित्यक्तुमर्हसि ।
त्वं हि मां प्रीतियोगेन त्रातुमर्हसि भामिनि ॥ ०१२ ॥

गान्धर्वेण च मां भीरु विवाहेनैहि सुन्दरि ।
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ॥ ०१३ ॥

तपत्युवाच ॥

नाहमीशात्मनो राजन्कन्या पितृमती ह्यहम् ।

मयि चेदस्ति ते प्रीतिर्याचस्व पितरं मम ॥ ०१४ ॥

यथा हि ते मया प्राणाः सङ्गृहीता नरेश्वर ।
दर्शनादेव भूयस्त्वं तथा प्राणान्ममाहरः ॥ ०१५ ॥

न चाहमीशा देहस्य तस्मान्नृपतिसत्तम ।
समीपं नोपगच्छामि न स्वतन्त्रा हि योषितः ॥ ०१६ ॥

का हि सर्वेषु लोकेषु विश्रुताभिजनं नृपम् ।
कन्या नाभिलषेन्नाथं भर्तारं भक्तवत्सलम् ॥ ०१७ ॥

तस्मादेवङ्गते काले याचस्व पितरं मम ।
आदित्यं प्रणिपातेन तपसा नियमेन च ॥ ०१८ ॥

स चेत्कामयते दातुं तव मामरिमर्दन ।
भविष्याम्यथ ते राजन्सततं वशवर्तिनी ॥ ०१९ ॥

अहं हि तपती नाम सावित्र्यवरजा सुता ।
अस्य लोकप्रदीपस्य सवितुः क्षत्रियर्षभ ॥ ०२० ॥

---

# अध्याय १६२

गन्धर्व उवाच ॥

एवमुक्त्वा ततस्तूर्णं जगामोर्ध्वमनिन्दिता ।
स तु राजा पुनर्भूमौ तत्रैव निपपात ह ॥ ००१ ॥

अमात्यः सानुयात्रस्तु तं ददर्श महावने ।
क्षितौ निपतितं काले शक्रध्वजमिवोच्छ्रितम् ॥ ००२ ॥

तं हि दृष्ट्वा महेष्वासं निरश्वं पतितं क्षितौ ।
बभूव सोऽस्य सचिवः संप्रदीप्त इवाग्निना ॥ ००३ ॥

त्वरया चोपसङ्गम्य स्नेहादागतसंभ्रमः ।
तं समुत्थापयामास नृपतिं काममोहितम् ॥ ००४ ॥

भूतलाद्भूमिपालेशं पितेव पतितं सुतम् ।
प्रज्ञया वयसा चैव वृद्धः कीर्त्या दमेन च ॥ ००५ ॥

अमात्यस्तं समुत्थाप्य बभूव विगतज्वरः ।
उवाच चैनं कल्याण्या वाचा मधुरयोत्थितम् ॥ ००६ ॥

मा भैर्मनुजशार्दूल भद्रं चास्तु तवानघ ॥ ००६ ॥

क्षुत्पिपासापरिश्रान्तं तर्कयामास तं नृपम् ।
पतितं पातनं संख्ये शात्रवाणां महीतले ॥ ००७ ॥

वारिणाथ सुशीतेन शिरस्तस्याभ्यषेचयत् ।
अस्पृशन्मुकुटं राज्ञः पुण्डरीकसुगन्धिना ॥ ००८ ॥

ततः प्रत्यागतप्राणस्तद्बलं बलवान्नृपः ।
सर्वं विसर्जयामास तमेकं सचिवं विना ॥ ००९ ॥

ततस्तस्याज्ञया राज्ञो विप्रतस्थे महद्बलम् ।
स तु राजा गिरिप्रस्थे तस्मिन्पुनरुपाविशत् ॥ ०१० ॥

ततस्तस्मिन्गिरिवरे शुचिर्भूत्वा कृताञ्जलिः ।
आरिराधयिषुः सूर्यं तस्थावूर्ध्वभुजः क्षितौ ॥ ०११ ॥

जगाम मनसा चैव वसिष्ठमृषिसत्तमम् ।
पुरोहितममित्रघ्नस्तदा संवरणो नृपः ॥ ०१२ ॥

नक्तंदिनमथैकस्थे स्थिते तस्मिञ्जनाधिपे ।
अथाजगाम विप्रर्षिस्तदा द्वादशमेऽहनि ॥ ०१३ ॥

स विदित्वैव नृपतिं तपत्या हृतमानसम् ।
दिव्येन विधिना ज्ञात्वा भावितात्मा महानृषिः ॥ ०१४ ॥

तथा तु नियतात्मानं स तं नृपतिसत्तमम् ।
आबभाषे स धर्मात्मा तस्यैवार्थचिकीर्षया ॥ ०१५ ॥

स तस्य मनुजेन्द्रस्य पश्यतो भगवानृषिः ।
ऊर्ध्वमाचक्रमे द्रष्टुं भास्करं भास्करद्युतिः ॥ ०१६ ॥

सहस्रांशुं ततो विप्रः कृताञ्जलिरुपस्थितः ।
वसिष्ठोऽहमिति प्रीत्या स चात्मानं न्यवेदयत् ॥ ०१७ ॥

तमुवाच महातेजा विवस्वान्मुनिसत्तमम् ।
महर्षे स्वागतं तेऽस्तु कथयस्व यथेच्छसि ॥ ०१८ ॥

---

# अध्याय १६३

वसिष्ठ उवाच ॥

यैषा ते तपती नाम सावित्र्यवरजा सुता ।
तां त्वां संवरणस्यार्थे वरयामि विभावसो ॥ ००१ ॥

स हि राजा बृहत्कीर्तिर्धर्मार्थविदुदारधीः ।
युक्तः संवरणो भर्ता दुहितुस्ते विहङ्गम ॥ ००२ ॥

गन्धर्व उवाच ॥

इत्युक्तः सविता तेन ददानीत्येव निश्चितः ।
प्रत्यभाषत तं विप्रं प्रतिनन्द्य दिवाकरः ॥ ००३ ॥

वरः संवरणो राज्ञां त्वमृषीणां वरो मुने ।
तपती योषितां श्रेष्ठा किमन्यत्रापवर्जनात् ॥ ००४ ॥

ततः सर्वानवद्याङ्गीं तपतीं तपनः स्वयम् ।
ददौ संवरणस्यार्थे वसिष्ठाय महात्मने ॥ ००५ ॥

प्रतिजग्राह तां कन्यां महर्षिस्तपतीं तदा ॥ ००५ ॥

वसिष्ठोऽथ विसृष्टश्च पुनरेवाजगाम ह ।
यत्र विख्यतकीर्तिः स कुरूणामृषभोऽभवत् ॥ ००६ ॥

स राजा मन्मथाविष्टस्तद्गतेनान्तरात्मना ।
दृष्ट्वा च देवकन्यां तां तपतीं चारुहासिनीम् ॥ ००७ ॥

वसिष्ठेन सहायान्तीं संहृष्टोऽभ्यधिकं बभौ ॥ ००७ ॥

कृच्छ्रे द्वादशरात्रे तु तस्य राज्ञः समापिते ।
आजगाम विशुद्धात्मा वसिष्ठो भगवानृषिः ॥ ००८ ॥

तपसाराध्य वरदं देवं गोपतिमीश्वरम् ।
लेभे संवरणो भार्यां वसिष्ठस्यैव तेजसा ॥ ००९ ॥

ततस्तस्मिन्गिरिश्रेष्ठे देवगन्धर्वसेविते ।
जग्राह विधिवत्पाणिं तपत्याः स नरर्षभः ॥ ०१० ॥

वसिष्ठेनाभ्यनुज्ञातस्तस्मिन्नेव धराधरे ।
सोऽकामयत राजर्षिर्विहर्तुं सह भार्यया ॥ ०११ ॥

ततः पुरे च राष्ट्रे च वाहनेषु बलेषु च ।
आदिदेश महीपालस्तमेव सचिवं तदा ॥ ०१२ ॥

नृपतिं त्वभ्यनुज्ञाय वसिष्ठोऽथापचक्रमे ।
सोऽपि राजा गिरौ तस्मिन्विजहारामरोपमः ॥ ०१३ ॥

ततो द्वादश वर्षाणि काननेषु जलेषु च ।
रेमे तस्मिन्गिरौ राजा तयैव सह भार्यया ॥ ०१४ ॥

तस्य राज्ञः पुरे तस्मिन्समा द्वादश सर्वशः ।
न ववर्ष सहस्राक्षो राष्ट्रे चैवास्य सर्वशः ॥ ०१५ ॥

तत्क्षुधार्तैर्निरानन्दैः शवभूतैस्तदा नरैः ।
अभवत्प्रेतराजस्य पुरं प्रेतैरिवावृतम् ॥ ०१६ ॥

ततस्तत्तादृशं दृष्ट्वा स एव भगवानृषिः ।
अभ्यपद्यत धर्मात्मा वसिष्ठो राजसत्तमम् ॥ ०१७ ॥

तं च पार्थिवशार्दूलमानयामास तत्पुरम् ।
तपत्या सहितं राजन्नुषितं द्वादशीः समाः ॥ ०१८ ॥

ततः प्रवृष्टस्तत्रासीद्यथापूर्वं सुरारिहा ।
तस्मिन्नृपतिशार्दूले प्रविष्टे नगरं पुनः ॥ ०१९ ॥

ततः सराष्ट्रं मुमुदे तत्पुरं परया मुदा ।

तेन पार्थिवमुख्येन भावितं भावितात्मना ॥ ०२० ॥

ततो द्वादश वर्षाणि पुनरीजे नराधिपः ।
पत्न्या तपत्या सहितो यथा शक्रो मरुत्पतिः ॥ ०२१ ॥

एवमासीन्महाभागा तपती नाम पौर्विकी ।
तव वैवस्वती पार्थ तापत्यस्त्वं यया मतः ॥ ०२२ ॥

तस्यां सञ्जनयामास कुरुं संवरणो नृपः ।
तपत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽर्जुन ॥ ०२३ ॥

---

# वासिष्ठोपाख्यानम्

## अध्याय १६४

वैशंपायन उवाच ॥

स गन्धर्ववचः श्रुत्वा तत्तदा भरतर्षभ ।
अर्जुनः परया प्रीत्या पूर्णचन्द्र इवाबभौ ॥ ००१ ॥

उवाच च महेष्वासो गन्धर्वं कुरुसत्तमः ।
जातकौतूहलोऽतीव वसिष्ठस्य तपोबलात् ॥ ००२ ॥

वसिष्ठ इति यस्यैतदृषेर्नाम त्वयेरितम् ।
एतदिच्छाम्यहं श्रोतुं यथावत्तद्वदस्व मे ॥ ००३ ॥

य एष गन्धर्वपते पूर्वेषां नः पुरोहितः ।

आसीदेतन्ममाचक्ष्व क एष भगवानृषिः ॥ ००४ ॥

गन्धर्व उवाच ॥

तपसा निर्जितौ शश्वदजेयावमरैरपि ।
कामक्रोधावुभौ यस्य चरणौ संववाहतुः ॥ ००५ ॥

यस्तु नोच्छेदनं चक्रे कुशिकानामुदारधीः ।
विश्वामित्रापराधेन धारयन्मन्युमुत्तमम् ॥ ००६ ॥

पुत्रव्यसनसंतप्तः शक्तिमानपि यः प्रभुः ।
विश्वामित्रविनाशाय न मेने कर्म दारुणम् ॥ ००७ ॥

मृतांश्च पुनराहर्तुं यः स पुत्रान्यमक्षयात् ।
कृतान्तं नातिचक्राम वेलामिव महोदधिः ॥ ००८ ॥

यं प्राप्य विजितात्मानं महात्मानं नराधिपाः ।
इक्ष्वाकवो महीपाला लेभिरे पृथिवीमिमाम् ॥ ००९ ॥

पुरोहितवरं प्राप्य वसिष्ठमृषिसत्तमम् ।
ईजिरे क्रतुभिश्चापि नृपास्ते कुरुनन्दन ॥ ०१० ॥

स हि तान्याजयामास सर्वान्नृपतिसत्तमान् ।
ब्रह्मर्षिः पाण्डवश्रेष्ठ बृहस्पतिरिवामरान् ॥ ०११ ॥

तस्माद्धर्मप्रधानात्मा वेदधर्मविदीप्सितः ।
ब्राह्मणो गुणवान्कश्चित्पुरोधाः प्रविमृश्यताम् ॥ ०१२ ॥

क्षत्रियेण हि जातेन पृथिवीं जेतुमिच्छता ।
पूर्वं पुरोहितः कार्यः पार्थ राज्याभिवृद्धये ॥ ०१३ ॥

महीं जिगीषता राज्ञा ब्रह्म कार्यं पुरःसरम् ।
तस्मात्पुरोहितः कश्चिद्गुणवानस्तु वो द्विजः ॥ ०१४ ॥

---

# अध्याय १६५

अर्जुन उवाच ॥

किंनिमित्तमभूद्वैरं विश्वामित्रवसिष्ठयोः ।
वसतोराश्रमे पुण्ये शंस नः सर्वमेव तत् ॥ ००१ ॥

गन्धर्व उवाच ॥

इदं वासिष्ठमाख्यानं पुराणं परिचक्षते ।
पार्थ सर्वेषु लोकेषु यथावत्तन्निबोध मे ॥ ००२ ॥

कन्यकुब्जे महानासीत्पार्थिवो भरतर्षभ ।
गाधीति विश्रुतो लोके सत्यधर्मपरायणः ॥ ००३ ॥

तस्य धर्मात्मनः पुत्रः समृद्धबलवाहनः ।
विश्वामित्र इति ख्यातो बभूव रिपुमर्दनः ॥ ००४ ॥

स चचार सहामात्यो मृगयां गहने वने ।
मृगान्विध्यन्वराहांश्च रम्येषु मरुधन्वसु ॥ ००५ ॥

व्यायामकर्शितः सोऽथ मृगलिप्सुः पिपासितः ।
आजगाम नरश्रेष्ठ वसिष्ठस्याश्रमं प्रति ॥ ००६ ॥

तमागतमभिप्रेक्ष्य वसिष्ठः श्रेष्ठभागृषिः ।
विश्वामित्रं नरश्रेष्ठं प्रतिजग्राह पूजया ॥ ००७ ॥

पाद्यार्घ्याचमनीयेन स्वागतेन च भारत ।
तथैव प्रतिजग्राह वन्येन हविषा तथा ॥ ००८ ॥

तस्याथ कामधुग्धेनुर्वसिष्ठस्य महात्मनः ।
उक्ता कामान्प्रयच्छेति सा कामान्दुदुहे ततः ॥ ००९ ॥

ग्राम्यारण्या ओषधीश्च दुदुहे पय एव च ।
षड्रसं चामृतरसं रसायनमनुत्तमम् ॥ ०१० ॥

भोजनीयानि पेयानि भक्ष्याणि विविधानि च ।
लेह्यान्यमृतकल्पानि चोष्याणि च तथार्जुन ॥ ०११ ॥

तैः कामैः सर्वसंपूर्णैः पूजितः स महीपतिः ।
सामात्यः सबलश्चैव तुतोष स भृशं नृपः ॥ ०१२ ॥

षडायतां सुपार्श्वोरुं त्रिपृथुं पञ्च संवृताम् ।
मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम् ॥ ०१३ ॥

सुवालधिं शङ्कुकर्णां चारुशृङ्गां मनोरमाम् ।
पुष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्य ताम् ॥ ०१४ ॥

अभिनन्दति तां नन्दीं वसिष्ठस्य पयस्विनीम् ।
अब्रवीच्च भृशं तुष्टो विश्वामित्रो मुनिं तदा ॥ ०१५ ॥

अर्बुदेन गवां ब्रह्मन्मम राज्येन वा पुनः ।
नन्दिनीं संप्रयच्छस्व भुङ्क्ष्व राज्यं महामुने ॥ ०१६ ॥

वसिष्ठ उवाच ॥

देवतातिथिपित्रर्थमाज्यार्थं च पयस्विनी ।
अदेया नन्दिनीयं मे राज्येनापि तवानघ ॥ ०१७ ॥

विश्वामित्र उवाच ॥

क्षत्रियोऽहं भवान्विप्रस्तपःस्वाध्यायसाधनः ।
ब्राह्मणेषु कुतो वीर्यं प्रशान्तेषु धृतात्मसु ॥ ०१८ ॥

अर्बुदेन गवां यस्त्वं न ददासि ममेप्सिताम् ।
स्वधर्मं न प्रहास्यामि नयिष्ये ते बलेन गाम् ॥ ०१९ ॥

वसिष्ठ उवाच ॥

बलस्थश्चासि राजा च बाहुवीर्यश्च क्षत्रियः ।
यथेच्छसि तथा क्षिप्रं कुरु त्वं मा विचारय ॥ ०२० ॥

गन्धर्व उवाच ॥

एवमुक्तस्तदा पार्थ विश्वामित्रो बलादिव ।
हंसचन्द्रप्रतीकाशां नन्दिनीं तां जहार गाम् ॥ ०२१ ॥

कशादण्डप्रतिहता काल्यमाना ततस्ततः ।
हम्भायमाना कल्याणी वसिष्ठस्याथ नन्दिनी ॥ ०२२ ॥

आगम्याभिमुखी पार्थ तस्थौ भगवदुन्मुखी ।
भृशं च ताड्यमानापि न जगामाश्रमात्ततः ॥ ०२३ ॥

वसिष्ठ उवाच ॥

शृणोमि ते रवं भद्रे विनदन्त्याः पुनः पुनः ।

बलाद्ध्रियसि मे नन्दि क्षमावान्ब्राह्मणो ह्यहम् ॥ ०२४ ॥

गन्धर्व उवाच ॥

सा तु तेषां बलान्नन्दी बलानां भरतर्षभ ।
विश्वामित्रभयोद्विग्ना वसिष्ठं समुपागमत् ॥ ०२५ ॥

गौरुवाच ॥

पाषाणदण्डाभिहतां क्रन्दन्तीं मामनाथवत् ।
विश्वामित्रबलैर्घोरैर्भगवन्किमुपेक्षसे ॥ ०२६ ॥

गन्धर्व उवाच ॥

एवं तस्यां तदा पर्थ धर्षितायां महामुनिः ।
न चुक्षुभे न धैर्याच्च विचचाल धृतव्रतः ॥ ०२७ ॥

वसिष्ठ उवाच ॥

क्षत्रियाणां बलं तेजो ब्राह्मणानां क्षमा बलम् ।
क्षमा मां भजते तस्माद्गम्यतां यदि रोचते ॥ ०२८ ॥

गौरुवाच ॥

किं नु त्यक्तास्मि भगवन्यदेवं मां प्रभाषसे ।
अत्यक्ताहं त्वया ब्रह्मन्न शक्या नयितुं बलात् ॥ ०२९ ॥

वसिष्ठ उवाच ॥

न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते ।
दृढेन दाम्ना बद्धैष वत्सस्ते ह्रियते बलात् ॥ ०३० ॥

गन्धर्व उवाच ॥

स्थीयतामिति तच्छ्रुत्वा वसिष्ठस्य पयस्विनी ।
ऊर्ध्वाञ्चितशिरोग्रीवा प्रबभौ घोरदर्शना ॥ ०३१ ॥

क्रोधरक्तेक्षणा सा गौर्हम्भारवघनस्वना ।
विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्वशः ॥ ०३२ ॥

कशाग्रदण्डाभिहता काल्यमाना ततस्ततः ।
क्रोधदीप्तेक्षणा क्रोधं भूय एव समादधे ॥ ०३३ ॥

आदित्य इव मध्याह्ने क्रोधदीप्तवपुर्बभौ ।
अङ्गारवर्षं मुञ्चन्ती मुहुर्वालधितो महत् ॥ ०३४ ॥

असृजत्पह्लवान्पुच्छाच्छकृतः शबराञ्शकान् ।
मूत्रतश्चासृजच्चापि यवनान्क्रोधमूर्च्छिता ॥ ०३५ ॥

पुण्ड्रान्किरातान्द्रमिडान्सिंहलान्बर्बरांस्तथा ।
तथैव दरदान्म्लेच्छान्फेनतः सा ससर्ज ह ॥ ०३६ ॥

तैर्विसृष्टैर्महत्सैन्यं नानाम्लेच्छगणैस्तदा ।
नानावरणसंछन्नैर्नानायुधधरैस्तथा ॥ ०३७ ॥

अवाकीर्यत संरब्धैर्विश्वामित्रस्य पश्यतः ॥ ०३७ ॥

एकैकश्च तदा योधः पञ्चभिः सप्तभिर्वृतः ।
अस्त्रवर्षेण महता काल्यमानं बलं ततः ॥ ०३८ ॥

प्रभग्नं सर्वतस्त्रस्तं विश्वामित्रस्य पश्यतः ॥ ०३८ ॥

न च प्राणैर्वियुज्यन्त केचित्ते सैनिकास्तदा ।
विश्वामित्रस्य सङ्कुद्धैर्वासिष्ठैर्भरतर्षभ ॥ ०३९ ॥

विश्वामित्रस्य सैन्यं तु काल्यमानं त्रियोजनम् ।
क्रोशमानं भयोद्विग्नं त्रातारं नाध्यगच्छत ॥ ०४० ॥

दृष्ट्वा तन्महदाश्चर्यं ब्रह्मतेजोभवं तदा ।
विश्वामित्रः क्षत्रभावान्निर्विण्णो वाक्यमब्रवीत् ॥ ०४१ ॥

धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ।
बलाबलं विनिश्चित्य तप एव परं बलम् ॥ ०४२ ॥

स राज्यं स्फीतमुत्सृज्य तां च दीप्तां नृपश्रियम् ।
भोगांश्च पृष्ठतः कृत्वा तपस्येव मनो दधे ॥ ०४३ ॥

स गत्वा तपसा सिद्धिं लोकान्विष्टभ्य तेजसा ।
तताप सर्वान्दीप्तौजा ब्राह्मणत्वमवाप च ॥ ०४४ ॥

अपिबच्च सुतं सोममिन्द्रेण सह कौशिकः ॥ ०४४ ॥

---

# अध्याय १६६

गन्धर्व उवाच ॥

कल्माषपाद इत्यस्मि.ण्ल्लोके राजा बभूव ह ।
इक्ष्वाकुवंशजः पार्थ तेजसासदृशो भुवि ॥ ००१ ॥

स कदाचिद्वनं राजा मृगयां निर्ययौ पुरात् ।

मृगान्विध्यन्वराहांश्च चचार रिपुमर्दनः ॥ ००२ ॥

स तु राजा महात्मानं वासिष्ठमृषिसत्तमम् ।
तृषार्तश्च क्षुधार्तश्च एकायनगतः पथि ॥ ००३ ॥

अपश्यदजितः संख्ये मुनिं प्रतिमुखागतम् ।
शक्तिं नाम महाभागं वसिष्ठकुलनन्दनम् ॥ ००४ ॥

ज्येष्ठं पुत्रशतात्पुत्रं वसिष्ठस्य महात्मनः ॥ ००४ ॥

अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत् ।
तथा ऋषिरुवाचैनं सान्त्वयञ्श्लक्ष्णया गिरा ॥ ००५ ॥

ऋषिस्तु नापचक्राम तस्मिन्धर्मपथे स्थितः ।
नापि राजा मुनेर्मानात्क्रोधाच्चापि जगाम ह ॥ ००६ ॥

अमुञ्चन्तं तु पन्थानं तमृषिं नृपसत्तमः ।
जघान कशया मोहात्तदा राक्षसवन्मुनिम् ॥ ००७ ॥

कशाप्रहाराभिहतस्ततः स मुनिसत्तमः ।
तं शशाप नृपश्रेष्ठं वासिष्ठः क्रोधमूर्च्छितः ॥ ००८ ॥

हंसि राक्षसवद्यस्माद्राजापसद तापसम् ।
तस्मात्त्वमद्य प्रभृति पुरुषादो भविष्यसि ॥ ००९ ॥

मनुष्यपिशिते सक्तश्चरिष्यसि महीमिमाम् ।
गच्छ राजाधमेत्युक्तः शक्तिना वीर्यशक्तिना ॥ ०१० ॥

ततो याज्यनिमित्तं तु विश्वामित्रवसिष्ठयोः ।
वैरमासीत्तदा तं तु विश्वामित्रोऽन्वपद्यत ॥ ०११ ॥

तयोर्विवदतोरेवं समीपमुपचक्रमे ।
ऋषिरुग्रतपाः पार्थ विश्वामित्रः प्रतापवान् ॥ ०१२ ॥

ततः स बुबुधे पश्चात्तमृषिं नृपसत्तमः ।
ऋषेः पुत्रं वसिष्ठस्य वसिष्ठमिव तेजसा ॥ ०१३ ॥

अन्तर्धाय तदात्मानं विश्वामित्रोऽपि भारत ।
तावुभावुपचक्राम चिकीर्षन्नात्मनः प्रियम् ॥ ०१४ ॥

स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः ।
जगाम शरणं शक्तिं प्रसादयितुमर्हयन् ॥ ०१५ ॥

तस्य भावं विदित्वा स नृपतेः कुरुनन्दन ।
विश्वामित्रस्ततो रक्ष आदिदेश नृपं प्रति ॥ ०१६ ॥

स शापात्तस्य विप्रर्षेर्विश्वामित्रस्य चाज्ञया ।
राक्षसः किङ्करो नाम विवेश नृपतिं तदा ॥ ०१७ ॥

रक्षसा तु गृहीतं तं विदित्वा स मुनिस्तदा ।
विश्वामित्रोऽप्यपक्रामत्तस्माद्देशादरिंदम ॥ ०१८ ॥

ततः स नृपतिर्विद्वान्रक्षन्नात्मानमात्मना ।
बलवत्पीड्यमानोऽपि रक्षसान्तर्गतेन ह ॥ ०१९ ॥

ददर्श तं द्विजः कश्चिद्राजानं प्रस्थितं पुनः ।
ययाचे क्षुधितश्चैनं समांसं भोजनं तदा ॥ ०२० ॥

तमुवाचाथ राजर्षिर्द्विजं मित्रसहस्तदा ।
आस्स्व ब्रह्मंस्त्वमत्रैव मुहूर्तमिति सान्त्वयन् ॥ ०२१ ॥

निवृत्तः प्रतिदास्यामि भोजनं ते यथेप्सितम् ।

इत्युक्त्वा प्रययौ राजा तस्थौ च द्विजसत्तमः ॥ ०२२ ॥

अन्तर्गतं तु तद्राज्ञस्तदा ब्राह्मणभाषितम् ।
सोऽन्तःपुरं प्रविश्याथ संविवेश नराधिपः ॥ ०२३ ॥

ततोऽर्धरात्र उत्थाय सूदमानाय्य सत्वरम् ।
उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतम् ॥ ०२४ ॥

गच्छामुष्मिन्नसौ देशे ब्राह्मणो मां प्रतीक्षते ।
अन्नार्थी त्वं तमन्नेन समांसेनोपपादय ॥ ०२५ ॥

एवमुक्तस्तदा सूदः सोऽनासाद्यामिषं क्वचित् ।
निवेदयामास तदा तस्मै राज्ञे व्यथान्वितः ॥ ०२६ ॥

राजा तु रक्षसाविष्टः सूदमाह गतव्यथः ।
अप्येनं नरमांसेन भोजयेति पुनः पुनः ॥ ०२७ ॥

तथेत्युक्त्वा ततः सूदः संस्थानं वध्यघातिनाम् ।
गत्वा जहार त्वरितो नरमांसमपेतभीः ॥ ०२८ ॥

स तत्संस्कृत्य विधिवदन्नोपहितमाशु वै ।
तस्मै प्रादाद्ब्राह्मणाय क्षुधिताय तपस्विने ॥ ०२९ ॥

स सिद्धचक्षुषा दृष्ट्वा तदन्नं द्विजसत्तमः ।
अभोज्यमिदमित्याह क्रोधपर्याकुलेक्षणः ॥ ०३० ॥

यस्मादभोज्यमन्नं मे ददाति स नराधिपः ।
तस्मात्तस्यैव मूढस्य भविष्यत्यत्र लोलुपा ॥ ०३१ ॥

सक्तो मानुषमांसेषु यथोक्तः शक्तिना पुरा ।
उद्वेजनीयो भूतानां चरिष्यति महीमिमाम् ॥ ०३२ ॥

द्विरनुव्याहृते राज्ञः स शापो बलवानभूत् ।
रक्षोबलसमाविष्टो विसञ्ज्ञश्चाभवत्तदा ॥ ०३३ ॥

ततः स नृपतिश्रेष्ठो राक्षसोपहतेन्द्रियः ।
उवाच शक्तिं तं दृष्ट्वा नचिरादिव भारत ॥ ०३४ ॥

यस्मादसदृशः शापः प्रयुक्तोऽयं त्वया मयि ।
तस्मात्त्वत्तः प्रवर्तिष्ये खादितुं मानुषानहम् ॥ ०३५ ॥

एवमुक्त्वा ततः सद्यस्तं प्राणैर्विप्रयुज्य सः ।
शक्तिनं भक्षयामास व्याघ्रः पशुमिवेप्सितम् ॥ ०३६ ॥

शक्तिनं तु हतं दृष्ट्वा विश्वामित्रस्ततः पुनः ।
वसिष्ठस्यैव पुत्रेषु तद्रक्षः संदिदेश ह ॥ ०३७ ॥

स ताञ्शतावरान्पुत्रान्वसिष्ठस्य महात्मनः ।
भक्षयामास सङ्क्रुद्धः सिंहः क्षुद्रमृगानिव ॥ ०३८ ॥

वसिष्ठो घातिताञ्श्रुत्वा विश्वामित्रेण तान्सुतान् ।
धारयामास तं शोकं महाद्रिरिव मेदिनीम् ॥ ०३९ ॥

चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः ।
न त्वेव कुशिकोच्छेदं मेने मतिमतां वरः ॥ ०४० ॥

स मेरुकूटादात्मानं मुमोच भगवानृषिः ।
शिरस्तस्य शिलायां च तूलराशाविवापतत् ॥ ०४१ ॥

न ममार च पातेन स यदा तेन पाण्डव ।
तदाग्निमिद्धा भगवान्संविवेश महावने ॥ ०४२ ॥

तं तदा सुसमिद्धोऽपि न ददाह हुताशनः ।
दीप्यमानोऽप्यमित्रघ्न शीतोऽग्निरभवत्ततः ॥ ०४३ ॥

स समुद्रमभिप्रेत्य शोकाविष्टो महामुनिः ।
बद्ध्वा कण्ठे शिलां गुर्वीं निपपात तदम्भसि ॥ ०४४ ॥

स समुद्रोर्मिवेगेन स्थले न्यस्तो महामुनिः ।
जगाम स ततः खिन्नः पुनरेवाश्रमं प्रति ॥ ०४५ ॥

---

# अध्याय १६७

गन्धर्व उवाच ॥

ततो दृष्ट्वाश्रमपदं रहितं तैः सुतैर्मुनिः ।
निर्जगाम सुदुःखार्तः पुनरेवाश्रमात्ततः ॥ ००१ ॥

सोऽपश्यत्सरितं पूर्णां प्रावृट्काले नवाम्भसा ।
वृक्षान्बहुविधान्पार्थ वहन्तीं तीरजान्बहून् ॥ ००२ ॥

अथ चिन्तां समापेदे पुनः पौरवनन्दन ।
अम्भस्यस्या निमज्जेयमिति दुःखसमन्वितः ॥ ००३ ॥

ततः पाशैस्तदात्मानं गाढं बद्ध्वा महामुनिः ।
तस्या जले महानद्या निममज्ज सुदुःखितः ॥ ००४ ॥

अथ छित्त्वा नदी पाशांस्तस्यारिबलमर्दन ।
समस्थं तमृषिं कृत्वा विपाशं समवासृजत् ॥ ००५ ॥

उत्ततार ततः पाशैर्विमुक्तः स महानृषिः ।
विपाशेति च नामास्या नद्याश्चक्रे महानृषिः ॥ ००६ ॥

शोके बुद्धिं ततश्चक्रे न चैकत्र व्यतिष्ठत ।
सोऽगच्छत्पर्वतांश्चैव सरितश्च सरांसि च ॥ ००७ ॥

ततः स पुनरेवर्षिर्नदीं हैमवतीं तदा ।
चण्डग्राहवतीं दृष्ट्वा तस्याः स्रोतस्यवापतत् ॥ ००८ ॥

सा तमग्निसमं विप्रमनुचिन्त्य सरिद्वरा ।
शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता ॥ ००९ ॥

ततः स्थलगतं दृष्ट्वा तत्राप्यात्मानमात्मना ।
मर्तुं न शक्यमित्युक्त्वा पुनरेवाश्रमं ययौ ॥ ०१० ॥

वध्वादृश्यन्त्यानुगत आश्रमाभिमुखो व्रजन् ।
अथ शुश्राव सङ्गत्या वेदाध्ययननिःस्वनम् ॥ ०११ ॥

पृष्ठतः परिपूर्णार्थैः षड्भिरङ्गैरलङ्कृतम् ॥ ०११ ॥

अनुव्रजति को न्वेष मामित्येव च सोऽब्रवीत् ।
अहं त्वदृश्यती नाम्ना तं स्नुषा प्रत्यभाषत ॥ ०१२ ॥

शक्तेर्भार्या महाभाग तपोयुक्ता तपस्विनी ॥ ०१२ ॥

वसिष्ठ उवाच ॥

पुत्रि कस्यैष साङ्गस्य वेदस्याध्ययनस्वनः ।
पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः ॥ ०१३ ॥

अदृश्यन्त्युवाच ॥

अयं कुक्षौ समुत्पन्नः शक्तेर्गर्भः सुतस्य ते ।
समा द्वादश तस्येह वेदानभ्यसतो मुने ॥ ०१४ ॥

गन्धर्व उवाच ॥

एवमुक्तस्ततो हृष्टो वसिष्ठः श्रेष्ठभागृषिः ।
अस्ति संतानमित्युक्त्वा मृत्योः पार्थ न्यवर्तत ॥ ०१५ ॥

ततः प्रतिनिवृत्तः स तया वध्वा सहानघ ।
कल्माषपादमासीनं ददर्श विजने वने ॥ ०१६ ॥

स तु दृष्ट्वैव तं राजा क्रुद्ध उत्थाय भारत ।
आविष्टो रक्षसोग्रेण इयेषात्तुं ततः स्म तम् ॥ ०१७ ॥

अदृश्यन्ती तु तं दृष्ट्वा क्रूरकर्माणमग्रतः ।
भयसंविग्नया वाचा वसिष्ठमिदमब्रवीत् ॥ ०१८ ॥

असौ मृत्युरिवोग्रेण दण्डेन भगवन्नितः ।
प्रगृहीतेन काष्ठेन राक्षसोऽभ्येति भीषणः ॥ ०१९ ॥

तं निवारयितुं शक्तो नान्योऽस्ति भुवि कश्चन ।
त्वदृतेऽद्य महाभाग सर्ववेदविदां वर ॥ ०२० ॥

त्राहि मां भगवन्पापादस्माद्दारुणदर्शनात् ।
रक्षो अत्तुमिह ह्यावां नूनमेतच्चिकीर्षति ॥ ०२१ ॥

# अध्याय १६८

वसिष्ठ उवाच ॥

मा भैः पुत्रि न भेतव्यं रक्षसस्ते कथञ्चन ।
नैतद्रक्षो भयं यस्मात्पश्यसि त्वमुपस्थितम् ॥ ००१ ॥

राजा कल्माषपादोऽयं वीर्यवान्प्रथितो भुवि ।
स एषोऽस्मिन्वनोद्देशे निवसत्यतिभीषणः ॥ ००२ ॥

गन्धर्व उवाच ॥

तमापतन्तं संप्रेक्ष्य वसिष्ठो भगवानृषिः ।
वारयामास तेजस्वी हुङ्कारेणैव भारत ॥ ००३ ॥

मन्त्रपूतेन च पुनः स तमभ्युक्ष्य वारिणा ।
मोक्षयामास वै घोराद्राक्षसाद्राजसत्तमम् ॥ ००४ ॥

स हि द्वादश वर्षाणि वसिष्ठस्यैव तेजसा ।
ग्रस्त आसीद्गृहेणेव पर्वकाले दिवाकरः ॥ ००५ ॥

रक्षसा विप्रमुक्तोऽथ स नृपस्तद्वनं महत् ।
तेजसा रञ्जयामास संध्याभ्रमिव भास्करः ॥ ००६ ॥

प्रतिलभ्य ततः सञ्ज्ञामभिवाद्य कृताञ्जलिः ।
उवाच नृपतिः काले वसिष्ठमृषिसत्तमम् ॥ ००७ ॥

सौदासोऽहं महाभाग याज्यस्ते द्विजसत्तम ।
अस्मिन्काले यदिष्टं ते ब्रूहि किं करवाणि ते ॥ ००८ ॥

वसिष्ठ उवाच ॥

वृत्तमेतद्यथाकालं गच्छ राज्यं प्रशाधि तत् ।
ब्राह्मणांश्च मनुष्येन्द्र मावमंस्थाः कदाचन ॥ ००९ ॥

राजोवाच ॥

नावमंस्याम्यहं ब्रह्मन्कदाचिद्ब्राह्मणर्षभान् ।
त्वन्निदेशे स्थितः शश्वत्पुजयिष्याम्यहं द्विजान् ॥ ०१० ॥

इक्ष्वाकूणां तु येनाहमनृणः स्यां द्विजोत्तम ।
तत्त्वत्तः प्राप्तुमिच्छामि वरं वेदविदां वर ॥ ०११ ॥

अपत्यायेप्सितां मह्यं महिषीं गन्तुमर्हसि ।
शीलरूपगुणोपेतामिक्ष्वाकुकुलवृद्धये ॥ ०१२ ॥

गन्धर्व उवाच ॥

ददानीत्येव तं तत्र राजानं प्रत्युवाच ह ।
वसिष्ठः परमेष्वासं सत्यसंधो द्विजोत्तमः ॥ ०१३ ॥

ततः प्रतिययौ काले वसिष्ठसहितोऽनघ ।
ख्यातं पुरवरं लोकेष्वयोध्यां मनुजेश्वरः ॥ ०१४ ॥

तं प्रजाः प्रतिमोदन्त्यः सर्वाः प्रत्युद्ययुस्तदा ।
विपाप्मानं महात्मानं दिवौकस इवेश्वरम् ॥ ०१५ ॥

अचिरात्स मनुष्येन्द्रो नगरीं पुण्यकर्मणाम् ।
विवेश सहितस्तेन वसिष्ठेन महात्मना ॥ ०१६ ॥

ददृशुस्तं ततो राजन्नयोध्यावासिनो जनाः ।
पुष्येण सहितं काले दिवाकरमिवोदितम् ॥ ०१७ ॥

स हि तां पूरयामास लक्ष्म्या लक्ष्मीवतां वरः ।

अयोध्यां व्योम शीतांशुः शरत्काल इवोदितः ॥ ०१८ ॥

संसिक्तमृष्टपन्थानं पताकोच्छ्रयभूषितम् ।
मनः प्रह्लादयामासा तस्य तत्पुरमुत्तमम् ॥ ०१९ ॥

तुष्टपुष्टजनाकीर्णा सा पुरी कुरुनन्दन ।
अशोभत तदा तेन शक्रेणेवामरावती ॥ ०२० ॥

ततः प्रविष्टे राजेन्द्रे तस्मिन्राजनि तां पुरीम् ।
तस्य राज्ञोऽऽज्ञया देवी वसिष्ठमुपचक्रमे ॥ ०२१ ॥

ऋतावथ महर्षिः स संबभूव तया सह ।
देव्या दिव्येन विधिना वसिष्ठः श्रेष्ठभागृषिः ॥ ०२२ ॥

अथ तस्यां समुत्पन्ने गर्भे स मुनिसत्तमः ।
राज्ञाभिवादितस्तेन जगाम पुनराश्रमम् ॥ ०२३ ॥

दीर्घकालधृतं गर्भं सुषाव न तु तं यदा ।
साथ देव्यश्मना कुक्षिं निर्बिभेद तदा स्वकम् ॥ ०२४ ॥

द्वादशेऽथ ततो वर्षे स जज्ञे मनुजर्षभ ।
अश्मको नाम राजर्षिः पोतनं यो न्यवेशयत् ॥ ०२५ ॥

# और्वोपाख्यानम्

## अध्याय १६९

गन्धर्व उवाच ॥

आश्रमस्था ततः पुत्रमदृश्यन्ती व्यजायत ।
शक्तेः कुलकरं राजन्द्वितीयमिव शक्तिनम् ॥ ००१ ॥

जातकर्मादिकास्तस्य क्रियाः स मुनिपुङ्गवः ।
पौत्रस्य भरतश्रेष्ठ चकार भगवान्स्वयम् ॥ ००२ ॥

परासुश्च यतस्तेन वसिष्ठः स्थापितस्तदा ।
गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥ ००३ ॥

अमन्यत स धर्मात्मा वसिष्ठं पितरं तदा ।
जन्मप्रभृति तस्मिंश्च पितरीव व्यवर्तत ॥ ००४ ॥

स तात इति विप्रर्षिं वसिष्ठं प्रत्यभाषत ।
मातुः समक्षं कौन्तेय अदृश्यन्त्याः परंतप ॥ ००५ ॥

तातेति परिपूर्णार्थं तस्य तन्मधुरं वचः ।
अदृश्यन्त्यश्रुपूर्णाक्षी शृण्वन्ती तमुवाच ह ॥ ००६ ॥

मा तात तात तातेति न ते तातो महामुनिः ।
रक्षसा भक्षितस्तात तव तातो वनान्तरे ॥ ००७ ॥

मन्यसे यं तु तातेति नैष तातस्तवानघ ।
आर्यस्त्वेष पिता तस्य पितुस्तव महात्मनः ॥ ००८ ॥

स एवमुक्तो दुःखार्तः सत्यवागृषिसत्तमः ।

सर्वलोकविनाशाय मतिं चक्रे महामनाः ॥ ००९ ॥

तं तथा निश्चितात्मानं महात्मानं महातपाः ।
वसिष्ठो वारयामास हेतुना येन तच्छृणु ॥ ०१० ॥

वसिष्ठ उवाच ॥

कृतवीर्य इति ख्यातो बभूव नृपतिः क्षितौ ।
याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभः ॥ ०११ ॥

स तानग्रभुजस्तात धान्येन च धनेन च ।
सोमान्ते तर्पयामास विपुलेन विशां पतिः ॥ ०१२ ॥

तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कदाचन ।
बभूव तत्कुलेयानां द्रव्यकार्यमुपस्थितम् ॥ ०१३ ॥

ते भृगूणां धनं ज्ञात्वा राजानः सर्व एव ह ।
याचिष्णवोऽभिजग्मुस्तांस्तात भार्गवसत्तमान् ॥ ०१४ ॥

भूमौ तु निदधुः केचिद्भृगवो धनमक्षयम् ।
ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम् ॥ ०१५ ॥

भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम् ।
क्षत्रियाणां तदा तात कारणान्तरदर्शनात् ॥ ०१६ ॥

ततो महीतलं तात क्षत्रियेण यदृच्छया ।
खनताधिगतं वित्तं केनचिद्भृगुवेश्मनि ॥ ०१७ ॥

तद्वित्तं ददृशुः सर्वे समेताः क्षत्रियर्षभाः ॥ ०१७ ॥

अवमन्य ततः कोपाद्भृगूंस्ताञ्शरणागतान् ।

निजघ्नुस्ते महेष्वासाः सर्वांस्तान्निशितैः शरैः ॥ ०१८ ॥

आ गर्भादनुकृन्तन्तश्चेरुश्चैव वसुंधराम् ॥ ०१८ ॥

तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा ।
भृगुपत्न्यो गिरिं तात हिमवन्तं प्रपेदिरे ॥ ०१९ ॥

तासामन्यतमा गर्भं भयाद्दाधार तैजसम् ।
ऊरुणैकेन वामोरूर्भर्तुः कुलविवृद्धये ॥ ०२० ॥

ददृशुर्ब्राह्मणीं तां ते दीप्यमानां स्वतेजसा ॥ ०२० ॥

अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह ।
मुष्णन्दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः ॥ ०२१ ॥

ततश्चक्षुर्वियुक्तास्ते गिरिदुर्गेषु बभ्रमुः ॥ ०२१ ॥

ततस्ते मोघसङ्कल्पा भयार्ताः क्षत्रियर्षभाः ।
ब्रह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम् ॥ ०२२ ॥

ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः ।
ज्योतिःप्रहीणा दुःखार्ताः शान्तार्चिष इवाग्नयः ॥ ०२३ ॥

भगवत्याः प्रसादेन गच्छेत्क्षत्रं सचक्षुषम् ।
उपारम्य च गच्छेम सहिताः पापकर्मणः ॥ ०२४ ॥

सपुत्रा त्वं प्रसादं नः सर्वेषां कर्तुमर्हसि ।
पुनर्दृष्टिप्रदानेन राज्ञः संत्रातुमर्हसि ॥ ०२५ ॥

# अध्याय १७०

ब्राह्मण्युवाच ॥

नाहं गृह्णामि वस्तात दृष्टीर्नास्ति रुषान्विता ।
अयं तु भार्गवो नूनमूरुजः कुपितोऽद्य वः ॥ ००१ ॥

तेन चक्षूंषि वस्तात नूनं कोपान्महात्मना ।
स्मरता निहतान्बन्धूनादत्तानि न संशयः ॥ ००२ ॥

गर्भानपि यदा यूयं भृगूणां घ्नत पुत्रकाः ।
तदायमूरुणा गर्भो मया वर्षशतं धृतः ॥ ००३ ॥

षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव हि ।
विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया ॥ ००४ ॥

सोऽयं पितृवधान्नूनं क्रोधाद्वो हन्तुमिच्छति ।
तेजसा यस्य दिव्येन चक्षूंषि मुषितानि वः ॥ ००५ ॥

तमिमं तात याचध्वमौर्वं मम सुतोत्तमम् ।
अयं वः प्रणिपातेन तुष्टो दृष्टीर्विमोक्ष्यति ॥ ००६ ॥

गन्धर्व उवाच ॥

एवमुक्तास्ततः सर्वे राजानस्ते तमूरुजम् ।
ऊचुः प्रसीदेति तदा प्रसादं च चकार सः ॥ ००७ ॥

अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः ।
स और्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत ॥ ००८ ॥

चक्षूंषि प्रतिलभ्याथ प्रतिजग्मुस्ततो नृपाः ।

भार्गवस्तु मुनिर्मेने सर्वलोकपराभवम् ॥ ००९ ॥

स चक्रे तात लोकानां विनाशाय महामनाः ।
सर्वेषामेव कार्त्स्न्येन मनः प्रवणमात्मनः ॥ ०१० ॥

इच्छन्नपचितिं कर्तुं भृगूणां भृगुसत्तमः ।
सर्वलोकविनाशाय तपसा महतैधितः ॥ ०११ ॥

तापयामास लोकान्स सदेवासुरमानुषान् ।
तपसोग्रेण महता नन्दयिष्यन्पितामहान् ॥ ०१२ ॥

ततस्तं पितरस्तात विज्ञाय भृगुसत्तमम् ।
पितृलोकादुपागम्य सर्व ऊचुरिदं वचः ॥ ०१३ ॥

और्व दृष्टः प्रभावस्ते तपसोग्रस्य पुत्रक ।
प्रसादं कुरु लोकानां नियच्छ क्रोधमात्मनः ॥ ०१४ ॥

नानीशैर्हि तदा तात भृगुभिर्भावितात्मभिः ।
वधोऽभ्युपेक्षितः सर्वैः क्षत्रियाणां विहिंसताम् ॥ ०१५ ॥

आयुषा हि प्रकृष्टेन यदा नः खेद आविशत् ।
तदास्माभिर्वधस्तात क्षत्रियैरीप्सितः स्वयम् ॥ ०१६ ॥

निखातं तद्धि वै वित्तं केनचिद्भृगुवेश्मनि ।
वैरायैव तदा न्यस्तं क्षत्रियान्कोपयिष्णुभिः ॥ ०१७ ॥

किं हि वित्तेन नः कार्यं स्वर्गेप्सूनां द्विजर्षभ ॥ ०१७ ॥

यदा तु मृत्युरादातुं न नः शक्नोति सर्वशः ।
तदास्माभिरयं दृष्ट उपायस्तात संमतः ॥ ०१८ ॥

आत्महा च पुमांस्तात न लोका.ण्ल्लभते शुभान् ।
ततोऽस्माभिः समीक्ष्यैवं नात्मनात्मा विनाशितः ॥ ०१९ ॥

न चैतन्नः प्रियं तात यदिदं कर्तुमिच्छसि ।
नियच्छेदं मनः पापात्सर्वलोकपराभवात् ॥ ०२० ॥

न हि नः क्षत्रियाः केचिन्न लोकाः सप्त पुत्रक ।
दूषयन्ति तपस्तेजः क्रोधमुत्पतितं जहि ॥ ०२१ ॥

---

# अध्याय १७१

और्व उवाच ॥

उक्तवानस्मि यां क्रोधात्प्रतिज्ञां पितरस्तदा ।
सर्वलोकविनाशाय न सा मे वितथा भवेत् ॥ ००१ ॥

वृथारोषप्रतिज्ञो हि नाहं जीवितुमुत्सहे ।
अनिस्तीर्णो हि मां रोषो दहेदग्निरिवारणिम् ॥ ००२ ॥

यो हि कारणतः क्रोधं सञ्जातं क्षन्तुमर्हति ।
नालं स मनुजः सम्यक्त्रिवर्गं परिरक्षितुम् ॥ ००३ ॥

अशिष्टानां नियन्ता हि शिष्टानां परिरक्षता ।
स्थाने रोषः प्रयुक्तः स्यान्नृपैः स्वर्गजिगीषुभिः ॥ ००४ ॥

अश्रौषमहमूरुस्थो गर्भशय्यागतस्तदा ।
आरावं मातृवर्गस्य भृगूणां क्षत्रियैर्वधे ॥ ००५ ॥

सामरैर्हि यदा लोकैर्भृगूणां क्षत्रियाधमैः ।
आगर्भोत्सादनं क्षान्तं तदा मां मन्युराविषत् ॥ ००६ ॥

आपूर्णकोशाः किल मे मातरः पितरस्तथा ।
भयात्सर्वेषु लोकेषु नाधिजग्मुः परायणम् ॥ ००७ ॥

तान्भृगूणां तदा दारान्कश्चिन्नाभ्यवपद्यत ।
यदा तदा दधारेयमूरुणैकेन मां शुभा ॥ ००८ ॥

प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते ।
तदा सर्वेषु लोकेषु पापकृन्नोपपद्यते ॥ ००९ ॥

यदा तु प्रतिषेद्धारं पापो न लभते क्वचित् ।
तिष्ठन्ति बहवो लोके तदा पापेषु कर्मसु ॥ ०१० ॥

जानन्नपि च यः पापं शक्तिमान्न नियच्छति ।
ईशः सन्सोऽपि तेनैव कर्मणा संप्रयुज्यते ॥ ०११ ॥

राजभिश्चेश्वरैश्चैव यदि वै पितरो मम ।
शक्तैर्न शकिता त्रातुमिष्टं मत्वेह जीवितम् ॥ ०१२ ॥

अत एषामहं क्रुद्धो लोकानामीश्वरोऽद्य सन् ।
भवतां तु वचो नाहमलं समतिवर्तितुम् ॥ ०१३ ॥

मम चापि भवेदेतदीश्वरस्य सतो महत् ।
उपेक्षमाणस्य पुनर्लोकानां किल्बिषाद्भयम् ॥ ०१४ ॥

यश्चायं मन्युजो मेऽग्निर्लोकानादातुमिच्छति ।
दहेदेष च मामेव निगृहीतः स्वतेजसा ॥ ०१५ ॥

भवतां च विजानामि सर्वलोकहितेप्सुताम् ।
तस्माद्विदध्वं यच्छ्रेयो लोकानां मम चेश्वराः ॥ ०१६ ॥

पितर ऊचुः ॥

य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति ।
अप्सु तं मुञ्च भद्रं ते लोका ह्यप्सु प्रतिष्ठिताः ॥ ०१७ ॥

आपोमयाः सर्वरसाः सर्वमापोमयं जगत् ।
तस्मादप्सु विमुञ्चेमं क्रोधाग्निं द्विजसत्तम ॥ ०१८ ॥

अयं तिष्ठतु ते विप्र यदीच्छसि महोदधौ ।
मन्युजोऽग्निर्दहन्नापो लोका ह्यापोमयाः स्मृताः ॥ ०१९ ॥

एवं प्रतिज्ञा सत्येयं तवानघ भविष्यति ।
न चैव सामरा लोका गमिष्यन्ति पराभवम् ॥ ०२० ॥

वसिष्ठ उवाच ॥

ततस्तं क्रोधजं तात और्वोऽग्निं वरुणालये ।
उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ ॥ ०२१ ॥

महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः ।
तमग्निमुद्गिरन्वक्त्रात्पिबत्यापो महोदधौ ॥ ०२२ ॥

तस्मात्त्वमपि भद्रं ते न लोकान्हन्तुमर्हसि ।
पराशर परान्धर्माञ्जानञ्ज्ञानवतां वर ॥ ०२३ ॥

# अध्याय १७२

गन्धर्व उवाच ॥

एवमुक्तः स विप्रर्षिर्वसिष्ठेन महात्मना ।
न्ययच्छदात्मनः कोपं सर्वलोकपराभवात् ॥ ००१ ॥

ईजे च स महातेजाः सर्ववेदविदां वरः ।
ऋषी राक्षससत्रेण शाक्तेयोऽथ पराशरः ॥ ००२ ॥

ततो वृद्धांश्च बालांश्च राक्षसान्स महामुनिः ।
ददाह वितते यज्ञे शक्तेर्वधमनुस्मरन् ॥ ००३ ॥

न हि तं वारयामास वसिष्ठो रक्षसां वधात् ।
द्वितीयामस्य मा भाङ्क्षं प्रतिज्ञामिति निश्चयात् ॥ ००४ ॥

त्रयाणां पावकानां स सत्रे तस्मिन्महामुनिः ।
आसीत्पुरस्ताद्दीप्तानां चतुर्थ इव पावकः ॥ ००५ ॥

तेन यज्ञेन शुभ्रेण हूयमानेन युक्तितः ।
तद्विदीपितमाकाशं सूर्येणेव घनात्यये ॥ ००६ ॥

तं वसिष्ठादयः सर्वे मुनयस्तत्र मेनिरे ।
तेजसा दिवि दीप्यन्तं द्वितीयमिव भास्करम् ॥ ००७ ॥

ततः परमदुष्प्रापमन्यैर्ऋषिरुदारधीः ।
समापिपयिषुः सत्रं तमत्रिः समुपागमत् ॥ ००८ ॥

तथा पुलस्त्यः पुलहः क्रतुश्चैव महाक्रतुम् ।
उपाजग्मुरमित्रघ्न रक्षसां जीवितेप्सया ॥ ००९ ॥

पुलस्त्यस्तु वधात्तेषां रक्षसां भरतर्षभ ।
उवाचेदं वचः पार्थ पराशरमरिंदमम् ॥ ०१० ॥

कच्चित्तातापविघ्नं ते कच्चिन्नन्दसि पुत्रक ।
अजानतामदोषाणां सर्वेषां रक्षसां वधात् ॥ ०११ ॥

प्रजोच्छेदमिमं मह्यं सर्वं सोमपसत्तम ।
अधर्मिष्ठं वरिष्ठः सन्कुरुषे त्वं पराशर ॥ ०१२ ॥

राजा कल्माषपादश्च दिवमारोढुमिच्छति ॥ ०१२ ॥

ये च शक्त्यवराः पुत्रा वसिष्ठस्य महामुनेः ।
ते च सर्वे मुदा युक्ता मोदन्ते सहिताः सुरैः ॥ ०१३ ॥

सर्वमेतद्वसिष्ठस्य विदितं वै महामुने ॥ ०१३ ॥

रक्षसां च समुच्छेद एष तात तपस्विनाम् ।
निमित्तभूतस्त्वं चात्र क्रतौ वासिष्ठनन्दन ॥ ०१४ ॥

स सत्रं मुञ्च भद्रं ते समाप्तमिदमस्तु ते ॥ ०१४ ॥

एवमुक्तः पुलस्त्येन वसिष्ठेन च धीमता ।
तदा समापयामास सत्रं शाक्तिः पराशरः ॥ ०१५ ॥

सर्वराक्षससत्राय संभृतं पावकं मुनिः ।
उत्तरे हिमवत्पार्श्वे उत्ससर्ज महावने ॥ ०१६ ॥

स तत्राद्यापि रक्षांसि वृक्षानश्मान एव च ।
भक्षयन्दृश्यते वह्निः सदा पर्वणि पर्वणि ॥ ०१७ ॥

# अध्याय १७३

अर्जुन उवाच ॥

राज्ञा कल्माषपादेन गुरौ ब्रह्मविदां वरे ।
कारणं किं पुरस्कृत्य भार्या वै संनियोजिता ॥ ००१ ॥

जानता च परं धर्मं लोक्यं तेन महात्मना ।
अगम्यागमनं कस्माद्वसिष्ठेन महात्मना ॥ ००२ ॥

कृतं तेन पुरा सर्वं वक्तुमर्हसि पृच्छतः ॥ ००२ ॥

गन्धर्व उवाच ॥

धनञ्जय निबोधेदं यन्मां त्वं परिपृच्छसि ।
वसिष्ठं प्रति दुर्धर्षं तथामित्रसहं नृपम् ॥ ००३ ॥

कथितं ते मया पूर्वं यथा शप्तः स पार्थिवः ।
शक्तिना भरतश्रेष्ठ वासिष्ठेन महात्मना ॥ ००४ ॥

स तु शापवशं प्राप्तः क्रोधपर्याकुलेक्षणः ।
निर्जगाम पुराद्राजा सहदारः परंतपः ॥ ००५ ॥

अरण्यं निर्जनं गत्वा सदारः परिचक्रमे ।
नानामृगगणाकीर्णं नानासत्त्वसमाकुलम् ॥ ००६ ॥

नानागुल्मलताच्छन्नं नानाद्रुमसमावृतम् ।
अरण्यं घोरसंनादं शापग्रस्तः परिभ्रमन् ॥ ००७ ॥

स कदाचित्क्षुधाविष्टो मृगयन्भक्षमात्मनः ।
ददर्श सुपरिक्लिष्टः कस्मिंश्चिद्वननिर्झरे ॥ ००८ ॥

ब्राह्मणीं ब्राह्मणं चैव मैथुनायोपसङ्गतौ ॥ ००८ ॥

तौ समीक्ष्य तु वित्रस्तावकृतार्थौ प्रधावितौ ।
तयोश्च द्रवतोर्विप्रं जगृहे नृपतिर्बलात् ॥ ००९ ॥

दृष्ट्वा गृहीतं भर्तारमथ ब्राह्मण्यभाषत ।
शृणु राजन्वचो मह्यं यत्त्वां वक्ष्यामि सुव्रत ॥ ०१० ॥

आदित्यवंशप्रभवस्त्वं हि लोकपरिश्रुतः ।
अप्रमत्तः स्थितो धर्मे गुरुशुश्रूषणे रतः ॥ ०११ ॥

शापं प्राप्तोऽसि दुर्धर्ष न पापं कर्तुमर्हसि ।
ऋतुकाले तु संप्राप्ते भर्त्रास्म्यद्य समागता ॥ ०१२ ॥

अकृतार्था ह्यहं भर्त्रा प्रसवार्थश्च मे महान् ।
प्रसीद नृपतिश्रेष्ठ भर्ता मेऽयं विसृज्यताम् ॥ ०१३ ॥

एवं विक्रोशमानायास्तस्याः स सुनृशंसकृत् ।
भर्तारं भक्षयामास व्याघ्रो मृगमिवेप्सितम् ॥ ०१४ ॥

तस्याः क्रोधाभिभूताया यदश्रु न्यपतद्भुवि ।
सोऽग्निः समभवद्दीप्तस्तं च देशं व्यदीपयत् ॥ ०१५ ॥

ततः सा शोकसंतप्ता भर्तृव्यसनदुःखिता ।
कल्माषपादं राजर्षिमशपद्ब्राह्मणी रुषा ॥ ०१६ ॥

यस्मान्ममाकृतार्थायास्त्वया क्षुद्र नृशंसवत् ।
प्रेक्षन्त्या भक्षितो मेऽद्य प्रभुर्भर्ता महायशाः ॥ ०१७ ॥

तस्मात्त्वमपि दुर्बुद्धे मच्छापपरिविक्षतः ।
पत्नीमृतावनुप्राप्य सद्यस्त्यक्ष्यसि जीवितम् ॥ ०१८ ॥

यस्य चर्षेर्वसिष्ठस्य त्वया पुत्रा विनाशिताः ।
तेन सङ्गम्य ते भार्या तनयं जनयिष्यति ॥ ०१९ ॥

स ते वंशकरः पुत्रो भविष्यति नृपाधम ॥ ०१९ ॥

एवं शप्त्वा तु राजानं सा तमाङ्गिरसी शुभा ।
तस्यैव संनिधौ दीप्तं प्रविवेश हुताशनम् ॥ ०२० ॥

वसिष्ठश्च महाभागः सर्वमेतदपश्यत ।
ज्ञानयोगेन महता तपसा च परंतप ॥ ०२१ ॥

मुक्तशापश्च राजर्षिः कालेन महता ततः ।
ऋतुकालेऽभिपतितो मदयन्त्या निवारितः ॥ ०२२ ॥

न हि सस्मार नृपतिस्तं शापं शापमोहितः ।
देव्याः सोऽथ वचः श्रुत्वा स तस्या नृपसत्तमः ॥ ०२३ ॥

तं च शापमनुस्मृत्य पर्यतप्यद्भृशं तदा ॥ ०२३ ॥

एतस्मात्कारणाद्राजा वसिष्ठं संन्ययोजयत् ।
स्वदारे भरतश्रेष्ठ शापदोषसमन्वितः ॥ ०२४ ॥

# द्रौपदीस्वयंवरपर्व

## अध्याय १७४

अर्जुन उवाच ॥

अस्माकमनुरूपो वै यः स्याद्गन्धर्व वेदवित् ।
पुरोहितस्तमाचक्ष्व सर्वं हि विदितं तव ॥ ००१ ॥

गन्धर्व उवाच ॥

यवीयान्देवलस्यैष वने भ्राता तपस्यति ।
धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथ ॥ ००२ ॥

वैशंपायन उवाच ॥

ततोऽर्जुनोऽस्त्रमाग्नेयं प्रददौ तद्यथाविधि ।
गन्धर्वाय तदा प्रीतो वचनं चेदमब्रवीत् ॥ ००३ ॥

त्वय्येव तावत्तिष्ठन्तु हया गन्धर्वसत्तम ।
कर्मकाले ग्रहीष्यामि स्वस्ति तेऽस्त्विति चाब्रवीत् ॥ ००४ ॥

तेऽन्योन्यमभिसंपूज्य गन्धर्वः पाण्डवाश्च ह ।
रम्याद्भागीरथीकच्छाद्यथाकामं प्रतस्थिरे ॥ ००५ ॥

तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमं तु ते ।
तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत ॥ ००६ ॥

तान्धौम्यः प्रतिजग्राह सर्ववेदविदां वरः ।
पाद्येन फलमूलेन पौरोहित्येन चैव ह ॥ ००७ ॥

ते तदाशंसिरे लब्धां श्रियं राज्यं च पाण्डवाः ।
तं ब्राह्मणं पुरस्कृत्य पाञ्चाल्याश्च स्वयंवरम् ॥ ००८ ॥

मातृषष्ठास्तु ते तेन गुरुणा सङ्गतास्तदा ।
नाथवन्तमिवात्मानं मेनिरे भरतर्षभाः ॥ ००९ ॥

स हि वेदार्थतत्त्वज्ञस्तेषां गुरुरुदारधीः ।
तेन धर्मविदा पार्था याज्याः सर्वविदा कृताः ॥ ०१० ॥

वीरांस्तु स हि तान्मेने प्राप्तराज्यान्स्वधर्मतः ।
बुद्धिवीर्यबलोत्साहैर्युक्तान्देवानिवापरान् ॥ ०११ ॥

कृतस्वस्त्ययनास्तेन ततस्ते मनुजाधिपाः ।
मेनिरे सहिता गन्तुं पाञ्चाल्यास्तं स्वयंवरम् ॥ ०१२ ॥

---

# अध्याय १७५

वैशंपायन उवाच ॥

ततस्ते नरशार्दूला भ्रातरः पञ्च पाण्डवाः ।
प्रययुर्द्रौपदीं द्रष्टुं तं च देवमहोत्सवम् ॥ ००१ ॥

ते प्रयाता नरव्याघ्रा मात्रा सह परंतपाः ।
ब्राह्मणान्ददृशुर्मार्गे गच्छतः सगणान्बहून् ॥ ००२ ॥

तानूचुर्ब्राह्मणा राजन्पाण्डवान्ब्रह्मचारिणः ।
क्व भवन्तो गमिष्यन्ति कुतो वागच्छतेति ह ॥ ००३ ॥

युधिष्ठिर उवाच ॥

आगतानेकचक्रायाः सोदर्यान्देवदर्शिनः ।
भवन्तो हि विजानन्तु सहितान्मातृचारिणः ॥ ००४ ॥

ब्राह्मणा ऊचुः ॥

गच्छताद्यैव पाञ्चालान्द्रुपदस्य निवेशनम् ।
स्वयंवरो महांस्तत्र भविता सुमहाधनः ॥ ००५ ॥

एकसार्थं प्रयाताः स्मो वयमप्यत्र गामिनः ।
तत्र ह्यद्भुतसङ्काशो भविता सुमहोत्सवः ॥ ००६ ॥

यज्ञसेनस्य दुहिता द्रुपदस्य महात्मनः ।
वेदीमध्यात्समुत्पन्ना पद्मपत्रनिभेक्षणा ॥ ००७ ॥

दर्शनीयानवद्याङ्गी सुकुमारी मनस्विनी ।
धृष्टद्युम्नस्य भगिनी द्रोणशत्रोः प्रतापिनः ॥ ००८ ॥

यो जातः कवची खड्गी सशरः सशरासनः ।
सुसमिद्धे महाबाहुः पावके पावकप्रभः ॥ ००९ ॥

स्वसा तस्यानवद्याङ्गी द्रौपदी तनुमध्यमा ।
नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रवायति ॥ ०१० ॥

तां यज्ञसेनस्य सुतां स्वयंवरकृतक्षणाम् ।
गच्छामहे वयं द्रष्टुं तं च देवमहोत्सवम् ॥ ०११ ॥

राजानो राजपुत्राश्च यज्वानो भूरिदक्षिणाः ।
स्वाध्यायवन्तः शुचयो महात्मानो यतव्रताः ॥ ०१२ ॥

तरुणा दर्शनीयाश्च नानादेशसमागताः ।
महारथाः कृतास्त्राश्च समुपैष्यन्ति भूमिपाः ॥ ०१३ ॥

ते तत्र विविधान्दायान्विजयार्थं नरेश्वराः ।
प्रदास्यन्ति धनं गाश्च भक्ष्यं भोज्यं च सर्वशः ॥ ०१४ ॥

प्रतिगृह्य च तत्सर्वं दृष्ट्वा चैव स्वयंवरम् ।
अनुभूयोत्सवं चैव गमिष्यामो यथेप्सितम् ॥ ०१५ ॥

नटा वैतालिकाश्चैव नर्तकाः सूतमागधाः ।
नियोधकाश्च देशेभ्यः समेष्यन्ति महाबलाः ॥ ०१६ ॥

एवं कौतूहलं कृत्वा दृष्ट्वा च प्रतिगृह्य च ।
सहास्माभिर्महात्मानः पुनः प्रतिनिवर्त्स्यथ ॥ ०१७ ॥

दर्शनीयांश्च वः सर्वान्देवरूपानवस्थितान् ।
समीक्ष्य कृष्णा वरयेत्सङ्गत्यान्यतमं वरम् ॥ ०१८ ॥

अयं भ्राता तव श्रीमान्दर्शनीयो महाभुजः ।
नियुध्यमानो विजयेत्सङ्गत्या द्रविणं बहु ॥ ०१९ ॥

युधिष्ठिर उवाच ॥

परमं भो गमिष्यामो द्रष्टुं देवमहोत्सवम् ।
भवद्भिः सहिताः सर्वे कन्यायास्तं स्वयंवरम् ॥ ०२० ॥

# अध्याय १७६

वैशंपायन उवाच ॥

एवमुक्ताः प्रयातास्ते पाण्डवा जनमेजय ।
राज्ञा दक्षिणपाञ्चालान्द्रुपदेनाभिरक्षितान् ॥ ००१ ॥

ततस्ते तं महात्मानं शुद्धात्मानमकल्मषम् ।
ददृशुः पाण्डवा राजन्पथि द्वैपायनं तदा ॥ ००२ ॥

तस्मै यथावत्सत्कारं कृत्वा तेन च सान्त्विताः ।
कथान्ते चाभ्यनुज्ञाताः प्रययुर्द्रुपदक्षयम् ॥ ००३ ॥

पश्यन्तो रमणीयानि वनानि च सरांसि च ।
तत्र तत्र वसन्तश्च शनैर्जग्मुर्महारथाः ॥ ००४ ॥

स्वाध्यायवन्तः शुचयो मधुराः प्रियवादिनः ।
आनुपूर्व्येण संप्राप्ताः पाञ्चालान्कुरुनन्दनाः ॥ ००५ ॥

ते तु दृष्ट्वा पुरं तच्च स्कन्धावारं च पाण्डवाः ।
कुम्भकारस्य शालायां निवेशं चक्रिरे तदा ॥ ००६ ॥

तत्र भैक्षं समाजह्रुर्ब्राह्मीं वृत्तिं समाश्रिताः ।
तांश्च प्राप्तांस्तदा वीराञ्जज्ञिरे न नराः क्वचित् ॥ ००७ ॥

यज्ञसेनस्य कामस्तु पाण्डवाय किरीटिने ।
कृष्णां दद्यामिति सदा न चैतद्विवृणोति सः ॥ ००८ ॥

सोऽन्वेषमाणः कौन्तेयान्पाञ्चाल्यो जनमेजय ।
दृढं धनुरनायम्यं कारयामास भारत ॥ ००९ ॥

यन्त्रं वैहायसं चापि कारयामास कृत्रिमम् ।
तेन यन्त्रेण सहितं राजा लक्ष्यं च काञ्चनम् ॥ ०१० ॥

द्रुपद उवाच ॥

इदं सज्यं धनुः कृत्वा सज्येनानेन सायकैः ।
अतीत्य लक्ष्यं यो वेद्धा स लब्धा मत्सुतामिति ॥ ०११ ॥

वैशंपायन उवाच ॥

इति स द्रुपदो राजा सर्वतः समघोषयत् ।
तच्छ्रुत्वा पार्थिवाः सर्वे समीयुस्तत्र भारत ॥ ०१२ ॥

ऋषयश्च महात्मानः स्वयंवरदिदृक्षया ।
दुर्योधनपुरोगाश्च सकर्णाः कुरवो नृप ॥ ०१३ ॥

ब्राह्मणाश्च महाभागा देशेभ्यः समुपागमन् ।
तेऽभ्यर्चिता राजगणा द्रुपदेन महात्मना ॥ ०१४ ॥

ततः पौरजनाः सर्वे सागरोद्धूतनिःस्वनाः ।
शिशुमारपुरं प्राप्य न्यविशंस्ते च पार्थिवाः ॥ ०१५ ॥

प्रागुत्तरेण नगराद्भूमिभागे समे शुभे ।
समाजवाटः शुशुभे भवनैः सर्वतो वृतः ॥ ०१६ ॥

प्राकारपरिखोपेतो द्वारतोरणमण्डितः ।
वितानेन विचित्रेण सर्वतः समवस्तृतः ॥ ०१७ ॥

तूर्यौघशतसङ्कीर्णः परार्ध्यागुरुधूपितः ।
चन्दनोदकसिक्तश्च माल्यदामैश्च शोभितः ॥ ०१८ ॥

कैलासशिखरप्रख्यैर्नभस्तलविलेखिभिः ।
सर्वतः संवृतैर्नद्धः प्रासादैः सुकृतोच्छ्रितैः ॥ ०१९ ॥

सुवर्णजालसंवीतैर्मणिकुट्टिमभूषितैः ।
सुखारोहणसोपानैर्महासनपरिच्छदैः ॥ ०२० ॥

अग्राम्यसमवच्छन्नैरगुरूत्तमवासितैः ।
हंसाच्छवर्णैर्बहुभिरायोजनसुगन्धिभिः ॥ ०२१ ॥

असंबाधशतद्वारैः शयनासनशोभितैः ।
बहुधातुपिनद्धाङ्गैर्हिमवच्छिखरैरिव ॥ ०२२ ॥

तत्र नानाप्रकारेषु विमानेषु स्वलङ्कृताः ।
स्पर्धमानास्तदान्योन्यं निषेदुः सर्वपार्थिवाः ॥ ०२३ ॥

तत्रोपविष्टान्ददृशुर्महासत्त्वपराक्रमान् ।
राजसिंहान्महाभागान्कृष्णागुरुविभूषितान् ॥ ०२४ ॥

महाप्रसादान्ब्रह्मण्यान्स्वराष्ट्रपरिरक्षिणः ।
प्रियान्सर्वस्य लोकस्य सुकृतैः कर्मभिः शुभैः ॥ ०२५ ॥

मञ्चेषु च परार्ध्येषु पौरजानपदा जनाः ।
कृष्णादर्शनतुष्ट्यर्थं सर्वतः समुपाविशन् ॥ ०२६ ॥

ब्राह्मणैस्ते च सहिताः पाण्डवाः समुपाविशन् ।
ऋद्धिं पाञ्चालराजस्य पश्यन्तस्तामनुत्तमाम् ॥ ०२७ ॥

ततः समाजो ववृधे स राजन्दिवसान्बहून् ।
रत्नप्रदानबहुलः शोभितो नटनर्तकैः ॥ ०२८ ॥

वर्तमाने समाजे तु रमणीयेऽह्नि षोडशे ।

आप्लुताङ्गी सुवसना सर्वाभरणभूषिता ॥ ०२९ ॥

वीरकांस्यमुपादाय काञ्चनं समलङ्कृतम् ।
अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ॥ ०३० ॥

पुरोहितः सोमकानां मन्त्रविद्ब्राह्मणः शुचिः ।
परिस्तीर्य जुहावाग्निमाज्येन विधिना तदा ॥ ०३१ ॥

स तर्पयित्वा ज्वलनं ब्राह्मणान्स्वस्ति वाच्य च ।
वारयामास सर्वाणि वादित्राणि समन्ततः ॥ ०३२ ॥

निःशब्दे तु कृते तस्मिन्धृष्टद्युम्नो विशां पते ।
रङ्गमध्यगतस्तत्र मेघगम्भीरया गिरा ॥ ०३३ ॥

वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥ ०३३ ॥

इदं धनुर्लक्ष्यमिमे च बाणाः ; शृण्वन्तु मे पार्थिवाः सर्व एव ।
यन्त्रच्छिद्रेणाभ्यतिक्रम्य लक्ष्यं ; समर्पयध्वं खगमैर्दशार्धैः ॥ ०३४ ॥

एतत्कर्ता कर्म सुदुष्करं यः ; कुलेन रूपेण बलेन युक्तः ।
तस्याद्य भार्या भगिनी ममेयं ; कृष्णा भवित्री न मृषा ब्रवीमि ॥ ०३५ ॥

तानेवमुक्त्वा द्रुपदस्य पुत्रः ; पश्चादिदं द्रौपदीमभ्युवाच ।
नाम्ना च गोत्रेण च कर्मणा च ; सङ्कीर्तयंस्तान्नृपतीन्समेतान् ॥ ०३६ ॥

# अध्याय १७७

धृष्टद्युम्न उवाच ॥

दुर्योधनो दुर्विषहो दुर्मुखो दुष्प्रधर्षणः ।
विविंशतिर्विकर्णश्च सहो दुःशासनः समः ॥ ००१ ॥

युयुत्सुर्वातवेगश्च भीमवेगधरस्तथा ।
उग्रायुधो बलाकी च कनकायुर्विरोचनः ॥ ००२ ॥

सुकुण्डलश्चित्रसेनः सुवर्चाः कनकध्वजः ।
नन्दको बाहुशाली च कुण्डजो विकटस्तथा ॥ ००३ ॥

एते चान्ये च बहवो धार्तराष्ट्रा महाबलाः ।
कर्णेन सहिता वीरास्त्वदर्थं समुपागताः ॥ ००४ ॥

शतसंख्या महात्मानः प्रथिताः क्षत्रियर्षभाः ॥ ००४ ॥

शकुनिश्च बलश्चैव वृषकोऽथ बृहद्बलः ।
एते गान्धारराजस्य सुताः सर्वे समागताः ॥ ००५ ॥

अश्वत्थामा च भोजश्च सर्वशस्त्रभृतां वरौ ।
समवेतौ महात्मानौ त्वदर्थे समलङ्कृतौ ॥ ००६ ॥

बृहन्तो मणिमांश्चैव दण्डधारश्च वीर्यवान् ।
सहदेवो जयत्सेनो मेघसंधिश्च मागधः ॥ ००७ ॥

विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ।
वार्धक्षेमिः सुवर्चाश्च सेनाबिन्दुश्च पार्थिवः ॥ ००८ ॥

अभिभूः सह पुत्रेण सुदाम्ना च सुवर्चसा ।

सुमित्रः सुकुमारश्च वृकः सत्यधृतिस्तथा ॥ ००९ ॥

सूर्यध्वजो रोचमानो नीलश्चित्रायुधस्तथा ।
अंशुमांश्चेकितानश्च श्रेणिमांश्च महाबलः ॥ ०१० ॥

समुद्रसेनपुत्रश्च चन्द्रसेनः प्रतापवान् ।
जलसंधः पितापुत्रौ सुदण्डो दण्ड एव च ॥ ०११ ॥

पौण्ड्रको वासुदेवश्च भगदत्तश्च वीर्यवान् ।
कलिङ्गस्ताम्रलिप्तश्च पत्तनाधिपतिस्तथा ॥ ०१२ ॥

मद्रराजस्तथा शल्यः सहपुत्रो महारथः ।
रुक्माङ्गदेन वीरेण तथा रुक्मरथेन च ॥ ०१३ ॥

कौरव्यः सोमदत्तश्च पुत्राश्चास्य महारथाः ।
समवेतास्त्रयः शूरा भूरिर्भूरिश्रवाः शलः ॥ ०१४ ॥

सुदक्षिणश्च काम्बोजो दृढधन्वा च कौरवः ।
बृहद्बलः सुषेणश्च शिबिरौशीनरस्तथा ॥ ०१५ ॥

सङ्कर्षणो वासुदेवो रौक्मिणेयश्च वीर्यवान् ।
साम्बश्च चारुदेष्णश्च सारणोऽथ गदस्तथा ॥ ०१६ ॥

अक्रूरः सात्यकिश्चैव उद्धवश्च महाबलः ।
कृतवर्मा च हार्दिक्यः पृथुर्विपृथुरेव च ॥ ०१७ ॥

विडूरथश्च कङ्कश्च समीकः सारमेजयः ।
वीरो वातपतिश्चैव झिल्ली पिण्डारकस्तथा ॥ ०१८ ॥

उशीनरश्च विक्रान्तो वृष्णयस्ते प्रकीर्तिताः ॥ ०१८ ॥

भगीरथो बृहत्क्षत्रः सैन्धवश्च जयद्रथः ।
बृहद्रथो बाह्लिकश्च श्रुतायुश्च महारथः ॥ ०१९ ॥

उलूकः कैतवो राजा चित्राङ्गदशुभाङ्गदौ ।
वत्सराजश्च धृतिमान्कोसलाधिपतिस्तथा ॥ ०२० ॥

एते चान्ये च बहवो नानाजनपदेश्वराः ।
त्वदर्थमागता भद्रे क्षत्रियाः प्रथिता भुवि ॥ ०२१ ॥

एते वेत्स्यन्ति विक्रान्तास्त्वदर्थं लक्ष्यमुत्तमम् ।
विध्येत य इमं लक्ष्यं वरयेथाः शुभेऽद्य तम् ॥ ०२२ ॥

---

# अध्याय १७८

वैशंपायन उवाच ॥

तेऽलङ्कृताः कुण्डलिनो युवानः ; परस्परं स्पर्धमानाः समेताः ।
अस्त्रं बलं चात्मनि मन्यमानाः ; सर्वे समुत्पेतुरहङ्कृतेन ॥ ००१ ॥

रूपेण वीर्येण कुलेन चैव ; धर्मेण चैवापि च यौवनेन ।
समृद्धदर्पा मदवेगभिन्ना ; मत्ता यथा हैमवता गजेन्द्राः ॥ ००२ ॥

परस्परं स्पर्धया प्रेक्षमाणाः ; सङ्कल्पजेनापि परिप्लुताङ्गाः ।
कृष्णा ममैषेत्यभिभाषमाणा ; नृपासनेभ्यः सहसोपतस्थुः ॥ ००३ ॥

ते क्षत्रिया रङ्गगताः समेता ; जिगीषमाणा द्रुपदात्मजां ताम् ।
चकाशिरे पर्वतराजकन्या ;मुमां यथा देवगणाः समेताः ॥ ००४ ॥

कन्दर्पबाणाभिनिपीडिताङ्गाः ; कृष्णागतैस्ते हृदयैर्नरेन्द्राः ।
रङ्गावतीर्णा द्रुपदात्मजार्थं ; द्वेष्यान्हि चक्रुः सुहृदोऽपि तत्र ॥ ००५ ॥

अथाययुर्देवगणा विमानै ; रुद्रादित्या वसवोऽथाश्विनौ च ।
साध्याश्च सर्वे मरुतस्तथैव ; यमं पुरस्कृत्य धनेश्वरं च ॥ ००६ ॥

दैत्याः सुपर्णाश्च महोरगाश्च ; देवर्षयो गुह्यकाश्चारणाश्च ।
विश्वावसुर्नारदपर्वतौ च ; गन्धर्वमुख्याश्च सहाप्सरोभिः ॥ ००७ ॥

हलायुधस्तत्र च केशवश्च ; वृष्ण्यन्धकाश्चैव यथा प्रधानाः ।
प्रेक्षां स्म चक्रुर्यदुपुङ्गवास्ते ; स्थिताश्च कृष्णस्य मते बभूवुः ॥ ००८ ॥

दृष्ट्वा हि तान्मत्तगजेन्द्ररूपा ;न्पञ्चाभिपद्मानिव वारणेन्द्रान् ।
भस्मावृताङ्गानिव हव्यवाहा ;न्पार्थान्प्रदध्यौ स यदुप्रवीरः ॥ ००९ ॥

शशंस रामाय युधिष्ठिरं च ; भीमं च जिष्णुं च यमौ च वीरौ ।
शनैः शनैस्तांश्च निरीक्ष्य रामो ; जनार्दनं प्रीतमना ददर्श ॥ ०१० ॥

अन्ये तु नानानृपपुत्रपौत्राः ; कृष्णागतैर्नेत्रमनःस्वभावैः ।
व्यायच्छमाना ददृशुर्भ्रमन्तीं ; संदष्टदन्तच्छदताम्रवक्त्राः ॥ ०११ ॥

तथैव पार्थाः पृथुबाहवस्ते ; वीरौ यमौ चैव महानुभावौ ।
तां द्रौपदीं प्रेक्ष्य तदा स्म सर्वे ; कन्दर्पबाणाभिहता बभूवुः ॥ ०१२ ॥

देवर्षिगन्धर्वसमाकुलं त ;त्सुपर्णनागासुरसिद्धजुष्टम् ।
दिव्येन गन्धेन समाकुलं च ; दिव्यैश्च माल्यैरवकीर्यमाणम् ॥ ०१३ ॥

महास्वनैर्दुन्दुभिनादितैश्च ; बभूव तत्सङ्कुलमन्तरिक्षम् ।
विमानसंबाधमभूत्समन्ता ;त्सवेणुवीणापणवानुनादम् ॥ ०१४ ॥

ततस्तु ते राजगणाः क्रमेण ; कृष्णानिमित्तं नृप विक्रमन्तः ।
तत्कार्मुकं संहननोपपन्नं ; सज्यं न शेकुस्तरसापि कर्तुम् ॥ ०१५ ॥

ते विक्रमन्तः स्फुरता दृढेन ; निष्कृष्यमाणा धनुषा नरेन्द्राः ।
विचेष्टमाना धरणीतलस्था ; दीना अदृश्यन्त विभग्नचित्ताः ॥ ०१६ ॥

हाहाकृतं तद्धनुषा दृढेन ; निष्पिष्टभग्नाङ्गदकुण्डलं च ।
कृष्णानिमित्तं विनिवृत्तभावं ; राज्ञां तदा मण्डलमार्तमासीत् ॥ ०१७ ॥

तस्मिंस्तु संभ्रान्तजने समाजे ; निक्षिप्तवादेषु नराधिपेषु ।
कुन्तीसुतो जिष्णुरियेष कर्तुं ; सज्यं धनुस्तत्सशरं स वीरः ॥ ०१८ ॥

---

# अध्याय १७९

वैशंपायन उवाच ॥

यदा निवृत्ता राजानो धनुषः सज्यकर्मणि ।
अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः ॥ ००१ ॥

उदक्रोशन्विप्रमुख्या विधुन्वन्तोऽजिनानि च ।
दृष्ट्वा संप्रस्थितं पार्थमिन्द्रकेतुसमप्रभम् ॥ ००२ ॥

केचिदासन्विमनसः केचिदासन्मुदा युताः ।
आहुः परस्परं केचिन्निपुणा बुद्धिजीविनः ॥ ००३ ॥

यत्कर्णशल्यप्रमुखैः पार्थिवैर्लोकविश्रुतैः ।

नानतं बलवद्भिर्हि धनुर्वेदपरायणैः ॥ ००४ ॥

तत्कथं त्वकृतास्त्रेण प्राणतो दुर्बलीयसा ।
बटुमात्रेण शक्यं हि सज्यं कर्तुं धनुर्द्विजाः ॥ ००५ ॥

अवहास्या भविष्यन्ति ब्राह्मणाः सर्वराजसु ।
कर्मण्यस्मिन्नसंसिद्धे चापलादपरीक्षिते ॥ ००६ ॥

यद्येष दर्पाद्धर्षाद्वा यदि वा ब्रह्मचापलात् ।
प्रस्थितो धनुरायन्तुं वार्यतां साधु मा गमत् ॥ ००७ ॥

नावहास्या भविष्यामो न च लाघवमास्थिताः ।
न च विद्विष्टतां लोके गमिष्यामो महीक्षिताम् ॥ ००८ ॥

केचिदाहुर्युवा श्रीमान्नागराजकरोपमः ।
पीनस्कन्धोरुबाहुश्च धैर्येण हिमवानिव ॥ ००९ ॥

संभाव्यमस्मिन्कर्मेदमुत्साहाच्चानुमीयते ।
शक्तिरस्य महोत्साहा न ह्यशक्तः स्वयं व्रजेत् ॥ ०१० ॥

न च तद्विद्यते किञ्चित्कर्म लोकेषु यद्भवेत् ।
ब्राह्मणानामसाध्यं च त्रिषु संस्थानचारिषु ॥ ०११ ॥

अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः ।
दुर्बला हि बलीयांसो विप्रा हि ब्रह्मतेजसा ॥ ०१२ ॥

ब्राह्मणो नावमन्तव्यः सद्वासद्वा समाचरन् ।
सुखं दुःखं महद्ध्रस्वं कर्म यत्समुपागतम् ॥ ०१३ ॥

एवं तेषां विलपतां विप्राणां विविधा गिरः ।
अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः ॥ ०१४ ॥

स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत् ।
प्रणम्य शिरसा हृष्टो जगृहे च परंतपः ॥ ०१५ ॥

सज्यं च चक्रे निमिषान्तरेण ; शरांश्च जग्राह दशार्धसंख्यान् ।
विव्याध लक्ष्यं निपपात तच्च ; छिद्रेण भूमौ सहसातिविद्धम् ॥ ०१६ ॥

ततोऽन्तरिक्षे च बभूव नादः ; समाजमध्ये च महान्निनादः ।
पुष्पाणि दिव्यानि ववर्ष देवः ; पार्थस्य मूर्ध्नि द्विषतां निहन्तुः ॥ ०१७ ॥

चेलावेधांस्ततश्चक्रुर्हाहाकारांश्च सर्वशः ।
न्यपतंश्चात्र नभसः समन्तात्पुष्पवृष्टयः ॥ ०१८ ॥

शताङ्गानि च तूर्याणि वादकाश्चाप्यवादयन् ।
सूतमागधसंघाश्च अस्तुवंस्तत्र सुस्वनाः ॥ ०१९ ॥

तं दृष्ट्वा द्रुपदः प्रीतो बभूवारिनिषूदनः ।
सहसैन्यश्च पार्थस्य साहाय्यार्थमियेष सः ॥ ०२० ॥

तस्मिंस्तु शब्दे महति प्रवृत्ते ; युधिष्ठिरो धर्मभृतां वरिष्ठः ।
आवासमेवोपजगाम शीघ्रं ; सार्धं यमाभ्यां पुरुषोत्तमाभ्याम् ॥ ०२१ ॥

विद्धं तु लक्ष्यं प्रसमीक्ष्य कृष्णा ; पार्थं च शक्रप्रतिमं निरीक्ष्य ।
आदाय शुक्लं वरमाल्यदाम ; जगाम कुन्तीसुतमुत्स्मयन्ती ॥ ०२२ ॥

स तामुपादाय विजित्य रङ्गे ; द्विजातिभिस्तैरभिपूज्यमानः ।
रङ्गान्निरक्रामदचिन्त्यकर्मा ; पत्न्या तया चाप्यनुगम्यमानः ॥ ०२३ ॥

# अध्याय १८०

वैशंपायन उवाच ॥

तस्मै दित्सति कन्यां तु ब्राह्मणाय महात्मने ।
कोप आसीन्महीपानामालोक्यान्योन्यमन्तिकात् ॥ ००१ ॥

अस्मानयमतिक्रम्य तृणीकृत्य च सङ्गतान् ।
दातुमिच्छति विप्राय द्रौपदीं योषितां वराम् ॥ ००२ ॥

निहन्मैनं दुरात्मानं योऽयमस्मान्न मन्यते ।
न ह्यर्हत्येष सत्कारं नापि वृद्धक्रमं गुणैः ॥ ००३ ॥

हन्मैनं सह पुत्रेण दुराचारं नृपद्विषम् ।
अयं हि सर्वानाहूय सत्कृत्य च नराधिपान् ॥ ००४ ॥

गुणवद्भोजयित्वा च ततः पश्चाद्विनिन्दति ॥ ००४ ॥

अस्मिन्राजसमावाये देवानामिव संनये ।
किमयं सदृशं कञ्चिन्नृपतिं नैव दृष्टवान् ॥ ००५ ॥

न च विप्रेष्वधीकारो विद्यते वरणं प्रति ।
स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः ॥ ००६ ॥

अथ वा यदि कन्येयं नेह कञ्चिद्बुभूषति ।
अग्नावेनां परिक्षिप्य याम राष्ट्राणि पार्थिवाः ॥ ००७ ॥

ब्राह्मणो यदि वा बाल्याल्लोभाद्वा कृतवानिदम् ।
विप्रियं पार्थिवेन्द्राणां नैष वध्यः कथञ्चन ॥ ००८ ॥

ब्राह्मणार्थं हि नो राज्यं जीवितं च वसूनि च ।

पुत्रपौत्रं च यच्चान्यदस्माकं विद्यते धनम् ॥ ००९ ॥

अवमानभयादेतत्स्वधर्मस्य च रक्षणात् ।
स्वयंवराणां चान्येषां मा भूदेवंविधा गतिः ॥ ०१० ॥

इत्युक्त्वा राजशार्दूला हृष्टाः परिघबाहवः ।
द्रुपदं सञ्जिघृक्षन्तः सायुधाः समुपाद्रवन् ॥ ०११ ॥

तान्गृहीतशरावापान्क्रुद्धानापततो नृपान् ।
द्रुपदो वीक्ष्य संत्रासाद्ब्राह्मणाञ्शरणं गतः ॥ ०१२ ॥

वेगेनापततस्तांस्तु प्रभिन्नानिव वारणान् ।
पाण्डुपुत्रौ महावीर्यौ प्रतीयतुररिंदमौ ॥ ०१३ ॥

ततः समुत्पेतुरुदायुधास्ते ; महीक्षितो बद्धतलाङ्गुलित्राः ।
जिघांसमानाः कुरुराजपुत्रा ;वमर्षयन्तोऽर्जुनभीमसेनौ ॥ ०१४ ॥

ततस्तु भीमोऽद्भुतवीर्यकर्मा ; महाबलो वज्रसमानवीर्यः ।
उत्पाट्य दोर्भ्यां द्रुममेकवीरो ; निष्पत्रयामास यथा गजेन्द्रः ॥ ०१५ ॥

तं वृक्षमादाय रिपुप्रमाथी ; दण्डीव दण्डं पितृराज उग्रम् ।
तस्थौ समीपे पुरुषर्षभस्य ; पार्थस्य पार्थः पृथुदीर्घबाहुः ॥ ०१६ ॥

तत्प्रेक्ष्य कर्मातिमनुष्यबुद्धे ;र्जिष्णोः सहभ्रातुरचिन्त्यकर्मा ।
दामोदरो भ्रातरमुग्रवीर्यं ; हलायुधं वाक्यमिदं बभाषे ॥ ०१७ ॥

य एष मत्तर्षभतुल्यगामी ; महद्धनुः कर्षति तालमात्रम् ।
एषोऽर्जुनो नात्र विचार्यमस्ति ; यद्यस्मि सङ्कर्षण वासुदेवः ॥ ०१८ ॥

य एष वृक्षं तरसावरुज्य ; राज्ञां विकारे सहसा निवृत्तः ।
वृकोदरो नान्य इहैतदद्य ; कर्तुं समर्थो भुवि मर्त्यधर्मा ॥ ०१९ ॥

योऽसौ पुरस्तात्कमलायताक्ष ;स्तनुर्महासिंहगतिर्विनीतः ।
गौरः प्रलम्बोज्ज्वलचारुघोणो ; विनिःसृतः सोऽच्युत धर्मराजः ॥ ०२० ॥

यौ तौ कुमाराविव कार्त्तिकेयौ ; द्वावश्विनेयाविति मे प्रतर्कः ।
मुक्ता हि तस्माज्जतुवेश्मदाहा ;न्मया श्रुताः पाण्डुसुताः पृथा च ॥ ०२१ ॥

तमब्रवीन्निर्मलतोयदाभो ; हलायुधोऽनन्तरजं प्रतीतः ।
प्रीतोऽस्मि दिष्ट्या हि पितृष्वसा नः ; पृथा विमुक्ता सह कौरवाग्र्यैः ॥ ०२२ ॥

---

# अध्याय १८१

वैशंपायन उवाच ॥

अजिनानि विधुन्वन्तः करकांश्च द्विजर्षभाः ।
ऊचुस्तं भीर्न कर्तव्या वयं योत्स्यामहे परान् ॥ ००१ ॥

तानेवं वदतो विप्रानर्जुनः प्रहसन्निव ।
उवाच प्रेक्षका भूत्वा यूयं तिष्ठत पार्श्वतः ॥ ००२ ॥

अहमेनानजिह्माग्रैः शतशो विकिरञ्शरैः ।
वारयिष्यामि सङ्क्रुद्धान्मन्त्रैराशीविषानिव ॥ ००३ ॥

इति तद्धनुरादाय शुल्कावाप्तं महारथः ।
भ्रात्रा भीमेन सहितस्तस्थौ गिरिरिवाचलः ॥ ००४ ॥

ततः कर्णमुखान्क्रुद्धान्क्षत्रियांस्तान्रुषोत्थितान् ।

संपेततुरभीतौ तौ गजौ प्रतिगजानिव ॥ ००५ ॥

ऊचुश्च वाचः परुषास्ते राजानो जिघांसवः ।
आहवे हि द्विजस्यापि वधो दृष्टो युयुत्सतः ॥ ००६ ॥

ततो वैकर्तनः कर्णो जगामार्जुनमोजसा ।
युद्धार्थी वाशिताहेतोर्गजः प्रतिगजं यथा ॥ ००७ ॥

भीमसेनं ययौ शल्यो मद्राणामीश्वरो बली ।
दुर्योधनादयस्त्वन्ये ब्राह्मणैः सह सङ्गताः ॥ ००८ ॥

मृदुपूर्वमयत्नेन प्रत्ययुध्यंस्तदाहवे ॥ ००८ ॥

ततोऽर्जुनः प्रत्यविध्यदापतन्तं त्रिभिः शरैः ।
कर्णं वैकर्तनं धीमान्विकृष्य बलवद्धनुः ॥ ००९ ॥

तेषां शराणां वेगेन शितानां तिग्मतेजसाम् ।
विमुह्यमानो राधेयो यत्नात्तमनुधावति ॥ ०१० ॥

तावुभावप्यनिर्देश्यौ लाघवाज्जयतां वरौ ।
अयुध्येतां सुसंरब्धावन्योन्यविजयैषिणौ ॥ ०११ ॥

कृते प्रतिकृतं पश्य पश्य बाहुबलं च मे ।
इति शूरार्थवचनैराभाषेतां परस्परम् ॥ ०१२ ॥

ततोऽर्जुनस्य भुजयोर्वीर्यमप्रतिमं भुवि ।
ज्ञात्वा वैकर्तनः कर्णः संरब्धः समयोधयत् ॥ ०१३ ॥

अर्जुनेन प्रयुक्तांस्तान्बाणान्वेगवतस्तदा ।
प्रतिहत्य ननादोच्चैः सैन्यास्तमभिपूजयन् ॥ ०१४ ॥

कर्ण उवाच ॥

तुष्यामि ते विप्रमुख्य भुजवीर्यस्य संयुगे ।
अविषादस्य चैवास्य शस्त्रास्त्रविनयस्य च ॥ ०१५ ॥

किं त्वं साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम ।
अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः ॥ ०१६ ॥

आत्मप्रच्छादनार्थं वै बाहुवीर्यमुपाश्रितः ।
विप्ररूपं विधायेदं ततो मां प्रतियुध्यसे ॥ ०१७ ॥

न हि मामाहवे क्रुद्धमन्यः साक्षाच्छचीपतेः ।
पुमान्योधयितुं शक्तः पाण्डवाद्वा किरीटिनः ॥ ०१८ ॥

वैशंपायन उवाच ॥

तमेवंवादिनं तत्र फल्गुनः प्रत्यभाषत ।
नास्मि कर्ण धनुर्वेदो नास्मि रामः प्रतापवान् ॥ ०१९ ॥

ब्राह्मणोऽस्मि युधां श्रेष्ठः सर्वशस्त्रभृतां वरः ॥ ०१९ ॥

ब्राह्मे पौरंदरे चास्त्रे निष्ठितो गुरुशासनात् ।
स्थितोऽस्म्यद्य रणे जेतुं त्वां वीराविचलो भव ॥ ०२० ॥

एवमुक्तस्तु राधेयो युद्धात्कर्णो न्यवर्तत ।
ब्रह्मं तेजस्तदाजय्यं मन्यमानो महारथः ॥ ०२१ ॥

युद्धं तूपेयतुस्तत्र राजञ्शल्यवृकोदरौ ।
बलिनौ युगपन्मत्तौ स्पर्धया च बलेन च ॥ ०२२ ॥

अन्योन्यमाह्वयन्तौ तौ मत्ताविव महागजौ ।

मुष्टिभिर्जानुभिश्चैव निघ्नन्तावितरेतरम् ॥ ०२३ ॥

मुहूर्तं तौ तथान्योन्यं समरे पर्यकर्षताम् ॥ ०२३ ॥

ततो भीमः समुत्क्षिप्य बाहुभ्यां शल्यमाहवे ।
न्यवधीद्बलिनां श्रेष्ठो जहसुर्ब्राह्मणास्ततः ॥ ०२४ ॥

तत्राश्चर्यं भीमसेनश्चकार पुरुषर्षभः ।
यच्छल्यं पतितं भूमौ नाहनद्बलिनं बली ॥ ०२५ ॥

पातिते भीमसेनेन शल्ये कर्णे च शङ्किते ।
शङ्किताः सर्वराजानः परिवव्रुर्वृकोदरम् ॥ ०२६ ॥

ऊचुश्च सहितास्तत्र साध्विमे ब्राह्मणर्षभाः ।
विज्ञायन्तां क्वजन्मानः क्वनिवासास्तथैव च ॥ ०२७ ॥

को हि राधासुतं कर्णं शक्तो योधयितुं रणे ।
अन्यत्र रामाद्द्रोणाद्वा कृपाद्वापि शरद्वतः ॥ ०२८ ॥

कृष्णाद्वा देवकीपुत्रात्फल्गुनाद्वा परंतपात् ।
को वा दुर्योधनं शक्तः प्रतियोधयितुं रणे ॥ ०२९ ॥

तथैव मद्रराजानं शल्यं बलवतां वरम् ।
बलदेवादृते वीरात्पाण्डवाद्वा वृकोदरात् ॥ ०३० ॥

क्रियतामवहारोऽस्माद्युद्धाद्ब्राह्मणसंयुतात् ।
अथैनानुपलभ्येह पुनर्योत्स्यामहे वयम् ॥ ०३१ ॥

तत्कर्म भीमस्य समीक्ष्य कृष्णः ; कुन्तीसुतौ तौ परिशङ्कमानः ।
निवारयामास महीपतींस्ता ;न्धर्मेण लब्धेत्यनुनीय सर्वान् ॥ ०३२ ॥

त एवं संनिवृत्तास्तु युद्धाद्युद्धविशारदाः ।
यथावासं ययुः सर्वे विस्मिता राजसत्तमाः ॥ ०३३ ॥

वृत्तो ब्रह्मोत्तरो रङ्गः पाञ्चाली ब्राह्मणैर्वृता ।
इति ब्रुवन्तः प्रययुर्ये तत्रासन्समागताः ॥ ०३४ ॥

ब्राह्मणैस्तु प्रतिच्छन्नौ रौरवाजिनवासिभिः ।
कृच्छ्रेण जग्मतुस्तत्र भीमसेनधनञ्जयौ ॥ ०३५ ॥

विमुक्तौ जनसंबाधाच्छत्रुभिः परिविक्षतौ ।
कृष्णयानुगतौ तत्र नृवीरौ तौ विरेजतुः ॥ ०३६ ॥

तेषां माता बहुविधं विनाशं पर्यचिन्तयत् ।
अनागच्छत्सु पुत्रेषु भैक्षकालेऽतिगच्छति ॥ ०३७ ॥

धार्तराष्ट्रैर्हता न स्युर्विज्ञाय कुरुपुङ्गवाः ।
मायान्वितैर्वा रक्षोभिः सुघोरैर्दृढवैरिभिः ॥ ०३८ ॥

विपरीतं मतं जातं व्यासस्यापि महात्मनः ।
इत्येवं चिन्तयामास सुतस्नेहान्विता पृथा ॥ ०३९ ॥

महत्यथापराह्णे तु घनैः सूर्य इवावृतः ।
ब्राह्मणैः प्राविशत्तत्र जिष्णुर्ब्रह्मपुरस्कृतः ॥ ०४० ॥

---

# अध्याय १८२

वैशंपायन उवाच ॥

गत्वा तु तां भार्गवकर्मशालां ; पार्थौ पृथां प्राप्य महानुभावौ ।
तां याज्ञसेनीं परमप्रतीतौ ; भिक्षेत्यथावेदयतां नराग्र्यौ ॥ ००१ ॥

कुटीगता सा त्वनवेक्ष्य पुत्रा ;नुवाच भुङ्क्तेति समेत्य सर्वे ।
पश्चात्तु कुन्ती प्रसमीक्ष्य कन्यां ; कष्टं मया भाषितमित्युवाच ॥ ००२ ॥

साधर्मभीता हि विलज्जमाना ; तां याज्ञसेनीं परमप्रतीताम् ।
पाणौ गृहीत्वोपजगाम कुन्ती ; युधिष्ठिरं वाक्यमुवाच चेदम् ॥ ००३ ॥

इयं हि कन्या द्रुपदस्य राज्ञ ;स्तवानुजाभ्यां मयि संनिसृष्टा ।
यथोचितं पुत्र मयापि चोक्तं ; समेत्य भुङ्क्तेति नृप प्रमादात् ॥ ००४ ॥

कथं मया नानृतमुक्तमद्य ; भवेत्कुरूणामृषभ ब्रवीहि ।
पाञ्चालराजस्य सुतामधर्मो ; न चोपवर्तेत नभूतपूर्वः ॥ ००५ ॥

मुहूर्तमात्रं त्वनुचिन्त्य राजा ; युधिष्ठिरो मातरमुत्तमौजाः ।
कुन्तीं समाश्वास्य कुरुप्रवीरो ; धनञ्जयं वाक्यमिदं बभाषे ॥ ००६ ॥

त्वया जिता पाण्डव याज्ञसेनी ; त्वया च तोषिष्यति राजपुत्री ।
प्रज्वाल्यतां हूयतां चापि वह्नि ;र्गृहाण पाणिं विधिवत्त्वमस्याः ॥ ००७ ॥

अर्जुन उवाच ॥

मा मां नरेन्द्र त्वमधर्मभाजं ; कृथा न धर्मो ह्ययमीप्सितोऽन्यैः ।
भवान्निवेश्यः प्रथमं ततोऽयं ; भीमो महाबाहुरचिन्त्यकर्मा ॥ ००८ ॥

अहं ततो नकुलोऽनन्तरं मे ; माद्रीसुतः सहदेवो जघन्यः ।
वृकोदरोऽहं च यमौ च राज ;न्नियं च कन्या भवतः स्म सर्वे ॥ ००९ ॥

एवङ्गते यत्करणीयमत्र ; धर्म्यं यशस्यं कुरु तत्प्रचिन्त्य ।
पाञ्चालराजस्य च यत्प्रियं स्या ;त्तद्ब्रूहि सर्वे स्म वशे स्थितास्ते ॥ ०१० ॥

वैशंपायन उवाच ॥

ते दृष्ट्वा तत्र तिष्ठन्तीं सर्वे कृष्णां यशस्विनीम् ।
संप्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन् ॥ ०११ ॥

तेषां हि द्रौपदीं दृष्ट्वा सर्वेषाममितौजसाम् ।
संप्रमथ्येन्द्रियग्रामं प्रादुरासीन्मनोभवः ॥ ०१२ ॥

काम्यं रूपं हि पाञ्चाल्या विधात्रा विहितं स्वयम् ।
बभूवाधिकमन्याभ्यः सर्वभूतमनोहरम् ॥ ०१३ ॥

तेषामाकारभावज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
द्वैपायनवचः कृत्स्नं संस्मरन्वै नरर्षभ ॥ ०१४ ॥

अब्रवीत्स हि तान्भ्रातॄन्मिथोभेदभयान्नृपः ।
सर्वेषां द्रौपदी भार्या भविष्यति हि नः शुभा ॥ ०१५ ॥

---

# अध्याय १८३

वैशंपायन उवाच ॥

भ्रातुर्वचस्तत्प्रसमीक्ष्य सर्वे ; ज्येष्ठस्य पाण्डोस्तनयास्तदानीम् ।
तमेवार्थं ध्यायमाना मनोभि ;रासां चक्रुरथ तत्रामितौजाः ॥ ००१ ॥

वृष्णिप्रवीरस्तु कुरुप्रवीरा ;नाशङ्कमानः सहरौहिणेयः ।
जगाम तां भार्गवकर्मशालां ; यत्रासते ते पुरुषप्रवीराः ॥ ००२ ॥

तत्रोपविष्टं पृथुदीर्घबाहुं ; ददर्श कृष्णः सहरौहिणेयः ।
अजातशत्रुं परिवार्य तांश्च ; उपोपविष्टाञ्ज्वलनप्रकाशान् ॥ ००३ ॥

ततोऽब्रवीद्वासुदेवोऽभिगम्य ; कुन्तीसुतं धर्मभृतां वरिष्ठम् ।
कृष्णोऽहमस्मीति निपीड्य पादौ ; युधिष्ठिरस्याजमीढस्य राज्ञः ॥ ००४ ॥

तथैव तस्याप्यनु रौहिणेय ;स्तौ चापि हृष्टाः कुरवोऽभ्यनन्दन् ।
पितृष्वसुश्चापि यदुप्रवीरा ;वगृह्णतां भारतमुख्य पादौ ॥ ००५ ॥

अजातशत्रुश्च कुरुप्रवीरः ; पप्रच्छ कृष्णं कुशलं निवेद्य ।
कथं वयं वासुदेव त्वयेह ; गूढा वसन्तो विदिताः स्म सर्वे ॥ ००६ ॥

तमब्रवीद्वासुदेवः प्रहस्य ; गूढोऽप्यग्निर्ज्ञायत एव राजन् ।
तं विक्रमं पाण्डवेयानतीत्य ; कोऽन्यः कर्ता विद्यते मानुषेषु ॥ ००७ ॥

दिष्ट्या तस्मात्पावकात्संप्रमुक्ता ; यूयं सर्वे पाण्डवाः शत्रुसाहाः ।
दिष्ट्या पापो धृतराष्ट्रस्य पुत्रः ; सहामात्यो न सकामोऽभविष्यत् ॥ ००८ ॥

भद्रं वोऽस्तु निहितं यद्गुहायां ; विवर्धध्वं ज्वलन इवेध्यमानः ।
मा वो विद्युः पार्थिवाः केचनेह ; यास्यावहे शिबिरायैव तावत् ॥ ००९ ॥

सोऽनुज्ञातः पाण्डवेनाव्ययश्रीः ; प्रायाच्छीघ्रं बलदेवेन सार्धम् ॥ ००९ ॥

---

# अध्याय १८४

वैशंपायन उवाच ॥

धृष्टद्युम्नस्तु पाञ्चाल्यः पृष्ठतः कुरुनन्दनौ ।
अन्वगच्छत्तदा यान्तौ भार्गवस्य निवेशनम् ॥ ००१ ॥

सोऽज्ञायमानः पुरुषानवधाय समन्ततः ।
स्वयमारान्निविष्टोऽभूद्भार्गवस्य निवेशने ॥ ००२ ॥

सायेऽथ भीमस्तु रिपुप्रमाथी ; जिष्णुर्यमौ चापि महानुभावौ ।
भैक्षं चरित्वा तु युधिष्ठिराय ; निवेदयां चक्रुरदीनसत्त्वाः ॥ ००३ ॥

ततस्तु कुन्ती द्रुपदात्मजां ता ;मुवाच काले वचनं वदान्या ।
अतोऽग्रमादाय कुरुष्व भद्रे ; बलिं च विप्राय च देहि भिक्षाम् ॥ ००४ ॥

ये चान्नमिच्छन्ति ददस्व तेभ्यः ; परिश्रिता ये परितो मनुष्याः ।
ततश्च शेषं प्रविभज्य शीघ्र ;मर्धं चतुर्णां मम चात्मनश्च ॥ ००५ ॥

अर्धं च भीमाय ददाहि भद्रे ; य एष मत्तर्षभतुल्यरूपः ।
श्यामो युवा संहननोपपन्न ; एषो हि वीरो बहुभुक्सदैव ॥ ००६ ॥

सा हृष्टरूपैव तु राजपुत्री ; तस्या वचः साध्वविशङ्कमाना ।
यथावदुक्तं प्रचकार साध्वी ; ते चापि सर्वेऽभ्यवजह्रुरन्नम् ॥ ००७ ॥

कुशैस्तु भूमौ शयनं चकार ; माद्रीसुतः सहदेवस्तरस्वी ।
यथात्मीयान्यजिनानि सर्वे ; संस्तीर्य वीराः सुषुपुर्धरण्याम् ॥ ००८ ॥

अगस्त्यशास्तामभितो दिशं तु ; शिरांसि तेषां कुरुसत्तमानाम् ।
कुन्ती पुरस्तात्तु बभूव तेषां ; कृष्णा तिरश्चैव बभूव पत्तः ॥ ००९ ॥

अशेत भूमौ सह पाण्डुपुत्रैः ; पादोपधानेव कृता कुशेषु ।
न तत्र दुःखं च बभूव तस्या ; न चावमेने कुरुपुङ्गवांस्तान् ॥ ०१० ॥

ते तत्र शूराः कथयां बभूवुः ; कथा विचित्राः पृतनाधिकाराः ।
अस्त्राणि दिव्यानि रथांश्च नागा ;न्खड्गान्गदाश्चापि परश्वधांश्च ॥ ०११ ॥

तेषां कथास्ताः परिकीर्त्यमानाः ; पाञ्चालराजस्य सुतस्तदानीम् ।
शुश्राव कृष्णां च तथा निषण्णां ; ते चापि सर्वे ददृशुर्मनुष्याः ॥ ०१२ ॥

धृष्टद्युम्नो राजपुत्रस्तु सर्वं ; वृत्तं तेषां कथितं चैव रात्रौ ।
सर्वं राज्ञे द्रुपदायाखिलेन ; निवेदयिष्यंस्त्वरितो जगाम ॥ ०१३ ॥

पाञ्चालराजस्तु विषण्णरूप ;स्तान्पाण्डवानप्रतिविन्दमानः ।
धृष्टद्युम्नं पर्यपृच्छन्महात्मा ; क्व सा गता केन नीता च कृष्णा ॥ ०१४ ॥

कच्चिन्न शूद्रेण न हीनजेन ; वैश्येन वा करदेनोपपन्ना ।
कच्चित्पदं मूर्ध्नि न मे निदिग्धं ; कच्चिन्माला पतिता न श्मशाने ॥ ०१५ ॥

कच्चित्सवर्णप्रवरो मनुष्य ; उद्रिक्तवर्णोऽप्युत वेह कच्चित् ।
कच्चिन्न वामो मम मूर्ध्नि पादः ; कृष्णाभिमर्शेन कृतोऽद्य पुत्र ॥ ०१६ ॥

कच्चिच्च यक्ष्ये परमप्रतीतः ; संयुज्य पार्थेन नरर्षभेण ।
ब्रवीहि तत्त्वेन महानुभावः ; कोऽसौ विजेता दुहितुर्ममाद्य ॥ ०१७ ॥

विचित्रवीर्यस्य तु कच्चिदद्य ; कुरुप्रवीरस्य धरन्ति पुत्राः ।
कच्चित्तु पार्थेन यवीयसाद्य ; धनुर्गृहीतं निहतं च लक्ष्यम् ॥ ०१८ ॥

# अध्याय १८५

वैशंपायन उवाच ॥

ततस्तथोक्तः परिहृष्टरूपः ; पित्रे शशंसाथ स राजपुत्रः ।
धृष्टद्युम्नः सोमकानां प्रबर्हो ; वृत्तं यथा येन हृता च कृष्णा ॥ ००१ ॥

योऽसौ युवा स्वायतलोहिताक्षः ; कृष्णाजिनी देवसमानरूपः ।
यः कार्मुकाग्र्यं कृतवानधिज्यं ; लक्ष्यं च तत्पातितवान्पृथिव्याम् ॥ ००२ ॥

असज्जमानश्च गतस्तरस्वी ; वृतो द्विजाग्र्यैरभिपूज्यमानः ।
चक्राम वज्रीव दितेः सुतेषु ; सर्वैश्च देवैर्ऋषिभिश्च जुष्टः ॥ ००३ ॥

कृष्णा च गृह्याजिनमन्वयात्तं ; नागं यथा नागवधूः प्रहृष्टा ।
अमृष्यमाणेषु नराधिपेषु ; क्रुद्धेषु तं तत्र समापतत्सु ॥ ००४ ॥

ततोऽपरः पार्थिवराजमध्ये ; प्रवृद्धमारुज्य महीप्ररोहम् ।
प्रकालयन्नेव स पार्थिवौघा ;न्क्रुद्धोऽन्तकः प्राणभृतो यथैव ॥ ००५ ॥

तौ पार्थिवानां मिषतां नरेन्द्र ; कृष्णामुपादाय गतौ नराग्र्यौ ।
विभ्राजमानाविव चन्द्रसूर्यौ ; बाह्यां पुराद्भार्गवकर्मशालाम् ॥ ००६ ॥

तत्रोपविष्टार्चिरिवानलस्य ; तेषां जनित्रीति मम प्रतर्कः ।
तथाविधैरेव नरप्रवीरै ;रुपोपविष्टैस्त्रिभिरग्निकल्पैः ॥ ००७ ॥

तस्यास्ततस्तावभिवाद्य पादा ;वुक्त्वा च कृष्णामभिवादयेति ।
स्थितौ च तत्रैव निवेद्य कृष्णां ; भैक्षप्रचाराय गता नराग्र्याः ॥ ००८ ॥

तेषां तु भैक्षं प्रतिगृह्य कृष्णा ; कृत्वा बलिं ब्राह्मणसाच्च कृत्वा ।
तां चैव वृद्धां परिविष्य तांश्च ; नरप्रवीरान्स्वयमप्यभुङ्क्त ॥ ००९ ॥

सुप्तास्तु ते पार्थिव सर्व एव ; कृष्णा तु तेषां चरणोपधानम् ।
आसीत्पृथिव्यां शयनं च तेषां ; दर्भाजिनाग्र्यास्तरणोपपन्नम् ॥ ०१० ॥

ते नर्दमाना इव कालमेघाः ; कथा विचित्राः कथयां बभूवुः ।
न वैश्यशूद्रौपयिकीः कथास्ता ; न च द्विजातेः कथयन्ति वीराः ॥ ०११ ॥

निःसंशयं क्षत्रियपुङ्गवास्ते ; यथा हि युद्धं कथयन्ति राजन् ।
आशा हि नो व्यक्तमियं समृद्धा ; मुक्तान्हि पार्थाञ्शृणुमोऽग्निदाहात् ॥ ०१२ ॥

यथा हि लक्ष्यं निहतं धनुश्च ; सज्यं कृतं तेन तथा प्रसह्य ।
यथा च भाषन्ति परस्परं ते ; छन्ना ध्रुवं ते प्रचरन्ति पार्थाः ॥ ०१३ ॥

ततः स राजा द्रुपदः प्रहृष्टः ; पुरोहितं प्रेषयां तत्र चक्रे ।
विद्याम युष्मानिति भाषमाणो ; महात्मनः पाण्डुसुताः स्थ कच्चित् ॥ ०१४ ॥

गृहीतवाक्यो नृपतेः पुरोधा ; गत्वा प्रशंसामभिधाय तेषाम् ।
वाक्यं यथावन्नृपतेः समग्र ;मुवाच तान्स क्रमवित्क्रमेण ॥ ०१५ ॥

विज्ञातुमिच्छत्यवनीश्वरो वः ; पाञ्चालराजो द्रुपदो वरार्हाः ।
लक्ष्यस्य वेद्धारमिमं हि दृष्ट्वा ; हर्षस्य नान्तं परिपश्यते सः ॥ ०१६ ॥

तदाचड्ढ्वं ज्ञातिकुलानुपूर्वीं ; पदं शिरःसु द्विषतां कुरुध्वम् ।
प्रह्लादयध्वं हृदयं ममेदं ; पाञ्चालराजस्य सहानुगस्य ॥ ०१७ ॥

पाण्डुर्हि राजा द्रुपदस्य राज्ञः ; प्रियः सखा चात्मसमो बभूव ।
तस्यैष कामो दुहिता ममेयं ; स्नुषा यदि स्यादिति कौरवस्य ॥ ०१८ ॥

अयं च कामो द्रुपदस्य राज्ञो ; हृदि स्थितो नित्यमनिन्दिताङ्गाः ।
यदर्जुनो वै पृथुदीर्घबाहु ;र्धर्मेण विन्देत सुतां ममेति ॥ ०१९ ॥

तथोक्तवाक्यं तु पुरोहितं तं ; स्थितं विनीतं समुदीक्ष्य राजा ।
समीपस्थं भीममिदं शशास ; प्रदीयतां पाद्यमर्घ्यं तथास्मै ॥ ०२० ॥

मान्यः पुरोधा द्रुपदस्य राज्ञ ;स्तस्मै प्रयोज्याभ्यधिकैव पूजा ।
भीमस्तथा तत्कृतवान्नरेन्द्र ; तां चैव पूजां प्रतिसङ्गृहीत्वा ॥ ०२१ ॥

सुखोपविष्टं तु पुरोहितं तं ; युधिष्ठिरो ब्राह्मणमित्युवाच ।
पाञ्चालराजेन सुता निसृष्टा ; स्वधर्मदृष्टेन यथानुकामम् ॥ ०२२ ॥

प्रदिष्टशुल्का द्रुपदेन राज्ञा ; सानेन वीरेण तथानुवृत्ता ।
न तत्र वर्णेषु कृता विवक्षा ; न जीवशिल्पे न कुले न गोत्रे ॥ ०२३ ॥

कृतेन सज्येन हि कार्मुकेण ; विद्धेन लक्ष्येण च संनिसृष्टा ।
सेयं तथानेन महात्मनेह ; कृष्णा जिता पार्थिवसंघमध्ये ॥ ०२४ ॥

नैवङ्गते सौमकिरद्य राजा ; संतापमर्हत्यसुखाय कर्तुम् ।
कामश्च योऽसौ द्रुपदस्य राज्ञः ; स चापि संपत्स्यति पार्थिवस्य ॥ ०२५ ॥

अप्राप्यरूपां हि नरेन्द्रकन्या ;मिमामहं ब्राह्मण साधु मन्ये ।
न तद्धनुर्मन्दबलेन शक्यं ; मौर्व्या समायोजयितुं तथा हि ॥ ०२६ ॥

न चाकृतास्त्रेण न हीनजेन ; लक्ष्यं तथा पातयितुं हि शक्यम् ॥ ०२६ ॥

तस्मान्न तापं दुहितुर्निमित्तं ; पाञ्चालराजोऽर्हति कर्तुमद्य ।
न चापि तत्पातनमन्यथेह ; कर्तुं विषह्यं भुवि मानवेन ॥ ०२७ ॥

एवं ब्रुवत्येव युधिष्ठिरे तु ; पाञ्चालराजस्य समीपतोऽन्यः ।
तत्राजगामाशु नरो द्वितीयो ; निवेदयिष्यन्निह सिद्धमन्नम् ॥ ०२८ ॥

# अध्याय १८६

दूत उवाच ॥

जन्यार्थमन्नं द्रुपदेन राज्ञा ; विवाहहेतोरुपसंस्कृतं च ।
तदाप्नुवध्वं कृतसर्वकार्याः ; कृष्णा च तत्रैव चिरं न कार्यम् ॥ ००१ ॥

इमे रथाः काञ्चनपद्मचित्राः ; सदश्वयुक्ता वसुधाधिपार्हाः ।
एतान्समारुह्य परैत सर्वे ; पाञ्चालराजस्य निवेशनं तत् ॥ ००२ ॥

वैशंपायन उवाच ॥

ततः प्रयाताः कुरुपुङ्गवास्ते ; पुरोहितं तं प्रथमं प्रयाप्य ।
आस्थाय यानानि महान्ति तानि ; कुन्ती च कृष्णा च सहैव याते ॥ ००३ ॥

श्रुत्वा तु वाक्यानि पुरोहितस्य ; यान्युक्तवान्भारत धर्मराजः ।
जिज्ञासयैवाथ कुरूत्तमानां ; द्रव्याण्यनेकान्युपसञ्जहार ॥ ००४ ॥

फलानि माल्यानि सुसंस्कृतानि ; चर्माणि वर्माणि तथासनानि ।
गाश्चैव राजन्नथ चैव रज्जू ;द्रव्याणि चान्यानि कृषीनिमित्तम् ॥ ००५ ॥

अन्येषु शिल्पेषु च यान्यपि स्युः ; सर्वाणि क्लृप्तान्यखिलेन तत्र ।
क्रीडानिमित्तानि च यानि तानि ; सर्वाणि तत्रोपजहार राजा ॥ ००६ ॥

रथाश्ववर्माणि च भानुमन्ति ; खड्गा महान्तोऽश्वरथाश्च चित्राः ।
धनूंषि चाग्र्याणि शराश्च मुख्याः ; शक्त्यृष्टयः काञ्चनभूषिताश्च ॥ ००७ ॥

प्रासा भुशुण्ड्यश्च परश्वधाश्च ; साङ्ग्रामिकं चैव तथैव सर्वम् ।

शय्यासनान्युत्तमसंस्कृतानि ; तथैव चासन्विविधानि तत्र ॥ ००८ ॥

कुन्ती तु कृष्णां परिगृह्य साध्वी ;मन्तःपुरं द्रुपदस्याविवेष ।
स्त्रियश्च तां कौरवराजपत्नीं ; प्रत्यर्चयां चक्रुरदीनसत्त्वाः ॥ ००९ ॥

तान्सिंहविक्रान्तगतीनवेक्ष्य ; महर्षभाक्षानजिनोत्तरीयान् ।
गूढोत्तरांसान्भुजगेन्द्रभोग ;प्रलम्बबाहून्पुरुषप्रवीरान् ॥ ०१० ॥

राजा च राज्ञः सचिवाश्च सर्वे ; पुत्राश्च राज्ञः सुहृदस्तथैव ।
प्रेष्याश्च सर्वे निखिलेन राज ;न्हर्षं समापेतुरतीव तत्र ॥ ०११ ॥

ते तत्र वीराः परमासनेषु ; सपादपीठेष्वविशङ्कमानाः ।
यथानुपूर्व्या विविशुर्नराग्र्या ;स्तदा महार्हेषु न विस्मयन्तः ॥ ०१२ ॥

उच्चावचं पार्थिवभोजनीयं ; पात्रीषु जाम्बूनदराजतीषु ।
दासाश्च दास्यश्च सुमृष्टवेषाः ; भोजापकाश्चाप्युपजह्रुरन्नम् ॥ ०१३ ॥

ते तत्र भुक्त्वा पुरुषप्रवीरा ; यथानुकामं सुभृशं प्रतीताः ।
उत्क्रम्य सर्वाणि वसूनि तत्र ; साङ्ग्रामिकान्याविविशुर्नृवीराः ॥ ०१४ ॥

तल्लक्षयित्वा द्रुपदस्य पुत्रो ; राजा च सर्वैः सह मन्त्रिमुख्यैः ।
समर्चयामासुरुपेत्य हृष्टाः ; कुन्तीसुतान्पार्थिवपुत्रपौत्रान् ॥ ०१५ ॥

---

# अध्याय १८७

वैशंपायन उवाच ॥

तत आहूय पाञ्चाल्यो राजपुत्रं युधिष्ठिरम् ।
परिग्रहेण ब्राह्मेण परिगृह्य महाद्युतिः ॥ ००१ ॥

पर्यपृच्छददीनात्मा कुन्तीपुत्रं सुवर्चसम् ।
कथं जानीम भवतः क्षत्रियान्ब्राह्मणानुत ॥ ००२ ॥

वैश्यान्वा गुणसंपन्नानुत वा शूद्रयोनिजान् ।
मायामास्थाय वा सिद्धांश्चरतः सर्वतोदिशम् ॥ ००३ ॥

कृष्णाहेतोरनुप्राप्तान्दिवः संदर्शनार्थिनः ।
ब्रवीतु नो भवान्सत्यं संदेहो ह्यत्र नो महान् ॥ ००४ ॥

अपि नः संशयस्यान्ते मनस्तुष्टिरिहाविशेत् ।
अपि नो भागधेयानि शुभानि स्युः परंतप ॥ ००५ ॥

कामया ब्रूहि सत्यं त्वं सत्यं राजसु शोभते ।
इष्टापूर्तेन च तथा वक्तव्यमनृतं न तु ॥ ००६ ॥

श्रुत्वा ह्यमरसङ्काश तव वाक्यमरिंदम ।
ध्रुवं विवाहकरणमास्थास्यामि विधानतः ॥ ००७ ॥

युधिष्ठिर उवाच ॥

मा राजन्विमना भूस्त्वं पाञ्चाल्य प्रीतिरस्तु ते ।
ईप्सितस्ते ध्रुवः कामः संवृत्तोऽयमसंशयम् ॥ ००८ ॥

वयं हि क्षत्रिया राजन्पाण्डोः पुत्रा महात्मनः ।
ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ ॥ ००९ ॥

याभ्यां तव सुता राजन्निर्जिता राजसंसदि ॥ ००९ ॥

यमौ तु तत्र राजेन्द्र यत्र कृष्णा प्रतिष्ठिता ।
व्येतु ते मानसं दुःखं क्षत्रियाः स्मो नरर्षभ ॥ ०१० ॥

पद्मिनीव सुतेयं ते ह्रदादन्यं ह्रदं गता ॥ ०१० ॥

इति तथ्यं महाराज सर्वमेतद्ब्रवीमि ते ।
भवान्हि गुरुरस्माकं परमं च परायणम् ॥ ०११ ॥

वैशंपायन उवाच ॥

ततः स द्रुपदो राजा हर्षव्याकुललोचनः ।
प्रतिवक्तुं तदा युक्तं नाशकत्तं युधिष्ठिरम् ॥ ०१२ ॥

यत्नेन तु स तं हर्षं संनिगृह्य परंतपः ।
अनुरूपं ततो राजा प्रत्युवाच युधिष्ठिरम् ॥ ०१३ ॥

पप्रच्छ चैनं धर्मात्मा यथा ते प्रद्रुताः पुरा ।
स तस्मै सर्वमाचख्यावानुपूर्व्येण पाण्डवः ॥ ०१४ ॥

तच्छ्रुत्वा द्रुपदो राजा कुन्तीपुत्रस्य भाषितम् ।
विगर्हयामास तदा धृतराष्ट्रं जनेश्वरम् ॥ ०१५ ॥

आश्वासयामास च तं कुन्तीपुत्रं युधिष्ठिरम् ।
प्रतिजज्ञे च राज्याय द्रुपदो वदतां वरः ॥ ०१६ ॥

ततः कुन्ती च कृष्णा च भीमसेनार्जुनावपि ।
यमौ च राज्ञा संदिष्टौ विविशुर्भवनं महत् ॥ ०१७ ॥

तत्र ते न्यवसन्राजन्यज्ञसेनेन पूजिताः ।
प्रत्याश्वस्तांस्ततो राजा सह पुत्रैरुवाच तान् ॥ ०१८ ॥

गृह्णातु विधिवत्पाणिमद्यैव कुरुनन्दनः ।
पुण्येऽहनि महाबाहुरर्जुनः कुरुतां क्षणम् ॥ ०१९ ॥

ततस्तमब्रवीद्राजा धर्मपुत्रो युधिष्ठिरः ।
ममापि दारसंबन्धः कार्यस्तावद्विशां पते ॥ ०२० ॥

द्रुपद उवाच ॥

भवान्वा विधिवत्पाणिं गृह्णातु दुहितुर्मम ।
यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश ॥ ०२१ ॥

युधिष्ठिर उवाच ॥

सर्वेषां द्रौपदी राजन्महिषी नो भविष्यति ।
एवं हि व्याहृतं पूर्वं मम मात्रा विशां पते ॥ ०२२ ॥

अहं चाप्यनिविष्टो वै भीमसेनश्च पाण्डवः ।
पार्थेन विजिता चैषा रत्नभूता च ते सुता ॥ ०२३ ॥

एष नः समयो राजन्रत्नस्य सहभोजनम् ।
न च तं हातुमिच्छामः समयं राजसत्तम ॥ ०२४ ॥

सर्वेषां धर्मतः कृष्णा महिषी नो भविष्यति ।
आनुपूर्व्येण सर्वेषां गृह्णातु ज्वलने करम् ॥ ०२५ ॥

द्रुपद उवाच ॥

एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन ।
नैकस्या बहवः पुंसो विधीयन्ते कदाचन ॥ ०२६ ॥

लोकवेदविरुद्धं त्वं नाधर्मं धार्मिकः शुचिः ।

कर्तुमर्हसि कौन्तेय कस्मात्ते बुद्धिरीदृशी ॥ ०२७ ॥

युधिष्ठिर उवाच ॥

सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम् ।
पूर्वेषामानुपूर्व्येण यातं वर्त्मानुयामहे ॥ ०२८ ॥

न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
एवं चैव वदत्यम्बा मम चैव मनोगतम् ॥ ०२९ ॥

एष धर्मो ध्रुवो राजंश्चरैनमविचारयन् ।
मा च तेऽत्र विशङ्का भूत्कथञ्चिदपि पार्थिव ॥ ०३० ॥

द्रुपद उवाच ॥

त्वं च कुन्ती च कौन्तेय धृष्टद्युम्नश्च मे सुतः ।
कथयन्त्वितिकर्तव्यं श्वः काले करवामहे ॥ ०३१ ॥

वैशंपायन उवाच ॥

ते समेत्य ततः सर्वे कथयन्ति स्म भारत ।
अथ द्वैपायनो राजन्नभ्यागच्छद्यदृच्छया ॥ ०३२ ॥

---

# अध्याय १८८

वैशंपायन उवाच ॥

ततस्ते पाण्डवाः सर्वे पाञ्चाल्यश्च महायशाः ।

प्रत्युत्थाय महात्मानं कृष्णं दृष्ट्वाभ्यपूजयन् ॥ ००१ ॥

प्रतिनन्द्य स तान्सर्वान्पृष्ट्वा कुशलमन्ततः ।
आसने काञ्चने शुभ्रे निषसाद महामनाः ॥ ००२ ॥

अनुज्ञातास्तु ते सर्वे कृष्णेनामिततेजसा ।
आसनेषु महार्हेषु निषेदुर्द्विपदां वराः ॥ ००३ ॥

ततो मुहूर्तान्मधुरां वाणीमुच्चार्य पार्षतः ।
पप्रच्छ तं महात्मानं द्रौपद्यर्थे विशां पतिः ॥ ००४ ॥

कथमेका बहूनां स्यान्न च स्याद्धर्मसङ्करः ।
एतन्नो भगवान्सर्वं प्रब्रवीतु यथातथम् ॥ ००५ ॥

व्यास उवाच ॥

अस्मिन्धर्मे विप्रलम्भे लोकवेदविरोधके ।
यस्य यस्य मतं यद्यच्छ्रोतुमिच्छामि तस्य तत् ॥ ००६ ॥

द्रुपद उवाच ॥

अधर्मोऽयं मम मतो विरुद्धो लोकवेदयोः ।
न ह्येका विद्यते पत्नी बहूनां द्विजसत्तम ॥ ००७ ॥

न चाप्याचरितः पूर्वैरयं धर्मो महात्मभिः ।
न च धर्मोऽप्यनेकस्थश्चरितव्यः सनातनः ॥ ००८ ॥

अतो नाहं करोम्येवं व्यवसायं क्रियां प्रति ।
धर्मसंदेहसंदिग्धं प्रतिभाति हि मामिदम् ॥ ००९ ॥

धृष्टद्युम्न उवाच ॥

यवीयसः कथं भार्यां ज्येष्ठो भ्राता द्विजर्षभ ।
ब्रह्मन्समभिवर्तेत सद्वृत्तः संस्तपोधन ॥ ०१० ॥

न तु धर्मस्य सूक्ष्मत्वाद्गतिं विद्मः कथञ्चन ।
अधर्मो धर्म इति वा व्यवसायो न शक्यते ॥ ०११ ॥

कर्तुमस्मद्विधैर्ब्रह्मंस्ततो न व्यवसाम्यहम् ।
पञ्चानां महिषी कृष्णा भवत्विति कथञ्चन ॥ ०१२ ॥

युधिष्ठिर उवाच ॥

न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
वर्तते हि मनो मेऽत्र नैषोऽधर्मः कथञ्चन ॥ ०१३ ॥

श्रूयते हि पुराणेऽपि जटिला नाम गौतमी ।
ऋषीनध्यासितवती सप्त धर्मभृतां वर ॥ ०१४ ॥

गुरोश्च वचनं प्राहुर्धर्मं धर्मज्ञसत्तम ।
गुरूणां चैव सर्वेषां जनित्री परमो गुरुः ॥ ०१५ ॥

सा चाप्युक्तवती वाचं भैक्षवद्भुज्यतामिति ।
तस्मादेतदहं मन्ये धर्मं द्विजवरोत्तम ॥ ०१६ ॥

कुन्त्युवाच ॥

एवमेतद्यथाहायं धर्मचारी युधिष्ठिरः ।
अनृतान्मे भयं तीव्रं मुच्येयमनृतात्कथम् ॥ ०१७ ॥

व्यास उवाच ॥

अनृतान्मोक्ष्यसे भद्रे धर्मश्चैष सनातनः ।
न तु वक्ष्यामि सर्वेषां पाञ्चाल शृणु मे स्वयम् ॥ ०१८ ॥

यथायं विहितो धर्मो यतश्चायं सनातनः ।
यथा च प्राह कौन्तेयस्तथा धर्मो न संशयः ॥ ०१९ ॥

वैशंपायन उवाच ॥

तत उत्थाय भगवान्व्यासो द्वैपायनः प्रभुः ।
करे गृहीत्वा राजानं राजवेश्म समाविशत् ॥ ०२० ॥

पाण्डवाश्चापि कुन्ती च धृष्टद्युम्नश्च पार्षतः ।
विचेतसस्ते तत्रैव प्रतीक्षन्ते स्म तावुभौ ॥ ०२१ ॥

ततो द्वैपायनस्तस्मै नरेन्द्राय महात्मने ।
आचख्यौ तद्यथा धर्मो बहूनामेकपत्निता ॥ ०२२ ॥

---

# पञ्चेन्द्रोपाख्यानम्

## अध्याय १८९

व्यास उवाच ॥

पुरा वै नैमिषारण्ये देवाः सत्रमुपासते ।
तत्र वैवस्वतो राजञ्शामित्रमकरोत्तदा ॥ ००१ ॥

ततो यमो दीक्षितस्तत्र राज ;न्नामारयत्किञ्चिदपि प्रजाभ्यः ।

ततः प्रजास्ता बहुला बभूवुः ; कालातिपातान्मरणात्प्रहीणाः ॥ ००२ ॥

ततस्तु शक्रो वरुणः कुबेरः ; साध्या रुद्रा वसवश्चाश्विनौ च ।
प्रणेतारं भुवनस्य प्रजापतिं ; समाजग्मुस्तत्र देवास्तथान्ये ॥ ००३ ॥

ततोऽब्रुव.ण्ल्लोकगुरुं समेता ; भयं नस्तीव्रं मानुषाणां विवृद्ध्या ।
तस्माद्भयादुद्विजन्तः सुखेप्सवः ; प्रयाम सर्वे शरणं भवन्तम् ॥ ००४ ॥

ब्रह्मोवाच ॥

किं वो भयं मानुषेभ्यो यूयं सर्वे यदामराः ।
मा वो मर्त्यसकाशाद्वै भयं भवतु कर्हिचित् ॥ ००५ ॥

देवा ऊचुः ॥

मर्त्या ह्यमर्त्याः संवृत्ता न विशेषोऽस्ति कश्चन ।
अविशेषादुद्विजन्तो विशेषार्थमिहागताः ॥ ००६ ॥

ब्रह्मोवाच ॥

वैवस्वतो व्यापृतः सत्रहेतो ;स्तेन त्विमे न म्रियन्ते मनुष्याः ।
तस्मिन्नेकाग्रे कृतसर्वकार्ये ; तत एषां भवितैवान्तकालः ॥ ००७ ॥

वैवस्वतस्यापि तनुर्विभूता ; वीर्येण युष्माकमुत प्रयुक्ता ।
सैषामन्तो भविता ह्यन्तकाले ; तनुर्हि वीर्यं भविता नरेषु ॥ ००८ ॥

व्यास उवाच ॥

ततस्तु ते पूर्वजदेववाक्यं ; श्रुत्वा देवा यत्र देवा यजन्ते ।
समासीनास्ते समेता महाबला ; भागीरथ्यां ददृशुः पुण्डरीकम् ॥ ००९ ॥

दृष्ट्वा च तद्विस्मितास्ते बभूवु ;स्तेषामिन्द्रस्तत्र शूरो जगाम ।
सोऽपश्यद्योषामथ पावकप्रभां ; यत्र गङ्गा सततं संप्रसूता ॥ ०१० ॥

सा तत्र योषा रुदती जलार्थिनी ; गङ्गां देवीं व्यवगाह्यावतिष्ठत् ।
तस्याश्रुबिन्दुः पतितो जले वै ; तत्पद्ममासीदथ तत्र काञ्चनम् ॥ ०११ ॥

तदद्भुतं प्रेक्ष्य वज्री तदानी ;मपृच्छत्तां योषितमन्तिकाद्वै ।
का त्वं कथं रोदिषि कस्य हेतो ;र्वाक्यं तथ्यं कामयेह ब्रवीहि ॥ ०१२ ॥

स्त्र्युवाच ॥

त्वं वेत्स्यसे मामिह यास्मि शक्र ; यदर्थं चाहं रोदिमि मन्दभाग्या ।
आगच्छ राजन्पुरतोऽहं गमिष्ये ; द्रष्टासि तद्रोदिमि यत्कृतेऽहम् ॥ ०१३ ॥

व्यास उवाच ॥

तां गच्छन्तीमन्वगच्छत्तदानीं ; सोऽपश्यदारात्तरुणं दर्शनीयम् ।
सिंहासनस्थं युवतीसहायं ; क्रीडन्तमक्षैर्गिरिराजमूर्ध्नि ॥ ०१४ ॥

तमब्रवीद्देवराजो ममेदं ; त्वं विद्धि विश्वं भुवनं वशे स्थितम् ।
ईशोऽहमस्मीति समन्युरब्रवी ;द्दृष्ट्वा तमक्षैः सुभृशं प्रमत्तम् ॥ ०१५ ॥

क्रुद्धं तु शक्रं प्रसमीक्ष्य देवो ; जहास शक्रं च शनैरुदैक्षत ।
संस्तम्भितोऽभूदथ देवराज ;स्तेनेक्षितः स्थाणुरिवावतस्थे ॥ ०१६ ॥

यदा तु पर्याप्तमिहास्य क्रीडया ; तदा देवीं रुदतीं तामुवाच ।
आनीयतामेष यतोऽहमारा ;न्मैनं दर्पः पुनरप्याविशेत ॥ ०१७ ॥

ततः शक्रः स्पृष्टमात्रस्तया तु ; स्रस्तैरङ्गैः पतितोऽभूद्धरण्याम् ।
तमब्रवीद्भगवानुग्रतेजा ; मैवं पुनः शक्र कृथाः कथञ्चित् ॥ ०१८ ॥

विवर्तयैनं च महाद्रिराजं ; बलं च वीर्यं च तवाप्रमेयम् ।
विवृत्य चैवाविश मध्यमस्य ; यत्रासते त्वद्विधाः सूर्यभासः ॥ ०१९ ॥

स तद्विवृत्य शिखरं महागिरे ;स्तुल्यद्युतींश्चतुरोऽन्यान्ददर्श ।
स तानभिप्रेक्ष्य बभूव दुःखितः ; कच्चिन्नाहं भविता वै यथेमे ॥ ०२० ॥

ततो देवो गिरिशो वज्रपाणिं ; विवृत्य नेत्रे कुपितोऽभ्युवाच ।
दरीमेतां प्रविश त्वं शतक्रतो ; यन्मां बाल्यादवमंस्थाः पुरस्तात् ॥ ०२१ ॥

उक्तस्त्वेवं विभुना देवराजः ; प्रवेपमानो भृशमेवाभिषङ्गात् ।
स्रस्तैरङ्गैरनिलेनेव नुन्न ;मश्वत्थपत्रं गिरिराजमूर्ध्नि ॥ ०२२ ॥

स प्राञ्जलिर्विनतेनाननेन ; प्रवेपमानः सहसैवमुक्तः ।
उवाच चेदं बहुरूपमुग्रं ; द्रष्टा शेषस्य भगवंस्त्वं भवाद्य ॥ ०२३ ॥

तमब्रवीदुग्रधन्वा प्रहस्य ; नैवंशीलाः शेषमिहाप्नुवन्ति ।
एतेऽप्येवं भवितारः पुरस्ता ;त्तस्मादेतां दरिमाविश्य शेध्वम् ॥ ०२४ ॥

शेषोऽप्येवं भविता वो न संशयो ; योनिं सर्वे मानुषीमाविशध्वम् ।
तत्र यूयं कर्म कृत्वाविषह्यं ; बहूनन्यान्निधनं प्रापयित्वा ॥ ०२५ ॥

आगन्तारः पुनरेवेन्द्रलोकं ; स्वकर्मणा पूर्वजितं महार्हम् ।
सर्वं मया भाषितमेतदेवं ; कर्तव्यमन्यद्विविधार्थवच्च ॥ ०२६ ॥

पूर्वेन्द्रा ऊचुः ॥

गमिष्यामो मानुषं देवलोका ;द्दुराधरो विहितो यत्र मोक्षः ।
देवास्त्वस्मानादधीरञ्जनन्यां ; धर्मो वायुर्मघवानश्विनौ च ॥ ०२७ ॥

व्यास उवाच ॥

एतच्छ्रुत्वा वज्रपाणिर्वचस्तु ; देवश्रेष्ठं पुनरेवेदमाह ।
वीर्येणाहं पुरुषं कार्यहेतो ;र्दद्यामेषां पञ्चमं मत्प्रसूतम् ॥ ०२८ ॥

तेषां कामं भगवानुग्रधन्वा ; प्रादादिष्टं सन्निसर्गाद्यथोक्तम् ।
तां चाप्येषां योषितं लोककान्तां ; श्रियं भार्यां व्यदधान्मानुषेषु ॥ ०२९ ॥

तैरेव सार्धं तु ततः स देवो ; जगाम नारायणमप्रमेयम् ।
स चापि तद्व्यदधात्सर्वमेव ; ततः सर्वे संबभूवुर्धरण्याम् ॥ ०३० ॥

स चापि केशौ हरिरुद्बबर्ह ; शुक्लमेकमपरं चापि कृष्णम् ।
तौ चापि केशौ विशतां यदूनां ; कुले स्त्रियौ रोहिणीं देवकीं च ॥ ०३१ ॥

तयोरेको बलदेवो बभूव ; कृष्णो द्वितीयः केशवः संबभूव ॥ ०३१ ॥

ये ते पूर्वं शक्ररूपा निरुद्धा ;स्तस्यां दर्यां पर्वतस्योत्तरस्य ।
इहैव ते पाण्डवा वीर्यवन्तः ; शक्रस्यांशः पाण्डवः सव्यसाची ॥ ०३२ ॥

एवमेते पाण्डवाः संबभूवु ;र्ये ते राजन्पूर्वमिन्द्रा बभूवुः ।
लक्ष्मीश्चैषां पूर्वमेवोपदिष्टा ; भार्या यैषा द्रौपदी दिव्यरूपा ॥ ०३३ ॥

कथं हि स्त्री कर्मणोऽन्ते महीतला ;त्समुत्तिष्ठेदन्यतो दैवयोगात् ।
यस्या रूपं सोमसूर्यप्रकाशं ; गन्धश्चाग्र्यः क्रोशमात्रात्प्रवाति ॥ ०३४ ॥

इदं चान्यत्प्रीतिपूर्वं नरेन्द्र ; ददामि ते वरमत्यद्भुतं च ।
दिव्यं चक्षुः पश्य कुन्तीसुतांस्त्वं ; पुण्यैर्दिव्यैः पूर्वदेहैरुपेतान् ॥ ०३५ ॥

वैशंपायन उवाच ॥

ततो व्यासः परमोदारकर्मा ; शुचिर्विप्रस्तपसा तस्य राज्ञः ।
चक्षुर्दिव्यं प्रददौ तान्स सर्वा ;न्राजापश्यत्पूर्वदेहैर्यथावत् ॥ ०३६ ॥

ततो दिव्यान्हेमकिरीटमालिनः ; शक्रप्रख्यान्पावकादित्यवर्णान् ।
बद्धापीडांश्चारुरूपांश्च यूनो ; व्यूढोरस्कांस्तालमात्रान्ददर्श ॥ ०३७ ॥

दिव्यैर्वस्त्रैररजोभिः सुवर्णै ;र्माल्यैश्चाग्र्यैः शोभमानानतीव ।
साक्षात्त्र्यक्षान्वसवो वाथ दिव्या ;नादित्यान्वा सर्वगुणोपपन्नान् ॥ ०३८ ॥

तान्पूर्वेन्द्रानेवमीक्ष्याभिरूपा ;न्प्रीतो राजा द्रुपदो विस्मितश्च ॥ ०३८ ॥

दिव्यां मायां तामवाप्याप्रमेयां ; तां चैवाग्र्यां श्रियमिव रूपिणीं च ।
योग्यां तेषां रूपतेजोयशोभिः ; पत्नीमृद्धां दृष्टवान्पार्थिवेन्द्रः ॥ ०३९ ॥

स तद्दृष्ट्वा महदाश्चर्यरूपं ; जग्राह पादौ सत्यवत्याः सुतस्य ।
नैतच्चित्रं परमर्षे त्वयीति ; प्रसन्नचेताः स उवाच चैनम् ॥ ०४० ॥

व्यास उवाच ॥

आसीत्तपोवने काचिदृषेः कन्या महात्मनः ।
नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती ॥ ०४१ ॥

तोषयामास तपसा सा किलोग्रेण शङ्करम् ।
तामुवाचेश्वरः प्रीतो वृणु काममिति स्वयम् ॥ ०४२ ॥

सैवमुक्ताब्रवीत्कन्या देवं वरदमीश्वरम् ।
पतिं सर्वगुणोपेतमिच्छामीति पुनः पुनः ॥ ०४३ ॥

ददौ तस्यै स देवेशस्तं वरं प्रीतिमांस्तदा ।
पञ्च ते पतयः श्रेष्ठा भविष्यन्तीति शङ्करः ॥ ०४४ ॥

सा प्रसादयती देवमिदं भूयोऽभ्यभाषत ।
एकं पतिं गुणोपेतं त्वत्तोऽर्हामीति वै तदा ॥ ०४५ ॥

तां देवदेवः प्रीतात्मा पुनः प्राह शुभं वचः ॥ ०४५ ॥

पञ्चकृत्वस्त्वया उक्तः पतिं देहीत्यहं पुनः ।
तत्तथा भविता भद्रे तव तद्भद्रमस्तु ते ॥ ०४६ ॥

देहमन्यं गतायास्ते यथोक्तं तद्भविष्यति ॥ ०४६ ॥

द्रुपदैषा हि सा जज्ञे सुता ते देवरूपिणी ।
पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता ॥ ०४७ ॥

स्वर्गश्रीः पाण्डवार्थाय समुत्पन्ना महामखे ।
सेह तप्त्वा तपो घोरं दुहितृत्वं तवागता ॥ ०४८ ॥

सैषा देवी रुचिरा देवजुष्टा ; पञ्चानामेका स्वकृतेन कर्मणा ।
सृष्टा स्वयं देवपत्नी स्वयम्भुवा ; श्रुत्वा राजन्द्रुपदेष्टं कुरुष्व ॥ ०४९ ॥

---

# वैवाहिकपर्व

## अध्याय १९०

द्रुपद उवाच ॥

अश्रुत्वैवं वचनं ते महर्षे ; मया पूर्वं यतितं कार्यमेतत् ।
न वै शक्यं विहितस्यापयातुं ; तदेवेदमुपपन्नं विधानम् ॥ ००१ ॥

दिष्टस्य ग्रन्थिरनिवर्तनीयः ; स्वकर्मणा विहितं नेह किञ्चित् ।

कृतं निमित्तं हि वरैकहेतो ;स्तदेवेदमुपपन्नं बहूनाम् ॥ ००२ ॥

यथैव कृष्णोक्तवती पुरस्ता ;न्नैकान्पतीन्मे भगवान्ददातु ।
स चाप्येवं वरमित्यब्रवीत्तां ; देवो हि वेद परमं यदत्र ॥ ००३ ॥

यदि वायं विहितः शङ्करेण ; धर्मोऽधर्मो वा नात्र ममापराधः ।
गृह्णन्त्विमे विधिवत्पाणिमस्या ; यथोपजोषं विहितैषां हि कृष्णा ॥ ००४ ॥

वैशंपायन उवाच ॥

ततोऽब्रवीद्भगवान्धर्मराज ;मद्य पुण्याहमुत पाण्डवेय ।
अद्य पौष्यं योगमुपैति चन्द्रमाः ; पाणिं कृष्णायास्त्वं गृहाणाद्य पूर्वम् ॥ ००५ ॥

ततो राजा यज्ञसेनः सपुत्रो ; जन्यार्थं युक्तं बहु तत्तदग्र्यम् ।
समानयामास सुतां च कृष्णा ;माप्लाव्य रत्नैर्बहुभिर्विभूष्य ॥ ००६ ॥

ततः सर्वे सुहृदस्तत्र तस्य ; समाजग्मुः सचिवा मन्त्रिणश्च ।
द्रष्टुं विवाहं परमप्रतीता ; द्विजाश्च पौराश्च यथाप्रधानाः ॥ ००७ ॥

तत्तस्य वेश्मार्थिजनोपशोभितं ; विकीर्णपद्मोत्पलभूषिताजिरम् ।
महार्हरत्नौघविचित्रमाबभौ ; दिवं यथा निर्मलतारकाचितम् ॥ ००८ ॥

ततस्तु ते कौरवराजपुत्रा ; विभूषिताः कुण्डलिनो युवानः ।
महार्हवस्त्रा वरचन्दनोक्षिताः ; कृताभिषेकाः कृतमङ्गलक्रियाः ॥ ००९ ॥

पुरोहितेनाग्निसमानवर्चसा ; सहैव धौम्येन यथाविधि प्रभो ।
क्रमेण सर्वे विविशुश्च तत्सदो ; महर्षभा गोष्ठमिवाभिनन्दिनः ॥ ०१० ॥

ततः समाधाय स वेदपारगो ; जुहाव मन्त्रैर्ज्वलितं हुताशनम् ।
युधिष्ठिरं चाप्युपनीय मन्त्रवि ;न्नियोजयामास सहैव कृष्णया ॥ ०११ ॥

प्रदक्षिणं तौ प्रगृहीतपाणी ; समानयामास स वेदपारगः ।
ततोऽभ्यनुज्ञाय तमाजिशोभिनं ; पुरोहितो राजगृहाद्विनिर्ययौ ॥ ०१२ ॥

क्रमेण चानेन नराधिपात्मजा ; वरस्त्रियास्ते जगृहुस्तदा करम् ।
अहन्यहन्युत्तमरूपधारिणो ; महारथाः कौरववंशवर्धनाः ॥ ०१३ ॥

इदं च तत्राद्भुतरूपमुत्तमं ; जगाद विप्रर्षिरतीतमानुषम् ।
महानुभावा किल सा सुमध्यमा ; बभूव कन्यैव गते गतेऽहनि ॥ ०१४ ॥

कृते विवाहे द्रुपदो धनं ददौ ; महारथेभ्यो बहुरूपमुत्तमम् ।
शतं रथानां वरहेमभूषिणां ; चतुर्युजां हेमखलीनमालिनाम् ॥ ०१५ ॥

शतं गजानामभिपद्मिनां तथा ; शतं गिरीणामिव हेमशृङ्गिणाम् ।
तथैव दासीशतमग्र्ययौवनं ; महार्हवेषाभरणाम्बरस्रजम् ॥ ०१६ ॥

पृथक्पृथक्चैव दशायुतान्वितं ; धनं ददौ सौमकिरग्निसाक्षिकम् ।
तथैव वस्त्राणि च भूषणानि ; प्रभावयुक्तानि महाधनानि ॥ ०१७ ॥

कृते विवाहे च ततः स्म पाण्डवाः ; प्रभूतरत्नामुपलभ्य तां श्रियम् ।
विजह्रुरिन्द्रप्रतिमा महाबलाः ; पुरे तु पाञ्चालनृपस्य तस्य ह ॥ ०१८ ॥

---

# अध्याय १९१

वैशंपायन उवाच ॥

पाण्डवैः सह संयोगं गतस्य द्रुपदस्य तु ।

न बभूव भयं किञ्चिद्देवेभ्योऽपि कथञ्चन ॥ ००१ ॥

कुन्तीमासाद्य ता नार्यो द्रुपदस्य महात्मनः ।
नाम सङ्कीर्तयन्त्यस्ताः पादौ जग्मुः स्वमूर्धभिः ॥ ००२ ॥

कृष्णा च क्षौमसंवीता कृतकौतुकमङ्गला ।
कृताभिवादना श्वश्र्वास्तस्थौ प्रह्वा कृताञ्जलिः ॥ ००३ ॥

रूपलक्षणसंपन्नां शीलाचारसमन्विताम् ।
द्रौपदीमवदत्प्रेम्णा पृथाशीर्वचनं स्नुषाम् ॥ ००४ ॥

यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ ।
रोहिणी च यथा सोमे दमयन्ती यथा नले ॥ ००५ ॥

यथा वैश्रवणे भद्रा वसिष्ठे चाप्यरुन्धती ।
यथा नारायणे लक्ष्मीस्तथा त्वं भव भर्तृषु ॥ ००६ ॥

जीवसूर्वीरसूर्भद्रे बहुसौख्यसमन्विता ।
सुभगा भोगसंपन्ना यज्ञपत्नी स्वनुव्रता ॥ ००७ ॥

अतिथीनागतान्साधून्बालान्वृद्धान्गुरूंस्तथा ।
पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः ॥ ००८ ॥

कुरुजाङ्गलमुख्येषु राष्ट्रेषु नगरेषु च ।
अनु त्वमभिषिच्यस्व नृपतिं धर्मवत्सलम् ॥ ००९ ॥

पतिभिर्निर्जितामुर्वीं विक्रमेण महाबलैः ।
कुरु ब्राह्मणसात्सर्वामश्वमेधे महाक्रतौ ॥ ०१० ॥

पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते ।
तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां शतम् ॥ ०११ ॥

यथा च त्वाभिनन्दामि वध्वद्य क्षौमसंवृताम् ।
तथा भूयोऽभिनन्दिष्ये सूतपुत्रां गुणान्विताम् ॥ ०१२ ॥

ततस्तु कृतदारेभ्यः पाण्डुभ्यः प्राहिणोद्धरिः ।
मुक्तावैडूर्यचित्राणि हैमान्याभरणानि च ॥ ०१३ ॥

वासांसि च महार्हाणि नानादेश्यानि माधवः ।
कम्बलाजिनरत्नानि स्पर्शवन्ति शुभानि च ॥ ०१४ ॥

शयनासनयानानि विविधानि महान्ति च ।
वैडूर्यवज्रचित्राणि शतशो भाजनानि च ॥ ०१५ ॥

रूपयौवनदाक्षिण्यैरुपेताश्च स्वलङ्कृताः ।
प्रेष्याः संप्रददौ कृष्णो नानादेश्याः सहस्रशः ॥ ०१६ ॥

गजान्विनीतान्भद्रांश्च सदश्वांश्च स्वलङ्कृतान् ।
रथांश्च दान्तान्सौवर्णैः शुभैः पट्टैरलङ्कृतान् ॥ ०१७ ॥

कोटिशश्च सुवर्णं स तेषामकृतकं तथा ।
वीतीकृतममेयात्मा प्राहिणोन्मधुसूदनः ॥ ०१८ ॥

तत्सर्वं प्रतिजग्राह धर्मराजो युधिष्ठिरः ।
मुदा परमया युक्तो गोविन्दप्रियकाम्यया ॥ ०१९ ॥

# विदुरागमनपर्व

## अध्याय १९२

वैशंपायन उवाच ॥

ततो राज्ञां चरैराप्तैश्चारः समुपनीयत ।
पाण्डवैरुपसंपन्ना द्रौपदी पतिभिः शुभा ॥ ००१ ॥

येन तद्धनुरायम्य लक्ष्यं विद्धं महात्मना ।
सोऽर्जुनो जयतां श्रेष्ठो महाबाणधनुर्धरः ॥ ००२ ॥

यः शल्यं मद्रराजानमुत्क्षिप्याभ्रामयद्बली ।
त्रासयंश्चापि सङ्क्रुद्धो वृक्षेण पुरुषान्रणे ॥ ००३ ॥

न चापि संभ्रमः कश्चिदासीत्तत्र महात्मनः ।
स भीमो भीमसंस्पर्शः शत्रुसेनाङ्गपातनः ॥ ००४ ॥

ब्रह्मरूपधराञ्श्रुत्वा पाण्डुराजसुतांस्तदा ।
कौन्तेयान्मनुजेन्द्राणां विस्मयः समजायत ॥ ००५ ॥

सपुत्रा हि पुरा कुन्ती दग्धा जतुगृहे श्रुता ।
पुनर्जातानिति स्मैतान्मन्यन्ते सर्वपार्थिवाः ॥ ००६ ॥

धिक्कुर्वन्तस्तदा भीष्मं धृतराष्ट्रं च कौरवम् ।
कर्मणा सुनृशंसेन पुरोचनकृतेन वै ॥ ००७ ॥

वृत्ते स्वयंवरे चैव राजानः सर्व एव ते ।
यथागतं विप्रजग्मुर्विदित्वा पाण्डवान्वृतान् ॥ ००८ ॥

अथ दुर्योधनो राजा विमना भ्रातृभिः सह ।
अश्वत्थाम्ना मातुलेन कर्णेन च कृपेण च ॥ ००९ ॥

विनिवृत्तो वृतं दृष्ट्वा द्रौपद्या श्वेतवाहनम् ।
तं तु दुःशासनो व्रीडन्मन्दं मन्दमिवाब्रवीत् ॥ ०१० ॥

यद्यसौ ब्राह्मणो न स्याद्विन्देत द्रौपदीं न सः ।
न हि तं तत्त्वतो राजन्वेद कश्चिद्धनञ्जयम् ॥ ०११ ॥

दैवं तु परमं मन्ये पौरुषं तु निरर्थकम् ।
धिगस्मत्पौरुषं तात यद्धरन्तीह पाण्डवाः ॥ ०१२ ॥

एवं संभाषमाणास्ते निन्दन्तश्च पुरोचनम् ।
विविशुर्हास्तिनपुरं दीना विगतचेतसः ॥ ०१३ ॥

त्रस्ता विगतसङ्कल्पा दृष्ट्वा पार्थान्महौजसः ।
मुक्तान्हव्यवहाच्चैनान्संयुक्तान्द्रुपदेन च ॥ ०१४ ॥

धृष्टद्युम्नं च सञ्चिन्त्य तथैव च शिखण्डिनम् ।
द्रुपदस्यात्मजांश्चान्यान्सर्वयुद्धविशारदान् ॥ ०१५ ॥

विदुरस्त्वथ ताञ्श्रुत्वा द्रौपद्या पाण्डवान्वृतान् ।
व्रीडितान्धार्तराष्ट्रांश्च भग्नदर्पानुपागतान् ॥ ०१६ ॥

ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशां पते ।
उवाच दिष्ट्या कुरवो वर्धन्त इति विस्मितः ॥ ०१७ ॥

वैचित्रवीर्यस्तु नृपो निशाम्य विदुरस्य तत् ।
अब्रवीत्परमप्रीतो दिष्ट्या दिष्ट्येति भारत ॥ ०१८ ॥

मन्यते हि वृतं पुत्रं ज्येष्ठं द्रुपदकन्यया ।

दुर्योधनमविज्ञानात्प्रज्ञाचक्षुर्नरेश्वरः ॥ ०१९ ॥

अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु ।
आनीयतां वै कृष्णेति पुत्रं दुर्योधनं तदा ॥ ०२० ॥

अथास्य पश्चाद्विदुर आचख्यौ पाण्डवान्वृतान् ।
सर्वान्कुशलिनो वीरान्पूजितान्द्रुपदेन च ॥ ०२१ ॥

तेषां संबन्धिनश्चान्यान्बहून्बलसमन्वितान् ॥ ०२१ ॥

धृतराष्ट्र उवाच ॥

यथैव पाण्डोः पुत्रास्ते तथैवाभ्यधिका मम ।
सेयमभ्यधिका प्रीतिर्वृद्धिर्विदुर मे मता ॥ ०२२ ॥

यत्ते कुशलिनो वीरा मित्रवन्तश्च पाण्डवाः ॥ ०२२ ॥

को हि द्रुपदमासाद्य मित्रं क्षत्तः सबान्धवम् ।
न बुभूषेद्भवेनार्थी गतश्रीरपि पार्थिवः ॥ ०२३ ॥

वैशंपायन उवाच ॥

तं तथा भाषमाणं तु विदुरः प्रत्यभाषत ।
नित्यं भवतु ते बुद्धिरेषा राजञ्शतं समाः ॥ ०२४ ॥

ततो दुर्योधनश्चैव राधेयश्च विशां पते ।
धृतराष्ट्रमुपागम्य वचोऽब्रूतामिदं तदा ॥ ०२५ ॥

संनिधौ विदुरस्य त्वां वक्तुं नृप न शक्नुवः ।
विविक्तमिति वक्ष्यावः किं तवेदं चिकीर्षितम् ॥ ०२६ ॥

सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः ।
अभिष्टौषि च यत्क्षत्तुः समीपे द्विपदां वर ॥ ०२७ ॥

अन्यस्मिन्नृप कर्तव्ये त्वमन्यत्कुरुषेऽनघ ।
तेषां बलविघातो हि कर्तव्यस्तात नित्यशः ॥ ०२८ ॥

ते वयं प्राप्तकालस्य चिकीर्षां मन्त्रयामहे ।
यथा नो न ग्रसेयुस्ते सपुत्रबलबान्धवान् ॥ ०२९ ॥

---

# अध्याय १९३

धृतराष्ट्र उवाच ॥

अहमप्येवमेवैतच्चिन्तयामि यथा युवाम् ।
विवेक्तुं नाहमिच्छामि त्वाकारं विदुरं प्रति ॥ ००१ ॥

अतस्तेषां गुणानेव कीर्तयामि विशेषतः ।
नावबुध्येत विदुरो ममाभिप्रायमिङ्गितैः ॥ ००२ ॥

यच्च त्वं मन्यसे प्राप्तं तद्ब्रूहि त्वं सुयोधन ।
राधेय मन्यसे त्वं च यत्प्राप्तं तद्ब्रवीहि मे ॥ ००३ ॥

दुर्योधन उवाच ॥

अद्य तान्कुशलैर्विप्रैः सुकृतैराप्तकारिभिः ।
कुन्तीपुत्रान्भेदयामो माद्रीपुत्रौ च पाण्डवौ ॥ ००४ ॥

अथ वा द्रुपदो राजा महद्भिर्वित्तसञ्चयैः ।

पुत्राश्चास्य प्रलोभ्यन्ताममात्याश्चैव सर्वशः ॥ ००५ ॥

परित्यजध्वं राजानं कुन्तीपुत्रं युधिष्ठिरम् ।
अथ तत्रैव वा तेषां निवासं रोचयन्तु ते ॥ ००६ ॥

इहैषां दोषवद्वासं वर्णयन्तु पृथक्पृथक् ।
ते भिद्यमानास्तत्रैव मनः कुर्वन्तु पाण्डवाः ॥ ००७ ॥

अथवा कुशलाः केचिदुपायनिपुणा नराः ।
इतरेतरतः पार्थान्भेदयन्त्वनुरागतः ॥ ००८ ॥

व्युत्थापयन्तु वा कृष्णां बहुत्वात्सुकरं हि तत् ।
अथवा पाण्डवांस्तस्यां भेदयन्तु ततश्च ताम् ॥ ००९ ॥

भीमसेनस्य वा राजन्नुपायकुशलैर्नरैः ।
मृत्युर्विधीयतां छन्नैः स हि तेषां बलाधिकः ॥ ०१० ॥

तस्मिंस्तु निहते राजन्हतोत्साहा हतौजसः ।
यतिष्यन्ते न राज्याय स हि तेषां व्यपाश्रयः ॥ ०११ ॥

अजेयो ह्यर्जुनः संख्ये पृष्ठगोपे वृकोदरे ।
तमृते फल्गुनो युद्धे राधेयस्य न पादभाक् ॥ ०१२ ॥

ते जानमाना दौर्बल्यं भीमसेनमृते महत् ।
अस्मान्बलवतो ज्ञात्वा नशिष्यन्त्यबलीयसः ॥ ०१३ ॥

इहागतेषु पार्थेषु निदेशवशवर्तिषु ।
प्रवर्तिष्यामहे राजन्यथाश्रद्धं निबर्हणे ॥ ०१४ ॥

अथवा दर्शनीयाभिः प्रमदाभिर्विलोभ्यताम् ।
एकैकस्तत्र कौन्तेयस्ततः कृष्णा विरज्यताम् ॥ ०१५ ॥

प्रेष्यतां वापि राधेयस्तेषामागमनाय वै ।
ते लोप्त्रहारैः संधाय वध्यन्तामाप्तकारिभिः ॥ ०१६ ॥

एतेषामभ्युपायानां यस्ते निर्दोषवान्मतः ।
तस्य प्रयोगमातिष्ठ पुरा कालोऽतिवर्तते ॥ ०१७ ॥

यावच्चाकृतविश्वासा द्रुपदे पार्थिवर्षभे ।
तावदेवाद्य ते शक्या न शक्यास्तु ततः परम् ॥ ०१८ ॥

एषा मम मतिस्तात निग्रहाय प्रवर्तते ।
साधु वा यदि वासाधु किं वा राधेय मन्यसे ॥ ०१९ ॥

---

# अध्याय १९४

कर्ण उवाच ॥

दुर्योधन तव प्रज्ञा न सम्यगिति मे मतिः ।
न ह्युपायेन ते शक्याः पाण्डवाः कुरुनन्दन ॥ ००१ ॥

पूर्वमेव हि ते सूक्ष्मैरुपायैर्यतितास्त्वया ।
निग्रहीतुं यदा वीर शकिता न तदा त्वया ॥ ००२ ॥

इहैव वर्तमानास्ते समीपे तव पार्थिव ।
अजातपक्षाः शिशवः शकिता नैव बाधितुम् ॥ ००३ ॥

जातपक्षा विदेशस्था विवृद्धाः सर्वशोऽद्य ते ।
नोपायसाध्याः कौन्तेया ममैषा मतिरच्युत ॥ ००४ ॥

न च ते व्यसनैर्योक्तुं शक्या दिष्टकृता हि ते ।
शङ्किताश्चेप्सवश्चैव पितृपैतामहं पदम् ॥ ००५ ॥

परस्परेण भेदश्च नाधातुं तेषु शक्यते ।
एकस्यां ये रताः पत्न्यां न भिद्यन्ते परस्परम् ॥ ००६ ॥

न चापि कृष्णा शक्येत तेभ्यो भेदयितुं परैः ।
परिद्यूनान्वृतवती किमुताद्य मृजावतः ॥ ००७ ॥

ईप्सितश्च गुणः स्त्रीणामेकस्या बहुभर्तृता ।
तं च प्राप्तवती कृष्णा न सा भेदयितुं सुखम् ॥ ००८ ॥

आर्यवृत्तश्च पाञ्चाल्यो न स राजा धनप्रियः ।
न संत्यक्ष्यति कौन्तेयान्राज्यदानैरपि ध्रुवम् ॥ ००९ ॥

तथास्य पुत्रो गुणवाननुरक्तश्च पाण्डवान् ।
तस्मान्नोपायसाध्यांस्तानहं मन्ये कथञ्चन ॥ ०१० ॥

इदं त्वद्य क्षमं कर्तुमस्माकं पुरुषर्षभ ।
यावन्न कृतमूलास्ते पाण्डवेया विशां पते ॥ ०११ ॥

तावत्प्रहरणीयास्ते रोचतां तव विक्रमः ॥ ०११ ॥

अस्मत्पक्षो महान्यावद्यावत्पाञ्चालको लघुः ।
तावत्प्रहरणं तेषां क्रियतां मा विचारय ॥ ०१२ ॥

वाहनानि प्रभूतानि मित्राणि बहुलानि च ।
यावन्न तेषां गान्धारे तावदेवाशु विक्रम ॥ ०१३ ॥

यावच्च राजा पाञ्चाल्यो नोद्यमे कुरुते मनः ।

सह पुत्रैर्महावीर्यैस्तावदेवाशु विक्रम ॥ ०१४ ॥

यावन्नायाति वार्ष्णेयः कर्षन्यादववाहिनीम् ।
राज्यार्थे पाण्डवेयानां तावदेवाशु विक्रम ॥ ०१५ ॥

वसूनि विविधान्भोगान्राज्यमेव च केवलम् ।
नात्याज्यमस्ति कृष्णस्य पाण्डवार्थे महीपते ॥ ०१६ ॥

विक्रमेण मही प्राप्ता भरतेन महात्मना ।
विक्रमेण च लोकांस्त्रीञ्जितवान्पाकशासनः ॥ ०१७ ॥

विक्रमं च प्रशंसन्ति क्षत्रियस्य विशां पते ।
स्वको हि धर्मः शूराणां विक्रमः पार्थिवर्षभ ॥ ०१८ ॥

ते बलेन वयं राजन्महता चतुरङ्गिणा ।
प्रमथ्य द्रुपदं शीघ्रमानयामेह पाण्डवान् ॥ ०१९ ॥

न हि साम्ना न दानेन न भेदेन च पाण्डवाः ।
शक्याः साधयितुं तस्माद्विक्रमेणैव ताञ्जहि ॥ ०२० ॥

तान्विक्रमेण जित्वेमामखिलां भुङ्क्ष्व मेदिनीम् ।
नान्यमत्र प्रपश्यामि कार्योपायं जनाधिप ॥ ०२१ ॥

वैशंपायन उवाच ॥

श्रुत्वा तु राधेयवचो धृतराष्ट्रः प्रतापवान् ।
अभिपूज्य ततः पश्चादिदं वचनमब्रवीत् ॥ ०२२ ॥

उपपन्नं महाप्राज्ञे कृतास्त्रे सूतनन्दने ।
त्वयि विक्रमसंपन्नमिदं वचनमीदृशम् ॥ ०२३ ॥

भूय एव तु भीष्मश्च द्रोणो विदुर एव च ।
युवां च कुरुतां बुद्धिं भवेद्या नः सुखोदया ॥ ०२४ ॥

तत आनाय्य तान्सर्वान्मन्त्रिणः सुमहायशाः ।
धृतराष्ट्रो महाराज मन्त्रयामास वै तदा ॥ ०२५ ॥

---

# अध्याय १९५

भीष्म उवाच ॥

न रोचते विग्रहो मे पाण्डुपुत्रैः कथञ्चन ।
यथैव धृतराष्ट्रो मे तथा पाण्डुरसंशयम् ॥ ००१ ॥

गान्धार्याश्च यथा पुत्रास्तथा कुन्तीसुता मताः ।
यथा च मम ते रक्ष्या धृतराष्ट्र तथा तव ॥ ००२ ॥

यथा च मम राज्ञश्च तथा दुर्योधनस्य ते ।
तथा कुरूणां सर्वेषामन्येषामपि भारत ॥ ००३ ॥

एवं गते विग्रहं तैर्न रोचये ; संधाय वीरैर्दीयतामद्य भूमिः ।
तेषामपीदं प्रपितामहानां ; राज्यं पितुश्चैव कुरूत्तमानाम् ॥ ००४ ॥

दुर्योधन यथा राज्यं त्वमिदं तात पश्यसि ।
मम पैतृकमित्येवं तेऽपि पश्यन्ति पाण्डवाः ॥ ००५ ॥

यदि राज्यं न ते प्राप्ताः पाण्डवेयास्तपस्विनः ।
कुत एव तवापीदं भारतस्य च कस्यचित् ॥ ००६ ॥

अथ धर्मेण राज्यं त्वं प्राप्तवान्भरतर्षभ ।
तेऽपि राज्यमनुप्राप्ताः पूर्वमेवेति मे मतिः ॥ ००७ ॥

मधुरेणैव राज्यस्य तेषामर्धं प्रदीयताम् ।
एतद्धि पुरुषव्याघ्र हितं सर्वजनस्य च ॥ ००८ ॥

अतोऽन्यथा चेत्क्रियते न हितं नो भविष्यति ।
तवाप्यकीर्तिः सकला भविष्यति न संशयः ॥ ००९ ॥

कीर्तिरक्षणमातिष्ठ कीर्तिर्हि परमं बलम् ।
नष्टकीर्तेर्मनुष्यस्य जीवितं ह्यफलं स्मृतम् ॥ ०१० ॥

यावत्कीर्तिर्मनुष्यस्य न प्रणश्यति कौरव ।
तावज्जीवति गान्धारे नष्टकीर्तिस्तु नश्यति ॥ ०११ ॥

तमिमं समुपातिष्ठ धर्मं कुरुकुलोचितम् ।
अनुरूपं महाबाहो पूर्वेषामात्मनः कुरु ॥ ०१२ ॥

दिष्ट्या धरन्ति ते वीरा दिष्ट्या जीवति सा पृथा ।
दिष्ट्या पुरोचनः पापो नसकामोऽत्ययं गतः ॥ ०१३ ॥

तदा प्रभृति गान्धारे न शक्नोम्यभिवीक्षितुम् ।
लोके प्राणभृतां कञ्चिच्छ्रुत्वा कुन्तीं तथागताम् ॥ ०१४ ॥

न चापि दोषेण तथा लोको वैति पुरोचनम् ।
यथा त्वां पुरुषव्याघ्र लोको दोषेण गच्छति ॥ ०१५ ॥

तदिदं जीवितं तेषां तव कल्मषनाशनम् ।
संमन्तव्यं महाराज पाण्डवानां च दर्शनम् ॥ ०१६ ॥

न चापि तेषां वीराणां जीवतां कुरुनन्दन ।

पित्र्योंऽशः शक्य आदातुमपि वज्रभृता स्वयम् ॥ ०१७ ॥

ते हि सर्वे स्थिता धर्मे सर्वे चैवैकचेतसः ।
अधर्मेण निरस्ताश्च तुल्ये राज्ये विशेषतः ॥ ०१८ ॥

यदि धर्मस्त्वया कार्यो यदि कार्यं प्रियं च मे ।
क्षेमं च यदि कर्तव्यं तेषामर्धं प्रदीयताम् ॥ ०१९ ॥

---

# अध्याय १९६

द्रोण उवाच ॥

मन्त्राय समुपानीतैर्धृतराष्ट्रहितैर्नृप ।
धर्म्यं पथ्यं यशस्यं च वाच्यमित्यनुशुश्रुमः ॥ ००१ ॥

ममाप्येषा मतिस्तात या भीष्मस्य महात्मनः ।
संविभज्यास्तु कौन्तेया धर्म एष सनातनः ॥ ००२ ॥

प्रेष्यतां द्रुपदायाशु नरः कश्चित्प्रियंवदः ।
बहुलं रत्नमादाय तेषामर्थाय भारत ॥ ००३ ॥

मिथः कृत्यं च तस्मै स आदाय बहु गच्छतु ।
वृद्धिं च परमां ब्रूयात्तत्संयोगोद्भवां तथा ॥ ००४ ॥

संप्रीयमाणं त्वां ब्रूयाद्राजन्दूर्योधनं तथा ।
असकृद्द्रुपदे चैव धृष्टद्युम्ने च भारत ॥ ००५ ॥

उचितत्वं प्रियत्वं च योगस्यापि च वर्णयेत् ।
पुनः पुनश्च कौन्तेयान्माद्रीपुत्रौ च सान्त्वयन् ॥ ००६ ॥

हिरण्मयानि शुभ्राणि बहून्याभरणानि च ।
वचनात्तव राजेन्द्र द्रौपद्याः संप्रयच्छतु ॥ ००७ ॥

तथा द्रुपदपुत्राणां सर्वेषां भरतर्षभ ।
पाण्डवानां च सर्वेषां कुन्त्या युक्तानि यानि च ॥ ००८ ॥

एवं सान्त्वसमायुक्तं द्रुपदं पाण्डवैः सह ।
उक्त्वाथानन्तरं ब्रूयात्तेषामागमनं प्रति ॥ ००९ ॥

अनुज्ञातेषु वीरेषु बलं गच्छतु शोभनम् ।
दुःशासनो विकर्णश्च पाण्डवानानयन्त्विह ॥ ०१० ॥

ततस्ते पार्थिवश्रेष्ठ पूज्यमानाः सदा त्वया ।
प्रकृतीनामनुमते पदे स्थास्यन्ति पैतृके ॥ ०११ ॥

एवं तव महाराज तेषु पुत्रेषु चैव ह ।
वृत्तमौपयिकं मन्ये भीष्मेण सह भारत ॥ ०१२ ॥

कर्ण उवाच ॥

योजितावर्थमानाभ्यां सर्वकार्येष्वनन्तरौ ।
न मन्त्रयेतां त्वच्छ्रेयः किमद्भुततरं ततः ॥ ०१३ ॥

दुष्टेन मनसा यो वै प्रच्छन्नेनान्तरात्मना ।
ब्रूयान्निःश्रेयसं नाम कथं कुर्यात्सतां मतम् ॥ ०१४ ॥

न मित्राण्यर्थकृच्छ्रेषु श्रेयसे वेतराय वा ।
विधिपूर्वं हि सर्वस्य दुःखं वा यदि वा सुखम् ॥ ०१५ ॥

कृतप्रज्ञोऽकृतप्रज्ञो बालो वृद्धश्च मानवः ।
ससहायोऽसहायश्च सर्वं सर्वत्र विन्दति ॥ ०१६ ॥

श्रूयते हि पुरा कश्चिदम्बुवीच इति श्रुतः ।
आसीद्राजगृहे राजा मागधानां महीक्षिताम् ॥ ०१७ ॥

स हीनः करणैः सर्वैरुच्छ्वासपरमो नृपः ।
अमात्यसंस्थः कार्येषु सर्वेष्वेवाभवत्तदा ॥ ०१८ ॥

तस्यामात्यो महाकर्णिर्बभूवैकेश्वरः पुरा ।
स लब्धबलमात्मानं मन्यमानोऽवमन्यते ॥ ०१९ ॥

स राज्ञ उपभोग्यानि स्त्रियो रत्नधनानि च ।
आददे सर्वशो मूढ ऐश्वर्यं च स्वयं तदा ॥ ०२० ॥

तदादाय च लुब्धस्य लाभाल्लोभो व्यवर्धत ।
तथा हि सर्वमादाय राज्यमस्य जिहीर्षति ॥ ०२१ ॥

हीनस्य करणैः सर्वैरुच्छ्वासपरमस्य च ।
यतमानोऽपि तद्राज्यं न शशाकेति नः श्रुतम् ॥ ०२२ ॥

किमन्यद्विहितान्नूनं तस्य सा पुरुषेन्द्रता ।
यदि ते विहितं राज्यं भविष्यति विशां पते ॥ ०२३ ॥

मिषतः सर्वलोकस्य स्थास्यते त्वयि तद्ध्रुवम् ।
अतोऽन्यथा चेद्विहितं यतमानो न लप्स्यसे ॥ ०२४ ॥

एवं विद्धन्नुपादत्स्व मन्त्रिणां साध्वसाधुताम् ।
दुष्टानां चैव बोद्धव्यमदुष्टानां च भाषितम् ॥ ०२५ ॥

द्रोण उवाच ॥

विद्म ते भावदोषेण यदर्थमिदमुच्यते ।
दुष्टः पाण्डवहेतोस्त्वं दोषं ख्यापयसे हि नः ॥ ०२६ ॥

हितं तु परमं कर्ण ब्रवीमि कुरुवर्धनम् ।
अथ त्वं मन्यसे दुष्टं ब्रूहि यत्परमं हितम् ॥ ०२७ ॥

अतोऽन्यथा चेत्क्रियते यद्ब्रवीमि परं हितम् ।
कुरवो विनशिष्यन्ति नचिरेणेति मे मतिः ॥ ०२८ ॥

---

# अध्याय १९७

विदुर उवाच ॥

राजन्निःसंशयं श्रेयो वाच्यस्त्वमसि बान्धवैः ।
न त्वशुश्रूषमाणेषु वाक्यं संप्रतितिष्ठति ॥ ००१ ॥

हितं हि तव तद्वाक्यमुक्तवान्कुरुसत्तमः ।
भीष्मः शांतनवो राजन्प्रतिगृह्णासि तन्न च ॥ ००२ ॥

तथा द्रोणेन बहुधा भाषितं हितमुत्तमम् ।
तच्च राधासुतः कर्णो मन्यते न हितं तव ॥ ००३ ॥

चिन्तयंश्च न पश्यामि राजंस्तव सुहृत्तमम् ।
आभ्यां पुरुषसिंहाभ्यां यो वा स्यात्प्रज्ञयाधिकः ॥ ००४ ॥

इमौ हि वृद्धौ वयसा प्रज्ञया च श्रुतेन च ।

समौ च त्वयि राजेन्द्र तेषु पाण्डुसुतेषु च ॥ ००५ ॥

धर्मे चानवमौ राजन्सत्यतायां च भारत ।
रामाद्दाशरथेश्चैव गयाच्चैव न संशयः ॥ ००६ ॥

न चोक्तवन्तावश्रेयः पुरस्तादपि किञ्चन ।
न चाप्यपकृतं किञ्चिदनयोर्लक्ष्यते त्वयि ॥ ००७ ॥

ताविमौ पुरुषव्याघ्रावनागसि नृप त्वयि ।
न मन्त्रयेतां त्वच्छ्रेयः कथं सत्यपराक्रमौ ॥ ००८ ॥

प्रज्ञावन्तौ नरश्रेष्ठावस्मि.ण्ल्लोके नराधिप ।
त्वन्निमित्तमतो नेमौ किञ्चिज्जिह्मं वदिष्यतः ॥ ००९ ॥

इति मे नैष्ठिकी बुद्धिर्वर्तते कुरुनन्दन ॥ ००९ ॥

न चार्थहेतोर्धर्मज्ञौ वक्ष्यतः पक्षसंश्रितम् ।
एतद्धि परमं श्रेयो मेनाते तव भारत ॥ ०१० ॥

दुर्योधनप्रभृतयः पुत्रा राजन्यथा तव ।
तथैव पाण्डवेयास्ते पुत्रा राजन्न संशयः ॥ ०११ ॥

तेषु चेदहितं किञ्चिन्मन्त्रयेयुरबुद्धितः ।
मन्त्रिणस्ते न ते श्रेयः प्रपश्यन्ति विशेषतः ॥ ०१२ ॥

अथ ते हृदये राजन्विशेषस्तेषु वर्तते ।
अन्तरस्थं विवृण्वानाः श्रेयः कुर्युर्न ते ध्रुवम् ॥ ०१३ ॥

एतदर्थमिमौ राजन्महात्मानौ महाद्युती ।
नोचतुर्विवृतं किञ्चिन्न ह्येष तव निश्चयः ॥ ०१४ ॥

यच्चाप्यशक्यतां तेषामाहतुः पुरुषर्षभौ ।
तत्तथा पुरुषव्याघ्र तव तद्भद्रमस्तु ते ॥ ०१५ ॥

कथं हि पाण्डवः श्रीमान्सव्यसाची परंतपः ।
शक्यो विजेतुं सङ्ग्रामे राजन्मघवता अपि ॥ ०१६ ॥

भीमसेनो महाबाहुर्नागायुतबलो महान् ।
कथं हि युधि शक्येत विजेतुममरैरपि ॥ ०१७ ॥

तथैव कृतिनौ युद्धे यमौ यमसुताविव ।
कथं विषहितुं शक्यौ रणे जीवितुमिच्छता ॥ ०१८ ॥

यस्मिन्धृतिरनुक्रोशः क्षमा सत्यं पराक्रमः ।
नित्यानि पाण्डवश्रेष्ठे स जीयेत कथं रणे ॥ ०१९ ॥

येषां पक्षधरो रामो येषां मन्त्री जनार्दनः ।
किं नु तैरजितं संख्ये येषां पक्षे च सात्यकिः ॥ ०२० ॥

द्रुपदः श्वशुरो येषां येषां श्यालाश्च पार्षताः ।
धृष्टद्युम्नमुखा वीरा भ्रातरो द्रुपदात्मजाः ॥ ०२१ ॥

सोऽशक्यतां च विज्ञाय तेषामग्रेण भारत ।
दायाद्यतां च धर्मेण सम्यक्तेषु समाचर ॥ ०२२ ॥

इदं निर्दिग्धमयशः पुरोचनकृतं महत् ।
तेषामनुग्रहेणाद्य राजन्प्रक्षालयात्मनः ॥ ०२३ ॥

द्रुपदोऽपि महान्राजा कृतवैरश्च नः पुरा ।
तस्य सङ्ग्रहणं राजन्स्वपक्षस्य विवर्धनम् ॥ ०२४ ॥

बलवन्तश्च दाशार्हा बहवश्च विशां पते ।

यतः कृष्णस्ततस्ते स्युर्यतः कृष्णस्ततो जयः ॥ ०२५ ॥

यच्च साम्नैव शक्येत कार्यं साधयितुं नृप ।
को दैवशप्तस्तत्कार्तुं विग्रहेण समाचरेत् ॥ ०२६ ॥

श्रुत्वा च जीवतः पार्थान्पौरजानपदो जनः ।
बलवद्दर्शने गृध्नुस्तेषां राजन्कुरु प्रियम् ॥ ०२७ ॥

दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
अधर्मयुक्ता दुष्प्रज्ञा बाला मैषां वचः कृथाः ॥ ०२८ ॥

उक्तमेतन्मया राजन्पुरा गुणवतस्तव ।
दुर्योधनापराधेन प्रजेयं विनशिष्यति ॥ ०२९ ॥

---

# अध्याय १९८

धृतराष्ट्र उवाच ॥

भीष्मः शांतनवो विद्वान्द्रोणश्च भगवानृषिः ।
हितं परमकं वाक्यं त्वं च सत्यं ब्रवीषि माम् ॥ ००१ ॥

यथैव पाण्डोस्ते वीराः कुन्तीपुत्रा महारथाः ।
तथैव धर्मतः सर्वे मम पुत्रा न संशयः ॥ ००२ ॥

यथैव मम पुत्राणामिदं राज्यं विधीयते ।
तथैव पाण्डुपुत्राणामिदं राज्यं न संशयः ॥ ००३ ॥

क्षत्तरानय गच्छैतान्सह मात्रा सुसत्कृतान् ।
तया च देवरूपिण्या कृष्णया सह भारत ॥ ००४ ॥

दिष्ट्या जीवन्ति ते पार्था दिष्ट्या जीवति सा पृथा ।
दिष्ट्या द्रुपदकन्यां च लब्धवन्तो महारथाः ॥ ००५ ॥

दिष्ट्या वर्धामहे सर्वे दिष्ट्या शान्तः पुरोचनः ।
दिष्ट्या मम परं दुःखमपनीतं महाद्युते ॥ ००६ ॥

वैशंपायन उवाच ॥

ततो जगाम विदुरो धृतराष्ट्रस्य शासनात् ।
सकाशं यज्ञसेनस्य पाण्डवानां च भारत ॥ ००७ ॥

तत्र गत्वा स धर्मज्ञः सर्वशास्त्रविशारदः ।
द्रुपदं न्यायतो राजन्संयुक्तमुपतस्थिवान् ॥ ००८ ॥

स चापि प्रतिजग्राह धर्मेण विदुरं ततः ।
चक्रतुश्च यथान्यायं कुशलप्रश्नसंविदम् ॥ ००९ ॥

ददर्श पाण्डवांस्तत्र वासुदेवं च भारत ।
स्नेहात्परिष्वज्य स तान्पप्रच्छानामयं ततः ॥ ०१० ॥

तैश्चाप्यमितबुद्धिः स पूजितोऽथ यथाक्रमम् ।
वचनाद्धृतराष्ट्रस्य स्नेहयुक्तं पुनः पुनः ॥ ०११ ॥

पप्रच्छानामयं राजंस्ततस्तान्पाण्डुनन्दनान् ।
प्रददौ चापि रत्नानि विविधानि वसूनि च ॥ ०१२ ॥

पाण्डवानां च कुन्त्याश्च द्रौपद्याश्च विशां पते ।
द्रुपदस्य च पुत्राणां यथा दत्तानि कौरवैः ॥ ०१३ ॥

प्रोवाच चामितमतिः प्रश्रितं विनयान्वितः ।
द्रुपदं पाण्डुपुत्राणां संनिधौ केशवस्य च ॥ ०१४ ॥

राजञ्शृणु सहामात्यः सपुत्रश्च वचो मम ।
धृतराष्ट्रः सपुत्रस्त्वां सहामात्यः सबान्धवः ॥ ०१५ ॥

अब्रवीत्कुशलं राजन्प्रीयमाणः पुनः पुनः ।
प्रीतिमांस्ते दृढं चापि संबन्धेन नराधिप ॥ ०१६ ॥

तथा भीष्मः शांतनवः कौरवैः सह सर्वशः ।
कुशलं त्वां महाप्राज्ञः सर्वतः परिपृच्छति ॥ ०१७ ॥

भारद्वाजो महेष्वासो द्रोणः प्रियसखस्तव ।
समाश्लेषमुपेत्य त्वां कुशलं परिपृच्छति ॥ ०१८ ॥

धृतराष्ट्रश्च पाञ्चाल्य त्वया संबन्धमीयिवान् ।
कृतार्थं मन्यतेऽऽत्मानं तथा सर्वेऽपि कौरवाः ॥ ०१९ ॥

न तथा राज्यसंप्राप्तिस्तेषां प्रीतिकरी मता ।
यथा संबन्धकं प्राप्य यज्ञसेन त्वया सह ॥ ०२० ॥

एतद्विदित्वा तु भवान्प्रस्थापयतु पाण्डवान् ।
द्रष्टुं हि पाण्डुदायादांस्त्वरन्ते कुरवो भृशम् ॥ ०२१ ॥

विप्रोषिता दीर्घकालमिमे चापि नरर्षभाः ।
उत्सुका नगरं द्रष्टुं भविष्यन्ति पृथा तथा ॥ ०२२ ॥

कृष्णामपि च पाञ्चालीं सर्वाः कुरुवरस्त्रियः ।
द्रष्टुकामाः प्रतीक्षन्ते पुरं च विषयं च नः ॥ ०२३ ॥

स भवान्पाण्डुपुत्राणामाज्ञापयतु माचिरम् ।
गमनं सहदाराणामेतदागमनं मम ॥ ०२४ ॥

विसृष्टेषु त्वया राजन्पाण्डवेषु महात्मसु ।
ततोऽहं प्रेषयिष्यामि धृतराष्ट्रस्य शीघ्रगान् ॥ ०२५ ॥

आगमिष्यन्ति कौन्तेयाः कुन्ती च सह कृष्णया ॥ ०२५ ॥

---

# राज्यालम्भपर्व

## अध्याय १९९

द्रुपद उवाच ॥

एवमेतन्महाप्राज्ञ यथात्थ विदुराद्य माम् ।
ममापि परमो हर्षः संबन्धेऽस्मिन्कृते विभो ॥ ००१ ॥

गमनं चापि युक्तं स्याद्गृहमेषां महात्मनाम् ।
न तु तावन्मया युक्तमेतद्वक्तुं स्वयं गिरा ॥ ००२ ॥

यदा तु मन्यते वीरः कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चैव यमौ च पुरुषर्षभौ ॥ ००३ ॥

रामकृष्णौ च धर्मज्ञौ तदा गच्छन्तु पाण्डवाः ।
एतौ हि पुरुषव्याघ्रावेषां प्रियहिते रतौ ॥ ००४ ॥

युधिष्ठिर उवाच ॥

परवन्तो वयं राजंस्त्वयि सर्वे सहानुगाः ।
यथा वक्ष्यसि नः प्रीत्या करिष्यामस्तथा वयम् ॥ ००५ ॥

वैशंपायन उवाच ॥

ततोऽब्रवीद्वासुदेवो गमनं मम रोचते ।
यथा वा मन्यते राजा द्रुपदः सर्वधर्मवित् ॥ ००६ ॥

द्रुपद उवाच ॥

यथैव मन्यते वीरो दाशार्हः पुरुषोत्तमः ।
प्राप्तकालं महाबाहुः सा बुद्धिर्निश्चिता मम ॥ ००७ ॥

यथैव हि महाभागाः कौन्तेया मम सांप्रतम् ।
तथैव वासुदेवस्य पाण्डुपुत्रा न संशयः ॥ ००८ ॥

न तद्ध्यायति कौन्तेयो धर्मपुत्रो युधिष्ठिरः ।
यदेषां पुरुषव्याघ्रः श्रेयो ध्यायति केशवः ॥ ००९ ॥

वैशंपायन उवाच ॥

ततस्ते समनुज्ञाता द्रुपदेन महात्मना ।
पाण्डवाश्चैव कृष्णश्च विदुरश्च महामतिः ॥ ०१० ॥

आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीम् ।
सविहारं सुखं जग्मुर्नगरं नागसाह्वयम् ॥ ०११ ॥

श्रुत्वा चोपस्थितान्वीरान्धृतराष्ट्रोऽपि कौरवः ।
प्रतिग्रहाय पाण्डूनां प्रेषयामास कौरवान् ॥ ०१२ ॥

विकर्णं च महेष्वासं चित्रसेनं च भारत ।
द्रोणं च परमेष्वासं गौतमं कृपमेव च ॥ ०१३ ॥

तैस्ते परिवृता वीराः शोभमाना महारथाः ।
नगरं हास्तिनपुरं शनैः प्रविविशुस्तदा ॥ ०१४ ॥

कौतूहलेन नगरं दीर्यमाणमिवाभवत् ।
यत्र ते पुरुषव्याघ्राः शोकदुःखविनाशनाः ॥ ०१५ ॥

तत उच्चावचा वाचः प्रियाः प्रियचिकीर्षुभिः ।
उदीरिता अशृण्वंस्ते पाण्डवा हृदयङ्गमाः ॥ ०१६ ॥

अयं स पुरुषव्याघ्रः पुनरायाति धर्मवित् ।
यो नः स्वानिव दायादान्धर्मेण परिरक्षति ॥ ०१७ ॥

अद्य पाण्डुर्महाराजो वनादिव वनप्रियः ।
आगतः प्रियमस्माकं चिकीर्षुर्नात्र संशयः ॥ ०१८ ॥

किं नु नाद्य कृतं तावत्सर्वेषां नः परं प्रियम् ।
यन्नः कुन्तीसुता वीरा भर्तारः पुनरागताः ॥ ०१९ ॥

यदि दत्तं यदि हुतं विद्यते यदि नस्तपः ।
तेन तिष्ठन्तु नगरे पाण्डवाः शरदां शतम् ॥ ०२० ॥

ततस्ते धृतराष्ट्रस्य भीष्मस्य च महात्मनः ।
अन्येषां च तदर्हाणां चक्रुः पादाभिवन्दनम् ॥ ०२१ ॥

कृत्वा तु कुशलप्रश्नं सर्वेण नगरेण ते ।
समाविशन्त वेश्मानि धृतराष्ट्रस्य शासनात् ॥ ०२२ ॥

विश्रान्तास्ते महात्मानः कञ्चित्कालं महाबलाः ।

आहूता धृतराष्ट्रेण राज्ञा शांतनवेन च ॥ ०२३ ॥

धृतराष्ट्र उवाच ॥

भ्रातृभिः सह कौन्तेय निबोधेदं वचो मम ।
पुनर्वो विग्रहो मा भूत्खाण्डवप्रस्थमाविश ॥ ०२४ ॥

न च वो वसतस्तत्र कश्चिच्छक्तः प्रबाधितुम् ।
संरक्ष्यमाणान्पार्थेन त्रिदशानिव वज्रिणा ॥ ०२५ ॥

अर्धं राज्यस्य संप्राप्य खाण्डवप्रस्थमाविश ॥ ०२५ ॥

वैशंपायन उवाच ॥

प्रतिगृह्य तु तद्वाक्यं नृपं सर्वे प्रणम्य च ।
प्रतस्थिरे ततो घोरं वनं तन्मनुजर्षभाः ॥ ०२६ ॥

अर्धं राज्यस्य संप्राप्य खाण्डवप्रस्थमाविशन् ॥ ०२६ ॥

ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः ।
मण्डयां चक्रिरे तद्वै पुरं स्वर्गवदच्युताः ॥ ०२७ ॥

ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः ।
नगरं मापयामासुर्द्वैपायनपुरोगमाः ॥ ०२८ ॥

सागरप्रतिरूपाभिः परिखाभिरलङ्कृतम् ।
प्राकारेण च संपन्नं दिवमावृत्य तिष्ठता ॥ ०२९ ॥

पाण्डुराभ्रप्रकाशेन हिमराशिनिभेन च ।
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ॥ ०३० ॥

द्विपक्षगरुडप्रख्यैर्द्वारैर्घोरप्रदर्शनैः ।
गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमैः ॥ ०३१ ॥

विविधैरतिनिर्विद्धैः शस्त्रोपेतैः सुसंवृतैः ।
शक्तिभिश्चावृतं तद्धि द्विजिह्वैरिव पन्नगैः ॥ ०३२ ॥

तल्पैश्चाभ्यासिकैर्युक्तं शुशुभे योधरक्षितम् ॥ ०३२ ॥

तीक्ष्णाङ्कुशशतघ्नीभिर्यन्त्रजालैश्च शोभितम् ।
आयसैश्च महाचक्रैः शुशुभे तत्पुरोत्तमम् ॥ ०३३ ॥

सुविभक्तमहारथ्यं देवताबाधवर्जितम् ।
विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः ॥ ०३४ ॥

तत्त्रिविष्टपसङ्काशमिन्द्रप्रस्थं व्यरोचत ।
मेघवृन्दमिवाकाशे वृद्धं विद्युत्समावृतम् ॥ ०३५ ॥

तत्र रम्ये शुभे देशे कौरव्यस्य निवेशनम् ।
शुशुभे धनसंपूर्णं धनाध्यक्षक्षयोपमम् ॥ ०३६ ॥

तत्रागच्छन्द्विजा राजन्सर्ववेदविदां वराः ।
निवासं रोचयन्ति स्म सर्वभाषाविदस्तथा ॥ ०३७ ॥

वणिजश्चाभ्ययुस्तत्र देशे दिग्भ्यो धनार्थिनः ।
सर्वशिल्पविदश्चैव वासायाभ्यागमंस्तदा ॥ ०३८ ॥

उद्यानानि च रम्याणि नगरस्य समन्ततः ।
आम्रैराम्रातकैर्नीपैरशोकैश्चम्पकैस्तथा ॥ ०३९ ॥

पुंनागैर्नागपुष्पैश्च लकुचैः पनसैस्तथा ।
शालतालकदम्बैश्च बकुलैश्च सकेतकैः ॥ ०४० ॥

मनोहरैः पुष्पितैश्च फलभारावनामितैः ।
प्राचीनामलकैर्लोध्रैरङ्कोलैश्च सुपुष्पितैः ॥ ०४१ ॥

जम्बूभिः पाटलाभिश्च कुब्जकैरतिमुक्तकैः ।
करवीरैः पारिजातैरन्यैश्च विविधैर्द्रुमैः ॥ ०४२ ॥

नित्यपुष्पफलोपेतैर्नानाद्विजगणायुतम् ।
मत्तबर्हिणसंघुष्टं कोकिलैश्च सदामदैः ॥ ०४३ ॥

गृहैरादर्शविमलैर्विविधैश्च लतागृहैः ।
मनोहरैश्चित्रगृहैस्तथा जगतिपर्वतैः ॥ ०४४ ॥

वापीभिर्विविधाभिश्च पूर्णाभिः परमाम्भसा ॥ ०४४ ॥

सरोभिरतिरम्यैश्च पद्मोत्पलसुगन्धिभिः ।
हंसकारण्डवयुतैश्चक्रवाकोपशोभितैः ॥ ०४५ ॥

रम्याश्च विविधास्तत्र पुष्करिण्यो वनावृताः ।
तडागानि च रम्याणि बृहन्ति च महान्ति च ॥ ०४६ ॥

तेषां पुण्यजनोपेतं राष्ट्रमावसतां महत् ।
पाण्डवानां महाराज शश्वत्प्रीतिरवर्धत ॥ ०४७ ॥

तत्र भीष्मेण राज्ञा च धर्मप्रणयने कृते ।
पाण्डवाः समपद्यन्त खाण्डवप्रस्थवासिनः ॥ ०४८ ॥

पञ्चभिस्तैर्महेष्वासैरिन्द्रकल्पैः समन्वितम् ।
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ॥ ०४९ ॥

तान्निवेश्य ततो वीरो रामेण सह केशवः ।

ययौ द्वारवतीं राजन्पाण्डवानुमते तदा ॥ ०५० ॥

---

# अर्जुनवनवासपर्व

## अध्याय २००

जनमेजय उवाच ॥

एवं संप्राप्य राज्यं तदिन्द्रप्रस्थे तपोधन ।
अत ऊर्ध्वं महात्मानः किमकुर्वन्त पाण्डवाः ॥ ००१ ॥

सर्व एव महात्मानः पूर्वे मम पितामहाः ।
द्रौपदी धर्मपत्नी च कथं तानन्ववर्तत ॥ ००२ ॥

कथं वा पञ्च कृष्णायामेकस्यां ते नराधिपाः ।
वर्तमाना महाभागा नाभिद्यन्त परस्परम् ॥ ००३ ॥

श्रोतुमिच्छाम्यहं सर्वं विस्तरेण तपोधन ।
तेषां चेष्टितमन्योन्यं युक्तानां कृष्णया तया ॥ ००४ ॥

वैशंपायन उवाच ॥

धृतराष्ट्राभ्यनुज्ञाताः कृष्णया सह पाण्डवाः ।
रेमिरे पुरुषव्याघ्राः प्राप्तराज्याः परंतपाः ॥ ००५ ॥

प्राप्य राज्यं महातेजाः सत्यसंधो युधिष्ठिरः ।
पालयामास धर्मेण पृथिवीं भ्रातृभिः सह ॥ ००६ ॥

जितारयो महाप्राज्ञाः सत्यधर्मपरायणाः ।
मुदं परमिकां प्राप्तास्तत्रोषुः पाण्डुनन्दनाः ॥ ००७ ॥

कुर्वाणाः पौरकार्याणि सर्वाणि पुरुषर्षभाः ।
आसां चक्रुर्महार्हेषु पार्थिवेष्वासनेषु च ॥ ००८ ॥

अथ तेषूपविष्टेषु सर्वेष्वेव महात्मसु ।
नारदस्त्वथ देवर्षिराजगाम यदृच्छया ॥ ००९ ॥

आसनं रुचिरं तस्मै प्रददौ स्वं युधिष्ठिरः ॥ ००९ ॥

देवर्षेरुपविष्टस्य स्वयमर्घ्यं यथाविधि ।
प्रादाद्युधिष्ठिरो धीमान्राज्यं चास्मै न्यवेदयत् ॥ ०१० ॥

प्रतिगृह्य तु तां पूजामृषिः प्रीतमनाभवत् ।
आशीर्भिर्वर्धयित्वा तु तमुवाचास्यतामिति ॥ ०११ ॥

निषसादाभ्यनुज्ञातस्ततो राजा युधिष्ठिरः ।
प्रेषयामास कृष्णायै भगवन्तमुपस्थितम् ॥ ०१२ ॥

श्रुत्वैव द्रौपदी चापि शुचिर्भूत्वा समाहिता ।
जगाम तत्र यत्रास्ते नारदः पाण्डवैः सह ॥ ०१३ ॥

तस्याभिवाद्य चरणौ देवर्षेर्धर्मचारिणी ।
कृताञ्जलिः सुसंवीता स्थिताथ द्रुपदात्मजा ॥ ०१४ ॥

तस्याश्चापि स धर्मात्मा सत्यवागृषिसत्तमः ।
आशिषो विविधाः प्रोच्य राजपुत्र्यास्तु नारदः ॥ ०१५ ॥

गम्यतामिति होवाच भगवांस्तामनिन्दिताम् ॥ ०१५ ॥

गतायामथ कृष्णायां युधिष्ठिरपुरोगमान् ।
विविक्ते पाण्डवान्सर्वानुवाच भगवानृषिः ॥ ०१६ ॥

पाञ्चाली भवतामेका धर्मपत्नी यशस्विनी ।
यथा वो नात्र भेदः स्यात्तथा नीतिर्विधीयताम् ॥ ०१७ ॥

सुन्दोपसुन्दावसुरौ भ्रातरौ सहितावुभौ ।
आस्तामवध्यावन्येषां त्रिषु लोकेषु विश्रुतौ ॥ ०१८ ॥

एकराज्यावेकगृहावेकशय्यासनाशनौ ।
तिलोत्तमायास्तौ हेतोरन्योन्यमभिजघ्नतुः ॥ ०१९ ॥

रक्ष्यतां सौहृदं तस्मादन्योन्यप्रतिभाविकम् ।
यथा वो नात्र भेदः स्यात्तत्कुरुष्व युधिष्ठिर ॥ ०२० ॥

युधिष्ठिर उवाच ॥

सुन्दोपसुन्दावसुरौ कस्य पुत्रौ महामुने ।
उत्पन्नश्च कथं भेदः कथं चान्योन्यमघ्नताम् ॥ ०२१ ॥

अप्सरा देवकन्या वा कस्य चैषा तिलोत्तमा ।
यस्याः कामेन संमत्तौ जघ्नतुस्तौ परस्परम् ॥ ०२२ ॥

एतत्सर्वं यथावृत्तं विस्तरेण तपोधन ।
श्रोतुमिच्छामहे विप्र परं कौतूहलं हि नः ॥ ०२३ ॥

# सुन्दोपसुन्दोपाख्यानम्

## अध्याय २०१

नारद उवाच ॥

श्रृणु मे विस्तरेणेममितिहासं पुरातनम् ।
भ्रातृभीः सहितः पार्थ यथावृत्तं युधिष्ठिर ॥ ००१ ॥

महासुरस्यान्ववाये हिरण्यकशिपोः पुरा ।
निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत् ॥ ००२ ॥

तस्य पुत्रौ महावीर्यौ जातौ भीमपराक्रमौ ।
सहान्योन्येन भुञ्जाते विनान्योन्यं न गच्छतः ॥ ००३ ॥

अन्योन्यस्य प्रियकरावन्योन्यस्य प्रियंवदौ ।
एकशीलसमाचारौ द्विधैवैकं यथा कृतौ ॥ ००४ ॥

तौ विवृद्धौ महावीर्यौ कार्येष्वप्येकनिश्चयौ ।
त्रैलोक्यविजयार्थाय समास्थायैकनिश्चयम् ॥ ००५ ॥

कृत्वा दीक्षां गतौ विन्ध्यं तत्रोग्रं तेपतुस्तपः ।
तौ तु दीर्घेण कालेन तपोयुक्तौ बभूवतुः ॥ ००६ ॥

क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ ।
मलोपचितसर्वाङ्गौ वायुभक्षौ बभूवतुः ॥ ००७ ॥

आत्ममांसानि जुह्वन्तौ पादाङ्गुष्ठाग्रधिष्ठितौ ।
ऊर्ध्वबाहू चानिमिषौ दीर्घकालं धृतव्रतौ ॥ ००८ ॥

तयोस्तपःप्रभावेण दीर्घकालं प्रतापितः ।
धूमं प्रमुमुचे विन्ध्यस्तदद्भुतमिवाभवत् ॥ ००९ ॥

ततो देवाभवन्भीता उग्रं दृष्ट्वा तयोस्तपः ।
तपोविघातार्थमथो देवा विघ्नानि चक्रिरे ॥ ०१० ॥

रत्नैः प्रलोभयामासुः स्त्रीभिश्चोभौ पुनः पुनः ।
न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ॥ ०११ ॥

अथ मायां पुनर्देवास्तयोश्चक्रुर्महात्मनोः ।
भगिन्यो मातरो भार्यास्तयोः परिजनस्तथा ॥ ०१२ ॥

परिपात्यमाना वित्रस्ताः शूलहस्तेन रक्षसा ।
स्रस्ताभरणकेशान्ता एकान्तभ्रष्टवाससः ॥ ०१३ ॥

अभिधाव्य ततः सर्वास्तौ त्राहीति विचुक्रुशुः ।
न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ॥ ०१४ ॥

यदा क्षोभं नोपयाति नार्तिमन्यतरस्तयोः ।
ततः स्त्रियस्ता भूतं च सर्वमन्तरधीयत ॥ ०१५ ॥

ततः पितामहः साक्षादभिगम्य महासुरौ ।
वरेण छन्दयामास सर्वलोकपितामहः ॥ ०१६ ॥

ततः सुन्दोपसुन्दौ तौ भ्रातरौ दृढविक्रमौ ।
दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा ॥ ०१७ ॥

ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा ।
आवयोस्तपसानेन यदि प्रीतः पितामहः ॥ ०१८ ॥

मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ ।

उभावप्यमरौ स्यावः प्रसन्नो यदि नौ प्रभुः ॥ ०१९ ॥

पितामह उवाच ॥

ऋतेऽमरत्वमन्यद्वां सर्वमुक्तं भविष्यति ।
अन्यद्वृणीतां मृत्योश्च विधानममरैः समम् ॥ ०२० ॥

करिष्यावेदमिति यन्महदभ्युत्थितं तपः ।
युवयोर्हेतुनानेन नामरत्वं विधीयते ॥ ०२१ ॥

त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः ।
हेतुनानेन दैत्येन्द्रौ न वां कामं करोम्यहम् ॥ ०२२ ॥

सुन्दोपसुन्दावूचतुः ॥

त्रिषु लोकेषु यद्भूतं किञ्चित्स्थावरजङ्गमम् ।
सर्वस्मान्नौ भयं न स्यादृतेऽन्योन्यं पितामह ॥ ०२३ ॥

पितामह उवाच ॥

यत्प्रार्थितं यथोक्तं च काममेतद्ददानि वाम् ।
मृत्योर्विधानमेतच्च यथावद्वां भविष्यति ॥ ०२४ ॥

नारद उवाच ॥

ततः पितामहो दत्त्वा वरमेतत्तदा तयोः ।
निवर्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह ॥ ०२५ ॥

लब्ध्वा वराणि सर्वाणि दैत्येन्द्रावपि तावुभौ ।
अवध्यौ सर्वलोकस्य स्वमेव भवनं गतौ ॥ ०२६ ॥

तौ तु लब्धवरौ दृष्ट्वा कृतकामौ महासुरौ ।
सर्वः सुहृज्जनस्ताभ्यां प्रमोदमुपजग्मिवान् ॥ ०२७ ॥

ततस्तौ तु जटा हित्वा मौलिनौ संबभूवतुः ।
महार्हाभरणोपेतौ विरजोम्बरधारिणौ ॥ ०२८ ॥

अकालकौमुदीं चैव चक्रतुः सार्वकामिकीम् ।
दैत्येन्द्रौ परमप्रीतौ तयोश्चैव सुहृज्जनः ॥ ०२९ ॥

भक्ष्यतां भुज्यतां नित्यं रम्यतां गीयतामिति ।
पीयतां दीयतां चेति वाच आसन्गृहे गृहे ॥ ०३० ॥

तत्र तत्र महापानैरुत्कृष्टतलनादितैः ।
हृष्टं प्रमुदितं सर्वं दैत्यानामभवत्पुरम् ॥ ०३१ ॥

तैस्तैर्विहारैर्बहुभिर्दैत्यानां कामरूपिणाम् ।
समाः सङ्क्रीडतां तेषामहरेकमिवाभवत् ॥ ०३२ ॥

---

# अध्याय २०२

नारद उवाच ॥

उत्सवे वृत्तमात्रे तु त्रैलोक्याकाङ्क्षिणावुभौ ।
मन्त्रयित्वा ततः सेनां तावाज्ञापयतां तदा ॥ ००१ ॥

सुहृद्भिरभ्यनुज्ञातौ दैत्यवृद्धैश्च मन्त्रिभिः ।
कृत्वा प्रास्थानिकं रात्रौ मघासु ययतुस्तदा ॥ ००२ ॥

गदापट्टिशधारिण्या शूलमुद्गरहस्तया ।
प्रस्थितौ सहधर्मिण्या महत्या दैत्यसेनया ॥ ००३ ॥

मङ्गलैः स्तुतिभिश्चापि विजयप्रतिसंहितैः ।
चारणैः स्तूयमानौ तु जग्मतुः परया मुदा ॥ ००४ ॥

तावन्तरिक्षमुत्पत्य दैत्यौ कामगमावुभौ ।
देवानामेव भवनं जग्मतुर्युद्धदुर्मदौ ॥ ००५ ॥

तयोरागमनं ज्ञात्वा वरदानं च तत्प्रभोः ।
हित्वा त्रिविष्टपं जग्मुर्ब्रह्मलोकं ततः सुराः ॥ ००६ ॥

ताविन्द्रलोकं निर्जित्य यक्षरक्षोगणांस्तथा ।
खेचराण्यपि भूतानि जिग्यतुस्तीव्रविक्रमौ ॥ ००७ ॥

अन्तर्भूमिगतान्नागाञ्जित्वा तौ च महासुरौ ।
समुद्रवासिनः सर्वान्म्लेच्छजातीन्विजिग्यतुः ॥ ००८ ॥

ततः सर्वां महीं जेतुमारब्धावुग्रशासनौ ।
सैनिकांश्च समाहूय सुतीक्ष्णां वाचमूचतुः ॥ ००९ ॥

राजर्षयो महायज्ञैर्हव्यकव्यैर्द्विजातयः ।
तेजो बलं च देवानां वर्धयन्ति श्रियं तथा ॥ ०१० ॥

तेषामेवं प्रवृद्धानां सर्वेषामसुरद्विषाम् ।
संभूय सर्वैरस्माभिः कार्यः सर्वात्मना वधः ॥ ०११ ॥

एवं सर्वान्समादिश्य पूर्वतीरे महोदधेः ।
क्रूरां मतिं समास्थाय जग्मतुः सर्वतोमुखम् ॥ ०१२ ॥

यज्ञैर्यजन्ते ये केचिद्याजयन्ति च ये द्विजाः ।
तान्सर्वान्प्रसभं दृष्ट्वा बलिनौ जघ्नतुस्तदा ॥ ०१३ ॥

आश्रमेष्वग्निहोत्राणि ऋषीणां भावितात्मनाम् ।
गृहीत्वा प्रक्षिपन्त्यप्सु विश्रब्धाः सैनिकास्तयोः ॥ ०१४ ॥

तपोधनैश्च ये शापाः क्रुद्धैरुक्ता महात्मभिः ।
नाक्रामन्ति तयोस्तेऽपि वरदानेन जृम्भतोः ॥ ०१५ ॥

नाक्रामन्ति यदा शापा बाणा मुक्ताः शिलास्विव ।
नियमांस्तदा परित्यज्य व्यद्रवन्त द्विजातयः ॥ ०१६ ॥

पृथिव्यां ये तपःसिद्धा दान्ताः शमपरायणाः ।
तयोर्भयाद्दुद्रुवुस्ते वैनतेयादिवोरगाः ॥ ०१७ ॥

मथितैराश्रमैर्भग्नैर्विकीर्णकलशास्त्रुवैः ।
शून्यमासीज्जगत्सर्वं कालेनेव हतं यथा ॥ ०१८ ॥

राजर्षिभिरदृश्यद्भिर्ऋषिभिश्च महासुरौ ।
उभौ विनिश्चयं कृत्वा विकुर्वाते वधैषिणौ ॥ ०१९ ॥

प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ ।
संलीनानपि दुर्गेषु निन्यतुर्यमसादनम् ॥ ०२० ॥

सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ ।
तैस्तैरुपायैस्तौ क्रूरावृषीन्दृष्ट्वा निजघ्नतुः ॥ ०२१ ॥

निवृत्तयज्ञस्वाध्याया प्रणष्टनृपतिद्विजा ।
उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा ॥ ०२२ ॥

हाहाभूता भयार्ता च निवृत्तविपणापणा ।

निवृत्तदेवकार्या च पुण्योद्वाहविवर्जिता ॥ ०२३ ॥

निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा ।
अस्थिकङ्कालसङ्कीर्णा भूर्बभूवोग्रदर्शना ॥ ०२४ ॥

निवृत्तपितृकार्यं च निर्वषट्कारमङ्गलम् ।
जगत्प्रतिभयाकारं दुष्प्रेक्ष्यमभवत्तदा ॥ ०२५ ॥

चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः ।
जग्मुर्विषादं तत्कर्म दृष्ट्वा सुन्दोपसुन्दयोः ॥ ०२६ ॥

एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा ।
निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः ॥ ०२७ ॥

---

## अध्याय २०३

नारद उवाच ॥

ततो देवर्षयः सर्वे सिद्धाश्च परमर्षयः ।
जग्मुस्तदा परामार्तिं दृष्ट्वा तत्कदनं महत् ॥ ००१ ॥

तेऽभिजग्मुर्जितक्रोधा जितात्मानो जितेन्द्रियाः ।
पितामहस्य भवनं जगतः कृपया तदा ॥ ००२ ॥

ततो ददृशुरासीनं सह देवैः पितामहम् ।
सिद्धैर्ब्रह्मर्षिभिश्चैव समन्तात्परिवारितम् ॥ ००३ ॥

तत्र देवो महादेवस्तत्राग्निर्वायुना सह ।

चन्द्रादित्यौ च धर्मश्च परमेष्ठी तथा बुधः ॥ ००४ ॥

वैखानसा वालखिल्या वानप्रस्था मरीचिपाः ।
अजाश्चैवाविमूढाश्च तेजोगर्भास्तपस्विनः ॥ ००५ ॥

ऋषयः सर्व एवैते पितामहमुपासते ॥ ००५ ॥

ततोऽभिगम्य सहिताः सर्व एव महर्षयः ।
सुन्दोपसुन्दयोः कर्म सर्वमेव शशंसिरे ॥ ००६ ॥

यथाकृतं यथा चैव कृतं येन क्रमेण च ।
न्यवेदयंस्ततः सर्वमखिलेन पितामहे ॥ ००७ ॥

ततो देवगणाः सर्वे ते चैव परमर्षयः ।
तमेवार्थं पुरस्कृत्य पितामहमचोदयन् ॥ ००८ ॥

ततः पितामहः श्रुत्वा सर्वेषां तद्वचस्तदा ।
मुहूर्तमिव सञ्चिन्त्य कर्तव्यस्य विनिश्चयम् ॥ ००९ ॥

तयोर्वधं समुद्दिश्य विश्वकर्माणमाह्वयत् ।
दृष्ट्वा च विश्वकर्माणं व्यादिदेश पितामहः ॥ ०१० ॥

सृज्यतां प्रार्थनीयेह प्रमदेति महातपाः ॥ ०१० ॥

पितामहं नमस्कृत्य तद्वाक्यमभिनन्द्य च ।
निर्ममे योषितं दिव्यां चिन्तयित्वा प्रयत्नतः ॥ ०११ ॥

त्रिषु लोकेषु यत्किञ्चिद्भूतं स्थावरजङ्गमम् ।
समानयद्दर्शनीयं तत्तद्यत्नात्ततस्ततः ॥ ०१२ ॥

कोटिशश्चापि रत्नानि तस्या गात्रे न्यवेशयत् ।

तां रत्नसंघातमयीमसृजद्देवरूपिणीम् ॥ ०१३ ॥

सा प्रयत्नेन महता निर्मिता विश्वकर्मणा ।
त्रिषु लोकेषु नारीणां रूपेणाप्रतिमाभवत् ॥ ०१४ ॥

न तस्याः सूक्ष्ममप्यस्ति यद्गात्रे रूपसंपदा ।
न युक्तं यत्र वा दृष्टिर्न सज्जति निरीक्षताम् ॥ ०१५ ॥

सा विग्रहवतीव श्रीः कान्तरूपा वपुष्मती ।
जहार सर्वभूतानां चक्षूंषि च मनांसि च ॥ ०१६ ॥

तिलं तिलं समानीय रत्नानां यद्विनिर्मिता ।
तिलोत्तमेत्यतस्तस्या नाम चक्रे पितामहः ॥ ०१७ ॥

पितामह उवाच ॥

गच्छ सुन्दोपसुन्दाभ्यामसुराभ्यां तिलोत्तमे ।
प्रार्थनीयेन रूपेण कुरु भद्रे प्रलोभनम् ॥ ०१८ ॥

त्वत्कृते दर्शनादेव रूपसंपत्कृतेन वै ।
विरोधः स्याद्यथा ताभ्यामन्योन्येन तथा कुरु ॥ ०१९ ॥

नारद उवाच ॥

सा तथेति प्रतिज्ञाय नमस्कृत्य पितामहम् ।
चकार मण्डलं तत्र विबुधानां प्रदक्षिणम् ॥ ०२० ॥

प्राङ्मुखो भगवानास्ते दक्षिणेन महेश्वरः ।
देवाश्चैवोत्तरेणासन्सर्वतस्त्वृषयोऽभवन् ॥ ०२१ ॥

कुर्वन्त्या तु तया तत्र मण्डलं तत्प्रदक्षिणम् ।

इन्द्रः स्थाणुश्च भगवान्धैर्येण प्रत्यवस्थितौ ॥ ०२२ ॥

द्रष्टुकामस्य चात्यर्थं गतायाः पार्श्वतस्तदा ।
अन्यदञ्चितपक्ष्मान्तं दक्षिणं निःसृतं मुखम् ॥ ०२३ ॥

पृष्ठतः परिवर्तन्त्याः पश्चिमं निःसृतं मुखम् ।
गतायाश्चोत्तरं पार्श्वमुत्तरं निःसृतं मुखम् ॥ ०२४ ॥

महेन्द्रस्यापि नेत्राणां पार्श्वतः पृष्ठतोऽग्रतः ।
रक्तान्तानां विशालानां सहस्रं सर्वतोऽभवत् ॥ ०२५ ॥

एवं चतुर्मुखः स्थाणुर्महादेवोऽभवत्पुरा ।
तथा सहस्रनेत्रश्च बभूव बलसूदनः ॥ ०२६ ॥

तथा देवनिकायानामृषीणां चैव सर्वशः ।
मुखान्यभिप्रवर्तन्ते येन याति तिलोत्तमा ॥ ०२७ ॥

तस्या गात्रे निपतिता तेषां दृष्टिर्महात्मनाम् ।
सर्वेषामेव भूयिष्ठमृते देवं पितामहम् ॥ ०२८ ॥

गच्छन्त्यास्तु तदा देवाः सर्वे च परमर्षयः ।
कृतमित्येव तत्कार्यं मेनिरे रूपसंपदा ॥ ०२९ ॥

तिलोत्तमायां तु तदा गतायां लोकभावनः ।
सर्वान्विसर्जयामास देवानृषिगणांश्च तान् ॥ ०३० ॥

# अध्याय २०४

नारद उवाच ॥

जित्वा तु पृथिवीं दैत्यौ निःसपत्नौ गतव्यथौ ।
कृत्वा त्रैलोक्यमव्यग्रं कृतकृत्यौ बभूवतुः ॥ ००१ ॥

देवगन्धर्वयक्षाणां नागपार्थिवरक्षसाम् ।
आदाय सर्वरत्नानि परां तुष्टिमुपागतौ ॥ ००२ ॥

यदा न प्रतिषेद्धारस्तयोः सन्तीह केचन ।
निरुद्योगौ तदा भूत्वा विजह्रातेऽमराविव ॥ ००३ ॥

स्त्रीभिर्माल्यैश्च गन्धैश्च भक्षैर्भोज्यैश्च पुष्कलैः ।
पानैश्च विविधैर्हृद्यैः परां प्रीतिमवापतुः ॥ ००४ ॥

अन्तःपुरे वनोद्याने पर्वतोपवनेषु च ।
यथेप्सितेषु देशेषु विजह्रातेऽमराविव ॥ ००५ ॥

ततः कदाचिद्विन्ध्यस्य पृष्ठे समशिलातले ।
पुष्पिताग्रेषु शालेषु विहारमभिजग्मतुः ॥ ००६ ॥

दिव्येषु सर्वकामेषु समानीतेषु तत्र तौ ।
वरासनेषु संहृष्टौ सह स्त्रीभिर्निषेदतुः ॥ ००७ ॥

ततो वादित्रनृत्ताभ्यामुपातिष्ठन्त तौ स्त्रियः ।
गीतैश्च स्तुतिसंयुक्तैः प्रीत्यर्थमुपजग्मिरे ॥ ००८ ॥

ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती ।
वेषमाक्षिप्तमाधाय रक्तेनैकेन वाससा ॥ ००९ ॥

नदीतीरेषु जातान्सा कर्णिकारान्विचिन्वती ।
शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ ॥ ०१० ॥

तौ तु पीत्वा वरं पानं मदरक्तान्तलोचनौ ।
दृष्ट्वैव तां वरारोहां व्यथितौ संबभूवतुः ॥ ०११ ॥

तावुत्पत्यासनं हित्वा जग्मतुर्यत्र सा स्थिता ।
उभौ च कामसंमत्तावुभौ प्रार्थयतश्च ताम् ॥ ०१२ ॥

दक्षिणे तां करे सुभ्रूं सुन्दो जग्राह पाणिना ।
उपसुन्दोऽपि जग्राह वामे पाणौ तिलोत्तमाम् ॥ ०१३ ॥

वरप्रदानमत्तौ तावौरसेन बलेन च ।
धनरत्नमदाभ्यां च सुरापानमदेन च ॥ ०१४ ॥

सर्वैरेतैर्मदैर्मत्तावन्योन्यं भ्रुकुटीकृतौ ।
मदकामसमाविष्टौ परस्परमथोचतुः ॥ ०१५ ॥

मम भार्या तव गुरुरिति सुन्दोऽभ्यभाषत ।
मम भार्या तव वधूरुपसुन्दोऽभ्यभाषत ॥ ०१६ ॥

नैषा तव ममैषेति तत्र तौ मन्युराविशत् ।
तस्या हेतोर्गदे भीमे तावुभावप्यगृह्णताम् ॥ ०१७ ॥

तौ प्रगृह्य गदे भीमे तस्याः कामेन मोहितौ ।
अहं पूर्वमहं पूर्वमित्यन्योन्यं निजघ्नतुः ॥ ०१८ ॥

तौ गदाभिहतौ भीमौ पेततुर्धरणीतले ।
रुधिरेणावलिप्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ ॥ ०१९ ॥

ततस्ता विद्रुता नार्यः स च दैत्यगणस्तदा ।

पातालमगमत्सर्वो विषादभयकम्पितः ॥ ०२० ॥

ततः पितामहस्तत्र सह देवैर्महर्षिभिः ।
आजगाम विशुद्धात्मा पूजयिष्यंस्तिलोत्तमाम् ॥ ०२१ ॥

वरेण छन्दिता सा तु ब्रह्मणा प्रीतिमेव ह ।
वरयामास तत्रैनां प्रीतः प्राह पितामहः ॥ ०२२ ॥

आदित्यचरिता.ण्ल्लोकान्विचरिष्यसि भामिनि ।
तेजसा च सुदृष्टां त्वां न करिष्यति कश्चन ॥ ०२३ ॥

एवं तस्यै वरं दत्त्वा सर्वलोकपितामहः ।
इन्द्रे त्रैलोक्यमाधाय ब्रह्मलोकं गतः प्रभुः ॥ ०२४ ॥

एवं तौ सहितौ भूत्वा सर्वार्थेष्वेकनिश्चयौ ।
तिलोत्तमार्थे सङ्क्रुद्धावन्योन्यमभिजघ्नतुः ॥ ०२५ ॥

तस्माद्ब्रवीमि वः स्नेहात्सर्वान्भरतसत्तमान् ।
यथा वो नात्र भेदः स्यात्सर्वेषां द्रौपदीकृते ॥ ०२६ ॥

तथा कुरुत भद्रं वो मम चेत्प्रियमिच्छथ ॥ ०२६ ॥

वैशंपायन उवाच ॥

एवमुक्ता महात्मानो नारदेन महर्षिणा ।
समयं चक्रिरे राजंस्तेऽन्योन्येन समागताः ॥ ०२७ ॥

समक्षं तस्य देवर्षेर्नारदस्यामितौजसः ॥ ०२७ ॥

द्रौपद्या नः सहासीनमन्योऽन्यं योऽभिदर्शयेत् ।
स नो द्वादश वर्षाणि ब्रह्मचारी वने वसेत् ॥ ०२८ ॥

कृते तु समये तस्मिन्पाण्डवैर्धर्मचारिभिः ।
नारदोऽप्यगमत्प्रीत इष्टं देशं महामुनिः ॥ ०२९ ॥

एवं तैः समयः पूर्वं कृतो नरदचोदितैः ।
न चाभिद्यन्त ते सार्वे तदान्योन्येन भारत ॥ ०३० ॥

---

# अध्याय २०५

वैशंपायन उवाच ॥

एवं ते समयं कृत्वा न्यवसंस्तत्र पाण्डवाः ।
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीक्षितः ॥ ००१ ॥

तेषां मनुजसिंहानां पञ्चानाममितौजसाम् ।
बभूव कृष्णा सर्वेषां पार्थानां वशवर्तिनी ॥ ००२ ॥

ते तया तैश्च सा वीरैः पतिभिः सह पञ्चभिः ।
बभूव परमप्रीता नागैरिव सरस्वती ॥ ००३ ॥

वर्तमानेषु धर्मेण पाण्डवेषु महात्मसु ।
व्यवर्धन्कुरवः सर्वे हीनदोषाः सुखान्विताः ॥ ००४ ॥

अथ दीर्घेण कालेन ब्राह्मणस्य विशां पते ।
कस्यचित्तस्कराः केचिज्जह्रुर्गा नृपसत्तम ॥ ००५ ॥

ह्रियमाणे धने तस्मिन्ब्राह्मणः क्रोधमूर्च्छितः ।
आगम्य खाण्डवप्रस्थमुदक्रोशत पाण्डवान् ॥ ००६ ॥

ह्रियते गोधनं क्षुद्रैर्नृशंसैरकृतात्मभिः ।
प्रसह्य वोऽस्माद्विषयादभिधावत पाण्डवाः ॥ ००७ ॥

ब्राह्मणस्य प्रमत्तस्य हविर्ध्वाङ्क्षैर्विलुप्यते ।
शार्दूलस्य गुहां शून्यां नीचः क्रोष्टाभिमर्शति ॥ ००८ ॥

ब्राह्मणस्वे हृते चोरैर्धर्मार्थे च विलोपिते ।
रोरूयमाणे च मयि क्रियतामस्त्रधारणम् ॥ ००९ ॥

रोरूयमाणस्याभ्याशे तस्य विप्रस्य पाण्डवः ।
तानि वाक्यानि शुश्राव कुन्तीपुत्रो धनञ्जयः ॥ ०१० ॥

श्रुत्वा चैव महाबाहुर्मा भैरित्याह तं द्विजम् ।
आयुधानि च यत्रासन्पाण्डवानां महात्मनाम् ॥ ०११ ॥

कृष्णया सह तत्रासीद्धर्मराजो युधिष्ठिरः ॥ ०११ ॥

स प्रवेशाय चाशक्तो गमनाय च पाण्डवः ।
तस्य चार्तस्य तैर्वाक्यैश्चोद्यमानः पुनः पुनः ॥ ०१२ ॥

आक्रन्दे तत्र कौन्तेयश्चिन्तयामास दुःखितः ॥ ०१२ ॥

ह्रियमाणे धने तस्मिन्ब्राह्मणस्य तपस्विनः ।
अश्रुप्रमार्जनं तस्य कर्तव्यमिति निश्चितः ॥ ०१३ ॥

उपप्रेक्षणजोऽधर्मः सुमहान्स्यान्महीपतेः ।
यद्यस्य रुदतो द्वारि न करोम्यद्य रक्षणम् ॥ ०१४ ॥

अनास्तिक्यं च सर्वेषामस्माकमपि रक्षणे ।
प्रतितिष्ठेत लोकेऽस्मिन्नधर्मश्चैव नो भवेत् ॥ ०१५ ॥

अनापृच्छ्य च राजानं गते मयि न संशयः ।
अजातशत्रोर्नृपतेर्मम चैवाप्रियं भवेत् ॥ ०१६ ॥

अनुप्रवेशे राज्ञस्तु वनवासो भवेन्मम ।
अधर्मो वा महानस्तु वने वा मरणं मम ॥ ०१७ ॥

शरीरस्यापि नाशेन धर्म एव विशिष्यते ॥ ०१७ ॥

एवं विनिश्चित्य ततः कुन्तीपुत्रो धनञ्जयः ।
अनुप्रविश्य राजानमापृच्छ्य च विशां पते ॥ ०१८ ॥

धनुरादाय संहृष्टो ब्राह्मणं प्रत्यभाषत ।
ब्राह्मणागम्यतां शीघ्रं यावत्परधनैषिणः ॥ ०१९ ॥

न दूरे ते गताः क्षुद्रास्तावद्गच्छामहे सह ।
यावदावर्तयाम्यद्य चोरहस्ताद्धनं तव ॥ ०२० ॥

सोऽनुसृत्य महाबाहुर्धन्वी वर्मी रथी ध्वजी ।
शरैर्विध्वंसितांश्चोरानवजित्य च तद्धनम् ॥ ०२१ ॥

ब्राह्मणस्य उपाहृत्य यशः पीत्वा च पाण्डवः ।
आजगाम पुरं वीरः सव्यसाची परंतपः ॥ ०२२ ॥

सोऽभिवाद्य गुरून्सर्वांस्तैश्चापि प्रतिनन्दितः ।
धर्मराजमुवाचेदं व्रतमादिश्यतां मम ॥ ०२३ ॥

समयः समतिक्रान्तो भवत्संदर्शनान्मया ।
वनवासं गमिष्यामि समयो ह्येष नः कृतः ॥ ०२४ ॥

इत्युक्तो धर्मराजस्तु सहसा वाक्यमप्रियम् ।

कथमित्यब्रवीद्वाचा शोकार्तः सज्जमानया ॥ ०२५ ॥

युधिष्ठिरो गुडाकेशं भ्राता भ्रातरमच्युतम् ॥ ०२५ ॥

प्रमाणमस्मि यदि ते मत्तः शृणु वचोऽनघ ।
अनुप्रवेशे यद्वीर कृतवांस्त्वं ममाप्रियम् ॥ ०२६ ॥

सर्वं तदनुजानामि व्यलीकं न च मे हृदि ॥ ०२६ ॥

गुरोरनुप्रवेशो हि नोपघातो यवीयसः ।
यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधिलोपकः ॥ ०२७ ॥

निवर्तस्व महाबाहो कुरुष्व वचनं मम ।
न हि ते धर्मलोपोऽस्ति न च मे धर्षणा कृता ॥ ०२८ ॥

अर्जुन उवाच ॥

न व्याजेन चरेद्धर्ममिति मे भवतः श्रुतम् ।
न सत्याद्विचलिष्यामि सत्येनायुधमालभे ॥ ०२९ ॥

वैशंपायन उवाच ॥

सोऽभ्यनुज्ञाप्य राजानं ब्रह्मचर्याय दीक्षितः ।
वने द्वादश वर्षाणि वासायोपजगाम ह ॥ ०३० ॥

---

# अध्याय २०६

वैशंपायन उवाच ॥

तं प्रयान्तं महाबाहुं कौरवाणां यशस्करम् ।
अनुजग्मुर्महात्मानो ब्राह्मणा वेदपारगाः ॥ ००१ ॥

वेदवेदाङ्गविद्वांसस्तथैवाध्यात्मचिन्तकाः ।
चौक्षाश्च भगवद्भक्ताः सूताः पौराणिकाश्च ये ॥ ००२ ॥

कथकाश्चापरे राजञ्श्रमणाश्च वनौकसः ।
दिव्याख्यानानि ये चापि पठन्ति मधुरं द्विजाः ॥ ००३ ॥

एतैश्चान्यैश्च बहुभिः सहायैः पाण्डुनन्दनः ।
वृतः श्लक्ष्णकथैः प्रायान्मरुद्भिरिव वासवः ॥ ००४ ॥

रमणीयानि चित्राणि वनानि च सरांसि च ।
सरितः सागरांश्चैव देशानपि च भारत ॥ ००५ ॥

पुण्यानि चैव तीर्थानि ददर्श भरतर्षभ ।
स गङ्गाद्वारमासाद्य निवेशमकरोत्प्रभुः ॥ ००६ ॥

तत्र तस्याद्भुतं कर्म शृणु मे जनमेजय ।
कृतवान्यद्विशुद्धात्मा पाण्डूनां प्रवरो रथी ॥ ००७ ॥

निविष्टे तत्र कौन्तेये ब्राह्मणेषु च भारत ।
अग्निहोत्राणि विप्रास्ते प्रादुश्चक्रुरनेकशः ॥ ००८ ॥

तेषु प्रबोध्यमानेषु ज्वलितेषु हुतेषु च ।
कृतपुष्पोपहारेषु तीरान्तरगतेषु च ॥ ००९ ॥

कृताभिषेकैर्विद्वद्भिर्नियतैः सत्पथि स्थितैः ।
शुशुभेऽतीव तद्राजन्गङ्गाद्वारं महात्मभिः ॥ ०१० ॥

तथा पर्याकुले तस्मिन्निवेशे पाण्डुनन्दनः ।
अभिषेकाय कौन्तेयो गङ्गामवततार ह ॥ ०११ ॥

तत्राभिषेकं कृत्वा स तर्पयित्वा पितामहान् ।
उत्तितीर्षुर्जलाद्राजन्नग्निकार्यचिकीर्षया ॥ ०१२ ॥

अपकृष्टो महाबाहुर्नागराजस्य कन्यया ।
अन्तर्जले महाराज उलूप्या कामयानया ॥ ०१३ ॥

ददर्श पाण्डवस्तत्र पावकं सुसमाहितम् ।
कौरव्यस्याथ नागस्य भवने परमार्चिते ॥ ०१४ ॥

तत्राग्निकार्यं कृतवान्कुन्तीपुत्रो धनञ्जयः ।
अशङ्कमानेन हुतस्तेनातुष्यद्धुताशनः ॥ ०१५ ॥

अग्निकार्यं स कृत्वा तु नागराजसुतां तदा ।
प्रहसन्निव कौन्तेय इदं वचनमब्रवीत् ॥ ०१६ ॥

किमिदं साहसं भीरु कृतवत्यसि भामिनि ।
कश्चायं सुभगो देशः का च त्वं कस्य चात्मजा ॥ ०१७ ॥

उलूप्युवाच ॥

ऐरावतकुले जातः कौरव्यो नाम पन्नगः ।
तस्यास्मि दुहिता पार्थ उलूपी नाम पन्नगी ॥ ०१८ ॥

साहं त्वामभिषेकार्थमवतीर्णं समुद्रगाम् ।
दृष्टवत्येव कौन्तेय कन्दर्पेणास्मि मूर्च्छिता ॥ ०१९ ॥

तां मामनङ्गमथितां त्वत्कृते कुरुनन्दन ।
अनन्यां नन्दयस्वाद्य प्रदानेनात्मनो रहः ॥ ०२० ॥

अर्जुन उवाच ॥

ब्रह्मचर्यमिदं भद्रे मम द्वादशवार्षिकम् ।
धर्मराजेन चादिष्टं नाहमस्मि स्वयंवशः ॥ ०२१ ॥

तव चापि प्रियं कर्तुमिच्छामि जलचारिणि ।
अनृतं नोक्तपूर्वं च मया किञ्चन कर्हिचित् ॥ ०२२ ॥

कथं च नानृतं तत्स्यात्तव चापि प्रियं भवेत् ।
न च पीड्येत मे धर्मस्तथा कुर्यां भुजङ्गमे ॥ ०२३ ॥

उलूप्युवाच ॥

जानाम्यहं पाण्डवेय यथा चरसि मेदिनीम् ।
यथा च ते ब्रह्मचर्यमिदमादिष्टवान्गुरुः ॥ ०२४ ॥

परस्परं वर्तमानान्द्रुपदस्यात्मजां प्रति ।
यो नोऽनुप्रविशेन्मोहात्स नो द्वादशवार्षिकम् ॥ ०२५ ॥

वने चरेद्ब्रह्मचर्यमिति वः समयः कृतः ॥ ०२५ ॥

तदिदं द्रौपदीहेतोरन्योन्यस्य प्रवासनम् ।
कृतं वस्तत्र धर्मार्थमत्र धर्मो न दुष्यति ॥ ०२६ ॥

परित्राणं च कर्तव्यमार्तानां पृथुलोचन ।
कृत्वा मम परित्राणं तव धर्मो न लुप्यते ॥ ०२७ ॥

यदि वाप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः ।
स च ते धर्म एव स्याद्दत्त्वा प्राणान्ममार्जुन ॥ ०२८ ॥

भक्तां भजस्व मां पार्थ सतामेतन्मतं प्रभो ।
न करिष्यसि चेदेवं मृतां मामुपधारय ॥ ०२९ ॥

प्राणदानान्महाबाहो चर धर्ममनुत्तमम् ।
शरणं च प्रपन्नास्मि त्वामद्य पुरुषोत्तम ॥ ०३० ॥

दीनाननाथान्कौन्तेय परिरक्षसि नित्यशः ।
साहं शरणमभ्येमि रोरवीमि च दुःखिता ॥ ०३१ ॥

याचे त्वामभिकामाहं तस्मात्कुरु मम प्रियम् ।
स त्वमात्मप्रदानेन सकामां कर्तुमर्हसि ॥ ०३२ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया ।
कृतवांस्तत्तथा सर्वं धर्ममुद्दिश्य कारणम् ॥ ०३३ ॥

स नागभवने रात्रिं तामुषित्वा प्रतापवान् ।
उदितेऽभ्युत्थितः सूर्ये कौरव्यस्य निवेशनात् ॥ ०३४ ॥

---

# अध्याय २०७

वैशंपायन उवाच ॥

कथयित्वा तु तत्सर्वं ब्राह्मणेभ्यः स भारत ।
प्रययौ हिमवत्पार्श्वं ततो वज्रधरात्मजः ॥ ००१ ॥

अगस्त्यवटमासाद्य वसिष्ठस्य च पर्वतम् ।
भृगुतुङ्गे च कौन्तेयः कृतवाञ्शौचमात्मनः ॥ ००२ ॥

प्रददौ गोसहस्राणि तीर्थेष्वायतनेषु च ।
निवेशांश्च द्विजातिभ्यः सोऽददत्कुरुसत्तमः ॥ ००३ ॥

हिरण्यबिन्दोस्तीर्थे च स्नात्वा पुरुषसत्तमः ।
दृष्टवान्पर्वतश्रेष्ठं पुण्यान्यायतनानि च ॥ ००४ ॥

अवतीर्य नरश्रेष्ठो ब्राह्मणैः सह भारत ।
प्राचीं दिशमभिप्रेप्सुर्जगाम भरतर्षभः ॥ ००५ ॥

आनुपूर्व्येण तीर्थानि दृष्टवान्कुरुसत्तमः ।
नदीं चोत्पलिनीं रम्यामरण्यं नैमिषं प्रति ॥ ००६ ॥

नन्दामपरनन्दां च कौशिकीं च यशस्विनीम् ।
महानदीं गयां चैव गङ्गामपि च भारत ॥ ००७ ॥

एवं सर्वाणि तीर्थानि पश्यमानस्तथाश्रमान् ।
आत्मनः पावनं कुर्वन्ब्राह्मणेभ्यो ददौ वसु ॥ ००८ ॥

अङ्गवङ्गकलिङ्गेषु यानि पुण्यानि कानिचित् ।
जगाम तानि सर्वाणि तीर्थान्यायतनानि च ॥ ००९ ॥

दृष्ट्वा च विधिवत्तानि धनं चापि ददौ ततः ॥ ००९ ॥

कलिङ्गराष्ट्रद्वारेषु ब्राह्मणाः पाण्डवानुगाः ।
अभ्यनुज्ञाय कौन्तेयमुपावर्तन्त भारत ॥ ०१० ॥

स तु तैरभ्यनुज्ञातः कुन्तीपुत्रो धनञ्जयः ।
सहायैरल्पकैः शूरः प्रययौ येन सागरम् ॥ ०११ ॥

स कलिङ्गानतिक्रम्य देशानायतनानि च ।
धर्म्याणि रमणीयानि प्रेक्षमाणो ययौ प्रभुः ॥ ०१२ ॥

महेन्द्रपर्वतं दृष्ट्वा तापसैरुपशोभितम् ।
समुद्रतीरेण शनैर्मणलूरं जगाम ह ॥ ०१३ ॥

तत्र सर्वाणि तीर्थानि पुण्यान्यायतनानि च ।
अभिगम्य महाबाहुरभ्यगच्छन्महीपतिम् ॥ ०१४ ॥

मणलूरेश्वरं राजन्धर्मज्ञं चित्रवाहनम् ॥ ०१४ ॥

तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना ।
तां ददर्श पुरे तस्मिन्विचरन्तीं यदृच्छया ॥ ०१५ ॥

दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहिनीम् ।
अभिगम्य च राजानं ज्ञापयत्स्वं प्रयोजनम् ॥ ०१६ ॥

तमुवाचाथ राजा स सान्त्वपूर्वमिदं वचः ॥ ०१६ ॥

राजा प्रभङ्करो नाम कुले अस्मिन्बभूव ह ।
अपुत्रः प्रसवेनार्थी तपस्तेपे स उत्तमम् ॥ ०१७ ॥

उग्रेण तपसा तेन प्रणिपातेन शङ्करः ।
ईश्वरस्तोषितस्तेन महादेव उमापतिः ॥ ०१८ ॥

स तस्मै भगवान्प्रादादेकैकं प्रसवं कुले ।
एकैकः प्रसवस्तस्माद्भवत्यस्मिन्कुले सदा ॥ ०१९ ॥

तेषां कुमाराः सर्वेषां पूर्वेषां मम जज्ञिरे ।
कन्या तु मम जातेयं कुलस्योत्पादनी ध्रुवम् ॥ ०२० ॥

पुत्रो ममेयमिति मे भावना पुरुषोत्तम ।
पुत्रिका हेतुविधिना सञ्ज्ञिता भरतर्षभ ॥ ०२१ ॥

एतच्छुल्कं भवत्वस्याः कुलकृज्जायतामिह ।
एतेन समयेनेमां प्रतिगृह्णीष्व पाण्डव ॥ ०२२ ॥

स तथेति प्रतिज्ञाय कन्यां तां प्रतिगृह्य च ।
उवास नगरे तस्मिन्कौन्तेयस्त्रिहिमाः समाः ॥ ०२३ ॥

---

# अध्याय २०८

वैशंपायन उवाच ॥

ततः समुद्रे तीर्थानि दक्षिणे भरतर्षभः ।
अभ्यगच्छत्सुपुण्यानि शोभितानि तपस्विभिः ॥ ००१ ॥

वर्जयन्ति स्म तीर्थानि पञ्च तत्र तु तापसाः ।
आचीर्णानि तु यान्यासन्पुरस्तात्तु तपस्विभिः ॥ ००२ ॥

अगस्त्यतीर्थं सौभद्रं पौलोमं च सुपावनम् ।
कारंधमं प्रसन्नं च हयमेधफलं च यत् ॥ ००३ ॥

भारद्वाजस्य तीर्थं च पापप्रशमनं महत् ॥ ००३ ॥

विविक्तान्युपलक्ष्याथ तानि तीर्थानि पाण्डवः ।
दृष्ट्वा च वर्ज्यमानानि मुनिभिर्धर्मबुद्धिभिः ॥ ००४ ॥

तपस्विनस्ततोऽपृच्छत्प्राञ्जलिः कुरुनन्दनः ।
तीर्थानीमानि वर्ज्यन्ते किमर्थं ब्रह्मवादिभिः ॥ ००५ ॥

तापसा ऊचुः ॥

ग्राहाः पञ्च वसन्त्येषु हरन्ति च तपोधनान् ।
अत एतानि वर्ज्यन्ते तीर्थानि कुरुनन्दन ॥ ००६ ॥

वैशंपायन उवाच ॥

तेषां श्रुत्वा महाबाहुर्वार्यमाणस्तपोधनैः ।
जगाम तानि तीर्थानि द्रष्टुं पुरुषसत्तमः ॥ ००७ ॥

ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम् ।
विगाह्य तरसा शूरः स्नानं चक्रे परंतपः ॥ ००८ ॥

अथ तं पुरुषव्याघ्रमन्तर्जलचरो महान् ।
निजग्राह जले ग्राहः कुन्तीपुत्रं धनञ्जयम् ॥ ००९ ॥

स तमादाय कौन्तेयो विस्फुरन्तं जलेचरम् ।
उदतिष्ठन्महाबाहुर्बलेन बलिनां वरः ॥ ०१० ॥

उत्कृष्ट एव तु ग्राहः सोऽर्जुनेन यशस्विना ।
बभूव नारी कल्याणी सर्वाभरणभूषिता ॥ ०११ ॥

दीप्यमाना श्रिया राजन्दिव्यरूपा मनोरमा ॥ ०११ ॥

तदद्भुतं महद्दृष्ट्वा कुन्तीपुत्रो धनञ्जयः ।
तां स्त्रियं परमप्रीत इदं वचनमब्रवीत् ॥ ०१२ ॥

का वै त्वमसि कल्याणि कुतो वासि जलेचरी ।
किमर्थं च महत्पापमिदं कृतवती पुरा ॥ ०१३ ॥

नार्युवाच ॥

अप्सरास्मि महाबाहो देवारण्यविचारिणी ।
इष्टा धनपतेर्नित्यं वर्गा नाम महाबल ॥ ०१४ ॥

मम सख्यश्चतस्रोऽन्याः सर्वाः कामगमाः शुभाः ।
ताभिः सार्धं प्रयातास्मि लोकपालनिवेशनम् ॥ ०१५ ॥

ततः पश्यामहे सर्वा ब्राह्मणं संशितव्रतम् ।
रूपवन्तमधीयानमेकमेकान्तचारिणम् ॥ ०१६ ॥

तस्य वै तपसा राजंस्तद्वनं तेजसावृतम् ।
आदित्य इव तं देशं कृत्स्नं स व्यवभासयत् ॥ ०१७ ॥

तस्य दृष्ट्वा तपस्तादृग्रूपं चाद्भुतदर्शनम् ।
अवतीर्णाः स्म तं देशं तपोविघ्नचिकीर्षया ॥ ०१८ ॥

अहं च सौरभेयी च समीची बुद्बुदा लता ।
यौगपद्येन तं विप्रमभ्यगच्छाम भारत ॥ ०१९ ॥

गायन्त्यो वै हसन्त्यश्च लोभयन्त्यश्च तं द्विजम् ।
स च नास्मासु कृतवान्मनो वीर कथञ्चन ॥ ०२० ॥

नाकम्पत महातेजाः स्थितस्तपसि निर्मले ॥ ०२० ॥

सोऽशपत्कुपितोऽस्मांस्तु ब्राह्मणः क्षत्रियर्षभ ।
ग्राहभूता जले यूयं चरिष्यध्वं शतं समाः ॥ ०२१ ॥

# अध्याय २०९

वर्गोवाच ॥

ततो वयं प्रव्यथिताः सर्वा भरतसत्तम ।
आयाम शरणं विप्रं तं तपोधनमच्युतम् ॥ ००१ ॥

रूपेण वयसा चैव कन्दर्पेण च दर्पिताः ।
अयुक्तं कृतवत्यः स्म क्षन्तुमर्हसि नो द्विज ॥ ००२ ॥

एष एव वधोऽस्माकं सुपर्याप्तस्तपोधन ।
यद्वयं संशितात्मानं प्रलोब्धुं त्वामिहागताः ॥ ००३ ॥

अवध्यास्तु स्त्रियः सृष्टा मन्यन्ते धर्मचिन्तकाः ।
तस्माद्धर्मेण धर्मज्ञ नास्मान्हिंसितुमर्हसि ॥ ००४ ॥

सर्वभूतेषु धर्मज्ञ मैत्रो ब्राह्मण उच्यते ।
सत्यो भवतु कल्याण एष वादो मनीषिणाम् ॥ ००५ ॥

शरणं च प्रपन्नानां शिष्टाः कुर्वन्ति पालनम् ।
शरणं त्वां प्रपन्नाः स्म तस्मात्त्वं क्षन्तुमर्हसि ॥ ००६ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु धर्मात्मा ब्राह्मणः शुभकर्मकृत् ।
प्रसादं कृतवान्वीर रविसोमसमप्रभः ॥ ००७ ॥

ब्राह्मण उवाच ॥

शतं सहस्रं विश्वं च सर्वमक्षयवाचकम् ।
परिमाणं शतं त्वेतन्नैतदक्षयवाचकम् ॥ ००८ ॥

यदा च वो ग्राहभूता गृह्णन्तीः पुरुषाञ्जले ।
उत्कर्षति जलात्कश्चित्स्थलं पुरुषसत्तमः ॥ ००९ ॥

तदा यूयं पुनः सर्वाः स्वरूपं प्रतिपत्स्यथ ।
अनृतं नोक्तपूर्वं मे हसतापि कदाचन ॥ ०१० ॥

तानि सर्वाणि तीर्थानि इतः प्रभृति चैव ह ।
नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्वशः ॥ ०११ ॥

पुण्यानि च भविष्यन्ति पावनानि मनीषिणाम् ॥ ०११ ॥

वर्गोवाच ॥

ततोऽभिवाद्य तं विप्रं कृत्वा चैव प्रदक्षिणम् ।
अचिन्तयामोपसृत्य तस्माद्देशात्सुदुःखिताः ॥ ०१२ ॥

क्व नु नाम वयं सर्वाः कालेनाल्पेन तं नरम् ।
समागच्छेम यो नस्तद्रूपमापादयेत्पुनः ॥ ०१३ ॥

ता वयं चिन्तयित्वैवं मुहूर्तादिव भारत ।
दृष्टवत्यो महाभागं देवर्षिमुत नारदम् ॥ ०१४ ॥

सर्वा हृष्टाः स्म तं दृष्ट्वा देवर्षिममितद्युतिम् ।
अभिवाद्य च तं पार्थ स्थिताः स्म व्यथिताननाः ॥ ०१५ ॥

स नोऽपृच्छद्दुःखमूलमुक्तवत्यो वयं च तत् ।
श्रुत्वा तच्च यथावृत्तमिदं वचनमब्रवीत् ॥ ०१६ ॥

दक्षिणे सागरानूपे पञ्च तीर्थानि सन्ति वै ।
पुण्यानि रमणीयानि तानि गच्छत माचिरम् ॥ ०१७ ॥

तत्राशु पुरुषव्याघ्रः पाण्डवो वो धनञ्जयः ।
मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः ॥ ०१८ ॥

तस्य सर्वा वयं वीर श्रुत्वा वाक्यमिहागताः ।
तदिदं सत्यमेवाद्य मोक्षिताहं त्वयानघ ॥ ०१९ ॥

एतास्तु मम वै सख्यश्चतस्रोऽन्या जले स्थिताः ।
कुरु कर्म शुभं वीर एताः सर्वा विमोक्षय ॥ ०२० ॥

वैशंपायन उवाच ॥

ततस्ताः पाण्डवश्रेष्ठः सर्वा एव विशां पते ।
तस्माच्छापाददीनात्मा मोक्षयामास वीर्यवान् ॥ ०२१ ॥

उत्थाय च जलात्तस्मात्प्रतिलभ्य वपुः स्वकम् ।
तास्तदाप्सरसो राजन्नदृश्यन्त यथा पुरा ॥ ०२२ ॥

तीर्थानि शोधयित्वा तु तथानुज्ञाय ताः प्रभुः ।
चित्राङ्गदां पुनर्द्रष्टुं मणलूरपुरं ययौ ॥ ०२३ ॥

तस्यामजनयत्पुत्रं राजानं बभ्रुवाहनम् ।
तं दृष्ट्वा पाण्डवो राजन्गोकर्णमभितोऽगमत् ॥ ०२४ ॥

# अध्याय २१०

वैशंपायन उवाच ॥

सोऽपरान्तेषु तीर्थानि पुण्यान्यायतनानि च ।
सर्वाण्येवानुपूर्व्येण जगामामितविक्रमः ॥ ००१ ॥

समुद्रे पश्चिमे यानि तीर्थान्यायतनानि च ।
तानि सर्वाणि गत्वा स प्रभासमुपजग्मिवान् ॥ ००२ ॥

प्रभासदेशं संप्राप्तं बीभत्सुमपराजितम् ।
तीर्थान्यनुचरन्तं च शुश्राव मधुसूदनः ॥ ००३ ॥

ततोऽभ्यगच्छत्कौन्तेयमज्ञातो नाम माधवः ।
ददृशाते तदान्योन्यं प्रभासे कृष्णपाण्डवौ ॥ ००४ ॥

तावन्योन्यं समाश्लिष्य पृष्ट्वा च कुशलं वने ।
आस्तां प्रियसखायौ तौ नरनारायणावृषी ॥ ००५ ॥

ततोऽर्जुनं वासुदेवस्तां चर्यां पर्यपृच्छत ।
किमर्थं पाण्डवेमानि तीर्थान्यनुचरस्युत ॥ ००६ ॥

ततोऽर्जुनो यथावृत्तं सर्वमाख्यातवांस्तदा ।
श्रुत्वोवाच च वार्ष्णेय एवमेतदिति प्रभुः ॥ ००७ ॥

तौ विहृत्य यथाकामं प्रभासे कृष्णपाण्डवौ ।
महीधरं रैवतकं वासायैवाभिजग्मतुः ॥ ००८ ॥

पूर्वमेव तु कृष्णस्य वचनात्तं महीधरम् ।
पुरुषाः समलञ्चक्रुरुपजह्रुश्च भोजनम् ॥ ००९ ॥

प्रतिगृह्यार्जुनः सर्वमुपभुज्य च पाण्डवः ।
सहैव वासुदेवेन दृष्टवान्नटनर्तकान् ॥ ०१० ॥

अभ्यनुज्ञाप्य तान्सर्वानर्चयित्वा च पाण्डवः ।
सत्कृतं शयनं दिव्यमभ्यगच्छन्महाद्युतिः ॥ ०११ ॥

तीर्थानां दर्शनं चैव पर्वतानां च भारत ।
आपगानां वनानां च कथयामास सात्वते ॥ ०१२ ॥

स कथाः कथयन्नेव निद्रया जनमेजय ।
कौन्तेयोऽपहृतस्तस्मिञ्शयने स्वर्गसंमिते ॥ ०१३ ॥

मधुरेण स गीतेन वीणाशब्देन चानघ ।
प्रबोध्यमानो बुबुधे स्तुतिभिर्मङ्गलैस्तथा ॥ ०१४ ॥

स कृत्वावश्यकार्याणि वार्ष्णेयेनाभिनन्दितः ।
रथेन काञ्चनाङ्गेन द्वारकामभिजग्मिवान् ॥ ०१५ ॥

अलङ्कृता द्वारका तु बभूव जनमेजय ।
कुन्तीसुतस्य पूजार्थमपि निष्कुटकेष्वपि ॥ ०१६ ॥

दिदृक्षवश्च कौन्तेयं द्वारकावासिनो जनाः ।
नरेन्द्रमार्गमाजग्मुस्तूर्णं शतसहस्रशः ॥ ०१७ ॥

अवलोकेषु नारीणां सहस्राणि शतानि च ।
भोजवृष्ण्यन्धकानां च समवायो महानभूत् ॥ ०१८ ॥

स तथा सत्कृतः सर्वैर्भोजवृष्ण्यन्धकात्मजैः ।
अभिवाद्याभिवाद्यांश्च सर्वैश्च प्रतिनन्दितः ॥ ०१९ ॥

कुमारैः सर्वशो वीरः सत्कारेणाभिवादितः ।

समानवयसः सर्वानाश्लिष्य स पुनः पुनः ॥ ०२० ॥

कृष्णस्य भवने रम्ये रत्नभोज्यसमावृते ।
उवास सह कृष्णेन बहुलास्तत्र शर्वरीः ॥ ०२१ ॥

---

# सुभद्राहरणपर्व

## अध्याय २११

वैशंपायन उवाच ॥

ततः कतिपयाहस्य तस्मिन्रैवतके गिरौ ।
वृष्ण्यन्धकानामभवत्सुमहानुत्सवो नृप ॥ ००१ ॥

तत्र दानं ददुर्वीरा ब्राह्मणानां सहस्रशः ।
भोजवृष्ण्यन्धकाश्चैव महे तस्य गिरेस्तदा ॥ ००२ ॥

प्रासादै रत्नचित्रैश्च गिरेस्तस्य समन्ततः ।
स देशः शोभितो राजन्दीपवृक्षैश्च सर्वशः ॥ ००३ ॥

वादित्राणि च तत्र स्म वादकाः समवादयन् ।
ननृतुर्नर्तकाश्चैव जगुर्गानानि गायनाः ॥ ००४ ॥

अलङ्कृताः कुमाराश्च वृष्णीनां सुमहौजसः ।
यानैर्हाटकचित्राङ्गैश्चञ्चूर्यन्ते स्म सर्वशः ॥ ००५ ॥

पौराश्च पादचारेण यानैरुच्चावचैस्तथा ।

सदाराः सानुयात्राश्च शतशोऽथ सहस्रशः ॥ ००६ ॥

ततो हलधरः क्षीबो रेवतीसहितः प्रभुः ।
अनुगम्यमानो गन्धर्वैरचरत्तत्र भारत ॥ ००७ ॥

तथैव राजा वृष्णीनामुग्रसेनः प्रतापवान् ।
उपगीयमानो गन्धर्वैः स्त्रीसहस्रसहायवान् ॥ ००८ ॥

रौक्मिणेयश्च साम्बश्च क्षीबौ समरदुर्मदौ ।
दिव्यमाल्याम्बरधरौ विजह्रातेऽमराविव ॥ ००९ ॥

अक्रूरः सारणश्चैव गदो भानुर्विडूरथः ।
निशठश्चारुदेष्णश्च पृथुर्विपृथुरेव च ॥ ०१० ॥

सत्यकः सात्यकिश्चैव भङ्गकारसहाचरौ ।
हार्दिक्यः कृतवर्मा च ये चान्ये नानुकीर्तिताः ॥ ०११ ॥

एते परिवृताः स्त्रीभिर्गन्धर्वैश्च पृथक्पृथक् ।
तमुत्सवं रैवतके शोभयां चक्रिरे तदा ॥ ०१२ ॥

तदा कोलाहले तस्मिन्वर्तमाने महाशुभे ।
वासुदेवश्च पार्थश्च सहितौ परिजग्मतुः ॥ ०१३ ॥

तत्र चङ्क्रम्यमाणौ तौ वासुदेवसुतां शुभाम् ।
अलङ्कृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥ ०१४ ॥

दृष्ट्वैव तामर्जुनस्य कन्दर्पः समजायत ।
तं तथैकाग्रमनसं कृष्णः पार्थमलक्षयत् ॥ ०१५ ॥

अथाब्रवीत्पुष्कराक्षः प्रहसन्निव भारत ।
वनेचरस्य किमिदं कामेनालोड्यते मनः ॥ ०१६ ॥

ममैषा भगिनी पार्थ सारणस्य सहोदरा ।
यदि ते वर्तते बुद्धिर्वक्ष्यामि पितरं स्वयम् ॥ ०१७ ॥

अर्जुन उवाच ॥

दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैव संपन्ना कमिवैषा न मोहयेत् ॥ ०१८ ॥

कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम् ।
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ॥ ०१९ ॥

प्राप्तौ तु क उपायः स्यात्तद्ब्रवीहि जनार्दन ।
आस्थास्यामि तथा सर्वं यदि शक्यं नरेण तत् ॥ ०२० ॥

वासुदेव उवाच ॥

स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥ ०२१ ॥

प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते ।
विवाहहेतोः शूराणामिति धर्मविदो विदुः ॥ ०२२ ॥

स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम ।
हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥ ०२३ ॥

वैशंपायन उवाच ॥

ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम् ।
शीघ्रगान्पुरुषान्राजन्प्रेषयामासतुस्तदा ॥ ०२४ ॥

धर्मराजाय तत्सर्वमिन्द्रप्रस्थगताय वै ।
श्रुत्वैव च महाबाहुरनुजज्ञे स पाण्डवः ॥ ०२५ ॥

---

# अध्याय २१२

वैशंपायन उवाच ॥

ततः संवादिते तस्मिन्ननुज्ञातो धनञ्जयः ।
गतां रैवतके कन्यां विदित्वा जनमेजय ॥ ००१ ॥

वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यताम् ।
कृष्णस्य मतमाज्ञाय प्रययौ भरतर्षभः ॥ ००२ ॥

रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि ।
सैन्यसुग्रीवयुक्तेन किङ्किणीजालमालिना ॥ ००३ ॥

सर्वशस्त्रोपपन्नेन जीमूतरवनादिना ।
ज्वलिताग्निप्रकाशेन द्विषतां हर्षघातिना ॥ ००४ ॥

संनद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् ।
मृगयाव्यपदेशेन यौगपद्येन भारत ॥ ००५ ॥

सुभद्रा त्वथ शैलेन्द्रमभ्यर्च्य सह रैवतम् ।
दैवतानि च सर्वाणि ब्राह्मणान्स्वस्ति वाच्य च ॥ ००६ ॥

प्रदक्षिणं गिरिं कृत्वा प्रययौ द्वारकां प्रति ।
तामभिद्रुत्य कौन्तेयः प्रसह्यारोपयद्रथम् ॥ ००७ ॥

ततः स पुरुषव्याघ्रस्तामादाय शुचिस्मिताम् ।
रथेनाकाशगेनैव प्रययौ स्वपुरं प्रति ॥ ००८ ॥

ह्रियमाणां तु तां दृष्ट्वा सुभद्रां सैनिको जनः ।
विक्रोशन्प्राद्रवत्सर्वो द्वारकामभितः पुरीम् ॥ ००९ ॥

ते समासाद्य सहिताः सुधर्मामभितः सभाम् ।
सभापालस्य तत्सर्वमाचख्युः पार्थविक्रमम् ॥ ०१० ॥

तेषां श्रुत्वा सभापालो भेरीं सांनाहिकीं ततः ।
समाजघ्ने महाघोषां जाम्बूनदपरिष्कृताम् ॥ ०११ ॥

क्षुब्धास्तेनाथ शब्देन भोजवृष्ण्यन्धकास्तदा ।
अन्नपानमपास्याथ समापेतुः सभां ततः ॥ ०१२ ॥

ततो जाम्बूनदाङ्गानि स्पर्ध्यास्तरणवन्ति च ।
मणिविद्रुमचित्राणि ज्वलिताग्निप्रभाणि च ॥ ०१३ ॥

भेजिरे पुरुषव्याघ्रा वृष्ण्यन्धकमहारथाः ।
सिंहासनानि शतशो धिष्ण्यानीव हुताशनाः ॥ ०१४ ॥

तेषां समुपविष्टानां देवानामिव संनये ।
आचख्यौ चेष्टितं जिष्णोः सभापालः सहानुगः ॥ ०१५ ॥

तच्छ्रुत्वा वृष्णिवीरास्ते मदरक्तान्तलोचनाः ।
अमृष्यमाणाः पार्थस्य समुत्पेतुरहङ्कृताः ॥ ०१६ ॥

योजयध्वं रथानाशु प्रासानाहरतेति च ।
धनूंषि च महार्हाणि कवचानि बृहन्ति च ॥ ०१७ ॥

सूतानुच्चुक्रुशुः केचिद्रथान्योजयतेति च ।
स्वयं च तुरगान्केचिन्निन्युर्हेमविभूषितान् ॥ ०१८ ॥

रथेष्वानीयमानेषु कवचेषु ध्वजेषु च ।
अभिक्रन्दे नृवीराणां तदासीत्सङ्कुलं महत् ॥ ०१९ ॥

वनमाली ततः क्षीबः कैलासशिखरोपमः ।
नीलवासा मदोत्सिक्त इदं वचनमब्रवीत् ॥ ०२० ॥

किमिदं कुरुथाप्रज्ञास्तूष्णीं भूते जनार्दने ।
अस्य भावमविज्ञाय सङ्क्रुद्धा मोघगर्जिताः ॥ ०२१ ॥

एष तावदभिप्रायमाख्यातु स्वं महामतिः ।
यदस्य रुचितं कर्तुं तत्कुरुध्वमतन्द्रिताः ॥ ०२२ ॥

ततस्ते तद्वचः श्रुत्वा ग्राह्यरूपं हलायुधात् ।
तूष्णीं भूतास्ततः सर्वे साधु साध्विति चाब्रुवन् ॥ ०२३ ॥

समं वचो निशम्येति बलदेवस्य धीमतः ।
पुनरेव सभामध्ये सर्वे तु समुपाविशन् ॥ ०२४ ॥

ततोऽब्रवीत्कामपालो वासुदेवं परंतपम् ।
किमवागुपविष्टोऽसि प्रेक्षमाणो जनार्दन ॥ ०२५ ॥

सत्कृतस्त्वत्कृते पार्थः सर्वैरस्माभिरच्युत ।
न च सोऽर्हति तां पूजां दुर्बुद्धिः कुलपांसनः ॥ ०२६ ॥

को हि तत्रैव भुक्त्वान्नं भाजनं भेत्तुमर्हति ।
मन्यमानः कुले जातमात्मानं पुरुषः क्वचित् ॥ ०२७ ॥

ईप्समानश्च संबन्धं कृतपूर्वं च मानयन् ।

को हि नाम भवेनार्थी साहसेन समाचरेत् ॥ ०२८ ॥

सोऽवमन्य च नामास्माननादृत्य च केशवम् ।
प्रसह्य हृतवानद्य सुभद्रां मृत्युमात्मनः ॥ ०२९ ॥

कथं हि शिरसो मध्ये पदं तेन कृतं मम ।
मर्षयिष्यामि गोविन्द पादस्पर्शमिवोरगः ॥ ०३० ॥

अद्य निष्कौरवामेकः करिष्यामि वसुंधराम् ।
न हि मे मर्षणीयोऽयमर्जुनस्य व्यतिक्रमः ॥ ०३१ ॥

तं तथा गर्जमानं तु मेघदुन्दुभिनिःस्वनम् ।
अन्वपद्यन्त ते सर्वे भोजवृष्ण्यन्धकास्तदा ॥ ०३२ ॥

---

# हरणहारिकपर्व

## अध्याय २१३

वैशंपायन उवाच ॥

उक्तवन्तो यदा वाक्यमसकृत्सर्ववृष्णयः ।
ततोऽब्रवीद्वासुदेवो वाक्यं धर्मार्थसंहितम् ॥ ००१ ॥

नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान् ।
संमानोऽभ्यधिकस्तेन प्रयुक्तोऽयमसंशयम् ॥ ००२ ॥

अर्थलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा ।

स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ॥ ००३ ॥

प्रदानमपि कन्यायाः पशुवत्कोऽनुमंस्यते ।
विक्रयं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ॥ ००४ ॥

एतान्दोषांश्च कौन्तेयो दृष्टवानिति मे मतिः ।
अतः प्रसह्य हृतवान्कन्यां धर्मेण पाण्डवः ॥ ००५ ॥

उचितश्चैव संबन्धः सुभद्रा च यशस्विनी ।
एष चापीदृशः पार्थः प्रसह्य हृतवानिति ॥ ००६ ॥

भरतस्यान्वये जातं शंतनोश्च महात्मनः ।
कुन्तिभोजात्मजापुत्रं को बुभूषेत नार्जुनम् ॥ ००७ ॥

न च पश्यामि यः पार्थं विक्रमेण पराजयेत् ।
अपि सर्वेषु लोकेषु सेन्द्ररुद्रेषु मारिष ॥ ००८ ॥

स च नाम रथस्तादृङ्मदीयास्ते च वाजिनः ।
योद्धा पार्थश्च शीघ्रास्त्रः को नु तेन समो भवेत् ॥ ००९ ॥

तमनुद्रुत्य सान्त्वेन परमेण धनञ्जयम् ।
निवर्तयध्वं संहृष्टा ममैषा परमा मतिः ॥ ०१० ॥

यदि निर्जित्य वः पार्थो बलाद्गच्छेत्स्वकं पुरम् ।
प्रणश्येद्वो यशः सद्यो न तु सान्त्वे पराजयः ॥ ०११ ॥

तच्छ्रुत्वा वासुदेवस्य तथा चक्रुर्जनाधिप ।
निवृत्तश्चार्जुनस्तत्र विवाहं कृतवांस्ततः ॥ ०१२ ॥

उषित्वा तत्र कौन्तेयः संवत्सरपराः क्षपाः ।
पुष्करेषु ततः शिष्टं कालं वर्तितवान्प्रभुः ॥ ०१३ ॥

पूर्णे तु द्वादशे वर्षे खाण्डवप्रस्थमाविशत् ॥ ०१३ ॥

अभिगम्य स राजानं विनयेन समाहितः ।
अभ्यर्च्य ब्राह्मणान्पार्थो द्रौपदीमभिजग्मिवान् ॥ ०१४ ॥

तं द्रौपदी प्रत्युवाच प्रणयात्कुरुनन्दनम् ।
तत्रैव गच्छ कौन्तेय यत्र सा सात्वतात्मजा ॥ ०१५ ॥

सुबद्धस्यापि भारस्य पूर्वबन्धः श्लथायते ॥ ०१५ ॥

तथा बहुविधं कृष्णां विलपन्तीं धनञ्जयः ।
सान्त्वयामास भूयश्च क्षमयामास चासकृत् ॥ ०१६ ॥

सुभद्रां त्वरमाणश्च रक्तकौशेयवाससम् ।
पार्थः प्रस्थापयामास कृत्वा गोपालिकावपुः ॥ ०१७ ॥

साधिकं तेन रूपेण शोभमाना यशस्विनी ।
भवनं श्रेष्ठमासाद्य वीरपत्नी वराङ्गना ॥ ०१८ ॥

ववन्दे पृथुताम्राक्षी पृथां भद्रा यशस्विनी ॥ ०१८ ॥

ततोऽभिगम्य त्वरिता पूर्णेन्दुसदृशानना ।
ववन्दे द्रौपदीं भद्रा प्रेष्याहमिति चाब्रवीत् ॥ ०१९ ॥

प्रत्युत्थाय च तां कृष्णा स्वसारं माधवस्य ताम् ।
सस्वजे चावदत्प्रीता निःसपत्नोऽस्तु ते पतिः ॥ ०२० ॥

तथैव मुदिता भद्रा तामुवाचैवमस्त्विति ॥ ०२० ॥

ततस्ते हृष्टमनसः पाण्डवेया महारथाः ।

कुन्ती च परमप्रीता बभूव जनमेजय ॥ ०२१ ॥

श्रुत्वा तु पुण्डरीकाक्षः संप्राप्तं स्वपुरोत्तमम् ।
अर्जुनं पाण्डवश्रेष्ठमिन्द्रप्रस्थगतं तदा ॥ ०२२ ॥

आजगाम विशुद्धात्मा सह रामेण केशवः ।
वृष्ण्यन्धकमहामात्रैः सह वीरैर्महारथैः ॥ ०२३ ॥

भ्रातृभिश्च कुमारैश्च योधैश्च शतशो वृतः ।
सैन्येन महता शौरिरभिगुप्तः परंतपः ॥ ०२४ ॥

तत्र दानपतिर्धीमानाजगाम महायशाः ।
अक्रूरो वृष्णिवीराणां सेनापतिररिंदमः ॥ ०२५ ॥

अनाधृष्टिर्महातेजा उद्धवश्च महायशाः ।
साक्षाद्बृहस्पतेः शिष्यो महाबुद्धिर्महायशाः ॥ ०२६ ॥

सत्यकः सात्यकिश्चैव कृतवर्मा च सात्वतः ।
प्रद्युम्नश्चैव साम्बश्च निशठः शङ्कुरेव च ॥ ०२७ ॥

चारुदेष्णश्च विक्रान्तो झिल्ली विपृथुरेव च ।
सारणश्च महाबाहुर्गदश्च विदुषां वरः ॥ ०२८ ॥

एते चान्ये च बहवो वृष्णिभोजान्धकास्तथा ।
आजग्मुः खाण्डवप्रस्थमादाय हरणं बहु ॥ ०२९ ॥

ततो युधिष्ठिरो राजा श्रुत्वा माधवमागतम् ।
प्रतिग्रहार्थं कृष्णस्य यमौ प्रास्थापयत्तदा ॥ ०३० ॥

ताभ्यां प्रतिगृहीतं तद्वृष्णिचक्रं समृद्धिमत् ।
विवेश खाण्डवप्रस्थं पताकाध्वजशोभितम् ॥ ०३१ ॥

सिक्तसंमृष्टपन्थानं पुष्पप्रकरशोभितम् ।
चन्दनस्य रसैः शीतैः पुण्यगन्धैर्निषेवितम् ॥ ०३२ ॥

दह्यतागुरुणा चैव देशे देशे सुगन्धिना ।
सुसंमृष्टजनाकीर्णं वणिग्भिरुपशोभितम् ॥ ०३३ ॥

प्रतिपेदे महाबाहुः सह रामेण केशवः ।
वृष्ण्यन्धकमहाभोजैः संवृतः पुरुषोत्तमः ॥ ०३४ ॥

संपूज्यमानः पौरैश्च ब्राह्मणैश्च सहस्रशः ।
विवेश भवनं राज्ञः पुरंदरगृहोपमम् ॥ ०३५ ॥

युधिष्ठिरस्तु रामेण समागच्छद्यथाविधि ।
मूर्ध्नि केशवमाघ्राय पर्यष्वजत बाहुना ॥ ०३६ ॥

तं प्रीयमाणं कृष्णस्तु विनयेनाभ्यपूजयत् ।
भीमं च पुरुषव्याघ्रं विधिवत्प्रत्यपूजयत् ॥ ०३७ ॥

तांश्च वृष्ण्यन्धकश्रेष्ठान्धर्मराजो युधिष्ठिरः ।
प्रतिजग्राह सत्कारैर्यथाविधि यथोपगम् ॥ ०३८ ॥

गुरुवत्पूजयामास कांश्चित्कांश्चिद्वयस्यवत् ।
कांश्चिदभ्यवदत्प्रेम्णा कैश्चिदप्यभिवादितः ॥ ०३९ ॥

ततो ददौ वासुदेवो जन्यार्थे धनमुत्तमम् ।
हरणं वै सुभद्राया ज्ञातिदेयं महायशाः ॥ ०४० ॥

रथानां काञ्चनाङ्गानां किङ्किणीजालमालिनाम् ।
चतुर्युजामुपेतानां सूतैः कुशलसंमतैः ॥ ०४१ ॥

सहस्रं प्रददौ कृष्णो गवामयुतमेव च ॥ ०४१ ॥

श्रीमान्माथुरदेश्यानां दोग्ध्रीणां पुण्यवर्चसाम् ।
वडवानां च शुभ्राणां चन्द्रांशुसमवर्चसाम् ॥ ०४२ ॥

ददौ जनार्दनः प्रीत्या सहस्रं हेमभूषणम् ॥ ०४२ ॥

तथैवाश्वतरीणां च दान्तानां वातरंहसाम् ।
शतान्यञ्जनकेशीनां श्वेतानां पञ्च पञ्च च ॥ ०४३ ॥

स्नापनोत्सादने चैव सुयुक्तं वयसान्वितम् ।
स्त्रीणां सहस्रं गौरीणां सुवेषाणां सुवर्चसाम् ॥ ०४४ ॥

सुवर्णशतकण्ठीनामरोगाणां सुवाससाम् ।
परिचर्यासु दक्षाणां प्रददौ पुष्करेक्षणः ॥ ०४५ ॥

कृताकृतस्य मुख्यस्य कनकस्याग्निवर्चसः ।
मनुष्यभारान्दाशार्हो ददौ दश जनार्दनः ॥ ०४६ ॥

गजानां तु प्रभिन्नानां त्रिधा प्रस्रवतां मदम् ।
गिरिकूटनिकाशानां समरेष्वनिवर्तिनाम् ॥ ०४७ ॥

क्लृप्तानां पटुघण्टानां वराणां हेममालिनाम् ।
हस्त्यारोहैरुपेतानां सहस्रं साहसप्रियः ॥ ०४८ ॥

रामः पादग्राहणिकं ददौ पार्थाय लाङ्गली ।
प्रीयमाणो हलधरः संबन्धप्रीतिमावहन् ॥ ०४९ ॥

स महाधनरत्नौघो वस्त्रकम्बलफेनवान् ।
महागजमहाग्राहः पताकाशैवलाकुलः ॥ ०५० ॥

पाण्डुसागरमाविद्धः प्रविवेश महानदः ।
पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् ॥ ०५१ ॥

प्रतिजग्राह तत्सर्वं धर्मराजो युधिष्ठिरः ।
पूजयामास तांश्चैव वृष्ण्यन्धकमहारथान् ॥ ०५२ ॥

ते समेता महात्मानः कुरुवृष्ण्यन्धकोत्तमाः ।
विजह्रुरमरावासे नराः सुकृतिनो यथा ॥ ०५३ ॥

तत्र तत्र महापानैरुत्कृष्टतलनादितैः ।
यथायोगं यथाप्रीति विजह्रुः कुरुवृष्णयः ॥ ०५४ ॥

एवमुत्तमवीर्यास्ते विहृत्य दिवसान्बहून् ।
पूजिताः कुरुभिर्जग्मुः पुनर्द्वारवतीं पुरीम् ॥ ०५५ ॥

रामं पुरस्कृत्य ययुर्वृष्ण्यन्धकमहारथाः ।
रत्नान्यादाय शुभ्राणि दत्तानि कुरुसत्तमैः ॥ ०५६ ॥

वासुदेवस्तु पार्थेन तत्रैव सह भारत ।
उवास नगरे रम्ये शक्रप्रस्थे महामनाः ॥ ०५७ ॥

व्यचरद्यमुनाकूले पार्थेन सह भारत ॥ ०५७ ॥

ततः सुभद्रा सौभद्रं केशवस्य प्रिया स्वसा ।
जयन्तमिव पौलोमी द्युतिमन्तमजीजनत् ॥ ०५८ ॥

दीर्घबाहुं महासत्त्वमृषभाक्षमरिंदमम् ।
सुभद्रा सुषुवे वीरमभिमन्युं नरर्षभम् ॥ ०५९ ॥

अभीश्च मन्युमांश्चैव ततस्तमरिमर्दनम् ।
अभिमन्युमिति प्राहुरार्जुनिं पुरुषर्षभम् ॥ ०६० ॥

स सात्वत्यामतिरथः संबभूव धनञ्जयात् ।
मखे निर्मथ्यमानाद्वा शमीगर्भाद्धुताशनः ॥ ०६१ ॥

यस्मिञ्जाते महाबाहुः कुन्तीपुत्रो युधिष्ठिरः ।
अयुतं गा द्विजातिभ्यः प्रादान्निष्कांश्च तावतः ॥ ०६२ ॥

दयितो वासुदेवस्य बाल्यात्प्रभृति चाभवत् ।
पितृणां चैव सर्वेषां प्रजानामिव चन्द्रमाः ॥ ०६३ ॥

जन्मप्रभृति कृष्णश्च चक्रे तस्य क्रियाः शुभाः ।
स चापि ववृधे बालः शुक्लपक्षे यथा शशी ॥ ०६४ ॥

चतुष्पादं दशविधं धनुर्वेदमरिंदमः ।
अर्जुनाद्वेद वेदज्ञात्सकलं दिव्यमानुषम् ॥ ०६५ ॥

विज्ञानेष्वपि चास्त्राणां सौष्ठवे च महाबलः ।
क्रियास्वपि च सर्वासु विशेषानभ्यशिक्षयत् ॥ ०६६ ॥

आगमे च प्रयोगे च चक्रे तुल्यमिवात्मनः ।
तुतोष पुत्रं सौभद्रं प्रेक्षमाणो धनञ्जयः ॥ ०६७ ॥

सर्वसंहननोपेतं सर्वलक्षणलक्षितम् ।
दुर्धर्षमृषभस्कन्धं व्यात्ताननमिवोरगम् ॥ ०६८ ॥

सिंहदर्पं महेष्वासं मत्तमातङ्गविक्रमम् ।
मेघदुन्दुभिनिर्घोषं पूर्णचन्द्रनिभाननम् ॥ ०६९ ॥

कृष्णस्य सदृशं शौर्ये वीर्ये रूपे तथाकृतौ ।
ददर्श पुत्रं बीभत्सुर्मघवानिव तं यथा ॥ ०७० ॥

पाञ्चाल्यपि च पञ्चभ्यः पतिभ्यः शुभलक्षणा ।
लेभे पञ्च सुतान्वीराञ्शुभान्पञ्चाचलानिव ॥ ०७१ ॥

युधिष्ठिरात्प्रतिविन्ध्यं सुतसोमं वृकोदरात् ।
अर्जुनाच्छ्रुतकर्माणं शतानीकं च नाकुलिम् ॥ ०७२ ॥

सहदेवाच्छ्रुतसेनमेतान्पञ्च महारथान् ।
पाञ्चाली सुषुवे वीरानादित्यानदितिर्यथा ॥ ०७३ ॥

शास्त्रतः प्रतिविन्ध्यं तमूचुर्विप्रा युधिष्ठिरम् ।
परप्रहरणज्ञाने प्रतिविन्ध्यो भवत्वयम् ॥ ०७४ ॥

सुते सोमसहस्रे तु सोमार्कसमतेजसम् ।
सुतसोमं महेष्वासं सुषुवे भीमसेनतः ॥ ०७५ ॥

श्रुतं कर्म महत्कृत्वा निवृत्तेन किरीटिना ।
जातः पुत्रस्तवेत्येवं श्रुतकर्मा ततोऽभवत् ॥ ०७६ ॥

शतानीकस्य राजर्षेः कौरव्यः कुरुनन्दनः ।
चक्रे पुत्रं सनामानं नकुलः कीर्तिवर्धनम् ॥ ०७७ ॥

ततस्त्वजीजनत्कृष्णा नक्षत्रे वह्निदैवते ।
सहदेवात्सुतं तस्माच्छ्रुतसेनेति तं विदुः ॥ ०७८ ॥

एकवर्षान्तरास्त्वेव द्रौपदेया यशस्विनः ।
अन्वजायन्त राजेन्द्र परस्परहिते रताः ॥ ०७९ ॥

जातकर्माण्यानुपूर्व्याच्चूडोपनयनानि च ।
चकार विधिवद्धौम्यस्तेषां भरतसत्तम ॥ ०८० ॥

कृत्वा च वेदाध्ययनं ततः सुचरितव्रताः ।

जगृहुः सर्वमिष्वस्त्रमर्जुनाद्दिव्यमानुषम् ॥ ०८१ ॥

देवगर्भोपमैः पुत्रैर्व्यूढोरस्कैर्महाबलैः ।
अन्विता राजशार्दूल पाण्डवा मुदमाप्नुवन् ॥ ०८२ ॥

---

# खाण्डवदाहपर्व

## अध्याय २१४

वैशंपायन उवाच ॥

इन्द्रप्रस्थे वसन्तस्ते जघ्नुरन्यान्नराधिपान् ।
शासनाद्धृतराष्ट्रस्य राज्ञः शांतनवस्य च ॥ ००१ ॥

आश्रित्य धर्मराजानं सर्वलोकोऽवसत्सुखम् ।
पुण्यलक्षणकर्माणं स्वदेहमिव देहिनः ॥ ००२ ॥

स समं धर्मकामार्थान्सिषेवे भरतर्षभः ।
त्रीनिवात्मसमान्बन्धून्बन्धुमानिव मानयन् ॥ ००३ ॥

तेषां समविभक्तानां क्षितौ देहवतामिव ।
बभौ धर्मार्थकामानां चतुर्थ इव पार्थिवः ॥ ००४ ॥

अध्येतारं परं वेदाः प्रयोक्तारं महाध्वराः ।
रक्षितारं शुभं वर्णा लेभिरे तं जनाधिपम् ॥ ००५ ॥

अधिष्ठानवती लक्ष्मीः परायणवती मतिः ।

बन्धुमानखिलो धर्मस्तेनासीत्पृथिवीक्षिता ॥ ००६ ॥

भ्रातृभिः सहितो राजा चतुर्भिरधिकं बभौ ।
प्रयुज्यमानैर्विततो वेदैरिव महाध्वरः ॥ ००७ ॥

तं तु धौम्यादयो विप्राः परिवार्योपतस्थिरे ।
बृहस्पतिसमा मुख्याः प्रजापतिमिवामराः ॥ ००८ ॥

धर्मराजे अतिप्रीत्या पूर्णचन्द्र इवामले ।
प्रजानां रेमिरे तुल्यं नेत्राणि हृदयानि च ॥ ००९ ॥

न तु केवलदैवेन प्रजा भावेन रेमिरे ।
यद्बभूव मनःकान्तं कर्मणा स चकार तत् ॥ ०१० ॥

न ह्ययुक्तं न चासत्यं नानृतं न च विप्रियम् ।
भाषितं चारुभाषस्य जज्ञे पार्थस्य धीमतः ॥ ०११ ॥

स हि सर्वस्य लोकस्य हितमात्मन एव च ।
चिकीर्षुः सुमहातेजा रेमे भरतसत्तमः ॥ ०१२ ॥

तथा तु मुदिताः सर्वे पाण्डवा विगतज्वराः ।
अवसन्पृथिवीपालांस्त्रासयन्तः स्वतेजसा ॥ ०१३ ॥

ततः कतिपयाहस्य बीभत्सुः कृष्णमब्रवीत् ।
उष्णानि कृष्ण वर्तन्ते गच्छामो यमुनां प्रति ॥ ०१४ ॥

सुहृज्जनवृतास्तत्र विहृत्य मधुसूदन ।
सायाह्ने पुनरेष्यामो रोचतां ते जनार्दन ॥ ०१५ ॥

वासुदेव उवाच ॥

कुन्तीमातर्ममाप्येतद्रोचते यद्वयं जले ।
सुहृज्जनवृताः पार्थ विहरेम यथासुखम् ॥ ०१६ ॥

वैशंपायन उवाच ॥

आमन्त्र्य धर्मराजानमनुज्ञाप्य च भारत ।
जग्मतुः पार्थगोविन्दौ सुहृज्जनवृतौ ततः ॥ ०१७ ॥

विहारदेशं संप्राप्य नानाद्रुमवदुत्तमम् ।
गृहैरुच्चावचैर्युक्तं पुरंदरगृहोपमम् ॥ ०१८ ॥

भक्ष्यैर्भोज्यैश्च पेयैश्च रसवद्भिर्महाधनैः ।
माल्यैश्च विविधैर्युक्तं युक्तं वार्ष्णेयपार्थयोः ॥ ०१९ ॥

आविवेशतुरापूर्णं रत्नैरुच्चावचैः शुभैः ।
यथोपजोषं सर्वश्च जनश्चिक्रीड भारत ॥ ०२० ॥

वने काश्चिज्जले काश्चित्काश्चिद्वेश्मसु चाङ्गनाः ।
यथादेशं यथाप्रीति चिक्रीडुः कृष्णपार्थयोः ॥ ०२१ ॥

द्रौपदी च सुभद्रा च वासांस्याभरणानि च ।
प्रयच्छेतां महार्हाणि स्त्रीणां ते स्म मदोत्कटे ॥ ०२२ ॥

काश्चित्प्रहृष्टा ननृतुश्चुक्रुशुश्च तथापराः ।
जहसुश्चापरा नार्यः पपुश्चान्या वरासवम् ॥ ०२३ ॥

रुरुदुश्चापरास्तत्र प्रजघ्नुश्च परस्परम् ।
मन्त्रयामासुरन्याश्च रहस्यानि परस्परम् ॥ ०२४ ॥

वेणुवीणामृदङ्गानां मनोज्ञानां च सर्वशः ।
शब्देनापूर्यते ह स्म तद्वनं सुसमृद्धिमत् ॥ ०२५ ॥

तस्मिंस्तथा वर्तमाने कुरुदाशार्हनन्दनौ ।
समीपे जग्मतुः कञ्चिदुद्देशं सुमनोहरम् ॥ ०२६ ॥

तत्र गत्वा महात्मानौ कृष्णौ परपुरञ्जयौ ।
महार्हासनयो राजंस्ततस्तौ संनिषीदतुः ॥ ०२७ ॥

तत्र पूर्वव्यतीतानि विक्रान्तानि रतानि च ।
बहूनि कथयित्वा तौ रेमाते पार्थमाधवौ ॥ ०२८ ॥

तत्रोपविष्टौ मुदितौ नाकपृष्ठेऽश्विनाविव ।
अभ्यगच्छत्तदा विप्रो वासुदेवधनञ्जयौ ॥ ०२९ ॥

बृहच्छालप्रतीकाशः प्रतप्तकनकप्रभः ।
हरिपिङ्गो हरिश्मश्रुः प्रमाणायामतः समः ॥ ०३० ॥

तरुणादित्यसङ्काशः कृष्णवासा जटाधरः ।
पद्मपत्राननः पिङ्गस्तेजसा प्रज्वलन्निव ॥ ०३१ ॥

उपसृष्टं तु तं कृष्णौ भ्राजमानं द्विजोत्तमम् ।
अर्जुनो वासुदेवश्च तूर्णमुत्पत्य तस्थतुः ॥ ०३२ ॥

---

# अध्याय २१५

वैशंपायन उवाच ॥

सोऽब्रवीदर्जुनं चैव वासुदेवं च सात्वतम् ।

लोकप्रवीरौ तिष्ठन्तौ खाण्डवस्य समीपतः ॥ ००१ ॥

ब्राह्मणो बहुभोक्तास्मि भुञ्जेऽपरिमितं सदा ।
भिक्षे वार्ष्णेयपार्थौ वामेकां तृप्तिं प्रयच्छताम् ॥ ००२ ॥

एवमुक्तौ तमब्रूतां ततस्तौ कृष्णपाण्डवौ ।
केनान्नेन भवांस्तृप्येत्तस्यान्नस्य यतावहे ॥ ००३ ॥

एवमुक्तः स भगवानब्रवीत्तावुभौ ततः ।
भाषमाणौ तदा वीरौ किमन्नं क्रियतामिति ॥ ००४ ॥

नाहमन्नं बुभुक्षे वै पावकं मां निबोधतम् ।
यदन्नमनुरूपं मे तद्युवां संप्रयच्छतम् ॥ ००५ ॥

इदमिन्द्रः सदा दावं खाण्डवं परिरक्षति ।
तं न शक्नोम्यहं दग्धुं रक्ष्यमाणं महात्मना ॥ ००६ ॥

वसत्यत्र सखा तस्य तक्षकः पन्नगः सदा ।
सगणस्तत्कृते दावं परिरक्षति वज्रभृत् ॥ ००७ ॥

तत्र भूतान्यनेकानि रक्ष्यन्ते स्म प्रसङ्गतः ।
तं दिधक्षुर्न शक्नोमि दग्धुं शक्रस्य तेजसा ॥ ००८ ॥

स मां प्रज्वलितं दृष्ट्वा मेघाम्भोभिः प्रवर्षति ।
ततो दग्धुं न शक्नोमि दिधक्षुर्दावमीप्सितम् ॥ ००९ ॥

स युवाभ्यां सहायाभ्यामस्त्रविद्भ्यां समागतः ।
दहेयं खाण्डवं दावमेतदन्नं वृतं मया ॥ ०१० ॥

युवां ह्युदकधारास्ता भूतानि च समन्ततः ।
उत्तमास्त्रविदो सम्यक्सर्वतो वारयिष्यथः ॥ ०११ ॥

एवमुक्ते प्रत्युवाच बीभत्सुर्जातवेदसम् ।
दिधक्षुं खाण्डवं दावमकामस्य शतक्रतोः ॥ ०१२ ॥

उत्तमास्त्राणि मे सन्ति दिव्यानि च बहूनि च ।
यैरहं शक्नुयां योद्धुमपि वज्रधरान्बहून् ॥ ०१३ ॥

धनुर्मे नास्ति भगवन्बाहुवीर्येण संमितम् ।
कुर्वतः समरे यत्नं वेगं यद्विषहेत मे ॥ ०१४ ॥

शरैश्च मेऽर्थो बहुभिरक्षयैः क्षिप्रमस्यतः ।
न हि वोढुं रथः शक्तः शरान्मम यथेप्सितान् ॥ ०१५ ॥

अश्वांश्च दिव्यानिच्छेयं पाण्डुरान्वातरंहसः ।
रथं च मेघनिर्घोषं सूर्यप्रतिमतेजसम् ॥ ०१६ ॥

तथा कृष्णस्य वीर्येण नायुधं विद्यते समम् ।
येन नागान्पिशाचांश्च निहन्यान्माधवो रणे ॥ ०१७ ॥

उपायं कर्मणः सिद्धौ भगवन्वक्तुमर्हसि ।
निवारयेयं येनेन्द्रं वर्षमाणं महावने ॥ ०१८ ॥

पौरुषेण तु यत्कार्यं तत्कर्तारौ स्व पावक ।
करणानि समर्थानि भगवन्दातुमर्हसि ॥ ०१९ ॥

# अध्याय २१६

वैशंपायन उवाच ॥

एवमुक्तस्तु भगवान्धूमकेतुर्हुताशनः ।
चिन्तयामास वरुणं लोकपालं दिदृक्षया ॥ ००१ ॥

आदित्यमुदके देवं निवसन्तं जलेश्वरम् ॥ ००१ ॥

स च तच्चिन्तितं ज्ञात्वा दर्शयामास पावकम् ।
तमब्रवीद्धूमकेतुः प्रतिपूज्य जलेश्वरम् ॥ ००२ ॥

चतुर्थं लोकपालानां रक्षितारं महेश्वरम् ॥ ००२ ॥

सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ते ।
तत्प्रयच्छोभयं शीघ्रं रथं च कपिलक्षणम् ॥ ००३ ॥

कार्यं हि सुमहत्पार्थो गाण्डीवेन करिष्यति ।
चक्रेण वासुदेवश्च तन्मदर्थे प्रदीयताम् ॥ ००४ ॥

ददानीत्येव वरुणः पावकं प्रत्यभाषत ॥ ००४ ॥

ततोऽद्भुतं महावीर्यं यशःकीर्तिविवर्धनम् ।
सर्वशस्त्रैरनाधृष्यं सर्वशस्त्रप्रमाथि च ॥ ००५ ॥

सर्वायुधमहामात्रं परसेनाप्रधर्षणम् ॥ ००५ ॥

एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् ।
चित्रमुच्चावचैर्वर्णैः शोभितं श्लक्ष्णमव्रणम् ॥ ००६ ॥

देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः ।

प्रादाद्वै धनुरत्नं तदक्षय्यौ च महेषुधी ॥ ००७ ॥

रथं च दिव्याश्वयुजं कपिप्रवरकेतनम् ।
उपेतं राजतैरश्वैर्गान्धर्वैर्हेममालिभिः ॥ ००८ ॥

पाण्डुराभ्रप्रतीकाशैर्मनोवायुसमैर्जवे ॥ ००८ ॥

सर्वोपकरणैर्युक्तमजय्यं देवदानवैः ।
भानुमन्तं महाघोषं सर्वभूतमनोहरम् ॥ ००९ ॥

ससर्ज यत्स्वतपसा भौवनो भुवनप्रभुः ।
प्रजापतिरनिर्देश्यं यस्य रूपं रवेरिव ॥ ०१० ॥

यं स्म सोमः समारुह्य दानवानजयत्प्रभुः ।
नगमेघप्रतीकाशं ज्वलन्तमिव च श्रिया ॥ ०११ ॥

आश्रिता तं रथश्रेष्ठं शक्रायुधसमा शुभा ।
तापनीया सुरुचिरा ध्वजयष्टिरनुत्तमा ॥ ०१२ ॥

तस्यां तु वानरो दिव्यः सिंहशार्दूललक्षणः ।
विनर्दन्निव तत्रस्थः संस्थितो मूर्ध्न्यशोभत ॥ ०१३ ॥

ध्वजे भूतानि तत्रासन्विविधानि महान्ति च ।
नादेन रिपुसैन्यानां येषां सञ्ज्ञा प्रणश्यति ॥ ०१४ ॥

स तं नानापताकाभिः शोभितं रथमुत्तमम् ।
प्रदक्षिणमुपावृत्य दैवतेभ्यः प्रणम्य च ॥ ०१५ ॥

संनद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् ।
आरुरोह रथं पार्थो विमानं सुकृती यथा ॥ ०१६ ॥

तच्च दिव्यं धनुःश्रेष्ठं ब्रह्मणा निर्मितं पुरा ।
गाण्डीवमुपसङ्गृह्य बभूव मुदितोऽर्जुनः ॥ ०१७ ॥

हुताशनं नमस्कृत्य ततस्तदपि वीर्यवान् ।
जग्राह बलमास्थाय ज्यया च युयुजे धनुः ॥ ०१८ ॥

मौर्व्यां तु युज्यमानायां बलिना पाण्डवेन ह ।
येऽश्रृण्वन्कूजितं तत्र तेषां वै व्यथितं मनः ॥ ०१९ ॥

लब्ध्वा रथं धनुश्चैव तथाक्षय्यौ महेषुधी ।
बभूव कल्यः कौन्तेयः प्रहृष्टः साह्यकर्मणि ॥ ०२० ॥

वज्रनाभं ततश्चक्रं ददौ कृष्णाय पावकः ।
आग्नेयमस्त्रं दयितं स च कल्योऽभवत्तदा ॥ ०२१ ॥

अब्रवीत्पावकश्चैनमेतेन मधुसूदन ।
अमानुषानपि रणे विजेष्यसि न संशयः ॥ ०२२ ॥

अनेन त्वं मनुष्याणां देवानामपि चाहवे ।
रक्षःपिशाचदैत्यानां नागानां चाधिकः सदा ॥ ०२३ ॥

भविष्यसि न संदेहः प्रवरारिनिबर्हणे ॥ ०२३ ॥

क्षिप्तं क्षिप्तं रणे चैतत्त्वया माधव शत्रुषु ।
हत्वाप्रतिहतं संख्ये पाणिमेष्यति ते पुनः ॥ ०२४ ॥

वरुणश्च ददौ तस्मै गदामशनिनिःस्वनाम् ।
दैत्यान्तकरणीं घोरां नाम्ना कौमोदकीं हरेः ॥ ०२५ ॥

ततः पावकमब्रूतां प्रहृष्टौ कृष्णपाण्डवौ ।
कृतास्त्रौ शस्त्रसंपन्नौ रथिनौ ध्वजिनावपि ॥ ०२६ ॥

कल्यौ स्वो भगवन्योद्धुमपि सर्वैः सुरासुरैः ।
किं पुनर्वज्रिणैकेन पन्नगार्थे युयुत्सुना ॥ ०२७ ॥

अर्जुन उवाच ॥

चक्रमस्त्रं च वार्ष्णेयो विसृजन्युधि वीर्यवान् ।
त्रिषु लोकेषु तन्नास्ति यन्न जीयाज्जनार्दनः ॥ ०२८ ॥

गाण्डीवं धनुरादाय तथाक्षय्यौ महेषुधी ।
अहमप्युत्सहे लोकान्विजेतुं युधि पावक ॥ ०२९ ॥

सर्वतः परिवार्यैनं दावेन महता प्रभो ।
कामं संप्रज्वलाद्यैव कल्यौ स्वः साह्यकर्मणि ॥ ०३० ॥

वैशंपायन उवाच ॥

एवमुक्तः स भगवान्दाशार्हेणार्जुनेन च ।
तैजसं रूपमास्थाय दावं दग्धुं प्रचक्रमे ॥ ०३१ ॥

सर्वतः परिवार्याथ सप्तार्चिर्ज्वलनस्तदा ।
ददाह खाण्डवं क्रुद्धो युगान्तमिव दर्शयन् ॥ ०३२ ॥

परिगृह्य समाविष्टस्तद्वनं भरतर्षभ ।
मेघस्तनितनिर्घोषं सर्वभूतानि निर्दहन् ॥ ०३३ ॥

दह्यतस्तस्य विबभौ रूपं दावस्य भारत ।
मेरोरिव नगेन्द्रस्य काञ्चनस्य महाद्युतेः ॥ ०३४ ॥

# अध्याय २१७

वैशंपायन उवाच ॥

तौ रथाभ्यां नरव्याघ्रौ दावस्योभयतः स्थितौ ।
दिक्षु सर्वासु भूतानां चक्राते कदनं महत् ॥ ००१ ॥

यत्र यत्र हि दृश्यन्ते प्राणिनः खाण्डवालयाः ।
पलायन्तस्तत्र तत्र तौ वीरौ पर्यधावताम् ॥ ००२ ॥

छिद्रं हि न प्रपश्यन्ति रथयोराशुविक्रमात् ।
आविद्धाविव दृश्येते रथिनौ तौ रथोत्तमौ ॥ ००३ ॥

खाण्डवे दह्यमाने तु भूतान्यथ सहस्रशः ।
उत्पेतुर्भैरवान्नादान्विनदन्तो दिशो दश ॥ ००४ ॥

दग्धैकदेशा बहवो निष्टप्ताश्च तथापरे ।
स्फुटिताक्षा विशीर्णाश्च विप्लुताश्च विचेतसः ॥ ००५ ॥

समालिङ्ग्य सुतानन्ये पितॄन्मातॄंस्तथापरे ।
त्यक्तुं न शेकुः स्नेहेन तथैव निधनं गताः ॥ ००६ ॥

विकृतैर्दर्शनैरन्ये समुत्पेतुः सहस्रशः ।
तत्र तत्र विघूर्णन्तः पुनरग्नौ प्रपेदिरे ॥ ००७ ॥

दग्धपक्षाक्षिचरणा विचेष्टन्तो महीतले ।
तत्र तत्र स्म दृश्यन्ते विनश्यन्तः शरीरिणः ॥ ००८ ॥

जलस्थानेषु सर्वेषु क्वाथ्यमानेषु भारत ।
गतसत्त्वाः स्म दृश्यन्ते कूर्ममत्स्याः सहस्रशः ॥ ००९ ॥

शरीरैः संप्रदीप्तैश्च देहवन्त इवाग्नयः ।
अदृश्यन्त वने तस्मिन्प्राणिनः प्राणसङ्क्षये ॥ ०१० ॥

तांस्तथोत्पततः पार्थः शरैः संछिद्य खण्डशः ।
दीप्यमाने ततः प्रास्यत्प्रहसन्कृष्णवर्त्मनि ॥ ०११ ॥

ते शराचितसर्वाङ्गा विनदन्तो महारवान् ।
ऊर्ध्वमुत्पत्य वेगेन निपेतुः पावके पुनः ॥ ०१२ ॥

शरैरभ्याहतानां च दह्यतां च वनौकसाम् ।
विरावः श्रूयते ह स्म समुद्रस्येव मथ्यतः ॥ ०१३ ॥

वह्नेश्चापि प्रहृष्टस्य खमुत्पेतुर्महार्चिषः ।
जनयामासुरुद्वेगं सुमहान्तं दिवौकसाम् ॥ ०१४ ॥

ततो जग्मुर्महात्मानः सर्व एव दिवौकसः ।
शरणं देवराजानं सहस्राक्षं पुरंदरम् ॥ ०१५ ॥

देवा ऊचुः ॥

किं न्विमे मानवाः सर्वे दह्यन्ते कृष्णवर्त्मना ।
कच्चिन्न सङ्क्षयः प्राप्तो लोकानाममरेश्वर ॥ ०१६ ॥

वैशंपायन उवाच ॥

तच्छ्रुत्वा वृत्रहा तेभ्यः स्वयमेवान्ववेक्ष्य च ।
खाण्डवस्य विमोक्षार्थं प्रययौ हरिवाहनः ॥ ०१७ ॥

महता मेघजालेन नानारूपेण वज्रभृत् ।
आकाशं समवस्तीर्य प्रववर्ष सुरेश्वरः ॥ ०१८ ॥

ततोऽक्षमात्रा विसृजन्धाराः शतसहस्रशः ।
अभ्यवर्षत्सहस्राक्षः पावकं खाण्डवं प्रति ॥ ०१९ ॥

असंप्राप्तास्तु ता धारास्तेजसा जातवेदसः ।
ख एव समशुष्यन्त न काश्चित्पावकं गताः ॥ ०२० ॥

ततो नमुचिहा क्रुद्धो भृशमर्चिष्मतस्तदा ।
पुनरेवाभ्यवर्षत्तमम्भः प्रविसृजन्बहु ॥ ०२१ ॥

अर्चिर्धाराभिसंबद्धं धूमविद्युत्समाकुलम् ।
बभूव तद्वनं घोरं स्तनयित्नुसघोषवत् ॥ ०२२ ॥

---

# अध्याय २१८

वैशंपायन उवाच ॥

तस्याभिवर्षतो वारि पाण्डवः प्रत्यवारयत् ।
शरवर्षेण बीभत्सुरुत्तमास्त्राणि दर्शयन् ॥ ००१ ॥

शरैः समन्ततः सर्वं खाण्डवं चापि पाण्डवः ।
छादयामास तद्वर्षमपकृष्य ततो वनात् ॥ ००२ ॥

न च स्म किञ्चिच्छक्नोति भूतं निश्चरितुं ततः ।
संछाद्यमाने खगमैरस्यता सव्यसाचिना ॥ ००३ ॥

तक्षकस्तु न तत्रासीत्सर्पराजो महाबलः ।
दह्यमाने वने तस्मिन्कुरुक्षेत्रेऽभवत्तदा ॥ ००४ ॥

अश्वसेनस्तु तत्रासीत्तक्षकस्य सुतो बली ।
स यत्नमकरोत्तीव्रं मोक्षार्थं हव्यवाहनात् ॥ ००५ ॥

न शशाक विनिर्गन्तुं कौन्तेयशरपीडितः ।
मोक्षयामास तं माता निगीर्य भुजगात्मजा ॥ ००६ ॥

तस्य पूर्वं शिरो ग्रस्तं पुच्छमस्य निगीर्यते ।
ऊर्ध्वमाचक्रमे सा तु पन्नगी पुत्रगृद्धिनी ॥ ००७ ॥

तस्यास्तीक्ष्णेन भल्लेन पृथुधारेण पाण्डवः ।
शिरश्चिच्छेद गच्छन्त्यास्तामपश्यत्सुरेश्वरः ॥ ००८ ॥

तं मुमोचयिषुर्वज्री वातवर्षेण पाण्डवम् ।
मोहयामास तत्कालमश्वसेनस्त्वमुच्यत ॥ ००९ ॥

तां च मायां तदा दृष्ट्वा घोरां नागेन वञ्चितः ।
द्विधा त्रिधा च चिच्छेद खगतानेव भारत ॥ ०१० ॥

शशाप तं च सङ्क्रुद्धो बीभत्सुर्जिह्मगामिनम् ।
पावको वासुदेवश्च अप्रतिष्ठो भवेदिति ॥ ०११ ॥

ततो जिष्णुः सहस्राक्षं खं वितत्येषुभिः शितैः ।
योधयामास सङ्क्रुद्धो वञ्चनां तामनुस्मरन् ॥ ०१२ ॥

देवराडपि तं दृष्ट्वा संरब्धमिव फल्गुनम् ।
स्वमस्त्रमसृजद्दीप्तं यत्ततानाखिलं नभः ॥ ०१३ ॥

ततो वायुर्महाघोषः क्षोभयन्सर्वसागरान् ।
वियत्स्थोऽजनयन्मेघाञ्जलधारामुचोऽऽकुलान् ॥ ०१४ ॥

तद्विघातार्थमसृजदर्जुनोऽप्यस्त्रमुत्तमम् ।

वायव्यमेवाभिमन्त्र्य प्रतिपत्तिविशारदः ॥ ०१५ ॥

तेनेन्द्राशनिमेघानां वीर्यौजस्तद्विनाशितम् ।
जलधाराश्च ताः शोषं जग्मुर्नेशुश्च विद्युतः ॥ ०१६ ॥

क्षणेन चाभवद्व्योम संप्रशान्तरजस्तमः ।
सुखशीतानिलगुणं प्रकृतिस्थार्कमण्डलम् ॥ ०१७ ॥

निष्प्रतीकारहृष्टश्च हुतभुग्विविधाकृतिः ।
प्रजज्वालातुलार्चिष्मान्स्वनादैः पूरयञ्जगत् ॥ ०१८ ॥

कृष्णाभ्यां रक्षितं दृष्ट्वा तं च दावमहङ्कृताः ।
समुत्पेतुरथाकाशं सुपर्णाद्याः पतत्रिणः ॥ ०१९ ॥

गरुडा वज्रसदृशैः पक्षतुण्डनखैस्तथा ।
प्रहर्तुकामाः संपेतुराकाशात्कृष्णपाण्डवौ ॥ ०२० ॥

तथैवोरगसंघाताः पाण्डवस्य समीपतः ।
उत्सृजन्तो विषं घोरं निश्चेरुर्ज्वलिताननाः ॥ ०२१ ॥

तांश्चकर्त शरैः पार्थः सरोषान्दृश्य खेचरान् ।
विवशाश्चापतन्दीप्तं देहाभावाय पावकम् ॥ ०२२ ॥

ततः सुराः सगन्धर्वा यक्षराक्षसपन्नगाः ।
उत्पेतुर्नादमतुलमुत्सृजन्तो रणार्थिणः ॥ ०२३ ॥

अयःकणपचक्राश्मभुशुण्ड्युद्यतबाहवः ।
कृष्णपार्थौ जिघांसन्तः क्रोधसंमूर्च्छितौजसः ॥ ०२४ ॥

तेषामभिव्याहरतां शस्त्रवर्षं च मुञ्चताम् ।
प्रममाथोत्तमाङ्गानि बीभत्सुर्निशितैः शरैः ॥ ०२५ ॥

कृष्णश्च सुमहातेजाश्चक्रेणारिनिहा तदा ।
दैत्यदानवसंघानां चकार कदनं महत् ॥ ०२६ ॥

अथापरे शरैर्विद्धाश्चक्रवेगेरितास्तदा ।
वेलामिव समासाद्य व्यातिष्ठन्त महौजसः ॥ ०२७ ॥

ततः शक्रोऽभिसङ्क्रुद्धस्त्रिदशानां महेश्वरः ।
पाण्डुरं गजमास्थाय तावुभौ समभिद्रवत् ॥ ०२८ ॥

अशनिं गृह्य तरसा वज्रमस्त्रमवासृजत् ।
हतावेताविति प्राह सुरानसुरसूदनः ॥ ०२९ ॥

ततः समुद्यतां दृष्ट्वा देवेन्द्रेण महाशनिम् ।
जगृहुः सर्वशस्त्राणि स्वानि स्वानि सुरास्तदा ॥ ०३० ॥

कालदण्डं यमो राजा शिबिकां च धनेश्वरः ।
पाशं च वरुणस्तत्र विचक्रं च तथा शिवः ॥ ०३१ ॥

ओषधीर्दीप्यमानाश्च जगृहातेऽश्विनावपि ।
जगृहे च धनुर्धाता मुसलं च जयस्तथा ॥ ०३२ ॥

पर्वतं चापि जग्राह क्रुद्धस्त्वष्टा महाबलः ।
अंशस्तु शक्तिं जग्राह मृत्युर्देवः परश्वधम् ॥ ०३३ ॥

प्रगृह्य परिघं घोरं विचचारार्यमा अपि ।
मित्रश्च क्षुरपर्यन्तं चक्रं गृह्य व्यतिष्ठत ॥ ०३४ ॥

पूषा भगश्च सङ्क्रुद्धः सविता च विशां पते ।
आत्तकार्मुकनिस्त्रिंशाः कृष्णपार्थावभिद्रुताः ॥ ०३५ ॥

रुद्राश्च वसवश्चैव मरुतश्च महाबलाः ।
विश्वेदेवास्तथा साध्या दीप्यमानाः स्वतेजसा ॥ ०३६ ॥

एते चान्ये च बहवो देवास्तौ पुरुषोत्तमौ ।
कृष्णपार्थौ जिघांसन्तः प्रतीयुर्विविधायुधाः ॥ ०३७ ॥

तत्राद्भुतान्यदृश्यन्त निमित्तानि महाहवे ।
युगान्तसमरूपाणि भूतोत्सादाय भारत ॥ ०३८ ॥

तथा तु दृष्ट्वा संरब्धं शक्रं देवैः सहाच्युतौ ।
अभीतौ युधि दुर्धर्षौ तस्थतुः सज्जकार्मुकौ ॥ ०३९ ॥

आगतांश्चैव तान्दृष्ट्वा देवानेकैकशस्ततः ।
न्यवारयेतां सङ्क्रुद्धौ बाणैर्वज्रोपमैस्तदा ॥ ०४० ॥

असकृद्भग्नसङ्कल्पाः सुराश्च बहुशः कृताः ।
भयाद्रणं परित्यज्य शक्रमेवाभिशिश्रियुः ॥ ०४१ ॥

दृष्ट्वा निवारितान्देवान्माधवेनार्जुनेन च ।
आश्चर्यमगमंस्तत्र मुनयो दिवि विष्ठिताः ॥ ०४२ ॥

शक्रश्चापि तयोर्वीर्यमुपलभ्यासकृद्रणे ।
बभूव परमप्रीतो भूयश्चैतावयोधयत् ॥ ०४३ ॥

ततोऽश्मवर्षं सुमहद्व्यसृजत्पाकशासनः ।
भूय एव तदा वीर्यं जिज्ञासुः सव्यसाचिनः ॥ ०४४ ॥

तच्छरैरर्जुनो वर्षं प्रतिजघ्नेऽत्यमर्षणः ॥ ०४४ ॥

विफलं क्रियमाणं तत्संप्रेक्ष्य च शतक्रतुः ।
भूयः संवर्धयामास तद्वर्षं देवराडथ ॥ ०४५ ॥

सोऽश्मवर्षं महावेगैरिषुभिः पाकशासनिः ।
विलयं गमयामास हर्षयन्पितरं तदा ॥ ०४६ ॥

समुत्पाट्य तु पाणिभ्यां मन्दराच्छिखरं महत् ।
सद्रुमं व्यसृजच्छक्रो जिघांसुः पाण्डुनन्दनम् ॥ ०४७ ॥

ततोऽर्जुनो वेगवद्भिर्ज्वलिताग्रैरजिह्मगैः ।
बाणैर्विध्वंसयामास गिरेः शृङ्गं सहस्रधा ॥ ०४८ ॥

गिरेर्विशीर्यमाणस्य तस्य रूपं तदा बभौ ।
सार्कचन्द्रग्रहस्येव नभसः प्रविशीर्यतः ॥ ०४९ ॥

तेनावाक्पतता दावे शैलेन महता भृशम् ।
भूय एव हतास्तत्र प्राणिनः खाण्डवालयाः ॥ ०५० ॥

---

# अध्याय २१९

वैशंपायन उवाच ॥

तथा शैलनिपातेन भीषिताः खाण्डवालयाः ।
दानवा राक्षसा नागास्तरक्ष्वृक्षवनौकसः ॥ ००१ ॥

द्विपाः प्रभिन्नाः शार्दूलाः सिंहाः केसरिणस्तथा ॥ ००१ ॥

मृगाश्च महिषाश्चैव शतशः पक्षिणस्तथा ।
समुद्विग्ना विससृपुस्तथान्या भूतजातयः ॥ ००२ ॥

तं दावं समुदीक्षन्तः कृष्णौ चाभ्युद्यतायुधौ ।
उत्पातनादशब्देन संत्रासित इवाभवन् ॥ ००३ ॥

स्वतेजोभास्वरं चक्रमुत्ससर्ज जनार्दनः ।
तेन ता जातयः क्षुद्राः सदानवनिशाचराः ॥ ००४ ॥

निकृत्ताः शतशः सर्वा निपेतुरनलं क्षणात् ॥ ००४ ॥

अदृश्यन्राक्षसास्तत्र कृष्णचक्रविदारिताः ।
वसारुधिरसंपृक्ताः संध्यायामिव तोयदाः ॥ ००५ ॥

पिशाचान्पक्षिणो नागान्पशूंश्चापि सहस्रशः ।
निघ्नंश्चरति वार्ष्णेयः कालवत्तत्र भारत ॥ ००६ ॥

क्षिप्तं क्षिप्तं हि तच्चक्रं कृष्णस्यामित्रघातिनः ।
हत्वानेकानि सत्त्वानि पाणिमेति पुनः पुनः ॥ ००७ ॥

तथा तु निघ्नतस्तस्य सर्वसत्त्वानि भारत ।
बभूव रूपमत्युग्रं सर्वभूतात्मनस्तदा ॥ ००८ ॥

समेतानां च देवानां दानवानां च सर्वशः ।
विजेता नाभवत्कश्चित्कृष्णपाण्डवयोर्मृधे ॥ ००९ ॥

तयोर्बलात्परित्रातुं तं दावं तु यदा सुराः ।
नाशक्नुवञ्शमयितुं तदाभूवन्पराङ्मुखाः ॥ ०१० ॥

शतक्रतुश्च संप्रेक्ष्य विमुखान्देवतागणान् ।
बभूवावस्थितः प्रीतः प्रशंसन्कृष्णपाण्डवौ ॥ ०११ ॥

निवृत्तेषु तु देवेषु वागुवाचाशरीरिणी ।
शतक्रतुमभिप्रेक्ष्य महागम्भीरनिःस्वना ॥ ०१२ ॥

न ते सखा संनिहितस्तक्षकः पन्नगोत्तमः ।
दाहकाले खाण्डवस्य कुरुक्षेत्रं गतो ह्यसौ ॥ ०१३ ॥

न च शक्यौ त्वया जेतुं युद्धेऽस्मिन्समवस्थितौ ।
वासुदेवार्जुनौ शक्र निबोधेदं वचो मम ॥ ०१४ ॥

नरनारायणौ देवौ तावेतौ विश्रुतौ दिवि ।
भवानप्यभिजानाति यद्वीर्यौ यत्पराक्रमौ ॥ ०१५ ॥

नैतौ शक्यौ दुराधर्षौ विजेतुमजितौ युधि ।
अपि सर्वेषु लोकेषु पुराणावृषिसत्तमौ ॥ ०१६ ॥

पूजनीयतमावेतावपि सर्वैः सुरासुरैः ।
सयक्षरक्षोगन्धर्वनरकिंनरपन्नगैः ॥ ०१७ ॥

तस्मादितः सुरैः सार्धं गन्तुमर्हसि वासव ।
दिष्टं चाप्यनुपश्यैतत्खाण्डवस्य विनाशनम् ॥ ०१८ ॥

इति वाचमभिश्रुत्य तथ्यमित्यमरेश्वरः ।
कोपामर्षौ समुत्सृज्य संप्रतस्थे दिवं तदा ॥ ०१९ ॥

तं प्रस्थितं महात्मानं समवेक्ष्य दिवौकसः ।
त्वरिताः सहिता राजन्ननुजग्मुः शतक्रतुम् ॥ ०२० ॥

देवराजं तदा यान्तं सह देवैरुदीक्ष्य तु ।
वासुदेवार्जुनौ वीरौ सिंहनादं विनेदतुः ॥ ०२१ ॥

देवराजे गते राजन्प्रहृष्टौ कृष्णपाण्डवौ ।
निर्विशङ्कं पुनर्दावं दाहयामासतुस्तदा ॥ ०२२ ॥

स मारुत इवाभ्राणि नाशयित्वार्जुनः सुरान् ।
व्यधमच्छरसंपातैः प्राणिनः खाण्डवालयान् ॥ ०२३ ॥

न च स्म किञ्चिच्छक्नोति भूतं निश्चरितुं ततः ।
संछिद्यमानमिषुभिरस्यता सव्यसाचिना ॥ ०२४ ॥

नाशकंस्तत्र भूतानि महान्त्यपि रणेऽर्जुनम् ।
निरीक्षितुममोघेषुं करिष्यन्ति कुतो रणम् ॥ ०२५ ॥

शतेनैकं च विव्याध शतं चैकेन पत्रिणा ।
व्यसवस्तेऽपतन्नग्नौ साक्षात्कालहता इव ॥ ०२६ ॥

न चालभन्त ते शर्म रोधःसु विषमेषु च ।
पितृदेवनिवासेषु संतापश्चाप्यजायत ॥ ०२७ ॥

भूतसंघसहस्राश्च दीनाश्चक्रुर्महास्वनम् ।
रुरुवुर्वारणाश्चैव तथैव मृगपक्षिणः ॥ ०२८ ॥

तेन शब्देन वित्रेसुर्गङ्गोदधिचरा झषाः ॥ ०२८ ॥

न ह्यर्जुनं महाबाहुं नापि कृष्णं महाबलम् ।
निरीक्षितुं वै शक्नोति कश्चिद्योद्धुं कुतः पुनः ॥ ०२९ ॥

एकायनगता येऽपि निष्पतन्त्यत्र केचन ।
राक्षसान्दानवान्नागाञ्जघ्ने चक्रेण तान्हरिः ॥ ०३० ॥

ते विभिन्नशिरोदेहाश्चक्रवेगाद्गतासवः ।
पेतुरास्ये महाकाया दीप्तस्य वसुरेतसः ॥ ०३१ ॥

स मांसरुधिरौघैश्च मेदौघैश्च समीरितः ।
उपर्याकाशगो वह्निर्विधूमः समदृश्यत ॥ ०३२ ॥

दीप्ताक्षो दीप्तजिह्वश्च दीप्तव्यात्तमहाननः ।
दीप्तोर्ध्वकेशः पिङ्गाक्षः पिबन्प्राणभृतां वसाम् ॥ ०३३ ॥

तां स कृष्णार्जुनकृतां सुधां प्राप्य हुताशनः ।
बभूव मुदितस्तृप्तः परां निर्वृतिमागतः ॥ ०३४ ॥

अथासुरं मयं नाम तक्षकस्य निवेशनात् ।
विप्रद्रवन्तं सहसा ददर्श मधुसूदनः ॥ ०३५ ॥

तमग्निः प्रार्थयामास दिधक्षुर्वातसारथिः ।
देहवान्वै जटी भूत्वा नदंश्च जलदो यथा ॥ ०३६ ॥

जिघांसुर्वासुदेवश्च चक्रमुद्यम्य विष्ठितः ॥ ०३६ ॥

स चक्रमुद्यतं दृष्ट्वा दिधक्षुं च हुताशनम् ।
अभिधावार्जुनेत्येवं मयश्चुक्रोश भारत ॥ ०३७ ॥

तस्य भीतस्वनं श्रुत्वा मा भैरिति धनञ्जयः ।
प्रत्युवाच मयं पार्थो जीवयन्निव भारत ॥ ०३८ ॥

तं पार्थेनाभये दत्ते नमुचेर्भ्रातरं मयम् ।
न हन्तुमैच्छद्दाशार्हः पावको न ददाह च ॥ ०३९ ॥

तस्मिन्वने दह्यमाने षडग्निर्न ददाह च ।
अश्वसेनं मयं चापि चतुरः शार्ङ्गकानिति ॥ ०४० ॥

# शारंगकोपाख्यानम्

## अध्याय २२०

जनमेजय उवाच ॥

किमर्थं शार्ङ्गकानग्निर्न ददाह तथागते ।
तस्मिन्वने दह्यमाने ब्रह्मन्नेतद्वदाशु मे ॥ ००१ ॥

अदाहे ह्यश्वसेनस्य दानवस्य मयस्य च ।
कारणं कीर्तितं ब्रह्मञ्शार्ङ्गकानां न कीर्तितम् ॥ ००२ ॥

तदेतदद्भुतं ब्रह्मञ्शार्ङ्गानामविनाशनम् ।
कीर्तयस्वाग्निसंमर्दे कथं ते न विनाशिताः ॥ ००३ ॥

वैशंपायन उवाच ॥

यदर्थं शार्ङ्गकानग्निर्न ददाह तथागते ।
तत्ते सर्वं यथावृत्तं कथयिष्यामि भारत ॥ ००४ ॥

धर्मज्ञानां मुख्यतमस्तपस्वी संशितव्रतः ।
आसीन्महर्षिः श्रुतवान्मन्दपाल इति श्रुतः ॥ ००५ ॥

स मार्गमास्थितो राजन्नृषीणामूर्ध्वरेतसाम् ।
स्वाध्यायवान्धर्मरतस्तपस्वी विजितेन्द्रियः ॥ ००६ ॥

स गत्वा तपसः पारं देहमुत्सृज्य भारत ।
जगाम पितृलोकाय न लेभे तत्र तत्फलम् ॥ ००७ ॥

स लोकानफलान्दृष्ट्वा तपसा निर्जितानपि ।
पप्रच्छ धर्मराजस्य समीपस्थान्दिवौकसः ॥ ००८ ॥

किमर्थमावृता लोका ममैते तपसार्जिताः ।
किं मया न कृतं तत्र यस्येदं कर्मणः फलम् ॥ ००९ ॥

तत्राहं तत्करिष्यामि यदर्थमिदमावृतम् ।
फलमेतस्य तपसः कथयध्वं दिवौकसः ॥ ०१० ॥

देवा ऊचुः ॥

ऋणिनो मानवा ब्रह्मञ्जायन्ते येन तच्छृणु ।
क्रियाभिर्ब्रह्मचर्येण प्रजया च न संशयः ॥ ०११ ॥

तदपाक्रियते सर्वं यज्ञेन तपसा सुतैः ।
तपस्वी यज्ञकृच्चासि न तु ते विद्यते प्रजा ॥ ०१२ ॥

त इमे प्रसवस्यार्थे तव लोकाः समावृताः ।
प्रजायस्व ततो लोकानुपभोक्तासि शाश्वतान् ॥ ०१३ ॥

पुन्नाम्नो नरकात्पुत्रस्त्रातीति पितरं मुने ।
तस्मादपत्यसंताने यतस्व द्विजसत्तम ॥ ०१४ ॥

वैशंपायन उवाच ॥

तच्छ्रुत्वा मन्दपालस्तु तेषां वाक्यं दिवौकसाम् ।
क्व नु शीघ्रमपत्यं स्याद्बहुलं चेत्यचिन्तयत् ॥ ०१५ ॥

स चिन्तयन्नभ्यगच्छद्बहुलप्रसवान्खगान् ।
शार्ङ्गिकां शार्ङ्गको भूत्वा जरितां समुपेयिवान् ॥ ०१६ ॥

तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः ।
तानपास्य स तत्रैव जगाम लपितां प्रति ॥ ०१७ ॥

बालान्सुतानण्डगतान्मात्रा सह मुनिर्वने ॥ ०१७ ॥

तस्मिन्गते महाभागे लपितां प्रति भारत ।
अपत्यस्नेहसंविग्ना जरिता बह्वचिन्तयत् ॥ ०१८ ॥

तेन त्यक्तानसंत्याज्यानृषीनण्डगतान्वने ।
नाजहत्पुत्रकानार्ता जरिता खाण्डवे नृप ॥ ०१९ ॥

बभार चैतान्सञ्जातान्स्ववृत्त्या स्नेहविक्लवा ॥ ०१९ ॥

ततोऽग्निं खाण्डवं दग्धुमायान्तं दृष्टवानृषिः ।
मन्दपालश्चरंस्तस्मिन्वने लपितया सह ॥ ०२० ॥

तं सङ्कल्पं विदित्वास्य ज्ञात्वा पुत्रांश्च बालकान् ।
सोऽभितुष्टाव विप्रर्षिर्ब्राह्मणो जातवेदसम् ॥ ०२१ ॥

पुत्रान्परिददद्भीतो लोकपालं महौजसम् ॥ ०२१ ॥

मन्दपाल उवाच ॥

त्वमग्ने सर्वदेवानां मुखं त्वमसि हव्यवाट् ।
त्वमन्तः सर्वभूतानां गूढश्चरसि पावक ॥ ०२२ ॥

त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधं पुनः ।
त्वामष्टधा कल्पयित्वा यज्ञवाहमकल्पयन् ॥ ०२३ ॥

त्वया सृष्टमिदं विश्वं वदन्ति परमर्षयः ।
त्वदृते हि जगत्कृत्स्नं सद्यो न स्याद्धुताशन ॥ ०२४ ॥

तुभ्यं कृत्वा नमो विप्राः स्वकर्मविजितां गतिम् ।

गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीम् ॥ ०२५ ॥

त्वामग्ने जलदानाहुः खे विषक्तान्सविद्युतः ।
दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हायनाः ॥ ०२६ ॥

जातवेदस्तवैवेयं विश्वसृष्टिर्महाद्युते ।
तवैव कर्म विहितं भूतं सर्वं चराचरम् ॥ ०२७ ॥

त्वयापो विहिताः पूर्वं त्वयि सर्वमिदं जगत् ।
त्वयि हव्यं च कव्यं च यथावत्संप्रतिष्ठितम् ॥ ०२८ ॥

अग्ने त्वमेव ज्वलनस्त्वं धाता त्वं बृहस्पतिः ।
त्वमश्विनौ यमौ मित्रः सोमस्त्वमसि चानिलः ॥ ०२९ ॥

वैशंपायन उवाच ॥

एवं स्तुतस्ततस्तेन मन्दपालेन पावकः ।
तुतोष तस्य नृपते मुनेरमिततेजसः ॥ ०३० ॥

उवाच चैनं प्रीतात्मा किमिष्टं करवाणि ते ॥ ०३० ॥

तमब्रवीन्मन्दपालः प्राञ्जलिर्हव्यवाहनम् ।
प्रदहन्खाण्डवं दावं मम पुत्रान्विसर्जय ॥ ०३१ ॥

तथेति तत्प्रतिश्रुत्य भगवान्हव्यवाहनः ।
खाण्डवे तेन कालेन प्रजज्वाल दिधक्षया ॥ ०३२ ॥

# अध्याय २२१

वैशंपायन उवाच ॥

ततः प्रज्वलिते शुक्रे शार्ङ्गकास्ते सुदुःखिताः ।
व्यथिताः परमोद्विग्ना नाधिजग्मुः परायणम् ॥ ००१ ॥

निशाम्य पुत्रकान्बालान्माता तेषां तपस्विनी ।
जरिता दुःखसंतप्ता विललाप नरेश्वर ॥ ००२ ॥

अयमग्निर्दहन्कक्षमित आयाति भीषणः ।
जगत्संदीपयन्भीमो मम दुःखविवर्धनः ॥ ००३ ॥

इमे च मां कर्षयन्ति शिशवो मन्दचेतसः ।
अबर्हाश्चरणैर्हीनाः पूर्वेषां नः परायणम् ॥ ००४ ॥

त्रासयंश्चायमायाति लेलिहानो महीरुहान् ॥ ००४ ॥

अशक्तिमत्त्वाच्च सुता न शक्ताः सरणे मम ।
आदाय च न शक्तास्मि पुत्रान्सरितुमन्यतः ॥ ००५ ॥

न च त्यक्तुमहं शक्ता हृदयं दूयतीव मे ।
कं नु जह्यामहं पुत्रं कमादाय व्रजाम्यहम् ॥ ००६ ॥

किं नु मे स्यात्कृतं कृत्वा मन्यध्वं पुत्रकाः कथम् ।
चिन्तयाना विमोक्षं वो नाधिगच्छामि किञ्चन ॥ ००७ ॥

छादयित्वा च वो गात्रैः करिष्ये मरणं सह ॥ ००७ ॥

जरितारौ कुलं हीदं ज्येष्ठत्वेन प्रतिष्ठितम् ।
सारिसृक्कः प्रजायेत पितॄणां कुलवर्धनः ॥ ००८ ॥

स्तम्बमित्रस्तपः कुर्याद्द्रोणो ब्रह्मविदुत्तमः ।
इत्येवमुक्त्वा प्रययौ पिता वो निर्घृणः पुरा ॥ ००९ ॥

कमुपादाय शक्येत गन्तुं कस्यापदुत्तमा ।
किं नु कृत्वा कृतं कार्यं भवेदिति च विह्वला ॥ ०१० ॥

नापश्यत्स्वधिया मोक्षं स्वसुतानां तदानलात् ।
एवं ब्रुवन्तीं शार्ङ्गास्ते प्रत्यूचुरथ मातरम् ॥ ०११ ॥

स्नेहमुत्सृज्य मातस्त्वं पत यत्र न हव्यवाट् ।
अस्मासु हि विनष्टेषु भवितारः सुतास्तव ॥ ०१२ ॥

त्वयि मातर्विनष्टायां न नः स्यात्कुलसंततिः ॥ ०१२ ॥

अन्ववेक्ष्यैतदुभयं क्षमं स्याद्यत्कुलस्य नः ।
तद्वै कर्तुं परः कालो मातरेष भवेत्तव ॥ ०१३ ॥

मा वै कुलविनाशाय स्नेहं कार्षीः सुतेषु नः ।
न हीदं कर्म मोघं स्याल्लोककामस्य नः पितुः ॥ ०१४ ॥

जरितोवाच ॥

इदमाखोर्बिलं भूमौ वृक्षस्यास्य समीपतः ।
तदाविशध्वं त्वरिता वह्नेरत्र न वो भयम् ॥ ०१५ ॥

ततोऽहं पांसुना छिद्रमपिधास्यामि पुत्रकाः ।
एवं प्रतिकृतं मन्ये ज्वलतः कृष्णवर्त्मनः ॥ ०१६ ॥

तत एष्याम्यतीतेऽग्नौ विहर्तुं पांसुसञ्चयम् ।
रोचतामेष वोपायो विमोक्षाय हुताशनात् ॥ ०१७ ॥

शार्ङ्गका ऊचुः ॥

अबर्हान्मांसभूतान्नः क्रव्यादाखुर्विनाशयेत् ।
पश्यमाना भयमिदं न शक्ष्यामो निषेवितुम् ॥ ०१८ ॥

कथमग्निर्न नो दह्यात्कथमाखुर्न भक्षयेत् ।
कथं न स्यात्पिता मोघः कथं माता ध्रियेत नः ॥ ०१९ ॥

बिल आखोर्विनाशः स्यादग्नेराकाशचारिणाम् ।
अन्ववेक्ष्यैतदुभयं श्रेयान्दाहो न भक्षणम् ॥ ०२० ॥

गर्हितं मरणं नः स्यादाखुना खादता बिले ।
शिष्टादिष्टः परित्यागः शरीरस्य हुताशनात् ॥ ०२१ ॥

---

# अध्याय २२२

जरितोवाच ॥

अस्माद्बिलान्निष्पतितं श्येन आखुं जहार तम् ।
क्षुद्रं गृहीत्वा पादाभ्यां भयं न भविता ततः ॥ ००१ ॥

शार्ङ्गका ऊचुः ॥

न हृतं तं वयं विद्मः श्येनेनाखुं कथञ्चन ।
अन्येऽपि भवितारोऽत्र तेभ्योऽपि भयमेव नः ॥ ००२ ॥

संशयो ह्यग्निरागच्छेद्दृष्टं वायोर्निवर्तनम् ।
मृत्युर्नो बिलवासिभ्यो भवेन्मातरसंशयम् ॥ ००३ ॥

निःसंशयात्संशयितो मृत्युर्मातर्विशिष्यते ।
चर खे त्वं यथान्यायं पुत्रान्वेत्स्यसि शोभनान् ॥ ००४ ॥

जरितोवाच ॥

अहं वै श्येनमायान्तमद्राक्षं बिलमन्तिकात् ।
सञ्चरन्तं समादाय जहाराखुं बिलाद्बली ॥ ००५ ॥

तं पतन्तमहं श्येनं त्वरिता पृष्ठतोऽन्वगाम् ।
आशिषोऽस्य प्रयुञ्जाना हरतो मूषकं बिलात् ॥ ००६ ॥

यो नो द्वेष्टारमादाय श्येनराज प्रधावसि ।
भव त्वं दिवमास्थाय निरमित्रो हिरण्मयः ॥ ००७ ॥

यदा स भक्षितस्तेन क्षुधितेन पतत्रिणा ।
तदाहं तमनुज्ञाप्य प्रत्युपायां गृहान्प्रति ॥ ००८ ॥

प्रविशध्वं बिलं पुत्रा विश्रब्धा नास्ति वो भयम् ।
श्येनेन मम पश्यन्त्या हृत आखुर्न संशयः ॥ ००९ ॥

शार्ङ्गका ऊचुः ॥

न विद्म वै वयं मातर्हृतमाखुमितः पुरा ।
अविज्ञाय न शक्ष्यामो बिलमाविशतुं वयम् ॥ ०१० ॥

जरितोवाच ॥

अहं हि तं प्रजानामि हृतं श्येनेन मूषकम् ।
अत एव भयं नास्ति क्रियतां वचनं मम ॥ ०११ ॥

शार्ङ्गका ऊचुः ॥

न त्वं मिथ्योपचारेण मोक्षयेथा भयं महत् ।
समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत् ॥ ०१२ ॥

न चोपकृतमस्माभिर्न चास्मान्वेत्थ ये वयम् ।
पीड्यमाना भरस्यस्मान्का सती के वयं तव ॥ ०१३ ॥

तरुणी दर्शनीयासि समर्था भर्तुरेषणे ।
अनुगच्छ स्वभर्तारं पुत्रानाप्स्यसि शोभनान् ॥ ०१४ ॥

वयमप्यग्निमाविश्य लोकान्प्राप्स्यामहे शुभान् ।
अथास्मान्न दहेदग्निरायास्त्वं पुनरेव नः ॥ ०१५ ॥

वैशंपायन उवाच ॥

एवमुक्ता ततः शार्ङ्गी पुत्रानुत्सृज्य खाण्डवे ।
जगाम त्वरिता देशं क्षेममग्नेरनाश्रयम् ॥ ०१६ ॥

ततस्तीक्ष्णार्चिरभ्यागाज्ज्वलितो हव्यवाहनः ।
यत्र शार्ङ्गा बभूवुस्ते मन्दपालस्य पुत्रकाः ॥ ०१७ ॥

ते शार्ङ्गा ज्वलनं दृष्ट्वा ज्वलितं स्वेन तेजसा ।
जरितारिस्ततो वाचं श्रावयामास पावकम् ॥ ०१८ ॥

---

# अध्याय २२३

जरितारिरुवाच ॥

पुरतः कृच्छ्रकालस्य धीमाञ्जागर्ति पूरुषः ।
स कृच्छ्रकालं संप्राप्य व्यथां नैवैति कर्हिचित् ॥ ००१ ॥

यस्तु कृच्छ्रमसंप्राप्तं विचेता नावबुध्यते ।
स कृच्छ्रकाले व्यथितो न प्रजानाति किञ्चन ॥ ००२ ॥

सारिसृक्क उवाच ॥

धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः ।
शूरः प्राज्ञो बहूनां हि भवत्येको न संशयः ॥ ००३ ॥

स्तम्बमित्र उवाच ॥

ज्येष्ठस्त्राता भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः ।
ज्येष्ठश्चेन्न प्रजानाति कनीयान्किं करिष्यति ॥ ००४ ॥

द्रोण उवाच ॥

हिरण्यरेतास्त्वरितो ज्वलन्नायाति नः क्षयम् ।
सप्तजिह्वोऽनलः क्षामो लेलिहानोपसर्पति ॥ ००५ ॥

वैशंपायन उवाच ॥

एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् ।
तुष्टाव प्राञ्जलिर्भूत्वा यथा तच्छृणु पार्थिव ॥ ००६ ॥

जरितारिरुवाच ॥

आत्मासि वायोः पवनः शरीरमुत वीरुधाम् ।
योनिरापश्च ते शुक्र योनिस्त्वमसि चाम्भसः ॥ ००७ ॥

ऊर्ध्वं चाधश्च गच्छन्ति विसर्पन्ति च पार्श्वतः ।
अर्चिषस्ते महावीर्य रश्मयः सवितुर्यथा ॥ ००८ ॥

सारिसृक्क उवाच ॥

माता प्रपन्ना पितरं न विद्मः ; पक्षाश्च नो न प्रजाताब्जकेतो ।
न नस्त्राता विद्यतेऽग्ने त्वदन्य ;स्तस्माद्धि नः परिरक्षैकवीर ॥ ००९ ॥

यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः ।
तेन नः परिरक्षाद्य ईडितः शरणैषिणः ॥ ०१० ॥

त्वमेवैकस्तपसे जातवेदो ; नान्यस्तप्ता विद्यते गोषु देव ।
ऋषीनस्मान्बालकान्पालयस्व ; परेणास्मान्प्रैहि वै हव्यवाह ॥ ०११ ॥

स्तम्बमित्र उवाच ॥

सर्वमग्ने त्वमेवैकस्त्वयि सर्वमिदं जगत् ।
त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ॥ ०१२ ॥

त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमं हविः ।
मनीषिणस्त्वां यजन्ते बहुधा चैकधैव च ॥ ०१३ ॥

सृष्ट्वा लोकांस्त्रीनिमान्हव्यवाह ; प्राप्ते काले पचसि पुनः समिद्धः ।
सर्वस्यास्य भुवनस्य प्रसूति ;स्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ ०१४ ॥

त्वमन्नं प्राणिनां भुक्तमन्तर्भूतो जगत्पते ।
नित्यं प्रवृद्धः पचसि त्वयि सर्वं प्रतिष्ठितम् ॥ ०१५ ॥

द्रोण उवाच ॥

सूर्यो भूत्वा रश्मिभिर्जातवेदो ; भूमेरम्भो भूमिजातान्रसांश्च ।
विश्वानादाय पुनरुत्सर्गकाले ; सृष्ट्वा वृष्ट्या भावयसीह शुक्र ॥ ०१६ ॥

त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः ।
जायन्ते पुष्करिण्यश्च समुद्रश्च महोदधिः ॥ ०१७ ॥

इदं वै सद्म तिग्मांशो वरुणस्य परायणम् ।
शिवस्त्राता भवास्माकं मास्मानद्य विनाशय ॥ ०१८ ॥

पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन्हुताशन ।
परेण प्रैहि मुञ्चास्मान्सागरस्य गृहानिव ॥ ०१९ ॥

वैशंपायन उवाच ॥

एवमुक्तो जातवेदा द्रोणेनाक्लिष्टकर्मणा ।
द्रोणमाह प्रतीतात्मा मन्दपालप्रतिज्ञया ॥ ०२० ॥

ऋषिर्द्रोणस्त्वमसि वै ब्रह्मैतद्व्याहृतं त्वया ।
ईप्सितं ते करिष्यामि न च ते विद्यते भयम् ॥ ०२१ ॥

मन्दपालेन यूयं हि मम पूर्वं निवेदिताः ।
वर्जयेः पुत्रकान्मह्यं दहन्दावमिति स्म ह ॥ ०२२ ॥

यच्च तद्वचनं तस्य त्वया यच्चेह भाषितम् ।
उभयं मे गरीयस्तद्ब्रूहि किं करवाणि ते ॥ ०२३ ॥

भृशं प्रीतोऽस्मि भद्रं ते ब्रह्मन्स्तोत्रेण ते विभो ॥ ०२३ ॥

द्रोण उवाच ॥

इमे मार्जारकाः शुक्र नित्यमुद्वेजयन्ति नः ।

एतान्कुरुष्व दंष्ट्रासु हव्यवाह सबान्धवान् ॥ ०२४ ॥

वैशंपायन उवाच ॥

तथा तत्कृतवान्वह्निरभ्यनुज्ञाय शार्ङ्गकान् ।
ददाह खाण्डवं चैव समिद्धो जनमेजय ॥ ०२५ ॥

---

# अध्याय २२४

वैशंपायन उवाच ॥

मन्दपालोऽपि कौरव्य चिन्तयानः सुतांस्तदा ।
उक्तवानप्यशीतांशुं नैव स स्म न तप्यते ॥ ००१ ॥

स तप्यमानः पुत्रार्थे लपितामिदमब्रवीत् ।
कथं न्वशक्ताः प्लवने लपिते मम पुत्रकाः ॥ ००२ ॥

वर्धमाने हुतवहे वाते शीघ्रं प्रवायति ।
असमर्था विमोक्षाय भविष्यन्ति ममात्मजाः ॥ ००३ ॥

कथं न्वशक्ता त्राणाय माता तेषां तपस्विनी ।
भविष्यत्यसुखाविष्टा पुत्रत्राणमपश्यती ॥ ००४ ॥

कथं नु सरणेऽशक्तान्पतने च ममात्मजान् ।
संतप्यमाना अभितो वाशमानाभिधावती ॥ ००५ ॥

जरितारिः कथं पुत्रः सारिसृक्कः कथं च मे ।
स्तम्बमित्रः कथं द्रोणः कथं सा च तपस्विनी ॥ ००६ ॥

लालप्यमानं तमृषिं मन्दपालं तथा वने ।
लपिता प्रत्युवाचेदं सासूयमिव भारत ॥ ००७ ॥

न ते सुतेष्ववेक्षास्ति तानृषीनुक्तवानसि ।
तेजस्विनो वीर्यवन्तो न तेषां ज्वलनाद्भयम् ॥ ००८ ॥

तथाग्नौ ते परीत्ताश्च त्वया हि मम संनिधौ ।
प्रतिश्रुतं तथा चेति ज्वलनेन महात्मना ॥ ००९ ॥

लोकपालोऽनृतां वाचं न तु वक्ता कथञ्चन ।
समर्थास्ते च वक्तारो न ते तेष्वस्ति मानसम् ॥ ०१० ॥

तामेव तु ममामित्रीं चिन्तयन्परितप्यसे ।
ध्रुवं मयि न ते स्नेहो यथा तस्यां पुराभवत् ॥ ०११ ॥

न हि पक्षवता न्याय्यं निःस्नेहेन सुहृज्जने ।
पीड्यमान उपद्रष्टुं शक्तेनात्मा कथञ्चन ॥ ०१२ ॥

गच्छ त्वं जरितामेव यदर्थं परितप्यसे ।
चरिष्याम्यहमप्येका यथा कापुरुषे तथा ॥ ०१३ ॥

मन्दपाल उवाच ॥

नाहमेवं चरे लोके यथा त्वमभिमन्यसे ।
अपत्यहेतोर्विचरे तच्च कृच्छ्रगतं मम ॥ ०१४ ॥

भूतं हित्वा भविष्येऽर्थे योऽवलम्बेत मन्दधीः ।
अवमन्येत तं लोको यथेच्छसि तथा कुरु ॥ ०१५ ॥

एष हि ज्वलमानोऽग्निर्लेलिहानो महीरुहान् ।

द्वेष्यं हि हृदि संतापं जनयत्यशिवं मम ॥ ०१६ ॥

वैशंपायन उवाच ॥

तस्माद्देशादतिक्रान्ते ज्वलने जरिता ततः ।
जगाम पुत्रकानेव त्वरिता पुत्रगृद्धिनी ॥ ०१७ ॥

सा तान्कुशलिनः सर्वान्निर्मुक्ताञ्जातवेदसः ।
रोरूयमाणा कृपणा सुतान्दृष्टवती वने ॥ ०१८ ॥

अश्रद्धेयतमं तेषां दर्शनं सा पुनः पुनः ।
एकैकशश्च तान्पुत्रान्क्रोशमानान्वपद्यत ॥ ०१९ ॥

ततोऽभ्यगच्छत्सहसा मन्दपालोऽपि भारत ।
अथ ते सर्व एवैनं नाभ्यनन्दन्त वै सुताः ॥ ०२० ॥

लालप्यमानमेकैकं जरितां च पुनः पुनः ।
नोचुस्ते वचनं किञ्चित्तमृषिं साध्वसाधु वा ॥ ०२१ ॥

मन्दपाल उवाच ॥

ज्येष्ठः सुतस्ते कतमः कतमस्तदनन्तरः ।
मध्यमः कतमः पुत्रः कनिष्ठः कतमश्च ते ॥ ०२२ ॥

एवं ब्रुवन्तं दुःखार्तं किं मां न प्रतिभाषसे ।
कृतवानस्मि हव्याशे नैव शान्तिमितो लभे ॥ ०२३ ॥

जरितोवाच ॥

किं ते ज्येष्ठे सुते कार्यं किमनन्तरजेन वा ।
किं च ते मध्यमे कार्यं किं कनिष्ठे तपस्विनि ॥ ०२४ ॥

यस्त्वं मां सर्वशो हीनामुत्सृज्यासि गतः पुरा ।
तामेव लपितां गच्छ तरुणीं चारुहासिनीम् ॥ ०२५ ॥

मन्दपाल उवाच ॥

न स्त्रीणां विद्यते किञ्चिदन्यत्र पुरुषान्तरात् ।
सापत्नकमृते लोके भवितव्यं हि तत्तथा ॥ ०२६ ॥

सुव्रतापि हि कल्याणी सर्वलोकपरिश्रुता ।
अरुन्धती पर्यशङ्कद्वसिष्ठमृषिसत्तमम् ॥ ०२७ ॥

विशुद्धभावमत्यन्तं सदा प्रियहिते रतम् ।
सप्तर्षिमध्यगं वीरमवमेने च तं मुनिम् ॥ ०२८ ॥

अपध्यानेन सा तेन धूमारुणसमप्रभा ।
लक्ष्यालक्ष्या नाभिरूपा निमित्तमिव लक्ष्यते ॥ ०२९ ॥

अपत्यहेतोः संप्राप्तं तथा त्वमपि मामिह ।
इष्टमेवङ्गते हित्वा सा तथैव च वर्तसे ॥ ०३० ॥

नैव भार्येति विश्वासः कार्यः पुंसा कथञ्चन ।
न हि कार्यमनुध्याति भार्या पुत्रवती सती ॥ ०३१ ॥

वैशंपायन उवाच ॥

ततस्ते सर्व एवैनं पुत्राः सम्यगुपासिरे ।
स च तानात्मजान्राजन्नाश्वासयितुमारभत् ॥ ०३२ ॥

# अध्याय २२५

मन्दपाल उवाच ॥

युष्माकं परिरक्षार्थं विज्ञप्तो ज्वलनो मया ।
अग्निना च तथेत्येवं पूर्वमेव प्रतिश्रुतम् ॥ ००१ ॥

अग्नेर्वचनमाज्ञाय मातुर्धर्मज्ञतां च वः ।
युष्माकं च परं वीर्यं नाहं पूर्वमिहागतः ॥ ००२ ॥

न संतापो हि वः कार्यः पुत्रका मरणं प्रति ।
ऋषीन्वेद हुताशोऽपि ब्रह्म तद्विदितं च वः ॥ ००३ ॥

वैशंपायन उवाच ॥

एवमाश्वास्य पुत्रान्स भार्यां चादाय भारत ।
मन्दपालस्ततो देशादन्यं देशं जगाम ह ॥ ००४ ॥

भगवानपि तिग्मांशुः समिद्धं खाण्डवं वनम् ।
ददाह सह कृष्णाभ्यां जनयञ्जगतोऽभयम् ॥ ००५ ॥

वसामेदोवहाः कुल्यास्तत्र पीत्वा च पावकः ।
अगच्छत्परमां तृप्तिं दर्शयामास चार्जुनम् ॥ ००६ ॥

ततोऽन्तरिक्षाद्भगवानवतीर्य सुरेश्वरः ।
मरुद्गणवृतः पार्थं माधवं चाब्रवीदिदम् ॥ ००७ ॥

कृतं युवाभ्यां कर्मेदममरैरपि दुष्करम् ।
वरान्वृणीतं तुष्टोऽस्मि दुर्लभानप्यमानुषान् ॥ ००८ ॥

पार्थस्तु वरयामास शक्रादस्त्राणि सर्वशः ।

ग्रहीतुं तच्च शक्रोऽस्य तदा कालं चकार ह ॥ ००९ ॥

यदा प्रसन्नो भगवान्महादेवो भविष्यति ।
तुभ्यं तदा प्रदास्यामि पाण्डवास्त्राणि सर्वशः ॥ ०१० ॥

अहमेव च तं कालं वेत्स्यामि कुरुनन्दन ।
तपसा महता चापि दास्यामि तव तान्यहम् ॥ ०११ ॥

आग्नेयानि च सर्वाणि वायव्यानि तथैव च ।
मदीयानि च सर्वाणि ग्रहीष्यसि धनञ्जय ॥ ०१२ ॥

वासुदेवोऽपि जग्राह प्रीतिं पार्थेन शाश्वतीम् ।
ददौ च तस्मै देवेन्द्रस्तं वरं प्रीतिमांस्तदा ॥ ०१३ ॥

दत्त्वा ताभ्यां वरं प्रीतः सह देवैर्मरुत्पतिः ।
हुताशनमनुज्ञाप्य जगाम त्रिदिवं पुनः ॥ ०१४ ॥

पावकश्चापि तं दावं दग्ध्वा समृगपक्षिणम् ।
अहानि पञ्च चैकं च विरराम सुतर्पितः ॥ ०१५ ॥

जग्ध्वा मांसानि पीत्वा च मेदांसि रुधिराणि च ।
युक्तः परमया प्रीत्या तावुवाच विशां पते ॥ ०१६ ॥

युवाभ्यां पुरुषाग्र्याभ्यां तर्पितोऽस्मि यथासुखम् ।
अनुजानामि वां वीरौ चरतं यत्र वाञ्छितम् ॥ ०१७ ॥

एवं तौ समनुज्ञातौ पावकेन महात्मना ।
अर्जुनो वासुदेवश्च दानवश्च मयस्तथा ॥ ०१८ ॥

परिक्रम्य ततः सर्वे त्रयोऽपि भरतर्षभ ।
रमणीये नदीकूले सहिताः समुपाविशन् ॥ ०१९ ॥